.राथस्य श्रीगुरुप्रसादाद् अर्थः क्रियते । यथा चैत्रमासे कोकिला मधुरं वक्ति, तत्र सह-
..गम्, यत्र रजः सूर्यमण्डलमाच्छादयति, तत्र पवनस्य माहात्म्यम्, यच्च मण्डूको महाभुजंगस्य
.. चुम्बति, तत्र मणेः प्रभावः । तथा मादृशो मन्दबुद्धिः श्रीकल्पसिद्धान्तार्थं प्रकटं वदति, तत्र श्रीज्ञान-
दातॄणां गुरूणामेव प्रसादः ।

तत्रादौ श्रीकल्पसिद्धान्तस्य अधिकारत्रयवाचिकेयं गाथा–

पुरिम-चरिमाण कप्पो, मंगलं वद्धमाणतित्थम्मि । तो परिकहिआ जिण-गणहराइथेरावलिचरित्तं ॥ अस्यार्थः–

प्रथमतीर्थंकर-चरमतीर्थंकरयोः श्रीआदिनाथ-महावीरस्वामिनोः साधूनाम्-अयं कल्पः, अयम् आचारः–
यत्र तिष्ठन्ति, तत्र मङ्गलं वाञ्छन्ति, वर्षाकाले चतुर्मासं यावत्-एकत्र तिष्ठन्ति, पर्युषणां कुर्वन्ति-वर्षा
भवन्तु, मा मा भवन्तु । द्वाविंशतितीर्थंकरसाधूनां पुनरयम्-आचारः-मङ्गलं वाञ्छन्ति, वर्षाकाले वर्षाभावे
विहारं कुर्वन्त्यपि, पर्युषणां कुर्वन्ति, न कुर्वन्ति-अपि निश्चयो नास्ति । आदीश्वर-महावीरयोः साधूनाम्-अयं
निश्चयोऽस्ति, वर्षाकाले पर्युषणां कुर्वन्ति, मङ्गलार्थं श्रीआदीश्वराद् आरभ्य श्रीमहावीरस्वामिनं यावत् तीर्थंक-
राणां चरित्रं वाचयन्ति, सर्वेषां तीर्थंकराणाम् अन्तराणि कथयन्ति । प्रथमोऽयमधिकारः । पश्चाद् गणधराणां

१. पूर्व-चरमयोः कल्पः, मङ्गलं वर्धमानतीर्थे । ततः परिकथितं जिन-गणधरादिस्थविरावलिचरित्रम् ॥



॥ १ ॥

तथा स्थविरावलिं वाचयन्ति । अयं द्वितीयोऽधिकारः । पश्चात् चरित्रम्—चरित्रशब्देन साधुसमाचारीम्—वाचयन्ति । अयं तृतीयोऽधिकारः । यथा अस्यां गाथायां त्रयोऽधिकारा उक्ताः, तथैव विस्तरेण प्रकाश्यते—अथ प्रथमम्—श्रीआदीश्वर—श्रीमहावीरस्वामिनोर्यतीनामाचारः कथ्यते । गाथा—

आचेलुक्कु—देसिअ—सिज्जायर—रायपिंड—किअकम्मे । वय—जिट्ठ—पडिक्कमणे मासं पज्जोसवणकप्पो ।[1]

श्रीआदिनाथ—महावीरयोर्यतीनामयम् आचारः १ अचलेत्वम्—मानोपेतं धवलं वस्त्रं धारयन्ति[2] । २ औद्देशिकम्—एकस्य साधोर्निमित्तं कृतं सर्वेषां साधूनां न कल्पते[3] । द्वाविंशतितीर्थंकरसाधूनां तु यस्य साधोर्निमित्तं

---

१. आचेलक्य—औद्देशिक—शय्यातर—राजपिण्ड—कृतकर्म । व्रत—ज्येष्ठ—प्रतिक्रमणम्, मासं पर्युषणाकल्पः ॥ २. अजितादिद्वाविंशतिजिनतीर्थसाधूनाम् ऋजुप्राज्ञानां बहुमूल्य—विविधवर्णवस्त्रपरिभोगानुज्ञासद्भावेन सचेलकत्वमेव, केषांचित् च श्वेतमानोपेतवस्त्रधारित्वेन अचेलकत्वमपि, इति अनियतस्तेषाम् अयं कल्पः । श्रीऋषभवीरतीर्थयतीनां च सर्वेषामपि—श्वेतमानोपेत—जीर्णप्रायवस्त्रधारित्वेन ममत्वरहितत्वाद् अचेलकत्वं सर्वजनप्रसिद्धमेव । यथा सत्यपि जीर्णवस्त्रे तन्तुवाय—रजकादींश्च वदन्ति—'शीघ्रम् अस्माकं वस्त्रं देहि, वयं नग्नाः स्म' इति । एवं साधूनां जीर्णप्रायवस्त्रसद्भावेऽपि अचेलकत्वमिति ॥ ३. साधुनिमित्तं कृतम् अशन—पान—खादिम—स्वादिम—वस्त्र—पात्र—वसतिप्रमुखम्, तच्च प्रथम—चरमजिनतीर्थे एकं साधुम्, एकं साधुसमुदायम्, एकम् उपाश्रयं वा आश्रित्य कृतं तत् सर्वेषां साध्वादीनां न कल्पते ॥

कृतं भवेत् तस्यैव साधोस्तद् आहारपानीयं न कल्पते, अन्येषां तु कल्पते । ३ शय्यातरः–शय्यातरस्य उपाश्रयदातुरस्य आहार–पानीयं न कल्पते । तत्र एकं दिनम्–इन्द्रः शय्यातरः, द्वितीये दिने देशाधिपः, तृतीये दिने ग्रामाधिपः, इति गीतार्था वदन्ति । ४ राजपिण्डः–राजा छत्रधरः, तस्य पिण्डः श्रीआदीश्वर–महावीरयोः साधूनामेव न कल्पते । द्वाविंशतितीर्थंकरसाधूनां तु कल्पते । ५ कृतकर्म–लघुना साधुना वृद्धस्य साधोश्चरणयोर्वन्दनकानि दातव्यानि । ६ व्रतम्–व्रतानि श्रीआदीश्वर–महावीरयोः साधूनां पञ्च महाव्रतानि

१. अशन–पान–खादिम–स्वादिम–वस्त्र–पात्र–कम्बल–रजोहरण–सूची–पिप्पलक–नख–रदन–कर्णशोधनकलक्षणो द्वादशप्रकारः सर्वेषां जिनानां तीर्थेषु सर्वसाधूनां न कल्पते, अनेषणीयप्रसङ्ग–वसतिदौर्लभ्यादिबहुदोषसंभवात् । तथा तृण–डगल–भस्म–मल्लकपीठफलक–शय्या–संस्तारकलेपादिवस्तूनि, चारित्रेच्छुः सोपधिकशिष्यश्च शय्यातरस्यापि ग्रहीतुं कल्पते ॥ २. अशनादिचतुष्कम्, वस्त्रम्, पात्रम्, कम्बलम्, रजोहरणं चेति अष्टविधः पिण्डः प्रथम–चरमजिनसाधूनां निर्गच्छद्–आगच्छत्सामन्तादिभिः स्वाध्यायव्याघातस्य, अपशकुनबुद्ध्या शरीर–व्याघातस्य च संभवात्, व्यागलोभ–लघुत्व–निन्दादिदोषसंभवाच्च निषिद्धः । द्वाविंशतिजिनसाधूनां तु ऋजुप्राज्ञत्वेन पूर्वोक्तदोषाभावेन राजपिण्डः कल्पते ॥ ३. वन्दनकं तद् द्विधा अभ्युत्थानम्, द्वादशावर्तं च । तत्सर्वेषाम् अपि तीर्थेषु साधुभिः परस्परं यथा दीक्षापर्यायेण विधेयम् । साध्वीभिश्च चिरदीक्षिताभिरपि नवदीक्षितोऽपि साधुरेव वन्द्यः । पुरुषप्रधानत्वाद् धर्मस्य ॥

भवन्ति, द्वाविंशतितीर्थंकरसाधूनां चत्वार्येव महाव्रतानि–तेषां तु स्त्री परिग्रह एव गण्यते[1]। ७ ज्येष्ठः–पुरुषज्येष्ठो धर्मः–शतवर्षदीक्षितया साध्व्या अद्य दीक्षितोऽपि साधुर्वन्दनीयः । श्रीआदीश्वर–महावीरयोः साधूनां दीक्षाद्वयं भवति–एका लघ्वी दीक्षा, अपरा बृहती दीक्षा भवति । लघुत्वम्, वृद्धत्वं च बृहद्दीक्षया गण्यते[2] । द्वाविंशतितीर्थंकरसाधूनां तु दीक्षायां भवन्त्यां सत्यामेव लघुत्वम्, वृद्धत्वं गण्यते एष ज्येष्ठकल्प उच्यते । ८ प्रतिक्रमणम्–श्रीआदीश्वर–महावीरयोः साधुभिरुभयकाले प्रतिक्रमणं कर्तव्यम्[3] । द्वाविंशतिती-

१. यतस्ते एवं जानन्ति–यद् अपरिगृहीतायाः स्त्रियाः भोगाऽसंभवात् स्त्री अपि परिग्रह एव, परिग्रहे प्रत्याख्याते स्त्री प्रत्याख्याता एव । प्रथम–चरमजिनसाधूनां तु तथाज्ञानाभावात् पञ्च व्रतानि ॥ २. पितृ–पुत्र–मातृ–दुहितृ–राजा–ऽमात्य–श्रेष्ठि–वणिक्पुत्रादीनां सार्धं गृहीतदीक्षाणाम् उपस्थापने को विधिः ? उच्यते, यदि पित्रादयः पुत्रादयश्च समकमेव षड्जीवनिकायाध्ययन–योगोद्वहनादिभिर्योग्यतां प्राप्तास्तदा अनुक्रमेणैव उपस्थापना । अथ स्तोकम् अन्तरं तदा कियद्विलम्बेनाऽपि पित्रादीनामेव प्रथमम् उपस्थापना । अन्यथा-पुत्रादीनां वृद्धत्वेन, अन्येषां निष्प्रज्ञत्वेन महद् अन्तरं तदा स पित्रादिः एवं प्रतिबोध्यः–'भो महाभाग ! सप्रज्ञोऽपि तव पुत्रः अन्येभ्यो बहुभ्यो लघुर्भविष्यति, तव पुत्रे ज्येष्ठे तवैव गौरवम्' एवं प्रज्ञापितः स यदि अनुमन्यते तदा पुत्रादिः प्रथमम् उपस्थापनीयः, नान्यथा इति ॥ ३. अतिचारो भवतु, मा वा भवतु, परं श्रीऋषभवीरसाधूनाम् उभयं कालम् अवश्यं प्रतिक्रमणं कर्तव्यमेव, तथा पाक्षिकाद्यपि च । शेषजिनमुनीनां तु दोषे सति प्रतिक्रमणम्, तत्राऽपि कारणसद्भावेऽपि दैवसिक–रात्रिक एव प्रायः प्रतिक्रमणे । नतु पाक्षिक–चातुर्मा-

कृतं भवेत् तस्यैव साधोस्तद् आहारपानीयं न कल्पते, अन्येषां तु कल्पते । ३ शय्यातरः–शय्यातरस्य उपाश्रयदायकस्य चाहार–पानीयं न कल्पते[1] । तत्र एकं दिनम्–इन्द्रः शय्यातरः, द्वितीये दिने देशाधिपः, तृतीये दिने ग्रामाधिपः, इति गीतार्था वदन्ति । ४ राजपिण्डः–राजा छत्रधरः, तस्य पिण्डः श्रीआदीश्वर–महावीरयोः साधूनामेव न कल्पते[2] । द्वाविंशतितीर्थकरसाधूनां तु कल्पते । ५ कृतकर्म–लघुना साधुना वृद्धस्य साधोश्चरणयोर्वन्दनकानि दातव्यानि[3] । ६ व्रतम्–व्रतानि श्रीआदीश्वर–महावीरयोः साधूनां पञ्च महाव्रतानि

१. अशन–पान–खादिम–स्वादिम–वस्त्र–पात्र–कम्बल–रजोहरण–सूची–पिप्पलक–नख–रदन–कर्णशोधनकलक्षणो द्वादशप्रकारः सर्वेषां जिनानां तीर्थेषु सर्वसाधूनां न कल्पते, अनेषणीयप्रसङ्ग–वसतिदौर्लभ्यादिवहुदोपसंभवात् । तथा तृण–डगल–भस्म–मल्लकपीठफलक–शय्या–संस्तारकलेपादिवस्तूनि, चारित्रेच्छुः सोपधिकशिष्यश्च शय्यातरस्यापि ग्रहीतुं कल्पते ॥ २. अशनादिचतुष्कम्, वस्त्रम्, पात्रम्, कम्बलम्, रजोहरणं चेति अष्टविधः पिण्डः प्रथम–चरमजिनसाधूनां निर्गच्छद्–आगच्छत्सामन्तादिभिः स्वाध्यायव्याघातस्य, अपशकुनबुद्ध्या शरीर–व्याघातस्य च संभवात्, खाद्यलोभ–लघुत्व–निन्दादिदोषसंभवाच्च निषिद्धः । द्वाविंशतिजिनसाधूनां तु ऋजुप्राज्ञत्वेन पूर्वोक्तदोषाभावेन राजपिण्डः कल्पते ॥ ३. वन्दनकं तद् द्विधा अभ्युत्थानम्, द्वादशावर्तं च । तत्सर्वेषाम् अपि तीर्थेषु साधुभिः परस्परं यथा दीक्षापर्यायेण विधेयम् । साध्वीभिश्च चिरदीक्षिताभिरपि नवदीक्षितोऽपि साधुरेव वन्द्यः । पुरुषप्रधानत्वाद् धर्मस्य ॥

भवन्ति, द्वाविंशतितीर्थंकरसाधूनां चत्वार्येव महाव्रतानि–तेषां तु स्त्री परिग्रह एव गण्यते[1]। ७ ज्येष्ठः–पुरुषज्येष्ठो धर्मः–शतवर्षदीक्षितया साध्व्या अद्य दीक्षितोऽपि साधुर्वन्दनीयः । श्रीआदीश्वर–महावीरयोः साधूनां दीक्षाद्वयं भवति–एका लघ्वी दीक्षा, अपरा वृहती दीक्षा भवति । लघुत्वम्, वृद्धत्वं च वृहद्दीक्षया गण्यते[2]। द्वाविंशतितीर्थंकरसाधूनां तु दीक्षायां भवन्त्यां सत्यामेव लघुत्वम्, वृद्धत्वं गण्यते एष ज्येष्ठकल्प उच्यते। ८ प्रतिक्रमणम्–श्रीआदीश्वर–महावीरयोः साधुभिरुभयकाले प्रतिक्रमणं कर्तव्यम्[3]। द्वाविंशतिती-

१. यतस्ते एवं जानन्ति–यद् अपरिगृहीतायाः स्त्रियाः भोगाऽसंभवात् स्त्री अपि परिग्रह एव, परिग्रहे प्रत्याख्याते स्त्री प्रत्याख्याता एव। प्रथम–चरमजिनसाधूनां तु तथाज्ञानाभावात् पञ्च व्रतानि॥ २. पितृ–पुत्र–मातृ–दुहितृ–राजा–ऽमात्य–श्रेष्ठि–वणिक्पुत्रादीनां सार्धं गृहीतदीक्षाणाम् उपस्थापने को विधिः ? उच्यते, यदि पित्रादयः पुत्रादयश्च समकमेव षड्जीवनिकायाध्ययन–योगोद्वहनादिभिर्योग्यतां प्राप्तास्तदा अनुक्रमेणैव उपस्थापना। अथ स्तोकम् अन्तरं तदा कियद्विलम्बेनाऽपि पित्रादीनामेव प्रथमम् उपस्थापना। अन्यथा पुत्रादीनां वृद्धत्वेन, अन्येषां निष्प्रज्ञत्वेन महद् अन्तरं तदा स पित्रादिः एवं प्रतिबोध्यः–'भो महाभाग ! सप्रज्ञोऽपि तव पुत्रः अन्येभ्यो बहुभ्यो लघुर्भविष्यति, तव पुत्रे ज्येष्ठे तवैव गौरवम्' एवं प्रज्ञापितः स यदि अनुमन्यते तदा पुत्रादिः प्रथमम् उपस्थापनीयः, नान्यथा इति॥ ३. अतिचारो भवतु, मा वा भवतु, परं श्रीऋषभवीरसाधूनाम् उभयं कालम् अवश्यं प्रतिक्रमणं कर्तव्यमेव, तथा पाक्षिकाद्यपि च। शेषजिनमुनीनां तु दोषे सति प्रतिक्रमणम्, तत्राऽपि कारणसद्भावेऽपि दैवसिक–रात्रिक एव प्रायः प्रतिक्रमणे। नतु पाक्षिक–चातुर्मा-

र्थंकरसाधूनां कारणे कर्तव्यम्। ९ मासः–आदीश्वर–महावीरयोः साधूनां मासकल्पः चतुर्मासात् शेषेषु अष्टमासेषु एव कर्तव्यः, एकस्मिन् उपाश्रये मासं स्थित्वा पुनरन्यत्र गन्तव्यम्, मार्गशीर्षादारभ्य आषाढं यावद् एकत्रैव निरन्तरं न स्थातव्यम्। श्रीआदीश्वर–महावीरयोरेव साधूनाम् अयं कल्पः। द्वाविंशतितीर्थंकराणां तु कोऽपि निश्चयो नास्ति–एकस्मिन् उपाश्रये एव द्विमासीम्, त्रिमासीं वा तिष्ठन्ति। १० पर्युषणाकल्पः–पर्युषणाकल्पम्–मेघो वर्षतु, अथवा मा वर्षतु, क्षेत्रयोगसद्भावे–चतुर्मासीमधितिष्ठन्ति। अथ कदाचित् क्षेत्रयोगो न भवति, तदा भाद्रपदशुक्लपञ्चमीतः प्रारभ्य सप्ततिदिनानि यावद् एकस्थाने साधवस्तिष्ठन्ति। अयम्–आदीश्वर–महावीरयोरेव साधूनामाचारः। द्वाविंशतितीर्थंकरसाधूनां तु न कोऽपि निश्चयः।

सिक–सांवत्सरिकाणि, किंतु स्वाध्याय–ध्यानादीनामेव इति ॥ १. दुर्भिक्षा–ऽशक्ति–रोगादिकारणसद्भावेऽपि शाखा–पुर–पाटक–कोणक–परावर्तनेनापि सत्यापनीय एव। परं शेषकाले मासाद् अधिकं न स्थेयम्, प्रतिबन्ध–लघुत्वप्रमुखबहुदोष–संभवात्, मध्यमजिनयतिनां तु ऋजुप्राज्ञानां पूर्वोक्तदोषाभावेन अनियतो मासकल्पः। ते हि विशेषलाभसद्भावे अन्यकारणे वा देशोनां पूर्वकोटिं यावद् अपि एकत्र तिष्ठन्ति कारणे मासमध्येऽपि विहरन्ति ॥ २. अयं नियमः चन्द्रसंवत्सरापेक्षया तथापि अत्राऽयं विशेषः–यदा कदाचिदशिवमुत्पद्यते, भिक्षा वा न लभ्यते, राजा वा दुष्टो भवति, ग्लानता वा जायते, तदा सप्ततिदिनेभ्योऽर्वागप्यन्यत्र गमने न दोषः, कदाचिच्चातुर्मास्युत्तारेऽपि वर्षा न विरमति तदाऽधिकं तिष्ठेद् न दोषः, द्वाविंशतितीर्थंकरसाधूनां तु नियमो नास्ति, वर्षाया अभावे शेषकालवद् विहारं कुर्वति ॥

अत्र च षड् अस्थिरकल्पाः—१ अचेलत्वम्, २ औद्देशिकम्, ३ प्रतिक्रमणम्, ४ राजपिण्डः, ५ मासकल्पः, ६ पर्युषणाकरणम्, एतेऽस्थिरकल्पाः । अथ चत्वारः स्थिरकल्पाः—१ शय्यातरपिण्डः, २ चत्वारि व्रतानि, ३ पुरुषज्येष्ठो धर्मः, ४ परस्परं वन्दनकदानम्, एते चत्वारः स्थिरकल्पाः द्वाविंशतितीर्थंकरसाधूनामपि भवन्ति, तस्मादेते स्थिरकल्पा उच्यन्ते । यस्तु द्वाविंशतितीर्थंकरसाधूनामाचारः, स एवाऽद्य महाविदेहतीर्थंकरसाधूनां ज्ञेयः ॥ अथ मोक्षमार्गं प्रतिपन्नानां सर्वेषां जिनानाम् आचारभेदे कारणमाह—

पुरिमाण[1] दुव्विसोज्झो, चरिमाणं दुरणुपालओ कप्पो । मज्झिमगाण जिणाणं सुविसोज्झो सुहणुपालो य ॥

प्रथमतीर्थंकरसमये साधूनां साधुधर्मो ज्ञातुमशक्यः, यदा जानन्ति तदा सम्यक् पालयन्ति । श्रीमहावीरस्य समये साधूनां साधुधर्मः ज्ञातुं सुकरः, परं पालयितुमशक्यः । अथ द्वाविंशतितीर्थंकरसाधु—साध्वीनां धर्मो ज्ञातुमपि सुकरः, पालयितुमपि सुकरः । गाथा—

उज्जुजडा[2] पढमा खलु नडाइनायाओ हुंति नायव्वा । वक्कजडा पुण चरिमा उज्जुपण्णा मज्झिमा भणिआ ॥

अत्र दृष्टान्तमाह—यथा एकस्मिन् नगरे चतुष्पथे साधुभिर्गोचरचर्यार्थं गच्छद्भिः नर्तकानां टोलकं नर्तद्

---

१. पूर्वेषां दुर्विशोध्यः, चरमाणां दुरनुपालकः कल्पः । मध्यमकानां जिनानां सुविशोध्यः सुखानुपालयश्च ॥ २. ऋजुजडाः प्रथमाः खलु नटादिज्ञाताद् भवन्ति ज्ञातव्याः । वक्रजडाः पुनश्चरमा ऋजुप्रज्ञा मध्यमा भणिताः ॥

दृष्टम्। भूयसी वेला लग्ना। यदा आहारमानीय उपाश्रये साधवः समागताः, तदा गुरुभिः पृष्टम्–भो मुनयः! अद्य भवतां कथं बह्वी वेला लग्ना? तदा तैरुक्तम्–अद्य नर्तकानां नाटकं दृष्टम्। गुरुभिरुक्तम्–साधुभिर्नाटकं न विलोकनीयम्। तैरपि 'तथास्तु' इति अङ्गीकृत्य मिथ्यादुष्कृतं दत्तम्। अथ पुनरन्यस्मिन् दिने त एव साधवो गोचरचर्यायां विहरन्तो नर्तकीनां नाटकं ददृशुः। तथैव भूयसी वेला लग्ना। आहारं लात्वा यदा उपाश्रये आजग्मुः, तदा गुरव ऊचुः–भो मुनयः! अद्य पुनः प्रचुरा वेला कथं लग्ना? तदा तैरुक्तम्–अद्य नर्तकीनां नर्तनमस्माभिर्दृष्टम्, तेन इयती वेला लग्ना। गुरुभिरूचे–भो महानुभावाः! यूयं पुरा एव अस्माभिर्नाटके निषिद्धाः कथमद्य नाटकविलोकनाय प्रवृत्ताः? तदा तैरुक्तम्–भवद्भिः पुरुषनाटकं निषिद्धम्, अद्य तु स्त्रीनाटकम्–अनिषिद्धं ज्ञात्वा अस्माभिर्ददृशे। गुरुभिरुक्तम्–साधुभिः सर्वं स्त्री–पुरुषयोर्नाटकं सर्वथा न विलोकनीयम्। तैरप्युक्तम्–अतः परं नैवं विधास्यामः। मिथ्यादुष्कृतमस्माकम्। एतादृशाः श्रीआदीश्वरस्य समये एव ऋजुजडा जीवाः–यत् कार्यं कृत्यं तेभ्यो निवेद्यते, तावदेव जानन्ति, नाधिकं किमपि जानन्ति॥

पुनरपि कोङ्कणदेशोद्भवसाधुरेक ईर्यापथिकीं प्रतिक्रामन् कायोत्सर्गमध्ये स्वपुत्राणां प्रमादं चिन्तयति स्म–अहो! इदानीं सौरेयो वायुर्वाति, प्रमादिनो मत्पुत्राः, क्षेत्रेषु सूदनं न करिष्यन्ति, घास–वृक्षादिकं न ज्वालयिष्यन्ति, मेघे वर्षति किमपि न भविष्यति, अहं यदा गृहेऽस्थाम्, तदा सर्वमेव अहमकार्षम्, अथ च गृहे

नास्मि अहम्, ते वराकाः मत्पुत्राः क्षुधया मरिष्यन्ति, इति चिन्तयन् आसीत्। यदा सर्वैः कायोत्सर्गः पारितः, तदा गुरुभिः कौङ्कणो मुनिः पृष्टः–भो मुने! कौङ्कण! भवता किं स्मर्यते? तदा कौङ्कणोऽवादीत्–मया जीवदया चिन्तिता। गुरुभिरूचे–भो मुने! त्वया आरम्भः स्मृतः, न दया चिन्तिता, एतादृशः आरम्भः कदापि साधुभिर्न स्मर्तव्यः। तदा कौङ्कणेन श्रद्धापूर्वकं मिथ्यादुष्कृतं दत्तम्। एवम् ऋजुजडानां बहवो दृष्टान्ताः॥

महावीरस्वामिनो वारकस्य जीवा वक्रजडाश्च वर्तन्ते। तत्र दृष्टान्तो यथा[1]–एकस्मिन् नगरे कश्चिदेकः श्रेष्ठी वसति। तत्पुत्रो दुर्विनीतो वक्रो जडश्चासीत्। मातापित्रोः सम्मुखं जल्पति। शिक्षां न मनुते। एकदा मातृपितृभ्यां मधुरवाक्यैः शिक्षा दत्ता–हे पुत्र! स्वजनसंबन्धिजनसमक्षम्, वृद्धानां सम्मुखं च कदापि न जल्पनीयम्, प्रत्युत्तरं न दातव्यम्। पुत्रेणोक्तम्–साधु, एवमेव करिष्यामि। अन्यदा प्रस्तावे गृहस्य सर्वे मनुष्यास्त

१. तत्र केचिद् वीरतीर्थसाधवो नटं नृत्यन्तमवलोक्य गुरुसमीपमागताः, गुरुभिः पृष्टाः, निषिद्धाश्च नटावलोकनं प्रति, पुनरन्यदा नटीं नृत्यन्तीं विलोक्य आगताः, गुरुभिस्तथैव पृष्टा वक्रतया अन्यानि उत्तराणि ददुः, बाढं पृष्टाश्च सत्यं प्रोचुः; गुरुभिः उपालम्भे च दत्ते सम्मुखं गुरूनेव उपालम्भयन्तः–यदस्माकं तदा नटनिषेधसमये नटीनिषेधोऽपि कुतो न कृतः, भवतामेव अयं दोषः, अस्माभिः किं ज्ञायते इति॥

पुत्रं गृहे मुक्त्वा, गृहं भलाप्य, अन्यत्र स्वजनगृहे गत्वा, कार्यादिकं कृत्वा यदा गृहे आगताः, पश्चात् स च द्वारं पिधाय गृहमध्ये स्थित आसीत्। तैश्च कपाटं पिहितं दृष्ट्वा स पुत्रो नाम्ना शब्दितः–भोः पुत्रक ! कपाटं समुद्घाटय। स च तेषां शब्दं श्रुत्वा, मातृपितृदत्तां शिक्षां स्मृत्वा, शृण्वानोऽपि प्रत्युत्तरं न ददाति, मध्ये हसति, गायति, जल्पति; परं तेभ्यः प्रतिवचनमेव न ब्रूते। तदा तैरेव परवर्त्मना भूत्वा, गृहमध्ये उत्तीर्य, कपाटमुद्घाट्य तस्मै निवेदितम्–कथं भोः पुत्र! त्वमस्माकं शब्दं शृण्वन् प्रत्युत्तरं नादाः। तदा सोऽप्यवादीत्–भवद्भिरेवाऽहं शिक्षितो वृद्धानां सम्मुखं न जल्पनीयम्। तदा पित्रोक्तम्–ईर्ष्यया, उत्तालतया च न जल्पनीयम्। तेनोक्तम्–प्रमाणम्। अथ शनैरेव वक्ष्यामि। अन्यदा प्रस्तावे पिता लोकानां मध्ये हट्टाहिकायां स्थित आसीत्। तदा गृहे अग्निर्लग्नः। जनन्या प्रोक्तम्–भोः पुत्र! त्वं शीघ्रं गत्वा तव जनकमाहूय आगच्छ, कथय, त्वया शीघ्रम्–आगत्य गृहमध्यात् सम्यक्तरं वस्तु सर्वं निष्कासनीयम्, अग्निर्विध्यापनीयः। सोऽपि तत्रागत्य लोकान् दृष्ट्वा चिन्तयामास–इदानीं लोकसमक्षं न वदेयम्। पित्रैव निषिद्धोऽस्मि–उत्तालतया न जल्पनीयम्। एवं ज्ञात्वा तत्रैवागत्य तूष्णीं स्थितः, घटिकामेकां स्थित्वा शनैरागत्य कर्णे उक्तम्–गृहे अग्निर्लग्नोऽस्ति, त्वमागच्छ, पित्रोक्तम्–कियती वेला लग्ना? तेनोक्तम्–घटिकैकाऽभूत्। पित्रा उक्तम्–रे मूर्ख!

इयती वेला जाता, त्वया पुरा एव कथं नोक्तम्? तेनोक्तम्–भवतैव निषिद्धः, लोकसमक्षम् उत्तालतया न वक्तव्यम्। एतादृशा वक्रजडा जीवा भवन्ति। पुनरपि बहवो वक्र–जडानां दृष्टान्ताः संति ॥

द्वाविंशतितीर्थंकराणां साधवस्तु ऋजुप्राज्ञाः–सरलाः पण्डिताश्च बभूवुः। तदर्थं द्वाविंशतितीर्थंकरसाधूनां चत्वारि व्रतानि प्रतिपादितानि। श्रीआदीश्वर–महावीरयोः साधूनां पञ्च महाव्रतानि उक्तानि ॥

अथ साधवो यस्मिन् क्षेत्रे चतुर्मासीमधितिष्ठन्ति, तस्य क्षेत्रस्य गुणान् निवेदयति, गाथा–

चिक्खिल्ल पाण थंडिल वसही गोरस जिणाउले विज्जे। ओसह निचयाहिवई पाखंडी भिक्ख सज्झाए ॥

अर्थः–१ यस्मिन् ग्रामे पङ्कः स्तोको भवति। २ यस्मिन् ग्रामे द्वीन्द्रिय–त्रीन्द्रिय–चतुरिन्द्रियजीवाः प्रायश्चाल्पा भवन्ति। ३ पुनर्यत्र स्थण्डिलो–बहिर्भूमिर्निरवद्या भवति। ४ पुनर्यस्मिन् ग्रामे वसतिः–धर्मशाला–सम्यग् भवति। ५ पुनर्यत्र गोरसो–दधि–दुग्ध–घृत–तक्रादिकं प्रचुरं मिलति। ६ पुनर्यस्मिन् ग्रामे

१. तत्र दृष्टान्तो यथा—केचिद् अजितादिजिनयतयो नटं निरीक्ष्य चिरेणागता गुरुभिः पृष्टा यथास्थितम् अकथयन् गुरुभिश्च निषिद्धाः. अथान्यदा ते वहिर्गता नटीं नृत्यन्तीं विलोक्य प्राज्ञत्वाद् विचारयामासुः यदस्माकं रागहेतुत्वाद् गुरुभिः नटनिरीक्षणं निषिद्धम्, तर्हि नटी तु अत्यन्तरागकारणत्वात् सर्वथा निषिद्धा एव इति विचार्य नटीं न अवलोकितवन्तः ॥ २. पङ्कः प्राणाः स्थण्डिलः वसतिर्गोरसं जिनाकुलं वैद्यः। औषधं निचयाधिपतिः पाखण्डी भिक्षा स्वाध्यायः ॥

जैनानां कुलं भवति–आढ्याश्च प्रचुरा भवन्तीत्यर्थः । ७ पुनर्यत्र वैद्या व्याधिहर्तारो भवन्ति । ८ पुनर्यत्र ग्रामे औषधानि बहूनि मिलन्ति । ९ पुनर्यस्मिन् ग्रामे निचयो धान्यादिसंग्रहो भवति । १० पुनर्यस्मिन् ग्रामे अधिपति–ग्रामाधीशो–भव्यो भवति । ११ पुनर्यस्मिन् ग्रामे पाखण्डिनः स्तोका भवन्ति । १२ पुनर्यस्मिन् ग्रामे भिक्षा सुलभा भवति । १३ पुनर्यस्मिन् ग्रामे पठनम्, गुणनम्, धर्मध्यानं च सुखेन भवति । एते त्रयोदश गुणा यत्र क्षेत्रे भवन्ति, तत्र चातुर्मास्यां साधुभिः स्थातव्यम् । कदाचिद् यत्र त्रयोदशगुणा न भवन्ति, तदापि चत्वारो गुणा एते अवश्यं युज्यन्ते एव । त चामी गुणाः–

मंहई विहारभूमी विहारभूमी अ सुलहसज्झायो । सुलहा भिक्खा य जहिं जहन्नं वासखित्तं तु ॥

१ यत्र ग्रामे तीर्थंकराणां गृहाणि भवन्ति । २ यस्मिन् ग्रामे विहारभूमिः–प्राऽसुकस्थण्डिलभूमिः–भवति, यतो जन्तूनां विराधना स्तोका भवति । ३ यस्मिन् क्षेत्रे स्वाध्यायः सुखेन भवति । ४ पुनर्यस्मिन् क्षेत्रे भिक्षा सुखेन लभ्यते । एतैश्चतुर्भिर्गुणैर्युक्तं क्षेत्रं जघन्यं ज्ञेयम् । पूर्वोक्तैस्त्रयोदशगुणैर्युक्तं तु क्षेत्रम्–उत्कृष्टं ज्ञेयम् ॥

अथ सर्वेषां लौकिकपर्वणाम्, अथ च लोकोत्तराणां च पर्वणां मध्ये श्रीपर्युषणापर्व सर्वोत्कृष्टं वर्तते । तद्वर्णनकाव्यमाह–

१. महती विहार( जिनायतन )भूमिः विहारभूमिश्च सुलभस्वाध्यायः । सुलभा भिक्षा च यत्र जघन्यकं वर्षाक्षेत्रं तु ॥

मन्त्राणां परमेष्ठिमन्त्रमहिमा तीर्थेषु शत्रुंजयो, दाने प्राणिदया गुणेषु विनयो ब्रह्म व्रतेषु व्रतम् ।
संतोषे नियमः तपस्सु च शमः तत्त्वेषु सद्दर्शनं, सर्वेषूत्तमपर्वसु प्रगदितः श्रीपर्वराजस्तथा ॥ १ ॥

जिमं क्षीरमांहि गोक्षीर, जलमांहि गंगानीर, । पटसूत्रमांहि हीर, वस्त्रमांहि चीर, । अलंकारमांहि चूडामणि, ज्योतिषीमांहि निशामणि, । तुरंगमांहि पंचवल्लभ किशोर, नृत्यकलामांहि मोर, । गजमांहि ऐरावण, दैत्यमांहि रावण, । वनमांहि नंदनवन, काष्ठमांहि चंदन, । तेजस्वीमांहि आदित्य, साहसीकमांहि विक्रमादित्य, । न्यायवंतमांहि श्रीराम, रूपवंतमांहि काम, । सतीयांमांहि राजीमती, । शास्त्रमांहि भगवती, । वाजित्रमांहि भंभा, स्त्रीमांहि रंभा, । सुगंधमांहि कस्तुरी, वस्तुमांहि तेजमतुरी, । पुण्यश्लोक मांहि नल, पुष्पमांहि सहस्रदल कमल, तिम पर्वमांहि श्रीपर्युषाणापर्व जाणवो ॥

अस्मिन् पर्युषणापर्वणि समागते मङ्गलार्थं पूर्वाचार्याः श्रीसंघाग्रे श्रीकल्पसूत्रं वाचयन्ति एतत् श्रीकल्पसूत्रं

---

१. यथा क्षीरे गोक्षीरम्, जले गङ्गानीरम्, पट्टसुत्रे हीरम्, वस्त्रे चीरम्, अलंकारे चूडामणिः, ज्योतिश्चक्रे निशामणिः, तुरङ्गे पञ्चवल्लभकिशोरः, नृत्यकलायुक्तेषु मयूरः, गजे ऐरावणः, वने नन्दनम्, काष्ठे चन्दनम्, तेजस्विषु आदित्यः, साहसिकेषु विक्रमादित्यः, न्यायिषु श्रीरामः, रूपिषु कामः, सतीषु राजीमती, शास्त्रेषु भगवती, वाद्येषु भम्भा, स्त्रीषु रम्भा, सुगन्धेषु कस्तुरी, वस्तुषु तेजमतूरी ( तेजोमृत्तिका ), पुण्यश्लोकेषु नलः, पुष्पेषु सहस्रदलकमलपरिमलः, तथा पर्वसु पर्युषणापर्व विभाव्यताम् ॥ २. श्रीवीरात् ९८० वर्षे श्रीआन-

दशाश्रुतस्कन्धोद्धाररूपं श्रीभद्रबाहुस्वामिविरचितं श्रीसंघाग्रे मङ्गलार्थं व्याख्यायते ॥ अथ श्रीकल्पसूत्रश्रवणस्य माहात्म्यं वर्णयति–

**एगग्गचित्ता जिणसासणम्मि पभावणा–पूअपरा नरा जे। तिसत्तवारं निसुणन्ति कप्पं भवण्णवं ते लहु संतरन्ति ॥**

**ये मनुष्या एकाग्रचित्ता निश्चलचित्ताः, जिनशासने प्रभावना–पूजासु पराः सावधानाः सन्तः, त्रिसप्तवा-**

---

न्दपुरे सांप्रतं नाम्ना वडनगरे ध्रुवसेनो राजाऽभूत्। तस्य पुत्रः सेनाङ्गजो राज्ञोऽतिवल्लभः। स च दैवात् पर्युषणाऽऽगमे मृतः, राजा अतीवशोकाक्रान्तो जातः। धर्मशालायां नाऽऽगच्छति। तस्य अनागमने 'यथा राजा तथा प्रजा' इति हेतो अन्येऽपि श्रेष्ठिव्यवहारिणो लोका नाऽऽगच्छन्ति, ततश्च धर्महानि जायमानां दृष्ट्वा गुरुभिर्ध्रुवसेनराजसमीपे गत्वा प्रोक्तम्–हे राजन्! त्वयि शोके क्रियमाणे, सर्व नगरं सदेशं शोकातुर जातम्। 'शरीरम् अनित्यम्, विभवोऽपि अशाश्वतः, आयुश्च चञ्चलम्, असारः संसारोऽस्ति,' 'न भवादृशा ज्ञात-जिनधर्माणाम् अधिकशोककरणं युक्तम्, 'अथ च भवतां लाभः प्रदीयते, अश्रुतं श्रुतं श्रावयामः' श्रीभद्रबाहुस्वामिभिर्नवमपूर्वाद् अष्टमम्–अध्ययनं कल्पसूत्रनामकम्–उद्धृतम् अस्ति। तच्च मङ्गलभूतं महाकर्मक्षयकारकं विशेषशास्त्रं वर्तते। यदि धर्मशालायाम् आगम्यते, तदा वाच्यते। राज्ञा च अङ्गीकृतम्। ततो राजादिसभासमक्षं नवभिर्वाचनाभिः सप्रभावनाभिः वाचितम्। ततः प्रभृति लोकसमक्षं कल्प-सूत्रवाचनप्रवृत्तिर्जाता। १. एकाग्रचित्ता जिनशासने प्रभावना–पूजापरा नरा ये। त्रिसप्तवारं निशृण्वन्ति कल्पम्, भवार्णवं ते लघु संतरन्ति ॥

रम्–एकविंशतिवारं–श्रीकल्पसूत्रं 'निसुणन्ति' सम्यक् शृण्वन्ति, ते भव्यजीवा लघु शीघ्रम्, भवार्णवम्–संसारसमुद्रं संतरन्ति ॥

पुनरपि अस्मिन् पर्युषणापर्वणि समागते साधूनां कर्तव्यं प्रोच्यते–

संवत्सरप्रतिक्रान्तिः, लुञ्चनम्, चाष्टमं तपः। सर्वार्हद्भक्तिपूजा च संघस्य क्षामणाविधिः ॥ १ ॥

एतेषां पञ्चानां कारणानामर्थं जिनैर्गणधरैरिदं पर्युषणापर्व स्थापितम्। तानि पञ्च कारणानि इमानि–संवत्सरीप्रतिक्रमणम्, मस्तके लुञ्चनम्, उपवासत्रयकरणम्, सर्वेषाम्–अर्हच्चैत्यानां भावपूजाकरणम्, परस्परं क्षामणाविधिश्च, एतत् साधूनां कर्तव्यम्। श्रावकैरपि जिनेन्द्राणां पूजा कर्तव्या, श्रुतज्ञानस्य भक्तिः, संघस्यापि भक्तिः, परस्परं क्षामणाविधिः, अष्टमं तपः, एतत् कर्तव्यम्, श्रावका अपि कुर्वन्तो मुक्तिं प्राप्नुवन्ति। अत्र नागकेतुदृष्टान्तः–चन्द्रकान्त्यां नगर्यां विजयसेनो राजा। तत्र नगर्यां श्रीकान्तः श्रेष्ठी वसति। तद्भार्या श्रीसखीनाम्नी। तयोः पुत्रोऽस्मिन् पर्वणि–पर्युषणापर्वणि–समागते सर्वेषां लोकानां मुखाद् अष्टमं तपस्करणं श्रुत्वा संजातजातिस्मृतिः अष्टमं तपश्चकार। प्राग्जन्मनि अपि सपत्नीजनन्या कृताष्टमतपोनिश्चयस्य रात्रौ सुप्तस्य अग्निः प्रज्वालितः, ततश्च्युत्वा तत्रोत्पन्नोऽस्ति। अतस्तेन बालकेन अष्टमं तपः कृतम्। मातुः स्तन्यपानं न करोति। मूर्छया बालो निश्चेष्टितः संजातः। तदा तन्मोहवशाद् मातृपितरौ हृदयस्फोटनेन मृतौ। स्वजनसंबन्धि-

भिः मातृपितरौ अग्निना संस्कारितौ । यदा च बालमपि मृतं ज्ञात्वा संस्कारार्थं स्वजनाः सज्जी बभूवुः । तावत् तत्र धरणेन्द्रः आगत्य बभाषे । ब्राह्मणरूपेण भूत्वा बालं गृहीत्वा अपुत्रस्य धनग्रहणार्थमागतान् राजपुरुषान् निवारयामास । तं बालं सज्जं चकार, लोकान् उवाच–अनेन बालेन अष्टमं तपः कृतमस्ति । एष बालो जिनशासनस्य महाप्रभावनाकारको भविष्यति । तद्वचः श्रुत्वा सर्वेऽपि राजाद्या जना विस्मिता बभूवुः । लोकैर्नागकेतुरिति नाम दत्तम् । धरणेन्द्रेण वर्धितो यदा तरुणो बभूव, तदा जिनशासनस्य प्रभावनाकृत् संजातः । इति नागकेतुकथा ॥

यथा जिनशासने इदं पर्व महद् वर्तते, तथा[२] शिवशासनेऽपि अस्य पर्वणः महद् माहात्म्यं वर्तते । तत्र

---

१. एकदा राज्ञा एकश्चौरो व्यापादितः, स मृत्वा व्यन्तरो जातः, तेनादृशीभूतेन पादेनाहत्य सिंहासनाद् राजा भुवि पातितः, लोकश्च सर्वोऽपि व्याकुलीभूतः, पुनरपि व्यन्तरो नगरोपरि महती शिलां विकुर्व्य दुर्वचनेन लोकान् भापयामास । ततो नागकेतुः श्रावकश्चतुर्विधसंघः, जिनप्रासाद–प्रतिमारक्षार्थम् उच्चैः प्रासादोपरि चटित्वा तां व्यन्तरमुक्तां शिलां करेण धृतवान्, तस्य तेजसा व्यन्तरो हतप्रतापः शिलां संहृत्य नागकेतुं नत्वा, राजानं समाधिमन्तं कृत्वा, स्वस्थानं गतः। ततो नागकेतुश्राद्धो राजादीनां मान्यो जातः । अन्यदा नागकेतुः प्रतिमापूजां कुर्वन् पुष्पमध्यस्थेन सर्पेण दष्टः, शुभध्याने केवलं ज्ञानं प्राप्तवान्, शासनदेव्या च साधुवेषो दत्तः, ततश्चिरकालं भव्यजीवान् प्रतिबोध्य मोक्षं गतः ॥ २. इतरशास्त्रेष्वपि श्रीजिनशासनस्य समुल्लेख उपलभ्यते, अतस्तस्यातिप्राचीनता तथा न चेदं

**कथा–पुष्पवती नाम नगरी । अर्जुननामा तत्रैको ब्राह्मणः । तत्पुत्रो गङ्गाधरोऽस्ति । कालान्तरेण गङ्गाधरस्य**

श्रीजिनशासनम्–अर्वाचीनम्, वेदे, पुराणे, स्मृतौ च सर्वत्र तस्य अधिकारदर्शनात् । तत्र यज्ञेषु मूलमन्त्रो यथा–" (परं वेदध्वनिना हस्तन्यासेन च वक्तव्यः ) ॐ लोकश्रीप्रतिष्ठान् चतुर्विंशतितीर्थंकरान् ऋषभादिवर्धमानान्तान् सिद्धान् शरणं प्रपद्यामहे । ॐ पवित्रमग्निम् उपस्पृशामहे । येषां जातं सुप्रजातम्, येषां धीरं सुधीरम्, येषां नग्नं सुनग्नम्, ब्रह्म सुब्रह्मचारिणम्, उदितेन मनसा, अनुदितेन मनसा, देवस्य महर्षयो महर्षिभिर्जुहे । याजकस्य यजन्तस्य च सा एषा रक्षा भवतु, शान्तिर्भवतु, तुष्टिर्भवतु, वृद्धिर्भवतु, स्वस्तिर्भवतु, श्रद्धा भवतु, निर्व्याजं भवतु" । ब्रह्माण्डपुराणेऽप्युक्तम्–"नाभिस्तु जनयेत् पुत्रं मरुदेव्यां महाद्युतिम् । ऋषभः क्षत्रियज्येष्ठः सर्वक्षत्रस्य पूर्वजम्॥१॥ ऋषभाद् भरतो जज्ञे वीरपुत्रशताग्रजः । अभिषिच्य भरतं राज्ये महाप्रव्रज्यामाश्रितः॥२॥" ॥ पुनः ब्रह्माण्डपुराणे–"इह हि इक्ष्वाकुकुलवंशोद्भवेन, नाभिसुतेन, मरुदेव्या नन्दनेन, महादेवेन ऋषभेण दशप्रकारो धर्मः स्वयमेव आचीर्णः, केवलज्ञानलाभाच्च प्रवर्तित इति" । तथा आरण्यकपुराणेऽपि, यथा–"ऋषभ एव भगवान् ब्रह्मा, तेन भगवता ब्रह्मणा स्वयमेव आचीर्णानि ब्रह्माणि, तपसा च प्राप्तः परं पदम् । पुनः प्राभासपुराणेऽपि यथा–"युगे युगे महापुण्या दृश्यते द्वारकापुरी । अवतीर्णो हरिर्यत्र प्रभासे शशिभूषणः ॥१॥ रैवताद्रौ जिनो नेमिर्युगादिविमलाचले । ऋषीणाम् आश्रमादेव मुक्तिमार्गस्य कारणम्॥२॥" तथा पुनरपि स्कन्धपुराणे, अष्टादशसहस्रसंख्ये नगरपुराणे, अतिप्रसिद्ध–वृद्धनगरस्थापनादिवक्तव्यताधिकारे भवाऽवताररहस्ये, षट्सहस्रैः श्रीऋषभचरित्रसमग्रमस्ति । तथा तत्रैव भवावताररहस्ये–"स्पृष्ट्वा शत्रुंजयं तीर्थं नत्वा रैवतकाचलम् । स्नात्वा गजपदे कुण्डे पुनर्जन्म न विद्यते ॥ १ ॥" (श्रीसमयसुन्दरोपाध्यायरचितकल्पलता.) ॥

मातापितरौ व्यापन्नौ । पुत्रस्य गृहे अर्जुनो बलीवर्दो बभूव । तस्य स्त्री तद्गृहे शुनी बभूव । एकदा गङ्गाधरेण मातापित्रोः श्राद्धोत्सवः समारब्धः । तस्मिन् दिने स बलीवर्दः एकस्मै तैलिकाय मार्गितः प्रदत्तोऽस्ति । श्राद्ध-करणावसरे तेन ब्राह्मणेन गङ्गाधरेण स्वजनादीनां भोजनाय क्षैरेयी पाचिताऽस्ति । सर्वे ज्ञातीया भोजनार्थं निमन्त्रिताः सन्ति । तदा शुनी दूरे स्थिताऽस्ति । क्षैरेयीं पच्यमानां विलोकयति । तदैव क्षैरेयीभाजनं उद्घाटि-तमुखं सर्पगरलाक्रान्तं दृष्ट्वा, 'एतत् सर्वं मत्कुटुम्बं विषाक्रान्तं भविष्यति' इति ज्ञात्वा तत् क्षैरेयीभाजनं उच्छिष्टं चकार । तदा च रुष्टेन गङ्गाधरेण लकुटीप्रहारेण शुन्याः कटी भग्ना । पूत्कुर्वन्ती च शुनी वृषभचरण-स्थाने गवादन्यां ( गमाणे ) बद्धा । अन्यद् दुग्धमानीय क्षैरेयीं पाचयित्वा सर्वे ब्राह्मणा भोजिताः । सन्ध्यास-मये च तैलिकेन स बलीवर्दो दत्तः तेन गवादन्यां बद्धः । शुन्यपि तत्रैव तिष्ठति । बलीवर्देन संजातजातिस्मृ-तिना यष्टिप्रहारपीडिता कुर्कुरी पृष्टा–अद्य त्वं कथं पूत्करोषि ? तयोक्तम्–त्वत्पुत्रेण अहं कट्यां यष्टिना हता । मया तु सर्वेऽपि ब्राह्मणा अद्य विषमरणाद् रक्षिताः उपकारः कृतः, त्वत्पुत्रेण च अपकारः कृतः । बलीवर्दोऽपि आह–हे प्रिये ! अहमपि अनेन पापिष्ठेन मत्पुत्रेण तैलिकाय दत्तः, तैलिकेनाऽहं सर्वस्मिन् दिने तिलयन्त्रे वाह-यित्वा इदानीं पुत्राय दत्तः । सर्वदिने क्षुधया मृतः । एष वृत्तान्तो निकटप्रसुप्तेन गङ्गाधरेण सर्वः श्रुतः । तदा गङ्गाधरश्चिन्तातुरो मातापित्रोर्गत्यर्थं गृहं त्यक्त्वा परदेशे महापुरुषान् तापसान् तपः पप्रच्छ । तदा ते तापसाः

तयोः कुगतिकारणं पर्वदिने मैथुनसेवनम् ऊचुः । एताभ्यां मातापितृभ्यां अप्रस्तावे कामक्रीडा सेविता । अतश्च त्वं भाद्रपदशुक्लपञ्चम्यां व्रतं करिष्यसि, पारणायां उत्तरपारणायां च अकर्षितधान्यं भोक्ष्यसे, एतत् तपः प्रभावाद् एतौ सुगतिभाजौ भविष्यतः । तेनाऽपि ऋषीणां वचनात् तथैव कृतम् । तौ च सुगतिभाजौ जातौ । शिवशासनेऽपि इयं 'ऋषिपञ्चमी' इति प्रसिद्धं पर्व वर्तते ॥

तथा अयं कल्पस्तृतीयवैद्यस्य भेषजवत् सौख्यकर्ता, कर्मरोगाणां हर्ता च । तत्र दृष्टान्तो यथा–एकस्मिन् नगरे एको नृपो राज्यं करोति । तस्य एक एव पुत्रोऽस्ति । तेन पुत्रनिरोगार्थं, पुष्ट्यर्थं, कायकल्पार्थं च वैद्याः समाहूताः । तदा राजा वैद्यान् पप्रच्छ । यथा मत्पुत्रस्य शरीरे पुष्टिर्भवति, कान्तिर्भवति, आगामिनां च रोगाणां निवृत्तिः स्यात्, तद् औषधं कर्तव्यम् । तत्र त्रयो वैद्याः समागताः । प्रथमो वैद्यः प्राह–हे राजन् ! मम औषधं शरीरे रोगसद्भावे रोगं दूरीकरोति, कदाचित् शरीरे रोगो न स्यात् तदा नवीनं रोगं समुत्पादयति । राज्ञा श्रुत्वा निवेदितम्–अनेन तव औषधेन अलम् । इदं तु सुप्तसिंहोत्थापनवद् न सुन्दरम् ॥

द्वितीयो वैद्योऽपि प्राह–स्वामिन् ! मम औषधं चैतादृशं वर्तते, यद् रोगसद्भावे रोगं निवारयति, चेद् रोगो न स्यात् तदा ममौषधं शरीरे अपगुणमपि न करोति । तद्वचोऽपि श्रुत्वा राजा प्राह–तवौषधेनापि अलम्–तद् भस्मनि हुतमिव व्यर्थम् ।

ततस्तृतीयो वैद्यः प्राह—हे राजन् ! ममौषधं रोगसद्भावे रोगं निवारयति, कदाचिद् रोगो न स्यात् तदा शरीरे तुष्टि-पुष्टि-सौभाग्या-ऽऽरोग्यम्, आगामिरोगनिवारणं च स्यात्। राजा अवादीत्-इदमौषधं सम्यक् कर्तव्यम्, त्वदीयमौषधं रसायनप्रायं, तेनाऽपि वैद्येन कृतम्। राज्ञः पुत्रश्च बलिष्ठः, चिरंजीवी च बभूव। तथा एतत् कल्पसूत्रमपि श्रुतं सत् सकर्मा जीवः पूर्वोपार्जितकर्माणि निहन्ति, लघुकर्मा भवति, लघुकर्मा च क्षीणकर्मा भूत्वा अजरामरपदभाग् भवति ॥

अथ श्रीभद्रबाहुस्वामी मङ्गलार्थं श्रीपञ्चपरमेष्ठिनमस्कारं वदति-

णमो अरिहंताणं, णमो सिद्धाणं, णमो आयरियाणं, णमो उवज्झायाणं, णमो लोए सव्व-साहूणं। एसो पंच णमोक्कारो, सव्वपावप्पणासणो। मंगलाणं च सव्वेसिं, पढमं हवइ मंगलं ॥ १॥

नमः-नमस्कारोऽस्तु, 'अरिहंताणं' अर्हद्भ्यः-शक्रादिकृतां पूजामर्हन्ति, इन्द्रकृतपूजायै योग्या भवन्तीति अर्हन्तः, तेभ्योऽर्हद्भ्यो नमोऽस्तु। नमस्कारोऽस्तु सिद्धेभ्यः-सितं (बद्धम्), ध्मातं प्रज्वालितम्-अष्टकर्मलक्षणं कर्मचक्रं यैस्ते सिद्धाः, तेभ्यः सिद्धेभ्यः। नमः आचार्येभ्यः-आचाराय योग्याः आचार्याः-पञ्चाचारपालकाः, तेभ्यः आचार्येभ्यः। नम उपाध्यायेभ्यः-उप समीपे आगत्य अधीयते द्वादशाङ्गी येभ्यस्ते उपाध्यायाः, तेभ्यः। नमोऽस्तु लोके सर्वसाधुभ्यः-साधयन्ति मोक्षमार्गं ते साधवः, तेभ्यस्साधुभ्यः।

एष पञ्चनमस्कारः सर्वपापप्रणाशनः । मङ्गलानां च सर्वेषां प्रथमं भवति मङ्गलम् ॥

अस्मिन् पञ्चपरमेष्ठिमन्त्रे नव पदानि, अष्टौ संपदः, सप्त गुर्वक्षराणि, एकषष्टिर्लघ्वक्षराणि–सर्वाक्षराणि अष्टषष्टिः ॥ गाथा–

इह लोअम्मि तिदंडी सा दिव्वं माउलिंगवणमेव । परलोए चंडपिंगल–हुंडयजक्खो य दिट्ठंता ॥[1]

अस्य स्मरणाद् इह लोके त्रिदण्डकस्य दृष्टान्तः–शिवकुमारस्य सुवर्णपुरुषो निष्पन्नः । पश्चाद् नमस्कारादु एव

---

१. इह लोके त्रिदण्डी सा दिव्यं मातुलिङ्गवनमेव । परलोके चण्डपिङ्गल–हुण्डकयक्षश्च दृष्टान्ताः ॥ २. तत्र दृष्टान्तो यथा–कुसुमपुरे धनश्रेष्ठी, तस्य पुत्रः शिवकुमारनामा द्यूतादिव्यसनी जातः। स च व्यसनेन एव धनक्षयं करोति, पित्रा वार्यमाणोऽपि स्वेच्छया विहरति । एकदा व्याधितेन पित्राऽऽहूय पुत्रः प्रबोधितः, अरे!! त्वं मयि परलोकं गते बहुदुःखभाग् भविष्यसि ततो मम एकं वचो धारय, पञ्चपरमेष्ठिनमस्कारमन्त्रं धारय, आपतिते कष्टे एतन्मन्त्रस्मरणात् तव कष्टनिवृत्तिर्भाविनी ततः पितुर्मुखात् पुत्रेणाऽपि मन्त्रो गृहीतः, पिता तु परलोकं गतः। शिवस्तु पितुः पारलौकिकीक्रियाः कृतवान्, तदनन्तरं पूर्वसेवितव्यसनेन ऋणपीडितो नगराद् बहिरेव भ्राम्यति, एकदा एकस्त्रिदण्डी वनवासी इमं पप्रच्छ भोः ! खिन्नः, दीनस्वरो वने कथम् अटसि ? सोऽपि यथावृत्तं तम् उक्तवान् । ततो दण्डिना उक्तम्–मा खिद्यस्व, चेद् मदुक्तं करिष्यसि तर्हि तेऽक्षया संपद् भविष्यति; शिवेन उक्तम्–कथं तत्, पुनरपि सोऽवादीत्–एकम् अक्षीणाऽङ्गं शवम् आनय, अन्या सामग्री मदाऽऽयत्ताऽस्तु एव, तेनाऽपि लोभाऽभिभूतेन कुतोऽपि शवम् आनीय ढौकितम्, दण्डिनाऽपि तैलभृतं महद्यस्पात्रं भ्राष्ट्रे

श्रीमत्याः सर्पात् पुष्पमाला जाता[१]। पश्चाद् मातुलिङ्गम्–बीजपूरं देवेन जिनदासश्राद्धाय समर्पितम्। परलोके

---

आरोपितम्, अधो वह्निः प्रज्वालितः, तेन तापसाऽधमेन शिक्षितो भोः! त्वम् इमं शव सर्वाङ्गेषु तैलेन परामृषः, सोऽपि तद्वचः प्रतिपद्य
तथैवाऽकरोत्, दण्डी चाऽरिष्टफलमालायां मन्त्रं जजाप। तदा शिवेन विमृष्टम्–अयं दण्डी तु मदनुपलक्षितः, मया पूर्वम् असेवितश्च कथं
मदनुग्रहपरो भविष्यति। अयं तु माम् एव उपद्रूय स्वसाध्यं साधयेत् तर्हि कोऽत्र मद्रक्षकः, हा!!! कष्टम् आपतितम् अतः परं पितृवचः
स्मृत्वा कष्टहान्यै मनसि पञ्चनमस्कारं सस्मार, दण्डी तु जपान्ते शवम् उत्थातुं लग्नः, श्रीनमस्कारप्रभावात् पुनस्तद् अवस्थां प्राप्तोऽपतत्,
दण्डिना उक्तम्–अरे अम्ब! किं ध्यायसि, येन कार्यसिद्धौ विघ्नोऽभूत्। शिवेन उक्तं न किमपि, पुनर्दण्डी जपे प्रवृत्तः, शिवेनाऽपि
लब्धप्रयत्नेन पुनर्नमस्कारस्मरणेऽतीवाऽऽग्रहश्चक्रे, अतो दण्डिनो जपान्ते पुनः शवेन उत्तस्थे, पुनः पेते। दण्डिना पुनरुपालब्धोऽपि शिवो
न किमपि इत्युवाच, पुनस्तापसो जपे प्रवृत्ते, शिवोऽपि तथैव, एवं तृतीयवारे शवेन उत्थाय दण्डी एवाऽयस्पात्रे पातितो जातः सुवर्णपुरुषः।
शिवकुमारस्तु तं काञ्चनपुरुषम् आदाय गृहम् आयातः, अनयाऽक्षयसंपत्त्या सुखी जातः, व्यसनानि विमुच्य धर्मरतो बभूव, सद्गतिं
प्राप। इति नमस्कारमाहात्म्ये शिवकुमारदृष्टान्तः॥

१. तत्कथानकम् इदम्–सौराष्ट्रदेशे एकस्मिन् ग्रामे एकः श्रावकस्तस्य पुत्री श्रीमती नाम्नी सा च कस्मैचिन् मिथ्यात्विने परिणायिता,
सा च जिनेश्वरभक्ता प्रत्यहं पञ्चपरमेष्ठिमहामन्त्रं स्मरन्ती तिष्ठति. श्वाशुर्यपाक्षिकैः सर्वैर्निषिद्धाऽपि आर्हतं धर्मं न मुञ्चति, ततस्तैः रुष्टैः
एवं विचारितं यद्येषा म्रियते तदा अन्यां वधूम् आनयामः, तद्भर्त्राऽपि अयं मन्त्रोऽङ्गीकृतः। एकस्माद् गारुडिकात् कृष्णसर्पम् आनाय्य

चण्डपिङ्गलचौराय कलावत्या वेश्यया नमस्कारः श्राविताऽभूत्, ततः शूलाविद्धोऽपि मृत्वा चण्डपिङ्गलः तत्रैव नगर्यां नृपस्य पुत्रोऽभूत्। हुण्डकोऽपि यक्षस्य नाम। राजगृहपुर्यां प्रसेनजितराजा। रूपखुरनामा चौरो रसनालम्पटो नित्यं नृपेण सह भुञ्जानो धूमप्रयोगेण बद्धा शूलाविद्धो जिनदासेन प्रदत्तनमस्कारो मृत्वा यक्षो बभूव। जिनदासश्राद्धो राज्ञा पीड्यमानो यक्षेण मोचितः, कृतसाहाय्यो गजारूढः स्वगृहमाजगाम। एवमन्येऽपि नमस्कारस्य बहवो दृष्टान्ताः सन्ति ॥

अथ श्रीमद्भगवन्महावीरदेवस्य पश्चानुपूर्व्या आसन्नोपकारित्वेन षट् कल्याणकानि श्रीभद्रबाहुस्वामी वर्णयति–

**ते णं काले णं, ते णं समए णं, समणे भगवं महावीरे पंच हत्थुत्तरे होत्था, तं जहा– ॥**

---

कलशे तद्भर्ता प्रचिक्षेप, घटमुखं पिधाय घोरान्धकारे कलशं मुमोच. द्वितीये अह्नि भर्ता विष्णुपूजां कुर्वन् श्रीमतीम् आदिष्टवान् अपवरके घटे मुक्तां पुष्पस्रजम् आनय, येन पुष्पपूजा भवेत्, तयाऽपि तद्वचः प्रतिपद्य गर्भागारे कलशपिधानम् अपनीय 'ॐ नमो अरिहंताणं' इति भणित्वा हस्तं प्रक्षिप्य पुष्पमालाम् आदाय भर्त्रे यावद् ददाति तावत् स कृष्णसर्प एव तेन दृष्टो भीतश्च, भर्ता मनसि दध्यौ अहो ! ! अस्या धर्मः श्रेयान्, इति विचिन्त्य तस्याः पत्न्या एव मुखात् सोऽपि जैनधर्मं प्रतिपेदे, इति श्रीमतीदृष्टान्तः ॥

तस्मिन् काले चतुर्थारके, तस्मिन् समये—यस्मिन् समये श्रीमहावीरदेवो देवानन्दाया ब्राह्मण्याः कुक्षौ दशमदेवलोकस्य प्रधानपुष्पोत्तरनाम्नो विमानात् च्युत्वा समुत्पन्नः स समयोऽत्र गृह्यते, तस्मिन् समये। 'णं' इति वाक्यालंकारे। श्रीमहावीरदेवस्य पञ्च कल्याणकानि उत्तराफाल्गुनीनक्षत्रे अभूवन्। हस्तः हस्तनक्षत्रम्, उत्तरः अग्रे, उत्तरस्यां वा यासां ता हस्तोत्तराः। उत्तराफाल्गुनीनक्षत्राद् अग्रे हस्तनक्षत्रमस्ति, तेन उत्तराफाल्गुनीनक्षत्रं हस्तोत्तराख्यमुच्यते। यानि पञ्च कल्याणकानि जातानि, तान्याह—

हत्थुत्तराहिं चुए चुइत्ता गब्भं वक्कन्ते।१। हत्थुत्तराहिं गब्भाओ गब्भं साहरिए।२। हत्थुत्तराहिं जाए।३। हत्थुत्तराहिं मुंडे भवित्ता अगाराओ अणगारिअं पव्वइए।४। हत्थुत्तराहिं अणंते, अणुत्तरे, निव्वाघाए, निरावरणे, कसिणे, पडिपुण्णे केवलवरनाण—दंसणे समुप्पन्ने।५। साइणा परिनिव्वुए भयवं॥ ६॥ १॥

तद्यथानुक्रमेण वर्णयति—भगवान् श्रीमहावीरः उत्तराफाल्गुनीनक्षत्रे देवविमानात् च्युतः, च्युत्वा गर्भत्वेन उत्पन्नः।१। पुनरुत्तराफाल्गुनीनक्षत्रे देवानन्दायाः कुक्षितो हरिणेगमेषिणा देवेन त्रिशलायाः कुक्षाववतारितः

।२। पुनरुत्तराफाल्गुनीनक्षत्रे भगवतः श्रीमहावीरस्य जन्म अभूत् ।३। पुनः श्रीमहावीर उत्तराफाल्गुनीनक्षत्रे दीक्षां गृहीत्वा, गृहवासं त्यक्त्वा अनगारो जातः ।४। पुनः श्रीमहावीरस्य उत्तराफाल्गुनीनक्षत्रे एव अनन्ते अनन्तार्थविषयत्वेन, पुनरनुत्तरे सर्वेभ्य उत्कृष्टे, निर्व्याघाते कट-कुड्यादिना अनाहते, निरावरणे क्षायिकत्वेन आच्छादनरहिते, पुनः कृत्स्ने समस्तानां पदार्थानां ग्राहके, प्रतिपूर्णे पूर्णिमाचन्द्रमण्डलोपमे-सकलांशसहिते, केवले असहाये, एतादृशे वरे प्रधाने ज्ञान-दर्शने समुत्पन्ने ।५। एतानि पञ्च कल्याणकानि श्रीमहावीरदेवस्य उत्तराफाल्गुनीनक्षत्रे जातानि । तथा स्वातिनक्षत्रे चन्द्रे सति भगवान् श्रीमहावीरः परिनिर्वृतो मोक्षं प्राप्तः ।६। एवं षट् कल्याणकानि श्रीमहावीरस्य संक्षेपेण निरूपितानि । अग्रे द्वितीयवाचनायां विस्तरत्वेन व्याख्यास्यामः ॥

१. श्रीवीरस्य षट् कल्याणकानि बहुषु आगमेषु तीर्थंकर-गणधरमहाराजैः प्रतिपादितानि सन्ति । स्थानाङ्गसूत्रस्य पञ्चमे स्थानके पद्मप्रभ-सुविधि-शीतलप्रभृतिवीरपर्यन्तचतुर्दशतीर्थकराणां च्यवनादि पञ्च पञ्च कल्याणकसंख्यामीलनेन सप्ततिकल्याणकानि दर्शितानि । तथाहि तत्पाठो यथा—

पउमप्पभे णं अरहा पंचचित्ते होत्था, तं जहा चित्ताहिं चुए चइत्ता गब्भं वक्कंते ।१। चित्ताहिं जाए ।२। चित्ताहिं मुंडे भवित्ता अगाराओ अणगारियं पव्वइए ।३। चित्ताहिं अणंते अणुत्तरे णिव्वाघाए निरावरणे कसिणे पडिप्पुन्ने केवलवरनाण-दंसणे समुप्पन्ने ।४। चित्ताहिं परिनिव्वुए ।५। ॥१॥ पुप्फदंते णं अरहा पंचमूले होत्था, मूलेणं चुए चइत्ता गब्भं वक्कंते ।१। एवं चेव एएणं अभिलावेणं इमाओ गाहाओ अणुगंतव्वाओ ॥ पउमप्पभस्स चित्ता ।५। मूले पुण होइ पुप्फदंतस्स ।५। पुव्वासाढा सीयलस्स ।५। उत्तरा विमलस्स भद्दवया ।५।

॥१॥ रेवइए अणंतजिणो ।५। पूसो धम्मस्स ५–संतिणो भरणी ।५। कुंथुस्स कत्तियाओ ।५। अरस्स तहा रेवईओ य ।५। ॥२॥ मुणिसुवयस्स सवणो ।५। आसिणि नमिणो ।५। तह नेमिणो चित्ता ।५। पासस्स विसाहाओ ।५। पंचहत्थुत्तरे वीरो ।५। ॥३॥ समणे भगवं महावीरे पंचहत्थुत्तरे होत्था, तं जहा हत्थुत्तराहिं चुए चइत्ता गब्भं वक्कंते ।१। हत्थुत्तराहिं गब्भाओ गब्भं साहरइए ।२। हत्थुत्तराहिं जाए । ३ । हत्थुत्तराहिं मुंडे भविता जाव पव्वइए ।४। हत्थुत्तराहिं अणंते अणुत्तरे जांवं केवलवरनाण–दंसणे समुप्पन्ने ।५। ॥ इति ॥

पुनः श्रीमदभयदेवसूरिकृतैतत्सूत्रवृत्तिर्यथा–

केवल्यधिकारात्तीर्थंकरसूत्राणि चतुर्दश कण्ठ्यानि चैतानि, नवरं पद्मप्रभ ऋषभादिषु षष्ठः, पञ्चसु च्यवनादिदिनेषु चित्रा नक्षत्रविशेषो यस्य स पञ्चचित्रः, चित्राभिरिति रूढ्या बहुवचनं च्यूतोऽवतीर्णः, उपरिमग्रैवेयकाद् एकत्रिंशत्सागरोपमस्थितिकात् च्युतः च्युत्वा च 'गब्भं ति' गर्भे कुक्षौ व्युत्क्रान्त उत्पन्नः, कौशाम्ब्यां धराभिधानमहाराजभार्यायाः सुसीमानामिकाया माघमासबहुलषष्ठ्यां जातः, गर्भनिर्गमनं कार्तिकबहुलद्वादश्यां चेति, तथा मुण्डो भूत्वा केश–कषायाद्यपेक्षया अगाराद् निष्क्रम्यानगारतां श्रमणतां प्रव्रजितो गतोऽनगारतया च प्रव्रजितः कार्तिकशुद्धत्रयोदश्याम्, तथा अनन्तं पर्यायानन्तत्वात्, अनुत्तरं सर्वज्ञानोत्तमत्वात्, निर्व्याघातमप्रतिपातित्वात्, निरावरणं सर्वथा स्वावरणक्षयात्, कटकुट्याद्यावरणाभावाद्वा, कृत्स्नं सकलपदार्थविपयत्वात्, परिपूर्णं स्वावयवापेक्षयाऽखण्डपौर्णमासीचन्द्रबिम्बवत्, किमित्याह केवलं ज्ञानान्तरसहायत्वात् संशुद्धत्वाद्वा, अत एव वरं प्रधानं केवलवरम्, ज्ञानं च विशेषावभासम्, दर्शनं च सामान्यावभासम्, ज्ञानदर्शनं तच्च तच्चेति केवलवरज्ञान–दर्शनं समुत्पन्नं जातं चैत्रशुद्धपञ्चदश्याम्, तथा परिनिर्वृतो निर्वाणं गतो मार्गशीर्षबहुलैकादश्याम्, आदेशान्तरेण फाल्गुनबहुल-

चतुर्थ्यामिति । एवं चेवेति पद्मप्रभसूत्रमिवपुष्पदन्तसूत्रमप्यध्येतव्यम् एवमनन्तरोक्तस्वरूपेण एतेनानन्तरत्वात्प्रत्यक्षेणाभिलापेन सूत्रपाठेनेमास्तिस्रः सूत्रसंग्रहणिगाथा अनुगन्तव्याः, अनुसर्तव्याः, शेषसूत्राभिलापनिष्पादनार्थम् ॥ पउमप्पभस्सेत्यादि ॥ तत्र पद्मप्रभस्य चित्रानक्षत्रे च्यवनादिषु पञ्चसु स्थानकेषु भवतीत्यादि गाथाक्षरार्थो वक्तव्यः सूत्राभिलापस्त्वाद्यसूत्रद्वयस्य साक्षाद्दर्शित एव इतरेषां त्वेवम्—सीयलेणं अरहा पंच पुव्वासाढे होत्था, तं जहा—पुव्वासाढाहिं चुए चइत्ता गब्भं वक्कंते, पुव्वासाढाहिं जाए, इत्यादि ॥ एवं सर्वाण्यपीति ॥ व्याख्या त्वेवम्—पुष्पदन्तो नवमतीर्थंकर आनतकल्पादेकोनविंशतिसागरोपमस्थितिकाद् फाल्गुनबहुलनवम्यां मूलनक्षत्रे च्युतः, च्युत्वा च काकन्दीनगर्यां सुग्रीवराजभार्यायाः रामाभिधानाया गर्भे व्युत्क्रान्तो मूलनक्षत्रे मार्गशीर्षबहुलपञ्चम्यां जातः, तथा मूल एव ज्येष्ठशुद्धप्रतिपदि मतान्तरेण मार्गशीर्षबहुलषष्ठ्यां निष्क्रान्तः, तथा मूल एव कार्तिकशुद्धतृतीयायां केवलज्ञानम् उत्पन्नम्, तथा अश्वयुजः शुद्धनवम्याम् आदेशान्तरेण वैशाखबहुलषष्ठ्यां निर्वृत इति, तथा शीतलो दशमजिनः प्राणतकल्पाद् विंशतिसागरोपमस्थितिकाद् वैशाखबहुलषष्ठ्यां पूर्वाषाढानक्षत्रे च्युतः, च्युत्वा च भद्दिलपुरे दृढरथनरपतिभार्याया नन्दायाः गर्भतया व्युत्क्रान्तः, तथा पूर्वाषाढास्वेव माघबहुलद्वादश्यां जातः तथा पूर्वाषाढास्वेव माघबहुलद्वादश्यां निष्क्रान्तः तथा पूर्वाषाढास्वेव पौषस्य शुद्धे मतान्तरेण बहुलपक्षे चतुर्दश्यां ज्ञानमुत्पन्नं तथा तत्रैव नक्षत्रे श्रावणशुद्धपञ्चम्यां मतान्तरेण श्रावणबहुलद्वितीयायां निर्वृत इति, एवं गाथात्रयोक्तानां शेषाणामपि सूत्राणां प्रथमानुयोगपदानुसारेणोपयुज्य व्याख्या कार्या—नवरं चतुर्दशसूत्रेऽभिलापविशेषोस्तीति तद्दर्शनार्थमाह ॥ समणे इत्यादि ॥ हस्तोपलक्षिता उत्तरा हस्तोत्तरा हस्तो वा उत्तरो यासां ता हस्तोत्तरा उत्तराफाल्गुन्यः पञ्चसु च्यवनगर्भहरणादिषु हस्तोत्तरा यस्य स तथा गर्भाद् गर्भस्थानात् 'गब्भं ति' गर्भे गर्भस्थाना-

कालसमयंसि संपलिअंकनिसण्णे पणपन्नं अज्झयणाइं कल्लाणफलविवागाइं, पणपन्नं अज्झयणाइं पावफलविवागाइं छत्तीसं च अपुट्ठवागरणाइं वागरित्ता, पहाणं नाम अज्झयणं विभावेमाणे विभावेमाणे कालगए विइक्कंते समुज्जाए, छिन्नजाइजरामरणबंधणे, सिद्धे, बुद्धे, मुत्ते, अंतगडे, परिनिव्वुडे, सव्वदुक्खप्पहीणे ॥ १४६ ॥

अर्थः—तस्मिन् काले तस्मिन् समये श्रमणो भगवान् महावीरः त्रिंशद्वर्षाणि गृहस्थावासे स्थित्वा, किंचिदधिकानि द्वादशवर्षाणि छद्मस्थपर्यायं प्रपाल्य, किञ्चिदूनानि त्रिंशद्वर्षाणि केवलपर्यायं पालयित्वा ४२ वर्षाणि चारित्रं प्रपाल्य, द्वासप्तति ७२ वर्षाणि यावत्सर्वायुः प्रपाल्य वेदनीय–आयु–नाम–गोत्राणां चतुर्णां कर्मणां क्षये सति दुःषमसुषमानाम्नि चतुर्थारके भूयसि गते सति त्रिवर्षसार्द्धाऽष्टमासे शेषे सति मध्यमायां पापायां नगर्यां हस्तिपालस्य राज्ञो राजसभायां जीर्णदानमाण्डव्यां षष्ठभक्तेन चतुर्विधाहारवर्जितेन तपसा युक्तः स्वातिनक्षत्रेण चन्द्रसंयोगे सम्प्राप्ते सति प्रत्यूपकालसमये प्रभातसमये रजन्याः घटिकाद्वये शेषे सति इत्यर्थः, पद्मासने स्थितः। ५५ अध्ययनानि पुण्यफलविपाकस्य व्याख्याय, ५५ अध्ययनानि पापफलविपाकस्य व्याख्याय, ३६ अपृष्टव्याकरणानि प्रश्नैर्विना एव उत्तराणि कथयित्वा, प्रधाननामाऽध्ययनं मरुदेव्याः अधिकारं व्याख्या-

न्तरे संहृतो नीतः, निर्वृतस्तु स्वातिनक्षत्रे कार्तिकामावास्यायामिति ॥

एतस्मिन् पाठे श्रीआदीश्वरात् षष्ठस्य पद्मप्रभस्य च्यवन-जन्म-दीक्षा-ज्ञानोत्पत्ति-निर्वाणलक्षणानि पञ्च कल्याणकानि प्रतिपादितानि। तद्वत् सुविधि-शीतलप्रभृतिपार्श्वपर्यन्तत्रयोदशतीर्थकराणां पञ्च पञ्च कल्याणकानि दर्शितानि। तेन त्रयोदशतीर्थकराणां पञ्चषष्टिः (६५)कल्याणकानि जातानि। तथैव विशेषेण चतुर्दशश्रीवीरस्य अपि च्यवन—गर्भसंक्रमण—जन्म—दीक्षा—ज्ञानोत्पत्तिलक्षणं कल्याणकपञ्चकं सुस्पष्टमेव निष्टङ्कितम्। तस्माद् उपर्युक्तव्याख्यानुसारेण पद्मप्रभादिवीरपर्यन्तचतुर्दशतीर्थकराणां कल्याणकपञ्चकगणनया सर्वकल्याणकमीलनेन सप्ततिः (७०) कल्याणकानि भवन्ति। तथा वृत्तिकारश्रीअभयदेवसूरिणा षष्ठं "निर्वृतस्तु स्वातिनक्षत्रे कार्तिकामावास्यायाम्" इति वीरस्य षष्ठकल्याणकं प्रकटतया दर्शितम्। तथा तीर्थकरस्य च्यवनादेः कल्याणकतया अनादितः प्रसिद्धेः च्यवनादिकथनात् च्यवनादि कल्याणकानि ज्ञेयानि।

यथा श्रीकल्पसूत्रे श्रीपार्श्वनाथचरित्राऽधिकारे—

"तेणं कालेणं तेणं समएणं पासे अरहा पुरिसादाणीए पंचविसाहे हुत्था तं जहा विसाहाहिं चुए चइत्ता गब्भं वक्कंते। १। विसाहाहिं जाए। २। विसाहाहिं मुंडे भवित्ता अगाराओ अणगारिअं पव्वइए। ३ विसाहाहिं अणंते, अणुत्तरे, निव्वाघाए, निरावरणे, कसिणे, पडिपुण्णे, केवलवरनाण—दंसणे समुप्पन्ने। ४। विसाहाहिं परिनिव्वुए। ५।"

अस्मिन् पाठे यद्यपि कल्याणकशब्दो नैव दृश्यते तथापि सर्वेषाम् अनुमतं कल्याणकव्याख्यानं क्रियते तथा कल्याणकशब्दाऽभावेऽपि सर्वत्र च्यवनादिकथनात् कल्याणकत्वं ज्ञेयम्. किञ्च तीर्थकरस्य देवलोकात् च्यवने, मातृगर्भाद् जन्मनि, वनखण्डे दीक्षायाम् ,उद्यानादौ केवलज्ञानसमुत्पादे,

यन् श्रीमहावीरः स्वामी मुक्तिं गतः, सम्यक् प्रकारेण उत्–उर्ध्वं गतः, पुनरधो नाऽऽयास्यति अनेन प्रकारेण गतः, छिन्नजन्मजरामरणबन्धः, सिद्धः, बुद्धः, मुक्तः, अन्तकृत् सकलकर्मान्तकारी, परिनिर्वातः–परिसमन्तात् शीतलो जातः–दुःखसन्तापाद् रहितो जात इत्यर्थः। सर्वदुःखै रहितः सञ्जातः–शाश्वतैः सुखैर्मिलित आसीत्।

समणस्स भगवओ महावीरस्स जाव सव्वदुक्खप्पहीणस्स नव वाससयाइं विइक्कंताइं, दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ, वायणंतरे पुण 'अयं तेणउए संवच्छरे काले गच्छइ' इति दीसइ ॥ १४७ ॥

श्रमणस्य भगवतो महावीरस्य मुक्तिगमनात् पश्चात् नवशतअशीति ९८० वर्षेषु गतेषु देवर्द्धिगणिक्षमाश्रमणेन कालविशेषेण बुद्धिं हीयमानां ज्ञात्वा सिद्धान्तविच्छेदं भाविनं विचिन्त्य प्रथमद्वादशवार्षिकदुर्भिक्षस्य प्रान्ते सर्वसाधून् संमील्य वलभीनगर्यां श्रीसिद्धान्तः पुस्तकेषु कृतः–पत्रेषु लिखितः, पूर्वं सर्वसिद्धान्तानां पठनं पाठनं च मुखपाठेनैव आसीत्, ततः पश्चाद्गुरुभिः पुस्तकेन सिद्धान्तः शिष्येभ्यः पाठ्यते इयं रीतिरभूत्। केचिद् आचार्या अत्र एवमाहुः–भगवतो मुक्तिगमनादनन्तरं अशीत्यधिकनववर्षशते (९८०) ध्रुवसेनस्य राज्ञः पुत्रशोकनिवारणाय सभालोकसमक्षं कल्पसूत्रं श्रावितम्। अत्र गीतार्थाः वदन्ति तत्प्रमाणं। पुनर्नवशतत्रिनवतिवर्षैः ९९३ श्रीवीरनिर्वाणात् श्रीस्कन्दिलाचार्येण द्वितीयद्वादशवार्षिकीयदुर्भिक्षप्रान्ते मथुरापुर्यां साधून्

सम्मील्य सिद्धान्तः पुस्तकेषु लिखितः। यतो वलभीवाचनया स्थविरावली वाच्यते। एका पुनः माथुरीवाचनया स्थविरावली प्रोच्यते। अन्योऽपि यः कश्चित् परस्परं सिद्धान्तैः संवादो दृश्यते, स सर्वोऽपि वाचनाया एव भेदः। पुनरत्र पूर्वाचार्याः केचिदेवमाहुः नवशतत्रिनवति ९९३ वर्षैः कालिकाचार्येण पञ्चमीतः चतुर्थ्यां श्रीपर्युषणापर्व कृतं। अत्र बहवो विशेषाः सन्ति ते गीतार्थाः जानन्ति। श्रीआवश्यकसूत्रे पञ्चविधं प्रतिक्रमणं उक्तमस्ति-दैवसिकं १ रात्रिकम् २ पाक्षिकं ३ चतुर्मासिकं ४ सांवत्सरिकं ५। यदा चतुर्थ्यां पर्युषणापर्व स्थापितं तदा पाक्षिकं तु चतुर्दशीदिने सर्वदा आसीद् एव। तस्मिन् दिने चातुर्मासिकमपि एकत्रैव स्थापितम्। यतः ग्रन्थेषु उक्तमस्ति-'चउमासपडिक्कमणं पक्खियदिवसम्मि' एषः पाठः कथं मिलति? तस्मादेवं ज्ञायते पाक्षिकं चतुर्दश्यां, चतुर्मासिकं पूर्णिमायां, एतदुभयमपि पाक्षीदिने एकत्र कृतं। एतस्य परमार्थस्तु प्रथमसमाचार्यां व्याख्यातोऽस्ति। इति श्रीजिनचरित्राधिकारे पश्चानुपूर्व्या श्रीमहावीरस्य षट् कल्याणकानि व्याख्यातानि॥

अथ अग्रे श्रीपार्श्वनाथ-श्रीनेमिनाथयोः चरित्रं व्याख्यास्यते। शासनाधीश्वरश्रीवर्द्धमानस्वामी, गुरुक्रम गौतमेत्यादि पूर्ववत् ॥

श्रीकल्पसूत्रवरनाममहागमस्य गूढार्थभावसहितस्य गुणकरस्य। लक्ष्मीनिधेर्विहितवल्लभकामितस्य व्याख्यानमाप किल पञ्चममत्र पूर्तिम् ५

इति श्रीलक्ष्मीवल्लभउपाध्याय विरचित कल्पद्रुमकलिकायां पञ्चमं व्याख्यानं समाप्तम् ॥ ५ ॥

## अथ षष्ठं व्याख्यानम् ॥

वंदामि भद्दबाहुं पाईणं चरमसयलसुयनाणिं ।
सुत्तस्स कारगमिसिं दसाणु कप्पे य ववहारे ॥ १ ॥

अर्हतो भगवतः श्रीसर्वज्ञमहावीरदेवस्य शासने श्रीपर्युषणापर्वणः समागमने श्रीकल्पसूत्रवाचना भण्यन्ते-तत्राऽधिकारत्रयम्-प्रथमतः श्रीजिनचरित्रं, तदनन्तरं स्थविरकल्पः, तदनन्तरं साधुसामाचारीकल्पः कथ्यते। तत्र जिनचरित्राधिकारे पञ्चाऽनुपूर्व्या पञ्चवाचनाभिः श्रीमहावीरस्य षट्कल्याणकानि वाचितानि। अथ षष्ठ्यां वाचनायां श्रीपार्श्वनाथस्य तथा श्रीनेमिनाथस्य पञ्चकल्याणकस्वरूपं श्रीभद्रबाहुस्वामी कथयति-

तेणं कालेणं, तेणं समयेणं, पासे अरहा पुरिसादाणीए पंचविसाहे हुत्था, तं जहा-विसाहाहिं चुए, चइत्ता गब्भं वक्कंते ॥ १ ॥ विसाहाहिं जाए ॥ २ ॥ विसाहाहिं मुंडे भवित्ता अगाराओ अणगारिअं पव्वइए ॥ ३ ॥ विसाहाहिं अणंते अणुत्तरे निव्वाघाए निरावरणे कसिणे पडिपुण्णे केवलवरनाणदंसणे समुप्पन्ने ॥ ४ ॥ विसाहाहिं परिनिव्वुए ॥ ५ ॥ १४९ ॥

अर्थः–तस्मिन् काले तस्मिन् समये पार्श्वनाथस्य अर्हतः पुरुषादानीयस्य, पुरुषादानीयः–पुरुषेषु ६३ त्रिषष्टि-शलाकापुरुषेषु आदानीयः प्रसिद्धः सर्वजनैः अङ्गीकर्त्तव्यः–आवालगोपालस्वमत–परमतस्थैः सर्वैः स्मर्य इत्यर्थः। तस्य श्रीपार्श्वनाथस्य पुरुषादानीयस्य पञ्च कल्याणकानि विशाखायामासन्। विशाखानक्षत्रे देवलोकात् च्युतः, च्युत्वा वामायाः गर्भत्वेन उत्पन्नः ॥ १ ॥ विशाखायां सञ्जातजन्मा इत्यर्थः ॥ २ ॥ विशाखायां मूण्डो भूत्वा यती भूत्वा अगारात् गृहात् निर्गत्य अनगारो जातः प्रव्रजितः–गृहीतदीक्षः आसीत् ॥ ३ ॥ विशाखायां अनन्तं अनुत्तरं सर्वोत्कृष्टं केवलवरज्ञानं केवलवरदर्शनं समुत्पन्नम् ॥ ४ ॥ विशाखायां परिनिर्वृतः–मोक्षं गतः ॥ ५ ॥ इति नाममात्रेण पञ्च कल्याणकानि उक्तानि। अथ विस्तारतयोच्यन्ते–

तेणं कालेणं, तेणं समएणं, पासे अरहा पुरिसादाणीए जे से गिम्हाणं पढमे मासे पढमे पक्खे चित्तबहुले, तस्स णं चित्तबहुलस्स चउत्थीपक्खे णं पाणयाओ कप्पाओ वीसंसागरोवमट्ठियाओ अणंतरं चयं चइत्ता इहेव जंबुद्दीवे दीवे भारहे वासे वाणारसीए नगरीए आससेणस्स रण्णो वामाए देवीए पुव्वरत्तावरत्तकालसमयंसि विसाहाहिं नक्खत्तेणं जोगमुवागएणं आहारवक्कंतीए ( ग्रं० ७०० ) भववक्कंतीए सरीरवक्कंतीए कुच्छिंसि गब्भत्ताए वक्कंते ॥ १५० ॥

अर्थः—तस्मिन् काले तस्मिन् समये यदा ऋषभादितीर्थकरैः उक्तं तस्मिन् काले तस्मिन् समये श्रीपार्श्वः अर्हन् पुरुषादानीयः उष्णकालस्य प्रथमे मासे, प्रथमे पक्षे चैत्रमासस्य कृष्णपक्षे चतुर्थीदिने प्राणतनाम्नः दशमदेवलोकात् विंशतिसागरोत्कृष्टायुष्कात् अनन्तरं च्युत्वा अस्मिन् एव जम्बूद्वीपे भरतक्षेत्रे काशीदेशे वाणारस्यां नगर्यां अश्वसेनस्य राज्ञः वामानाम्न्याः राज्याः पूर्वरात्राऽपररात्रकालसमये मध्यरात्रसमये विशाखानक्षत्रे चन्द्रे संयोगं प्राप्ते सति देवसम्बन्धिनः आहारत्यागे, देवसम्बन्धिनो भवस्य त्यागे देवसम्बन्धीयभवधारणीयवैक्रियशरीरत्यागे सति मातुर्गर्भे गर्भत्वेन उत्पन्नः ॥

अथ प्राणतदेवलोके कस्मात् भवात् समागतः श्रीपार्श्वनाथस्य जीवः ?। ततः प्राग् भवाः श्रीपार्श्वनाथस्य प्रोच्यन्ते—

अस्मिन् जम्बूद्वीपे भरतक्षेत्रे पोतनपुरं नाम नगरं। तत्र अरविन्दो नाम भूपतिरभूत्। तस्य विश्वभूतिनामा पुरोहितः, तस्य स्त्री अनुद्धरी नाम्नी, अनुक्रमेण तस्य विश्वभूतिपुरोहितस्य द्वौ पुत्रौ अभूताम्। आद्यः कमठः, द्वितीयो मरुभूतिः। एकदा विश्वभूतिअणुद्धर्यौ उभौ अपि कालधर्मं प्राप्तौ। तदा अरविन्देन राज्ञा पुरोहितस्य पदवी कमठाय प्रदत्ता, कमठस्तु स्वभावेन कठोरः, क्रूरो, लम्पटः, शठश्च आसीत्। मरुभूतिस्तु प्रकृत्या सरलः, धर्मज्ञः, श्रावकाचारपालनोऽभूत्। कमठस्य वरुणानाम्नी पत्नी। मरुभूतेर्वसुन्धरानाम्नी पत्नी, अत्यन्तरूपवती

वर्तते । अन्यदा मरुभूतेः स्त्रीं एकान्ते सर्वावयवसुन्दरां पूर्णचन्द्रसमानवदनां दृष्ट्वा कमठः कामपीडितः सन् वसुन्धरां कामाय प्रार्थयामास । एवं वारद्वयं त्रयं कमठेन प्रार्थ्यमाना सती साऽपि कमठे रागवती जाता—कमठासक्ता बभूव । कियति च काले कमठवसुन्धरयोः दुराचारो वरुणया कमठस्य भार्यया ज्ञातोस्तदा वरुणया कमठो निषिद्धः । हे स्वामिन् ! त्वं अकार्याद् विरम, नो चेत् मरुभूतिर्ज्ञास्यति तदा लोकेषु निन्दां कृत्वा त्वां निष्कासयिष्यति, प्रीतिर्यास्यति, राजाऽपि श्रुत्वा विरुद्धं करिष्यति । एवं वरुणया बहुनिवारितोऽपि कमठः अकार्यात् न विरमति स्म । तदा रुष्टया एकदा मरुभूतेः पुरतो वसुन्धराकमठयोरनाचारो वरुणया निवेदितो मरुभूतिना न मानितः । ज्ञातं चेत् अहं स्वदृष्ट्या विलोकयिष्यामि तदा मानयिष्यामि इति विमृश्य एकदा किञ्चिद् मिषं कृत्वा गृहान्निर्गत्य द्वितीये तृतीये दिवसे रात्रौ कार्पटिकरूपं विधाय निवासं याचयित्वा, रात्रौ स्थित्वा, तयोर्दुराचारं मरुभूतिर्ददर्श । तदा कुपितः अरविन्दभूपाग्रे गत्वा कमठस्य अनाचारं निवेदयामास । अरविन्दभूपोऽपि कमठस्य दुराचारं श्रुत्वा कमठं सन्तर्ज्य—निर्भर्त्स्य चौरवत् विडम्बनां कृत्वा नगरमध्ये भ्रामयित्वा नगरात् निष्कासयामास । मरुभूतिं पुरोहितं चकार । कमठो लोके लज्जितः सन् दुःखगर्भितं वैराग्यं प्राप्य तापसस्य पार्श्वे तापसीं दीक्षां ललौ । एकदा वह्नीं पृथ्वीं भ्रमन् भ्रमन् पोतनपुरस्य पार्श्वे एकस्य पर्वतस्य उपरि आगत्य आतापनां चकार । सर्वे लोकाः तं द्रष्टुं गताः । लोकाः सर्वे तं प्रशंसयामासुः । पूर्वं निन्दां कुर्वाणा

आसन्, इदानीं श्लाघां चक्रुः। अत एव लोको बोकः उभयवदनः। तदा मरुभूतिरपि चिन्तयामास–मद्भ्राता वृद्धो मया विरोधितः सन् दुःखान्निर्गत्य तापसोऽभूत्। अथाऽहं तत्समीपे गत्वा, तत्पादयोः लगित्वा स्वाऽपराधं क्षामयित्वा, तं नत्वा, स्तुत्वा, आयामीति चिन्तयित्वा, एकान्ते मरुभूतिः कमठस्य समीपे गतः। यावत् तस्य पादयोर्लगित्वा स्वाऽपराधं क्षमयति तावन्मरुभूतेः शिरसि कमठेन कठोरेण हन्तुं शिला प्रक्षिप्ता, तया शिलया मरुभूतेः शिरश्चूर्णितमाऽऽसीत्। मरुभूतिश्च तद्वेदनया आरटन् आर्त्तध्यानेन मृत्वा द्वितीये भवे विन्ध्याचलस्य अटव्यां सुजातोरुनाम्ना हस्ती सञ्जातः। कमठोऽपि ततोभीतश्चलित्वा दुष्टकर्मवशात् मृत्वा, अत्रैव वने कुक्कुटोरगो विहगवत् सर्पो बभूव–कुक्कुटाकृतिः सर्पः सञ्जातः। इति द्वितीयः भवः। अथाऽरविन्दभूपतिः कमठमरुभूत्योः स्वरूपं श्रुत्वा संसारमसारं परिज्ञाय कस्यचित्साधोः समीपे दीक्षां ललौ। अनुक्रमेण अरविन्दराजर्षिः एकादशाङ्गान्यधीत्य उग्रतपः कुर्वन् एकाकी विहरन् एकदा सागरचन्द्रनाम्नः सार्थवाहस्य सार्थे सम्मेतशिखर तीर्थस्य यात्रार्थं प्रचलितः। यस्मिन् विन्धाचलस्य वने मरुभूतिजीवो गजत्वेन उत्पन्नोऽस्ति, तस्मिन्नेव वने सार्थवाहस्य सार्थः समुत्तीर्णोऽस्ति। सर्वे सार्थस्य लोकाः स्वकीयकार्येषु लग्नाः सन्ति, अरविन्दराजर्षिः एकान्ते सरोवरस्य पाल्यां कायोत्सर्गेण स्थितोऽस्ति। अस्मिन्नवसरे हस्तिनीनां परिवारेण परिवृतः जलपानाय आगतो मरुभूतिजीवो हस्ती लोकानां कोलाहलं श्रुत्वा सार्थस्य गजाऽश्ववृषभोष्ट्रादीन् विलोक्य क्रुद्धः सन् उपद्रवं चकार। तदा सर्वो-

ऽपि सार्थः दशदिशासु पलायनं चकार । अरविन्दराजर्षिं दृष्ट्वा गजो मारणाय आजगाम । साधुप्रभावात् यदा निकटं समागतस्तदा स्तम्भितः, साधुसंदर्शनादेव तस्य गजस्य ऊहापोहं कुर्वतः जातिस्मरणज्ञानमुत्पन्नं । प्राग्भवो गजेन दृष्टः । अरविन्दं उपलक्ष्य शुण्डां प्रसार्य पादयोर्लग्नः । साधुनाऽपि तद्भवं ज्ञात्वा धर्मोपदेशेन मरुभूतिजीवः प्रतिबोधितः । सम्यक्त्वं अङ्गीकारितं । लोकैः सर्वैरपि तत्स्वरूपं दृष्ट्वा तत्र बहुभिः प्रतिबोधः संप्राप्तः । गजेन श्राद्धधर्मो गृहीतः । ततः सार्थस्य सार्धं श्रीअरविन्दराजर्षिः चलितः, चारित्रं प्रपाल्य सद्गतिं प्राप्तः । अथ मरुभूतिजीवो हस्ती एकदा उष्णकाले दावानलभयात् सरसि पानीयार्थं प्रविष्टः । पङ्के एव खिन्नः अग्रे गन्तुं पश्चाद् वलितुं च अक्षमोऽभूत् । तत्र कमठजीवोऽपि कुक्कुटोरगो दावानलभयात् त्रस्तः पर्यटन् तं गजं पङ्के विखिन्नं दृष्ट्वा पूर्वभववैराद् उड्डीय मस्तके आरुह्य ददंश । तद्वेदनया विषार्तो धर्मध्यानात् श्राद्धधर्मपालनाच्च मृत्वा हस्ती जीवस्तृतीये भवे अष्टमदेवलोके सहस्रारनाम्नि देवत्वेनोत्पन्नः कुक्कुटोरगसर्पो दावानले मृत्वा पञ्चमनरके नारकत्वेनोत्पन्नः॥ इति तृतीयो भवः॥ अथ मरुभूतिजीवो अष्टमदेवलोकाच्च्युत्वा चतुर्थे भवे अस्मिन् जम्बूद्वीपे पूर्वमहाविदेहे सुकच्छविजये वैताढ्यपर्वतस्य दक्षिणश्रेण्यां तिलकवत्यां नगर्यां विद्युद्गतिभूपः, तद्भार्या कनकवती, तयोः पुत्रत्वेन जातः । किरणवेग इति नाम प्रदत्तम् । अनुक्रमेण किरणवेगो यौवनावस्थायां राज्यं प्राप्य सुरूपाभिः प्रियाभिः विषयसुखं भुञ्जानः एकदा गवाक्षे स्थितः सन्ध्यारागस्वरूपं दृष्ट्वा प्राप्तवैराग्यो मुनीनां पार्श्वे

दीक्षां गृहीत्वा पुष्करवरद्वीपे वैताढ्यपर्वतस्य पार्श्वे हेमशैलपर्वतस्योपरि कायोत्सर्गे स्थितः । तस्मिन् समये कमठजीवो पञ्चम नरकान्निर्गत्य सर्पस्तत्रैव पर्वते सञ्जातोऽस्ति। इति चतुर्थो भवः। तेन सर्पेण स साधुः दृष्टः। तदा पूर्वभववैरवशात् शरीरे चूडां भृत्वा वेष्टयित्वा दृष्टः। तदा साधुः कालं कृत्वा पञ्चमभवे द्वादशमे देवलोके अच्युतनाम्नि देवत्वेनोत्पन्नः। स सर्पोऽपि मृत्वा पञ्चमनरकभूमौ नारको जातः। इति पञ्चमः भवः। अथ पुनः मरुभूतिजीवो देवलोकात् च्युत्वा षष्ठे भवे अस्मिन्नेव जम्बूद्वीपे पश्चिममहाविदेहे गन्धलावतीविजये शुभङ्करायां नगर्यां वज्रवीर्यो राजा, लक्ष्मीवती तस्य राज्ञी, तत्कुक्षौ पुत्रत्वेन उत्पन्नः। तस्य पुत्रस्य वज्रनाभ इति नाम प्रतिष्ठितम्। अनुक्रमेण पित्रा दत्तं राज्यं वज्रनाभो यौवनावस्थायां प्रपालयन् विषयसौख्यानि भुञ्जन् सुखेन तिष्ठति। एकदा तत्रोद्याने क्षेमङ्करनामा तीर्थंकरः समवसृतः। वज्रनाभो राजा तीर्थंकरं वन्दित्वा तद्देशनां श्रुत्वा सर्वमनित्यं ज्ञात्वा संसारमसारं परिचिन्त्य पुत्राय राज्यं समर्प्य क्षेमङ्करतीर्थंकरस्यैव पार्श्वे दीक्षां गृहीत्वा सर्वाचारविचारं शास्त्रसूत्रं अधीत्य चारणलब्ध्या विहरन् वज्रनाभराजर्षिः सुकच्छविजयमध्यवर्तिज्वलनपर्वते कायोत्सर्गे स्थितः। तदा कमठस्य जीवः पञ्चमनरकान्निर्गत्य बहून् भवान् भ्रान्त्वा तत्रैव पर्वते भिल्लत्वेन उत्पन्नोऽस्ति। इति षष्ठो भवः। तेन च आखेटकनिमित्तं गच्छता स साधुर्दृष्टः, पूर्वभववैरवशात् एकेन बाणेन साधुर्व्यापादितः। ततः साधुः शुभध्यानयोगान्मृत्वा सप्तमे भवे मध्यमग्रैवेयके देवत्वेन अवतीर्णः। भिल्लो मृत्वा सप्तमनरकभूमौ नारकः सञ्जातः। इति

सप्तमः भवः । अथ मरुभूतिजीवः अष्टमे भवे अस्मिन्नेव जम्बूद्वीपे पूर्वमहाविदेहे शुभङ्करविजये पुराणपुरे नगरे कुशलवाहुभूपतिः, तद्राज्ञी सुदर्शना, तयोः पुत्रश्चक्रवर्तित्वेनोत्पन्नः । चतुर्दशस्वप्नावलोकनात् चक्रवर्ती जातः । अनुक्रमेण पुत्रे सञ्जाते सति सुवर्णवाहुरिति नाम प्रतिष्ठितं, यौवने वयसि पित्रा कुशलवाहुना सुवर्णवाहुपुत्राय राज्यं अर्पितं, सुवर्णवाहौ राज्यं पालयति सति कियत्सु वर्षेषु गतेषु सत्सु तस्य चक्ररत्नं उत्पन्नं, चक्रेण सुवर्णवाहुः चक्रवर्ती षट्खण्डसाधनां कृत्वा चक्रवर्तिपदवीं प्रपाल्य वृद्धावस्थायां चारित्रं गृहीत्वा विंशति स्थानकानि सेवयित्वा एकदा अटव्यां कायोत्सर्गे स्थितः । तदा च सप्तमनरकात् मध्यमायुषं प्रपाल्य कमठजीवस्तस्यां एव अटव्यां सिंहो जातोऽस्ति । इति अष्टमः भवः । तेन सुवर्णवाहुः राजर्षिर्दृष्टः । तदा पूर्वभववैरवशात् क्रोधेन हस्ततलया विदारितः साधुर्मृत्वा नवमे भवे दशमदेवलोके प्राणतनाम्नि देवलोके देवो जातो विंशति सागरायुष्कः । कमठजीवः सिंहोऽपि मृत्वा नरकं गतः । इति नवमः भवः । अथ मरुभूतिजीवः प्राणतदेवलोकात् सम्पूर्णं आयुः प्रपाल्य वामायाः कुक्षौ गर्भत्वेन अवततार । कमठजीवस्तु एकस्य दरिद्रब्राह्मणस्य गृहे अवतीर्णः । तस्य च वाल्येनैव मातापितरौ विपन्नौ ॥ इति दशमः भवः ॥

अथ श्रीपार्श्वनाथस्य जन्मकल्याणकं सूत्रकारो श्रीभद्रवाहुस्वामी वदति–

पासे णं अरहा पुरिसादाणीए तिन्नाणोवगए आवि हुत्था, तं जहा–चइस्सामि त्ति जाणइ,

शैलशृङ्गादौ च निर्वाणे–पृथक् पृथग् भूमिस्थाने एकैककल्याणकं जायते। ततः तीर्थंकरच्यवनादिस्थानककथनेन तत्स्थानकं कल्याणकपर्यायतया समवबोध्यम्। अत एव च तीर्थंकरचरित्राधिकारे च्यवनादिविषये प्रसङ्गतः समायातः स्थानशब्दः कल्याणकसमानार्थो बोध्यः। तथाहिः– "श्रीआदीश्वरस्य मोक्षगमनस्थानम् अष्टापदे, मोक्षभूमिश्चाष्टापदे, मोक्षकल्याणकम् अष्टापदे" इति एतानि त्रीणि एकार्थानि, समानार्थानि, पर्यायतालंकृतानि इति यावत्। तथैव श्रीवीरस्यापि च्यवनादिमोक्षपर्यन्तानि षट् स्थानकानि षट्कल्याणकतया समवसेयानि॥ अत्र केचित् पद्म-प्रभ–सुविधि–शीतलप्रभृतिवीरपर्यन्तचतुर्दशतीर्थंकराणां च्यवनादिसप्रतिकल्याणसंबन्धिनं स्थानशब्दं दृष्ट्वा सप्रतिस्थानानि संसाधयन्ति, ततश्च च्यवनादिसप्रतिकल्याणकाभावं चाविर्भावयन्ति। तदसत्। यतः स्थानशब्दस्य कल्याणकसमानार्थतया सनिर्णयं सप्रमाणं च प्रसाधितत्वात् तदुक्तो निर्णयो नैव औचितीमञ्चति। पुनरपि च, श्रीआचाराङ्गे द्वितीयश्रुतस्कन्धे भावनाध्ययने वीरचरित्रे श्रीवीरस्य कल्याणकषट्कं प्रज्ञापितम्। तद्यथाः–

"तेणं कालेणं, तेणं समयेणं समणे भगवं महावीरे पञ्चहत्थुत्तरे यावि होत्था, तं जहा–१. हत्थुत्तराहिं चुए, चइत्ता गब्भं वक्कन्ते. २. हत्थुत्तराहिं गब्भाओ गब्भं साहरिए. ३. हत्थुत्तराहिं जाए. ४. हत्थुत्तराहिं सव्वतो सव्वताए मुंडे भवित्ता अगाराओ अणगारिअं पव्वइए. ५. हत्थुत्तराहिं कसिणे, पडिपुण्णे, निव्वाघाए, निरावरणे, अणंते, अणुत्तरे केवलवरणाण–दंसणे समुप्पन्ने. ६. साइणा भगवं परिनिव्वुए"।

तथा च श्रीशीलाङ्काचार्यकृता तद्वृत्तिर्यथा–'तेणं कालेणं' इत्यादि। तेन कालेन इति दुःषमसुषमादिना 'तेन समयेन' इति विवक्षितेन विशिष्टेन कालेन सता उत्पत्त्यादिकमभूद् इति संबन्धः। तत्र 'पंचहत्थुत्तरे यावि होत्था' इत्येवमादिना 'आरोयारोयं पसूय'त्ति इति एवम्

**चयमाणे न जाणइ, चूए मि त्ति जाणइ, तेणं चेव अभिलावेणं सुविणदंसण–विहाणेणं सव्वं दविणसंहरणाइयं जाव–निअगं गिहं अणुपविट्ठा, जाव सुहंसुहेणं तं गब्भं परिवहइ ॥ १५१ ॥**

अर्थः–श्रीपार्श्वनाथोऽर्हन् पुरुषादानीयः यदा देवलोकात् च्यविष्यति तदा जानाति–अहं देवलोकात् च्यविष्यामि । परं यदा च्यवति तं समयं न जानाति–समयस्य अत्यन्तसूक्ष्मकालत्वात् । यदा ततश्च्युत्वा मातुर्गर्भे गर्भत्वेन उत्पद्यते तदाऽपि जानाति–अहं देवलोकात् च्युत्वा अत्र गर्भत्वेन समुत्पन्नः । मति–श्रुति–अवधिज्ञान-युक्तो भवति । अत्र सर्वोऽपि अधिकारः–चतुर्दशस्वप्नावलोकनं, भर्तुरग्रे कथनं, पुनः प्रभाते राज्ञा स्वप्नलक्षण-पाठकानां स्वप्नार्थप्रच्छनं, तेभ्यः फलश्रवणं, पश्चाद् इन्द्रस्यादेशात् धनदसेवकैस्तिर्यग्जृम्भकदेवैः धनस्य वर्षणं–सर्वं श्रीमहावीरस्य इव सूत्रपाठस्तस्यार्थश्च पूर्ववदेव ज्ञेयः । परं–'हडे मे से गब्भे' इत्यादिपाठैर्विना सर्वं तथैव व्याख्यानम् ॥

अथ कस्मिन् दिने श्रीपार्श्वनाथस्य जन्म बभूव तदुच्यते ।

**तेणं कालेणं तेणं समएणं पासे अरहा पुरिसादाणीए जे से हेमंताणं दुच्चे मासे तच्चे पक्खे पोसबहुले, तस्स णं पोसबहुलस्स दसमीपक्खे णं नवण्हं मासाणं बहुपडिपुण्णाणं अद्धट्ठ-**

माणं राइंदिआणं विइक्कंताणं पुव्वरत्तावरत्तकालसमयंसि विसाहाहिं नक्खत्तेणं जोगमुवागएणं आरोग्गा आरोग्गं दारयं पयाया ॥ १५२ ॥

अर्थः—तस्मिन् काले तस्मिन् समये पार्श्वोऽर्हन् पुरुषादानीयः यो हेमन्तस्य शीतकालस्य द्वितीयो मासस्तृतीयः पक्षस्तस्मिन् पोषकृष्णदशमीदिने नवसु मासेषु तथोपरिसार्द्धसप्तदिवसेषु व्यतीतेषु सत्सु पूर्वरात्रापररात्रकालसमये अर्थान्मध्यरात्रे विशाखानक्षत्रेण चन्द्रसंयोगे प्राप्ते सति अस्मिन् समये पूर्वोक्तः श्रीपार्श्वनाथो गर्भत्वेन उत्पन्नः आरोग्यः, तन्माता वामादेवी अपि आरोग्यवती आरोग्यं दारकं पुत्रं प्रसूता । यस्यां रात्रौ वामादेव्या श्रीभगवान् पार्श्वः प्रसूतः तस्यां रात्रौ बहूनां देवानां तथा देवीनां आगमनेन मनुष्यलोकात् पुनरूर्द्धगमनेन च अन्धकारवत्यां अपि महान् उद्द्योत आसीत् ॥

जं रयणिं च णं पासे० जाए, तं रयणिं च णं बहुहिं देवेहिं देवीहिं य जाव—उप्पिंजलगभूया कहकहगभूया यावि हुत्था ॥ १५३ ॥ सेसं तहेव, नवरं जम्मणं पासाभिलावेणं भाणिअव्वं, जाव तं होउ णं कुमारे पासे नामेणं ॥ १५४ ॥

अर्थः—यस्यां रात्रौ श्रीपार्श्वनाथो भगवान् जातस्तस्यां रात्रौ बहूनां देवानां तथा देवीनां अव्यक्तशब्देन तथा हास्येन भृशं आकुलत्वं अभूत्। अथ ५६ दिक्कुमारीभिः सूतिकाकर्मकरणं, ६४ चतुःषष्टिदेवेन्द्रैर्मेरुमस्तके जन्ममहोत्सवकरणं, स्वर्णरत्नादिवृष्टिकरणं, तथा प्रभातसमये अश्वसेनेन राज्ञा पुत्रजन्मकथकाय अभीष्टदानं, पश्चाद् बन्दिमोक्षणं, मानोन्मानवर्द्धनं, नगरे शोभाकरणं, दश दिवसान् यावत् कुलस्थितिकरणं पूर्ववत् सिद्धार्थनृपतिवत् वक्तव्यम्। अत्र अयं विशेषः—द्वादशे दिवसे सर्वज्ञातीयजनान् भोजयित्वा पार्श्वकुमार इति नाम प्रदत्तम्। तद्विचारस्तु अयं—अन्धकारवत्यां अपि रजन्यां पार्श्वे श्यामं अहिं गच्छन्तं दृष्ट्वा राज्या वामादेव्या श्रीअश्वसेनस्य राज्ञः करो भूमौ लम्बायमानः उच्चैः शय्यायां गृहीतः तदा नृपेण राज्ञी पृष्टा, कथं निद्रायां मम हस्तस्त्वया उच्चैः गृहीतः ? तदा राज्या वामादेव्या उक्तम्—स्वामिन् ! अत्र श्यामः सर्पो याति तेन मया भवतो हस्त उच्चैः गृहीतः। तदा राज्ञा ज्ञातं—एतादृश्यां कृष्णायां रात्रौ राज्ञी सर्पं पश्यति—अयं गर्भस्यैव प्रभावः, तस्माद् यदाऽयं बालो भविष्यति तदाऽस्य बालस्य पार्श्व इति नाम दास्यामि इति राज्ञा प्रागविचारितं आसीत्। तेन द्वादशे दिने सर्वान् भोजयित्वा मातृपितृभ्यां सर्वजनसमक्षं पार्श्वकुमार इति नाम दत्तम्। अथ भगवन्तं बाल्याऽवस्थायां इन्द्रो देवान् मुक्त्वा स्वामिनं खेलयति, स्वयमपि कुमाररूपं विधाय सह क्रीडति। अङ्गुष्ठे अमृतं सञ्चारयति, यावद् अग्निपकाहारं न करोति, तावद् अङ्गुष्ठं लिहति। सर्वेषां तीर्थंकराणां इयं

स्थितिः । अथ स्वामी श्रीपार्श्वनाथः कल्पवृक्षाङ्कुरवन्नित्यं वर्धते । अनुक्रमेण वर्धमानो नवहस्तोन्नतशरीरः, मेरुवद् धीरशरीरः, नीलकमलवर्णः, यौवनं प्राप्तः । तदा कुशस्थलनगराधीशस्य श्रीप्रसेनजिद्भूपस्य प्रभावतीनाम्नी पुत्री स्वामिने श्रीपार्श्वनाथाय परिणायिता । श्रीपार्श्वनाथः प्रभावत्या प्रियया सह विषयसुखानि भुञ्जन् सुखेन तिष्ठति । अथैकदा पार्श्वस्वामिना गवाक्षस्थितेन नगरलोकाः सर्वेऽपि पक्वान्नादिकं भक्ष्यभोजनं स्थालेषु धृत्वा उपरि आच्छाद्य नरा नार्यश्च ग्रामाद्बहिरेकस्यां दिशि कुत्रचिद् व्रजन्तो दृष्टाः, तदा सेवकं मुक्त्वा शुद्धिः कृता–कुत्रैते जना यान्ति ? लोका आहुः–स्वामिन् ! अत्रैको बहिरुद्याने तपस्वी पञ्चाऽग्निसाधको महातापसः कमठनामा समागतोऽस्ति । तद्वन्दनाय तद्भक्तये यान्ति एते नगरलोकाः । तदा स्वामिना ज्ञानेन ज्ञातं–अयं तु कमठनामा आजन्मदरिद्रब्राह्मणस्य पुत्रो बालत्वे एव मृतमातापितृको जनैः कृपया वर्द्धितः, क्षुधादिदुःखैः पीडितः तापसीं दीक्षां गृहीत्वाऽत्रागतोऽस्ति । निर्दयोऽज्ञानी क्रोधादिकषायपूर्णो लोकान् विप्रतारयितुं समागतोऽस्ति । किमर्थमस्य उद्घाटनमुद्घाट्यते इति ज्ञात्वा श्रीपार्श्वस्वामी स्थितः । तस्मिन् समये श्रीवामया राज्या लोकानां आग्रहात् तापसं द्रष्टुं मनः कृतं, हस्ती आरोहणाय सज्जीकृतः, श्रीपार्श्वकुमारोऽपि मात्राग्रहाद् दयाया लाभं च परिज्ञाय गजमारुह्य जनन्या सह द्रष्टुं चलितः । तापसेनाऽपि वार्ता श्रुता–वामा राज्ञी पार्श्वकुमारेण सह नमस्कर्तुं समागच्छति । तेन बृहत्काष्ठनिचयः प्रज्वालितश्चतुर्दिक्षु, पञ्चमः अग्निप्रायः सूर्यः प्रज्वलति, मध्ये स्वयं

स्थितोऽस्ति। स्वामिनः सार्थे बहवो नागरिकाः समागताः सन्ति आश्चर्यं द्रष्टुम्। तदा भगवान् श्रीपार्श्वनाथः ज्ञानत्रयेण विराजमानो जीवहिंसां दृष्ट्वा अवादीत्—अहो! तपस्विन्! तवेदं अज्ञानतपः। यतः—अज्ञानिनो महत्कष्टं अल्पं फलं, दयाहीनस्य अज्ञानिनः तपश्चरणादिकं सर्वं व्यर्थमेव—दयाहीनो धर्मो निष्फलः। यत उक्तम्—

कृपामहानदीतीरे, धर्माः सर्वे तृणाङ्कुराः। तस्यां शोषमुपेतायां, कियन्नन्दन्ति तेऽङ्कुराः? ॥ १ ॥

दया एव महानदी वर्तते, तस्याः नद्यास्तटे सर्वे यावन्तो दानशीलतपोभावलक्षणा धर्माः तृणाङ्कुराः सन्ति। तस्यां कृपानद्यां वर्द्धमानायां ते सर्वे धर्माः वर्धन्ते, यदा तस्याः कृपामहानद्याः शोषो भवति तदा सर्वे धर्माः तृणाङ्कुरा इव शुष्यन्ति। एतावता कृपां विना न कश्चित् धर्मः, सर्वोऽपि कष्टरूप इत्यर्थः। अथ पुनस्त्वं पञ्चाग्नितपःस्वरूपं न जानाति। अग्निषु प्रज्वालितेषु पञ्चाग्नितपो न भवति। अत्र तु प्रत्यक्षं षड्जीवनिकायस्य हिंसा दृश्यते। यत्र च हिंसा स धर्मो न भवति, तस्मात् पञ्चाग्नितपस्तु इदमस्ति—

"पञ्चाग्निरिन्द्रियाणां तु, विषयेन्धनचारिणां। तेषां तिष्ठति यो मध्ये, स वै पञ्चतया स्मृतः" ॥ २ ॥

पञ्चेन्द्रियाणां विषयास्त्रयोविंशतिसंख्यास्त एव इन्धनरूपाः, ते च तपोऽग्निना प्रज्वाल्यन्ते इत्यनेन इन्द्रियनिरोधः कर्तव्यः, इन्द्रियनिरोधं कृत्वा यस्तिष्ठति स पञ्चेन्द्रियसाधकः—पञ्चाऽग्निसाधकस्तपस्वी उच्यते। त्वं तु

इदं ज्ञानविचारं न वेत्सि, कष्टमात्रं करोषि तस्माद्दयापूर्वं ज्ञानगर्भितं तपश्चरणं कुरु। यत उक्तम्–'हयं नाणं
कियाहीणं हया अन्नाणिणो किया' क्रियाहीनं ज्ञानं हतं, अज्ञानिनः पुरुषस्य क्रिया हता। 'पासंतो पंगुलो दड्ढो
धावमाणो य अंधलो' पश्यन् सन् पङ्गुर्दग्धः, धावन् अन्धो दग्धः। अन्धपङ्गुपुरुषयोः मेलापे उभयोरपि अग्नि-
सकाशात् निःसरणमासीत् एकाकिनौ भवतः तदा उभौ अपि अकिञ्चित्करौ। तथा–"ज्ञानक्रियाभ्यां मोक्षः"
इति श्रीपार्श्वनाथेन तस्य तापसस्य धर्मोपदेशः प्रोक्तः। तदा स तापसो रुष्टः। यदुक्तम्–

उपदेशो हि मूर्खाणां, प्रकोपाय न शान्तये। पयःपानं भुजङ्गानां, केवलं विषवर्द्धनम् ॥ १ ॥

श्रीपार्श्वनाथं प्रत्याह–भो राजकुमार! भवान् शस्त्रपरीक्षासु, तथा गजाऽश्वपरीक्षासु निपुणो वर्तते। पुनर्भ-
वान् राजनीतिं जानाति, परं त्वं धर्मनीतिं न जानासि। अस्माभिः पञ्चाग्नितपस्यया इन्द्रियाणि दम्यन्ते। विष-
येभ्यो निवृत्तिः क्रियते। अस्यां तपस्यायां का जीवहिंसा वर्त्तते?। चेद्वर्तते तर्हि दर्शय, नोचेत्किमर्थं वृथा
अस्माकं तपस्विनां निन्दां करोषि इत्युक्ते सति श्रीपार्श्वनाथः स्वसेवकेभ्यः एकं महत् काष्ठखण्डं प्रज्वलत्
निष्काश्य यत्नेन कुठारेण विदार्य ततः काष्ठखण्डात् सर्पयुगलं[3] प्रज्वलद् निष्काश्य सर्वजनस्य समक्षं दर्शया-
मास। पुनस्तयोरर्द्धप्रज्वलितयोः सर्पसर्पिण्योः स्तोकं आयुः ज्ञात्वा श्रीपार्श्वनाथः 'ॐ असिआउसाय नमः'

१ हतं ज्ञानं क्रियाहीनं हता अज्ञानिनः क्रिया। २ पश्यन् पङ्गुलो दग्धो धावंश्च अन्धः। ३ कुत्रचित् एक एव सर्प उपलभ्यते।

इति पञ्चपरमेष्ठिमन्त्रं श्रावयामास। तौ अपि प्रभोः दर्शनात् प्रभुणा प्रदत्तमन्त्राक्षरधारणाद् मृत्वा पातालमध्ये नागकुमारयोनौ उत्पन्नौ। नागस्तु धरणेन्द्रो बभूव। नागिनी च तद्भार्या पद्मावती देवी सञ्जाता। अथ तत्रस्थो लोकः सर्वोऽपि प्रभोर्ज्ञानं दृष्ट्वा प्रभुं तुष्टाव। तं तापसं निनिन्द-धिक् एनं एनं अज्ञानिनं, कष्टकारिणं, जीवहिंसाविधायिनं, अस्य पापस्य दयाहीनस्य सर्वमपि तपो व्यर्थमेव इति लोकमुखात् स्वां निन्दां, पार्श्वनाथस्य श्लाघां श्रुत्वा स तापसस्ततश्चचाल। अथ पार्श्वप्रभोरुपरि पूर्वं तु विरोध आसीद् एव, ततस्तु अधिकतरो बभूव। एवं स कमठतापसः पृथिव्यां भ्रमन् अज्ञानतपश्चरन् भगवता सह प्रद्वेषं वहन् मृत्वा अज्ञानतपःप्रभावात् मेघमाली देवः सञ्जातोऽस्ति। अत्रान्तरे एकदा वसन्तऋतौ सकले दिवसे श्रीपार्श्वनाथो वनमध्ये क्रीडां कृत्वा सन्ध्यासमये स्वकीयावासे समागतः। तत्र भित्तौ श्रीनेमिकुमारस्य सर्वोऽपि वृत्तान्तो लिखितोऽस्ति। यथा-पाणिग्रहणाय सर्वैर्यादवैः सह तोरणं यावत्समागमनं, पशूनां वाटकेभ्यः बन्धनान्मोचनं, राजीमत्यास्त्यजनं, गिरिनारपर्वते दीक्षाग्रहणादिस्वरूपं लिखितं दृष्ट्वा वैराग्यभावं प्राप्तः श्रीपार्श्वनाथस्तावत् लोकान्तिकदेवा आगत्य स्वामिनं स्तुत्वा दीक्षायै उन्मुखं स्वामिनं कुर्वन्ति। ततः श्रीपार्श्वप्रभुरपि सांवत्सरिकदानं ददाति-

**पासे अरहा पुरिसादाणीए दक्खे दक्खपइन्ने पडिरूवे अल्लीणे भद्दए विणीए, तीसं वासाइं अगा-**

रवासमज्झे वसित्ता पुणरवि लोगंतिएहिं जिअकप्पेहिं देवेहिं ताहिं इट्ठाहिं जाव एवं वयासी ॥

पार्श्वोऽर्हन् पुरुषादानीयो दक्षः चतुरः, पुनर्दक्षप्रतिज्ञः यादृशीं प्रतिज्ञां गृह्णाति तादृशीं पालयति, प्रतिरूपः सर्वगुणैर्विराजमानः, आ ईषत् लीनः संसारे स्थितमात्रोऽस्ति, परं संसारेऽलिप्तः सन् तिष्ठति, भद्रकः सरलस्वभावः, विनीतः मातृपित्रोर्भक्तः एतादृशः श्रीपार्श्वः ३० वर्षाणि गृहवासे स्थितः। येषां जन्मवशात् अद्यापि वाणारसीतीर्थभूमिः कथ्यते। येषां शरीरस्य स्नानात् गङ्गानद्यऽपि सर्वपापहारिणी पुण्यजला सञ्जाता। यदुक्तम्—

परदारा-परद्रोह-परद्रव्यपराङ्मुखः। गङ्गाऽप्याह कदाप्ययम्भो ममाऽयं पावयिष्यति ?॥ १ ॥

गङ्गाऽपि इति मनोरथं कुरुते-परस्त्री-परद्रोह-परद्रव्यात् पराङ्मुखः पुरुषः मम पानीयं कदा पवित्रीकरिष्यति गङ्गाऽपि एवं वदति, एतावता धर्मात्मनां पुरुषाणां शरीरस्य स्पर्शाद् गङ्गाऽपि पवित्रा जायते, किं पुनः परमेश्वरस्य ?। तत एव सर्वे लोका वदन्ति-वाणारसीतः पञ्चक्रोशं अर्वाक् एव पापं नश्यति। लोकान्तिकदेवैः आचारज्ञैः ताभिः इष्टाभिर्वाणीभिर्भगवान् एवमुच्यते स्म।

जय जय नंदा !, जय जय भद्दा !, भद्दं ते जय जय खत्तियवरवसहा! बुज्झाहि लोग-

नाहा! णं जाव जयजयसद्दं पउंजंति ॥ १५५॥ पुव्विं पि णं पासस्स णं अरहओ पुरिसादाणीयस्स माणुस्सगाओ गिहत्थधम्माओ अणुत्तरे णं आभोए णाणदंसणे हुत्था ॥

अर्थः–हे स्वामिन्! त्वं जय, जय त्वं, नन्द वृद्धिं प्राप्नुहि। हे क्षत्रियेषु वरवृषभ! हे लोकनाथ! त्वं बुद्ध्यस्व संसारस्वरूपं जानीहि। हे प्रभो! धर्मतीर्थं प्रवर्तय इत्युक्त्वा जयजयशब्दं प्रयुञ्जते। पूर्वं अपि श्रीपार्श्वनाथस्य स्वामिनः अर्हतः मानुष्यलोकात् गृहस्थधर्मात् मनः विरक्तं एव आसीत्, स्वयमेव श्रीपार्श्वनाथः प्रधानेन ज्ञानेन स्वदीक्षावसरं जानन् एव आसीत्। ततः पूर्वं लोकान्तिकदेवानां वाक्याद् दानं दत्त्वा यदा दीक्षां श्रीपार्श्वनाथो गृह्णाति ॥ तत्सूत्रकारः प्राह–

तेणं कालेणं तेणं समएणं पासे अरहा पुरिसादाणीए तेणं अणुत्तरेणं अहोइएणं नाणदंसणेणं अप्पणो निक्खमणकालं आभोएइ २ चिच्चा हिरण्णं तं चेव सव्वं–जाव दाणं दाइयाणं परिभाइत्ता। जे से हेमंताणं दुच्चे मासे तच्चे पक्खे पोसबहुले, तस्स णं पोसबहुलस्स इक्कारसीदिवसे णं पुव्वण्हकालसमयंसि विसालाए सिबिआए सदेवमणुआसुराए परिसाए, तं

चेव सव्वं, वाणारसिं नगरिं मज्झंमज्झेणं निग्गच्छइ, निग्गच्छित्ता जेणेव आसमपए उज्जाणे, जेणेव असोगवरपायवे, तेणेव उवागच्छइ, उवागच्छित्ता असोगवरपायवस्स अहे सीयं ठावेइ, ठावित्ता सीयाओ पच्चोरुहइ, पच्चोरुहित्ता सयमेव आभरणमल्लालंकारं ओमुअइ, ओमुइत्ता सयमेव पंचमुट्ठियं लोअं करेइ, करित्ता अट्ठमेणं भत्तेणं अप्पाणएणं विसाहाहिं नक्खत्तेणं जोगमुवागएणं एगं देवदूसमादाय तिहिं पुरिससएहिं सद्धिं मुंडे भवित्ता अगाराओ अणगारियं पव्वइए ॥ १५६ ॥

अर्थः-तस्मिन् काले तस्मिन् समये श्रीपार्श्वोऽर्हन् पुरुषादानीयस्तेन प्रधानेन प्रकाशरूपेण ज्ञानदर्शनेन आत्मनो दीक्षायाः समयं अवसरं विलोकयति, विलोक्य च हिरण्यादिकं धनं त्यक्त्वा श्रीमहावीरस्वामिवद् दायं दात-व्यधनं दायादानां स्वगोत्रीयाणां दत्त्वा शीतकालस्य द्वितीये मासे तृतीये पक्षे एतावता पौषकृष्णैकादशीदिने पूर्वाह्णकाले मध्याह्नकाले मध्याह्नसमये विशालानाम्न्यां शिविकायां स्थित्वा यथा श्रीमहावीरो क्षत्रियकुंडनगरात् निर्गतस्तथा एव श्रीपार्श्वनाथो निर्गतः। परं अयं एव विशेषः—वाणारसीनगरमध्ये भूत्वा यत्र आश्रमपदं

अन्तेन ग्रन्थेन भगवतो वर्धमानस्वामिनो विमानच्यवनम्, ब्राह्मणीगर्भाधानम्, ततः शक्रादेशात् त्रिशलागर्भसंहरणम्, उत्पत्तिश्चाभिहिता। 'तत्थ पंचहत्थुत्तरेहि होत्थ'त्ति हस्त उत्तरो यासाम् उत्तराफाल्गुनीनां ता हस्तोत्तराः, ताश्च पञ्चसु स्थानेषु—गर्भाधान—संहरण—जन्म—दीक्षा—ज्ञानोत्पत्तिरूपेषु—संवृत्ताः, अतो भगवान् अपि "पञ्चहस्तोत्तरोऽभूदिति" ॥ एतत्सूत्रवृत्तौ श्रीवीरस्य च्यवन—गर्भसंक्रमण—जन्मादि-पञ्चकल्याणकरूपस्थानानि हस्तोत्तरायां दर्शितानि, पुनः षष्ठं स्वातिनक्षत्रे निर्वाणं सूत्रकारेणैव उक्तम्, अतो वीरस्य कल्याणकषट्कं पूर्वोक्त-सूत्रवृत्त्यनुसारेणापि संसिद्धं ज्ञातव्यम्। अत्र केचिद् एवं प्ररूपयांचक्रः—"आचाराङ्गटीकाप्रभृतिषु 'पंचहत्थुत्तरे' इत्यत्र पञ्च वस्तूनि एव व्याख्यातानि, नतु पञ्च कल्याणकानि," तत् तेषां मतमयुक्तम्। वस्तुशब्दस्य सर्वार्थाभिधायकत्वात्, तथाहि—यदस्ति जगति पदार्थजातं तत् सर्वं वस्तुशब्देनैव व्यवह्रियते, निर्दिश्यते च। ततश्च कल्याणकमपि वस्तुरूपमेव, तस्य वस्तुस्वरूपता—सद्रूपता च भवतामपि इष्टा, अत एव पूर्वोक्तवस्तुव्याख्यानेऽपि न षट्कल्याणकाभावः साधयितुं शक्यः, उत षट्कल्याणकनिर्णय एव तेन व्याख्यानेन साध्यते। अतो वस्तुव्याख्यानपक्षोऽपि शास्त्रीयपक्षं पोषयत्येव। किञ्च, योऽत्र संदर्शितो मूलगतो 'ते णं काले णं' इत्यादिपाठः, ततस्तु कल्याणकषट्कमप्रतिहतमेव प्रतीयते, तत्र षष्ठस्य निर्वाणलक्षणकल्याणकस्य स्वातौ संसूचितत्वात्। यदि च वस्तुव्याख्यानेन कल्याणकनिषेधः साध्यते तर्हि तत्र वा अन्यत्र सर्वत्र वस्तुव्याख्यया सर्वेषां तीर्थकराणां कल्याणकाभावप्रसङ्गः। स च नेष्टः केषांचिदपि। अन्यच्च यथा अन्यतीर्थकराणां वस्तुव्याख्ययाऽपि न कल्याणकबाधा, तथा श्रीवीरस्याऽपि वस्तुव्याख्यानपक्षो कथं कल्याणकषट्कं बाधेत?। वस्तुव्याख्यायाश्च सर्वत्र समत्वाद् एकया व्याख्यया एकत्र विधिः, अन्यत्र निषेधश्च साधयितुं दुःशक्यो न्यायपक्षं कक्षीकुर्वद्भिः। किञ्च,

नाम उद्यानं तत्र अशोकवृक्षस्य अधः शिबिकां स्थापयित्वा शिबिकात् उत्तीर्य स्वयमेव आभरणमाल्यालङ्काराणि शरीरात् उत्तार्य स्वहस्तेनैव पञ्चमुष्टिं लोचं कृत्वा चतुर्विधाहारत्यागं अष्टमं तपः कृत्वा च विशाखानक्षत्रे चन्द्रसंयोगं प्राप्ते सति एकं देवदूष्यवस्त्रं इन्द्रेण प्रदत्तं स्कन्धे धृत्वा त्रिशतैः ( ३०० ) राजपुरुषैः सार्द्धं दीक्षां गृह्णाति। श्रीपार्श्वनाथस्य स्कन्धे इन्द्रो देवदूष्यवस्त्रं मुञ्चति। अन्येषां त्रिशत ( ३०० ) साधूनां स्थविरकल्पानां १४ उपकरणानि देवाः प्रयच्छन्ति। स्वामी एवंप्रकारेण अगारं गृहवासं त्यक्त्वा अनगारो भवति।

पासे णं अरहा पुरिसादाणीए तेसीइं राइंदियाइं निच्चं वोसट्ठकाए चियत्तदेहे जे केइ उवसग्गा उप्पज्जंति, तं जहा–से दिव्वा वा माणुस्सा वा तिरिक्खजोणिआ वा अणुलोमा वा पडिलोमा वा, ते उप्पन्ने सम्मं सहइ, तितिक्खइ, अहियासेइ ॥ १५७ ॥

अर्थः–श्रीपार्श्वनाथोऽर्हन् पुरुषादानीयः ८३ त्र्यशीतिदिनानि यावद् नित्यं व्युत्सृष्टकायः–त्यक्तशरीरः, ये केचिद् उपसर्गाः उत्पद्यन्ते–ते उपसर्गाः देवैः कृता वा मनुष्यैः कृता वा तिर्यक्कृता वा अनुलोमा वा शरीरसुखदाः स्रक्चन्दनवनिताद्याः, प्रतिलोमा वा शरीरस्याऽसुखकराः भयोत्पादका वा, तान् सर्वान् उपसर्गान् सम्यक्

सहते, क्षमते शक्तौ सत्यामपि क्षमते, अध्यासयति मनसः स्थैर्यं धत्ते इत्यर्थः। अथ भगवतोऽष्टमतपसः कोपटसन्निवेशे धन्यनाम्नो गृहस्थस्य गृहे परमान्नेन पारणं जातं तत्र पञ्च दिव्यानि देवाश्चक्रुः, सार्द्धद्वादशकोटीः सौवर्णिकानां ववर्ष। छद्मस्थावस्थायां विहरतः श्रीपार्श्वनाथस्य कलिकुण्डपार्श्वनाथस्य स्थापना जाता। पुनः कुर्कुटेश्वरपार्श्वनाथस्याऽपि स्थापना सञ्जाता। जीवितस्वामितीर्थस्थापना जाता। एवं एकदा श्रीपार्श्वनाथो विहरन् शिवनगर्याः पार्श्वे तापसाश्रमे आगतस्तदा सूर्योऽस्तं जगाम। तत्रैकः पुराणः कूपो वटवृक्षश्चैकोऽस्ति, तत्रैव कायोत्सर्गे स्थितः। अस्मिन् अवसरे स कमठजीवो मेघमाली देवः स्वामिनं प्रतिमास्थं दृष्ट्वा सक्रोधो जातः—भगवन्तं उपद्रोतुं लग्नः। पूर्वं वेतालरूपाणि विकुर्व्य अट्टहासैर्भापयामास। पश्चात् सिंहरूपेण उपसर्गं चकार, वृश्चिकैः सर्पैः ददंश। एवं बहुभिरुपसर्गैः यदा स्वामी न चुक्षोभ तदा विशेषेण क्रुद्धो मेघमाली देवो मेघघटाः विकुर्व्य यादृश्यः कृष्णपक्षस्य रात्रयस्तादृशीभिर्श्यामाभिर्मेघघटाभिराकाशं आच्छादयामास। कल्पान्तकालमेघवद् मेघो वर्षितुं लग्नः। गर्जारवस्तु ब्रह्माण्डं स्फोटयन् इव बभूव। एवं गर्जन् विद्युदुल्लासैः विश्वं भापयन् मुसलप्रमाणधाराभिः ववर्ष। तदा स्वामिनः कायोत्सर्गस्थितस्य क्षणाद् जानुप्रमाणं क्षणात् कटिप्रमाणं क्षणादाकण्ठं जलं बभूव। तथाऽपि श्रीपार्श्वप्रभुः नासाग्रन्यस्तदृष्टिः ध्यानाद् मनाग् अपि न अचालीत्। तस्मिन् क्षणे धरणेन्द्रस्य आसनप्रकम्पो जातः, तदा धरणेन्द्रेणाऽवधिज्ञानाद् भगवतः स्वस्य प्राग्भवस्य गुरोरुपसर्गं दृष्ट्वा स

पद्मावत्या सहितः समागत्य स्वामिनं स्वस्कन्धे उत्पाट्य मस्तकोपरि सहस्रफणानां छत्रं विधाय स्थितः। पद्मावती जया–विजया–वैरोट्यादिभिः स्वसखीभिः सह अग्रे अन्तरिक्षे नाटकं चकार। वेणुवीणामृदङ्गतालादिध्वनिं विस्तारयामास। एवं त्रीणि दिनानि जातानि, तदा धरणेन्द्रेण ज्ञातं–इदं तु स्वाभाविकं मेघवर्षणं न भवति, किञ्चिद् औत्पातिकं दृश्यते एव। अवधिज्ञाने मेघमालिकृतं भगवता सह प्राग्भववैरानुबन्धात् विकृतज्ञातं ज्ञात्वा धरणेन्द्रः अवादीत्। रे दुष्टमेघमालिन्! त्वया किमारब्धं। अजाकृपाणीन्यायेन अनेन तवैव अभव्यं भविष्यति। यथा अजा खड्गेन गलस्य खर्जू खनति, स्वकीयगलच्छेदं प्राप्नोति तथा भगवतः कृतोपसर्गः तवैव दुःखाय भविष्यति। अथ चाऽयं वीतरागः कृपालुरस्ति, परन्तु अहं भगवत्सेवकः तवेदं दुष्टत्वम् अतः परं न सहिष्ये। अरे! स्वामिना तु पञ्चाग्निं साधयतस्तव सम्यग् दयामय उपदेशो दत्तः। स च उपदेशस्तव क्रोधाय सञ्जातः। सत्यं लवणक्षेत्रे मेघजलं लवणाय भवति। तवाऽपि भगवद्वचनं अमृतोपमं विषवज्ञातं। एतादृशानि क्रोधवाक्यानि धरणेन्द्रस्य श्रुत्वा भीतो मेघमाली मेघमायां संहृत्य स्वामिनः पादयोर्लगति स्म। स्वाऽपराधं क्षमयामास, सम्यक्त्वं प्राप। श्रीपार्श्वनाथस्य मन्त्रनिबद्धस्तोत्रेण स्तवनां चकार। ततो धरणेन्द्रेण सह वन्दनां कृत्वा मेघमाली स्वस्थानं जगाम। धरणेन्द्रोऽपि प्रभोर्वन्दनां कृत्वा पद्मावत्या सहितः पाताले गतः। ततः तत्र स्थाने लोके शिवनगरी इति मूलनाम परावर्त्य अहिच्छत्रा इति नाम प्रतिष्ठितं। तत्र अहि-

च्छत्रा इति तीर्थं पूर्वदेशेऽस्ति ।

तए णं से पासे भगवं अणगारे जाए इरियासमिए, भासासमिए—जाव अप्पाणं भावेमाणस्स तेसीइं राइंदियाइं विइक्कंताइं, चउरासीइये राइंदिए अंतरा वट्टमाणे जे से गिम्हाणं पढमे मासे, पढमे पक्खे, चित्तवहुले, तस्स णं चित्तबहुलस्स चउत्थीपक्खे णं पुव्वण्हकालसमयंसि धायइपायवस्स अहे छट्ठेणं भत्तेणं अपाणएणं विसाहाहिं नक्खत्तेणं जोगमुवागएणं झाणंतरिआए वट्टमाणस्स अणंते अणुत्तरे निव्वाघाए निरावरणे जाव केवलवरनाणदंसणे समुप्पन्ने, जाव जाणमाणे पासमाणे विहरइ ॥ १५८ ॥

अर्थः—ततः श्रीपार्श्वः अर्हन् पुरुषादानीयः अनगारो जातः । ईर्यासमितः, भाषासमित्या समितः, एवं पञ्चसमित्या सहितः, गुप्तित्रिकेण युक्तः एवमात्मानं भावयन्। एवंरीत्या वर्त्तमानस्य श्रीपार्श्वनाथस्य ८३ त्र्यशीतिदिनेषु व्यतीतेषु सत्सु ८४ चतुरशीतिसत्के दिने वर्त्तमाने सति उष्णकालस्य प्रथमे मासे प्रथमे पक्षे चैत्रमासस्य कृष्णचतुर्थीदिने पूर्वाह्णकाले प्रथमप्रहरद्वयमध्ये धातुकीवृक्षस्याऽधः स्थितस्य षष्ठतपसश्चतुर्विधाहाररहितस्य

विशाखानक्षत्रे शुक्लध्यानं ध्यायतः अनन्तं अनन्तार्थग्राहकत्वात्, अनुत्तरं सर्वोत्कृष्टं, केवलवरज्ञानं केवलवरदर्शनं समुत्पन्नं, तेन ज्ञानेन सर्वं लोकालोकं जानाति, पश्यति स्म । श्रीपार्श्वनाथः केवलज्ञाने तथा केवलदर्शने षड्द्रव्याणां भावं परिणमनं जानन्, पश्यन् विहरति स्म। तस्मिन्नवसरे चातुर्निकायकानां देवानां मेलापः सञ्जातः। तैर्देवैः वप्रत्रयं अशोकवृक्षादिमहाप्रातिहार्याष्टकशोभा विहिता। चतुःषष्टिर्देवेन्द्राः मिलिताः। भगवता श्रीपार्श्वनाथेन सिंहासने पूर्वाऽभिमुखमुपविश्य द्वादशपर्षदोऽग्रे धर्मश्चतुर्धा निरूपितः, तदा देशनां श्रुत्वा बहुभिः जीवैः प्रतिबोधो लब्धः। चतुर्विधस्य सङ्घस्य स्थापना कृता। अथ भगवतः परिवारः कथ्यते–

पासस्स णं अरहओ पुरिसादाणीयस्स अट्ठ गणा, अट्ठ गणहरा हुत्था, तं जहा–सुभे य १, अज्जघोसे य २, वसिट्ठे ३, बंभयारि य ४। सोमे ५ सिरिहरे ६, चेव, वीरभद्दे ७ जसे वि य ८ ॥ १ ॥ १५९ ॥

अर्थः–श्रीपार्श्वस्य अर्हतः पुरुषादानीयस्य अष्टौ गणाः, अष्टौ गणधरा आसन्। तद् यथा–शुभः १ आर्यघोषो २ वसिष्ठो ३ ब्रह्मचारी ४ सोम्यः ५ श्रीधरो ६ वीरभद्रो ७ यशोभद्रः ८–एते अष्टौ गणधराः। एतेषां पृथक् पृथग् द्वादशाङ्गीरचना ततोऽष्टौ गणा गच्छा आसन्।

पासस्स णं अरहओ पुरिस्सादाणीयस्स अज्जदिण्णपामुक्खाओ सोलससमणसाहस्सीओ ( १६००० ) उक्कोसिआ समणसंपया हुत्था ॥ १६० ॥ पासस्स णं अ० पुप्फचूलापामुक्खाओ अट्ठत्तीसं अज्जियासाहस्सीओ (३८०००) उक्कोसिआ अज्जियासंपया हुत्था ॥ १६१ ॥ पासस्स० सुव्वयपामुक्खाणं समणोवासगाणं एगा सयसाहस्सीओ चउसट्ठिं च सहस्सा (१६४०००) उक्कोसिआ समणोवासगाणं संपया हुत्था ॥ १६२ ॥ पासस्स० सुनंदापामुक्खाणं समणोवासियाणं तिण्णि सयसाहस्सीओ सत्तावीसं च सहस्सा ( ३२७००० ) उक्कोसिआ समणोवासियाणं संपया हुत्था ॥ १६३ ॥ पासस्स० अद्धुट्ठसया ( ३५० ) चउद्दसपुव्वीणं अजिणाणं जिणसंकासाणं सव्वक्खर–जाव–चउद्दसपुव्वीणं संपया हुत्था ॥ १६४ ॥

अर्थः–पार्श्वनाथस्य अर्हतः पुरुपादानीयस्य आर्यदिन्यप्रमुखाः १६ सहस्रसंख्याका उत्कृष्टा साधूनां सम्पदाऽऽसीत् । श्रीपार्श्वनाथस्य अर्हतः पुरुषादानीयस्य ३८ सहस्रप्रमाणा पुष्पचूलाप्रमुखाणां उत्कृष्टा आर्यिकाणां सम्पदाऽऽसीत् । पार्श्वनाथस्याऽर्हतः पुरुषादानीयस्य एकलक्ष ६४ चतुःषष्टिसहस्रप्रमाणा सुव्रतप्रमुखाणां श्राव-

काणां सम्पदाऽऽसीत् । पार्श्वनाथस्य अर्हतः पुरुषादानीयस्य ३ लक्ष २७ सहस्र प्रमाणा उत्कृष्टा श्राविकाणां सम्पदाऽऽसीत् । पार्श्वस्य अर्हतः पुरुषादानीयस्य सार्द्धत्रिशत ३५० प्रमाणा उत्कृष्टा चतुर्दशपूर्वधराणां सम्पदाऽऽसीत् । ते चतुर्दशपूर्वधराः अजिनाऽपि जिनसदृशः सर्वाऽक्षरसंयोगज्ञास्तेषां सम्पदाऽऽसीत् ।

पासस्स णं० चउद्दसंसया (१४००) ओहिनाणीणं, दससया (१०००) केवलनाणीणं, इक्कारससया ( ११०० ) वेउव्वियाणं, छस्सया ( ६०० ) रिउमईणं, दससमणसया ( १००० ) सिद्धा, वीसं अज्जियासया ( २००० ) सिद्धा, अद्धट्ठमसया ( ७५० ) विउलमईणं, छसया ( ६०० ) वाईणं, बारससया ( १२०० ) अणुत्तरोववाइयाणं ॥ १६५ ॥

अर्थः—श्रीपार्श्वस्य अर्हतः पुरुषादानीयस्य चतुर्दशशतसंख्याका अवधिज्ञानिनः अभूवन्, दशशतसंख्याकाः केवलिनः, एकादशशतसंख्याका वैक्रियलब्धिधारका बभूवुः, सार्द्धसप्तशतसंख्याका विपुलमतयः, षट्शतसंख्याका ऋजुमतयः, षट्शतसंख्याका वादिनः आसन् । श्रीपार्श्वनाथस्य दीक्षितशिष्याः दशशतसंख्याप्रमाणाः सिद्धिं गताः, विंशतिशतसंख्याकाः साध्व्यः सिद्धिं गताः, द्वादशशतप्रमाणाः पञ्चानुत्तरविमानवासिनो देवा बभूवुः ॥

पासस्स णं अरहओ पुरिसादाणीयस्स दुविहा अंतगडभूमी हुत्था, तं जहा—जुगंतगडभूमी, परियायंतगडभूमी य, जाव चउत्थाओ पुरिसजुगाओ जुगंतगडभूमी, तिवासपरिआए अंतमकासी ॥१६६॥

अर्थः—श्रीपार्श्वनाथस्य अर्हतः पुरुषादानीयस्य द्विविधा अन्तकृतभूमिः, श्रीपार्श्वनाथाद् भगवतः प्रारभ्य चत्वारः पट्टधारिणः पुरुषाः मुक्तिमार्ग प्राप्ताः। एषा युगान्तकृद्भूमिः। श्रीपार्श्वनाथस्य केवलज्ञानोत्पत्तेः अनन्तरं वर्षत्रयेण मुक्तिमार्गो व्यूढः। एषा पर्यायान्तकृद्भूमिः॥

तेणं कालेणं तेणं समएणं पासे अरहा पुरिसादाणीए तीसं वासाइं अगारवासमज्झे वसित्ता, तेसीइं राइंदिआइं छउमत्थपरिआयं पाउणित्ता, देसूणाइं सत्तरिवासाइं केवलिपरिआयं पाउणित्ता, पडिपुण्णाइं सत्तरिवासाइं सामण्णपरिआयं पाउणित्ता, एक्कं वाससयं सव्वाउयं पालइत्ता खीणे वेयणिज्जाउयनामगुत्ते इमीसे ओसप्पिणीए दूसमसुसमाए समाए वहुविइक्कंताए जे से वासाणं पढमे मासे दुच्चे पक्खे सावणसुद्धे, तस्स णं सावणसुद्धस्स अट्ठमीपक्खे णं उप्पिं संमेअसेलसिहरंसि अप्पचउत्तीसइमे मासिएणं भत्तेणं अपाणएणं

विसाहाहि नक्खत्तेणं जोगमुवागएणं पुव्वण्हकालसमयंसि वग्घारियपाणी कालगए विइक्कंते जाव सव्वदुक्खप्पहीणे ॥ १६७ ॥

अर्थः—तस्मिन् काले तस्मिन् समये श्रीपार्श्वोऽर्हन् पुरुषादानीयः ३० वर्षाणि गृहवासे स्थितः, त्र्यशीतिदिवसानि छद्मस्थायां चारित्रं पालयामास, त्र्यशीतिदिनैरूनानि सप्ततिवर्षाणि केवलपर्यायं प्रपाल्य, पूर्णानि सप्ततिवर्षाणि चारित्रं प्रपाल्य—एकं एकशतवर्षप्रमाणं सर्वायुः प्रपाल्य—वेदनीयआयुर्नामगोत्रेषु—एतेषु कर्मसु क्षयं प्राप्तेषु सत्सु एतस्यां अवसर्पिण्यां चतुर्थारके बहुनिर्गते सति दुःषमसुषमारके किञ्चित् शेषे सति वर्षाकालस्य प्रथमे मासे द्वितीये पक्षे श्रावणशुक्लाऽष्टमीदिने समेतशिखरपर्वतस्योपरि ३३ त्रयस्त्रिंशत्प्रमाणैः अपरैः साधुभिः सह स्वयं चतुस्त्रिंशत्तमः एकमासस्य भक्तं छित्वा चतुर्विधाहारत्यागेन विशाखानक्षत्रे चन्द्रसंयोगे प्राप्ते सति पूर्वाह्णकाले प्रथमद्विप्रहरे वग्घारियपाणिए—कायोत्सर्गे प्रलम्बहस्ततया स्थितः स्वामी मुक्तिं गतः, सर्वैः दुःखैः प्रहीणो जातः ॥

पासस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स दुवालस वाससयाइं विइक्कंताइं, तेरसमस्स वाससयस्स अयं तीसइमे संवच्छरे काले गच्छइ ॥ १६८ ॥

अर्थः-श्रीपार्श्वनाथस्य मुक्तिगमनाद् अनन्तरं द्वादशशतत्रिंशत् ( १२३० ) वर्षेषु व्यतीतेषु सत्सु श्रीकल्पसूत्रं पुस्तकेषु लिखितं । यतः श्रीपार्श्वनाथस्य निर्वाणात् सार्द्धद्विशतवर्षैः ( २५० ) महावीरस्य निर्वाणमासीत् । ततः पश्चात् नवशतअशीतिवर्षाणि संमील्यन्ते तदा द्वादशशतत्रिंशत् वर्षाणि भवन्ति इति अनेन प्रकारेण त्रयोविंशतितमतीर्थंकरस्य श्रीपार्श्वनाथस्य पञ्च कल्याणकानि व्याख्यातानि ॥

अथ पश्चानुपूर्व्या द्वाविंशतितमतीर्थंकरस्य, सर्वपापक्षयंकरस्य, आबालब्रह्मचारिणः, संसारसमुद्रतारिणः, श्रीगिरिनारिमण्डनस्य, कन्दर्पखण्डनस्य, राजीमतीपरिहारिणः, शीलसन्नाहधारिणः श्रीनेमनाथस्य पञ्च कल्याणकानि श्रीसङ्घस्य मङ्गलार्थं कथ्यन्ते-

तेणं कालेणं तेणं समयेणं अरहओ अरिट्ठनेमिस्स पंचचित्ते हुत्था, तंजहा-चित्ताहिं चुए चइत्ता गब्भं वक्कंते, चित्ताहिं जाए, चित्ताहिं मुंडे भवित्ता अगाराओ अणगारियं पवइए, चित्ताहिं अणंते जाव केवलवरनाणदंसणे समुप्पन्ने, चित्ताहिं परिनिव्वुए ॥ १६९ ॥

अर्थः-तस्मिन् काले तस्मिन् समये अर्हतोऽरिष्टनेमेः पञ्च कल्याणकानि चित्रानक्षत्रे बभूवुः, तानि उच्यन्ते-

आचाराङ्गटीकागते पाठे वस्तुशब्दस्य गन्धोऽपि नास्ति, तत्र तु श्रीमता मूलकारेण, श्रीवृत्तिकारेण च केवलं पृथक् पृथक् कल्याणकान्येव गणयित्वा प्रकटीकृतानि । यदि वस्तुव्याख्यापक्षोऽपि परैरुररीक्रियते तदाऽपि पूर्वोक्तयुक्त्या नास्माकं बाधा, नाऽपि च षट्कल्याणकाभावः; उत कल्याणकषट्कमेव संसाध्यते तया वस्तुव्याख्यया । अन्यथा—यदि सा व्याख्या कल्याणकषट्कनिषेधपरैव स्यात् तदा तु जगति सर्वकल्याणकाभाव आपद्येत पूर्वदर्शितन्यायेनैव, अतः केनाऽपि प्रकारेण नैतत् कल्याणकषट्काऽभावत्वं संसिद्धिपदवीमारोहति ॥ अत्र केचन एवं प्ररूपयन्ति, यत् श्रीवीरगर्भापहारवत् श्रीनाभेयजिनराज्याऽभिषेकोऽपि कथं न कल्याणककोटि प्रविशति ? तस्य श्रीजम्बूद्वीपप्रज्ञप्त्युपाङ्गे संनिर्दिष्टत्वात् । तदेतत् कथनं कल्याणकशब्दतत्त्वाऽपरिचितानामेव, असच्च तत् । पूर्वं तावत् कल्याणकशब्दवाच्यमेव विवेच्यते, तथाहि:— यस्य मास—पक्ष—तिथि—दिन—पूर्वकं जघन्य—मध्यम—उत्कृष्टव्याख्यया निर्देशः, तदेव कल्याणकम्, नान्यत् । एतच्च लक्षणं यत्र संजाघटीति तदेव कल्याणकम् । श्रीऋषभराज्याऽभिषेके तु एतल्लक्षणस्य गन्धोऽपि नाभाति, ततश्च कथं तत् कल्याणकं स्यात् ? । यदि च श्रीऋषभराज्याभिषेकस्य कल्याणकत्वमापाद्यते परैः, तदा अन्येषां राज्याभिषिक्तानां तीर्थकराणां राज्याभिषेकस्य कथं न कल्याणकत्वं स्याद् भवदुक्तन्यायेनैव । 'श्रीऋषभराज्याभिषेकः कल्याणकम्, अन्यतीर्थंकरराज्याभिषेको न कल्याणकम्' एतद् वचो व्याघातशालि युक्तिरिक्तं च । अतश्च श्रीवीरगर्भापहारवत् श्रीआदिनाथराज्याभिषेको न कल्याणकम्, ततश्च नैव पूरापादितः प्रसङ्गो युक्तिसंगतिमङ्गति । यदि च ते हठात् श्रीप्रथमजिनराज्याभिषेचनं कल्याणकत्वेन आपादयेयुस्तदा तु तद्वद् अन्यजिनेन्द्रराज्याभिषेचनानि अपि कल्याणकत्वेन आपतन्ति कथं वारयितुं शक्यानि, युक्तियोगस्य उभयत्र तुल्यबलत्वात् । किञ्च, ये परेषां प्रसङ्गापादनेन दूषणं निर्देशयन्ति, ते कथं स्वप्रसङ्गापातेन

चित्रानक्षत्रे देवलोकात् च्युत्वा मातुः कुक्षौ गर्भत्वेनाऽरिष्टनेमिरुत्पन्नः । चित्रानक्षत्रे जन्म जातं, चित्रानक्षत्रे चारित्रं गृहीतं, चित्रानक्षत्रे केवलज्ञानमुत्पन्नम्, चित्रानक्षत्रे मोक्षो बभूव ॥

एवं नाममात्रेण पञ्च कल्याणकानि उक्त्वा इदानीं विस्तारवाचनया सूत्रकारः प्राह—

तेणं कालेणं तेणं समयेणं अरहा अरिट्ठनेमी जे से वासाणं चउत्थे मासे सत्तमे पक्खे कत्तिअबहुले, तस्स णं कत्तियबहुलस्स बारसीपक्खे णं अपराजिआओ महाविमाणाओ बत्तीससागरोवमट्ठिइआओ अणंतरं चयं चइत्ता इहेव जंबुद्दीवे दीवे भारहे वासे सोरियपुरे नयरे समुद्दविजयस्स रण्णो भारियाए सिवादेवीए पुव्वरत्तावरत्तकालसमयंसि चित्ताहिं नक्खत्तेणं जोगमुवागएणं गब्भत्ताए वक्कंते । सव्वं तहेव सुमिणदंसणदविणसंहरणाइअं इत्थ भाणियव्वं ॥ १७० ॥

अर्थः—तस्मिन् काले तस्मिन् समये अर्हन् अरिष्टनेमिः वर्षाकालस्य चतुर्थे मासे सप्तमे पक्षे कार्तिकमासे कृष्णपक्षे द्वादशीदिने पञ्चानुत्तरविमानानां मध्ये उत्तरदिशास्थाद् अपराजितनाम्नो विमानात् ३२ सागरायु-

ष्कात् अनन्तरं च्युत्वा अस्मिन्नेव जम्बूद्वीपे भरतक्षेत्रे सौरीपुरे नगरे समुद्रविजयस्य राज्ञो भार्यायाः शिवादेव्याः कुक्षौ चित्रानक्षत्रे चन्द्रसंयोगे प्राप्ते गर्भत्वेनाऽवतीर्णः, तदा चतुर्दशस्वप्नावलोकनं, भर्तुरग्रे कथनं, प्रातः स्वप्नपाठकेभ्यः अर्थश्रवणं, ततो बन्दिमोचनं, नगरे उत्सवकरणं, इन्द्रादेशाद् धनदसेवकेभ्यः तिर्यग्जृम्भकदेवेभ्यो धनधान्यरत्नादिवर्षणं श्रीमहावीरस्वामिवत् व्याख्येयम् ॥

अथ श्रीनेमनाथस्य जन्मकल्याणकं कथ्यते—

तेणं कालेणं तेणं समएणं अरहा अरिट्ठनेमी जे से वासाणं पढमे मासे दुच्चे पक्खे सावणसुद्धे, तस्स णं सावणसुद्धस्स पंचमीपक्खे णं नवण्हं मासाणं जाव चित्ताहिं नक्खत्तेणं जोगमुवागएणं जाव आरोग्गा आरोग्गं दारयं पयाया ॥ जम्मणं समुद्दविजयाभिलावेणं नेयव्वं, जाव तं होउ णं कुमारे अरिट्ठनेमी नामेणं ॥ १७१ ॥

अर्थः—तस्मिन् काले तस्मिन् समये अर्हन् अरिष्टनेमिः वर्षाकालस्य प्रथमे मासे द्वितीये पक्षे श्रावणशुक्लपञ्चमीदिने नवमासेषु तथा उपरि सार्द्धसप्तदिनेषु व्यतीतेषु चित्रानक्षत्रे चन्द्रसंयोगे प्राप्ते सति भगवान् आरोग्यः, शिवा-

देवी अपि आरोग्या सती, तया शिवादेव्या अरिष्टनेमिः प्रसूयते स्म। जन्माधिकारः—श्रीनेमिनाथस्य महावीरवद् ज्ञेयः। परं अयं विशेषः—समुद्रविजयो जन्ममहोत्सवं कृत्वा सर्वान् स्वजनान् भोजयित्वा नामदानप्रस्तावे 'अरिष्ट-नेमिः' इति नाम दत्तं, अतो अरिष्टनेमौ मातुर्गर्भे गर्भत्वेन समुत्पन्ने सति चतुर्दशस्वप्नावलोकनाऽनन्तरं एकं अरिष्टरत्नस्य चक्रं शिवादेव्या दृष्टं तेन स्वप्नविचारेण 'अरिष्टनेमिः' इति स्वजनसमक्षं नाम प्रदत्तं, लोकानाम्—अरिष्टानि अमङ्गलानि चूरयामास। अथ बालत्वे श्रीअरिष्टनेमिकुमारं इन्द्राणी क्रीडयति। अङ्गुष्ठे अमृतं सञ्चारयति, भगवान् यदा क्षुधितो भवति तदा अङ्गुष्ठं लेढि। सामान्यलोकबालवद् मातुः स्तन्यं न पिबति। पञ्चधात्रीभिः लाल्यमानः क्रमाद् अरिष्टनेमिः वर्द्धते स्म। शरीरे श्यामवर्णः, प्रलम्बकर्णः, सर्वाङ्गसुन्दराऽऽ-कारः श्रीनेमिकुमारः बालैः देवैः सह क्रीडां करोति।

---

१ तस्मिन् समये किं स्वरूपं जातं तदुच्यते—तत्र यादवानां मूलादुत्पत्तिः वर्ण्यते—अग्रेऽपि दीक्षाऽवसरे सूत्रकारो वक्ष्यति। "वारवई नगरी, मज्झंमज्झेणं" श्रीअरिष्टनेमिद्वारिकानगरीमध्ये भूत्वा—जन्म सौरीपुरे जातं, दीक्षा द्वारि-कायां जाता। सौरीपुराद् द्वारिकायां यथा यादवानां आगमनं जातं तथा कथ्यते—पूर्वं मथुरायां बहुषु हरिवंशीयनृ-पेषु जातेषु सत्सु एको यदुनामा राजाऽभूत्, तस्य पुत्रः सुरनामा बभूव, तस्य द्वौ पुत्रौ बभूवतुः, तत्र प्रथमः शौरिः,

अपरो लघुपुत्रः सुवीरः, अथ सूरनृपो बृहत्पुत्रस्य शौरिनाम्नो मथुराया राज्यं दत्त्वा, सुवीरस्य युवराज्यं च दत्त्वा स्वयं चारित्रं जग्राह। अथ शौरिनृपः मथुराया राज्यं लघुभ्रातुः सुवीरस्य दत्त्वा स्वयं शौरिः कुशावर्त्तदेशे गत्वा स्वकीयनाम्ना शौरीपुरं नाम नवीननगरं वासयित्वा, तस्य राज्यं पालयामास। सुवीरो मथुराया नगर्या राज्यं करोति। अथ शौरिराज्ञः अन्धकवृष्णिः पुत्रो बभूव। सुवीरस्य भोजगवृष्णिः पुत्रो बभूव, भोजगवृष्णेः पुत्र उग्रसेन इति आसीत्। भोजगवृष्णिस्तु उग्रसेनस्य मथुराया राज्यं दत्त्वा स्वयं दीक्षां ललौ। अथ अन्धकवृष्णेः दश पुत्रा बभूवुः। तेषां दशानां पुत्राणां नामानि–आद्यः समुद्रविजयः १, अक्षोभः २, स्तिमितः ३, सागरः ४, हिमवन्तः ५, अचलः ६, धरणः ७, पूरणः ८, अभिचन्द्रः ९, वसुदेवः १०। दशाऽपि दशार्हा इति कथ्यंते। अथ अन्धकवृष्णेः बृहत्पुत्रः समुद्रविजयः, तस्य शौरीपुरस्य राज्यं दत्तं, अन्धकवृष्णेश्च पुत्रीद्वयं चाऽऽसीत्। कुन्ती, माद्री च, कुन्ती पाण्डवे प्रदत्ता, माद्री दमघोषाय दत्ता। अथ पाण्डवानां उत्पत्तिः वर्ण्यते–

पुरा श्रीऋषभदेवस्य पुत्रः कुरुनामाऽभूत्, तस्य नाम्ना कुरुदेशः आसीत्, ततः पश्चात् असङ्ख्याः राजानोऽभूवन्, तत्रैकेन हस्तिनागपुरं वासितं, ततः पश्चात् कियत्यपि काले गते सति सुभूमचक्रवर्ती बभूव। ततो बहवो नृपा जाताः, ततः एकः शान्तनुराजा बभूव, तस्य द्वे पत्न्यौ अभूतां, तयोरेका विद्याधरपुत्री गङ्गानाम्नी, द्वितीया नाविकस्य पुत्री

सत्यवतीनाम्नी, गङ्गायाः पुत्रस्तु गाङ्गेयः, स तु भीष्म इति लोके प्रसिद्धिं गतः, भीष्मकर्मकरत्वात्, सत्यवत्याश्च द्वौ पुत्रौ, एकश्चित्राङ्गदः, द्वितीयश्चित्रवीर्यः, अथ शान्तनुराजा चित्राङ्गदपुत्राय राज्यं दत्त्वा परलोकं प्राप्तः। अथैकदा चित्राङ्गदः संग्रामे शत्रुभिर्युद्धं कुर्वन् मृतः। ततः चित्रवीर्यो राजा स्थापितः। तस्य तिस्रो नार्यः, प्रथमा अम्बिका, अम्बालिका, अम्बा। अम्बिकायाः पुत्रो धृतराष्ट्रः, तस्य गन्धारीप्रमुखा अष्टौ नार्यः, तासां सुयोधनप्रमुखाः एकशतं पुत्राः। द्वितीयायाः अम्बिकायाः पुत्रपाण्डुस्तस्य स्त्री कुन्ती, तस्याः कुक्षिभवास्त्रयः पुत्राः युधिष्ठिर—भीम—अर्जुनाः। पाण्डुराज्ञः अपरा स्त्री पद्मा, अन्यद् नाम माद्री अपि, तस्याः कुक्षिभवौ द्वौ पुत्रौ—नकुल—सहदेवौ, एवं पाण्डुभूपस्य पञ्च पुत्राः। चित्रवीर्यस्य तृतीयभार्यायाः विदुरनामा पुत्रोऽभूत्। एतेषां विस्तारसम्बन्धस्तु पाण्डवचरित्राद् ज्ञेयः, इति पाण्डवानां संक्षेपेण नाममात्रं सम्बन्धः उक्तः। कुन्ती पाण्डुनृपाय परिणायिता, द्वितीया माद्री चेदिपुर्याः पत्ये दमघोषाय परिणायिता, दमघोषस्य शिशुपालोऽभूत्, एवं कृत्वा अन्धकवृष्णिर्दीक्षां जग्राह, मथुराया राज्यं उग्रसेनः पालयति। तस्य भार्या धारिणीनाम्नी आसीत्। शौरीपुरे समुद्रविजयो राजा राज्यं करोति। तस्य भार्या शिवादेवी वर्त्तते। अन्ये नवाऽपि भ्रातरः कुमारावस्थायां सुखेन एकत्र तिष्ठन्ति। अन्यदा समुद्रविजयस्य शिवादेव्याः चतुर्दशस्वप्नसूचितो नेमिकुमारः पुत्रो जातोऽस्ति। एकदा मथुरायां सुखेन उग्रसेनस्य राज्ञो राज्यं पालयतः, वनमध्ये एको मासोपवासी तापसः समाजगाम। तस्य तापसस्य एतादृशो नियमोऽस्ति—मासक्षपणस्य मध्ये यः कश्चिदागत्य निमन्त्र-

यति तस्यैव गृहे मासक्षपणस्य पारणं करोति नान्यथा, यदि निमन्त्रणाकारको विस्मरति, तदा अपरं मासक्षपणं करोति। परस्य गृहे पारणार्थं न याति। तेन वनमध्ये तापसेन मासक्षपणं प्रारब्धमस्ति, तत्र क्रीडार्थं आगतेन उग्रसेनराज्ञा तापसो दृष्टः। तापसं प्रणिपत्य राज्ञा मासक्षपणपारणे निमन्त्रितः। अथ च पारणादिने राज्ञः स तापसो विस्मृतः, सन्ध्यां यावद् राजा आह्वातुं यदा नागतस्तदा तेन तापसेन द्वितीयं मासक्षमणं प्रारब्धं, पुनरपि कियद्भिः दिनैः राज्ञा स तापसः स्मृतः, मया तापसो न भोजितः, इदानीं गत्वा तं निमन्त्रयामीति विचार्य राज्ञा पुनरपि मासक्षमणस्य पारणाय निमन्त्रितः, पारणादिने पुनरपि विस्मारितः। तापसेन तृतीयं मासक्षमणं प्रारब्धं, तापसः राज्ञ उपरि रुष्टः, पापोऽयं राजा स्वयं नाह्वयति, अपरान् निमन्त्रयितुं न ददाति, यदाऽहं चेत् म्रिये तदाऽस्य दुःखाय भवान्तरेऽहं स्याम्। तापस इति निदानं कृतवान्, अनुक्रमेण स तापसो मृतः, मृत्वा उग्रसेनस्य भार्यायाः धारिण्याः कुक्षौ गर्भत्वेन उत्पन्नः, तृतीये मासे राज्ञ्यः कालेयभक्षणस्य दोहदो बभूव। अत्याग्रहेण राज्ञा पृष्टा सती राज्ञी दोहदं उवाच, प्रधानेन बुद्धिबलेन पूरितः। अनुक्रमेण राज्ञ्या दुष्टं गर्भं ज्ञात्वा, अनेके शातन–पातनप्रयोगाः गर्भपातनार्थं कृताः, परं स गर्भो न पपात, पूर्णेषु मासेषु पुत्रो जातः, तदा राज्ञा नामाङ्कितमुद्रिकां बद्ध्वा कांस्यपेटिकायां तं जातमात्रं बालं प्रक्षिप्य यमुनायां सा कांस्यपेटा प्लाविता। सा कांस्यपेटा वहन्ती वहन्ती मथुरातः सौरीपुरे समागता, प्रातः समये समुद्राख्यो रसवणिग् घृत–तैल–गुड–लवणविक्रेता शौचार्थं आगतस्तां पेटां यमु-

नायां ददर्श, तदा तेन वणिजा प्रविश्य ता पेटां गृहीत्वा उद्घाट्य बालो निष्कासितः, निष्कास्य च प्रच्छन्नं मुद्रया सहितं बालं स्वप्रियायै ददौ, लोके इति प्रकटमुक्तं, मम स्त्रिया गूढगर्भया पुत्रः प्रसूतः, तस्य पुत्रस्य कंस इति नाम प्रदत्तं, स क्रमेण वर्द्धमानो बालः कंसः अपरान् डिम्भान् कुट्टयन् लोके दुर्दान्तो जातः, नित्यं नित्यं सुभद्रस्य लोका उपालम्भं ददुः। तदा सुभद्रेण ज्ञातं, अहं प्राकृतो वणिक्, अयं बालो राजवंश्यः, मद्गृहे कथं तिष्ठति। यथा स्थविराया गृहे सिंहः कथं समायाति, यथा सिंह्या दुग्धं स्वर्णभाजने तिष्ठति, अन्यधातुपात्रे न तिष्ठति, तथाऽयं राजबीजः राज्ञ एव गृहे विराजते एवं ज्ञात्वा कंसो वसुदेवकुमाराय समर्पितः, कंसोऽपि वसुदेवस्य सेवकीभूय स्थितः, वसुदेवः कंसे महतीं कृपां करोति। अस्मिन् प्रस्तावे वसुराज्ञो वंशे बृहद्रथराजा बभूव, तत्पुत्रः प्रतिवासुदेवः; प्रचण्डशासनो जरासन्धनामा भूपः अर्द्धचक्री राजगृहनगर्यां राज्यं पालयति, यादवाः सर्वे तस्याऽऽज्ञाकारिणः सेवकीभूय तिष्ठन्ति। तेन जरासिन्धुभूपेन, समुद्रविजयाय दूतः प्रेषितोऽभूत्, दूतेन सार्थं इति आज्ञापितम्—यो वैताढ्यपर्वतसमीपवर्तिनं सिंहपुराऽधिपं सिंहपल्लीपतिं जीवन्तं बद्ध्वा मम समर्पयति तस्मै जीवयशां मम पुत्रीं पाणिं ग्राहयामि, एकं प्रार्थितनगरस्य राज्यं ददामि इति दूतसार्थे लिखित्वा लेखः प्रहितः, समुद्रविजयस्तं लेखं वाचयित्वा, सेनां सज्जीकृत्य सिंहपल्लीपतिं जेतुं यावत् प्रतस्थे तावद् वसुदेवकुमारः समुद्रविजयं निषेध्य स्वयं कंसेन सहितश्चचाल। वसुदेवस्तत्र गत्वा युद्धं चकार। युद्धमध्ये कंसो बलेन सिंहं बद्ध्वा वासुदेवाय समर्पयामास। पृष्ठतः

समुद्रविजयः क्रोष्टकनिमित्तिकं आहूय पृष्टवान्–भो निमित्तिन्! एष कीदृशः सम्बन्धः?, जीवयशा–वसुदेवयोर्मेलागोऽवलोकितव्यः, तदा नैमित्तिकेन निमित्तं विचार्य उक्तम्–हे राजन्! जीवयशा कन्या उभयकुलक्षयकारिणी वर्तते। पितुः कुलस्य च, श्वसुरकुलस्य च परणीता सती क्षयंकरी भविष्यति। तस्मात् विचार्य कार्यं कर्तव्यं, मम वचने कश्चित्सन्देहो नाऽस्ति। राज्ञा समुद्रविजयेन नैमित्तिको विसृष्टस्तद्वचनं मनसि धृत्वा चिन्तातुरो बभूव। किं करिष्यामि, वसुदेवेन सिंहभूपतिर्बद्धः श्रूयते, जरासिन्धुः स्वपुत्रीं वसुदेवाय दास्यति। जीवयशा तु उभयकुलक्षयंकरीति नैमित्तिकेन निवेदिता, तदा किं कर्तव्यमिति चिन्तातुरः समुद्रविजयस्तिष्ठति। तावद्वसुदेवः सिंहं बद्ध्वा समुद्रविजयाऽभ्यर्णे समागतः सन् समुद्रविजयं सचिन्तं दृष्ट्वा चिन्तायाः कारणं पृष्टवान्–हे राजन्! अहं सिंहं बद्ध्वा यशः समुपार्ज्य समागतः। भवांस्तु एतादृशः सचिन्तः कथं दृश्यते, तदा एकान्ते वसुदेवाय समुद्रविजयेन निवेदितम्–हे भ्रातः! जरासिन्धुस्त्वां स्वकीयपुत्रीं जीवयशां दास्यति सा च उभयकुलक्षयकारिणी वर्तते तेनाऽहं चिन्तातुरोऽस्मि। तदा वसुदेवेन निवेदितम्–मया सिंहो न बद्धोऽस्ति किन्तु कंसेन बद्धोऽस्ति। तदा सुभद्रं वणिजं आहूय कंसस्योत्पत्तिं पृष्ट्वा उग्रसेनपुत्रं ज्ञात्वा नामाङ्कितमुद्रिकां लात्वा सिंहं भूपतिं गृहीत्वा वसुदेवः कंसाय जरासिन्धुसमीपात् जीवयशां अदापयत्। जरासन्धस्य कंसस्योत्पत्तिरुक्ता, जरासन्धेन कंसं परिणाय्य मार्गितं सत् मथुराया एव राज्यं ददे। मथुरायां गत्वा, उग्रसेनं स्वपितरं काष्ठपञ्जरे क्षिप्त्वा मथुरायां राज्यं कंसश्चकार। तदा पितुर्दुःखं



॥७०॥

दृष्ट्वा कंसस्य लघुभ्राता अतिमुक्तकः संसाराद् विरक्तः सन् दीक्षां जग्राह । अथ वसुदेवस्य प्रागूभवस्वरूपं कथ्यते—

वसुदेवः प्राग्भवे एकस्मिन् ग्रामे कश्चिन्नन्दिषेणनाम्ना कुलपुत्रको बभूव। बालत्वे एव तस्य मातापितरौ मृतौ, वपुषा स कुरूपः चतुःशिराः, वृद्धोदरो, लघुनेत्रः, दन्तुरो, लघुकर्णः मातुलगृहे वर्द्धितो यौवनावस्थायां कुरूपत्वात् सर्वाभिः स्त्रीभिः निन्द्यमानो हील्यमानश्च अनुक्रमेण मातुलस्याऽपि कन्याभिः परित्यज्यमानो मरणाय कृतनिश्चय एकस्मिन् पर्वतशिखरे झम्पां कुर्वन् साधुना मरणान्निवार्य दीक्षां ग्राहितः। ततश्च स नन्दिषेणसाधुः सर्वसाधूनां वैयावृत्तिं कुर्वन् स्वयं च मासक्षमणपारणं तपः करोति, तदा इन्द्रेण प्रशंसितः, देवः साधुद्वयरूपं विधाय आगतः, तत्रैकोऽतीसारी, अपरो लघुः, तत्र अतीसारी वृद्धः साधुर्नन्दिषेणस्य स्कन्धे आरुह्य नन्दिषेणशरीरं बृहन्नीतिप्रवाहखरण्टितं कृत्वा बह्वीं च निर्भर्त्सनां चकार, तथाऽपि नन्दिषेणोऽक्रोधः तद्वैयावृत्यदत्तचित्तो बभूव । ततो देवेन एवं कृतपरीक्षो वन्दितः स्वापराधं क्षामितश्च। एवं नन्दिषेणसाधुः बहुं कालं संयमं प्रपाल्य प्रान्ते अनशनं कृत्वा स्त्रीवल्लभोऽहं जन्मान्तरे स्याम्, इति निदानवशात् वसुदेवत्वे उत्पन्नो नन्दिषेणजीवः। वसुदेवस्तु साक्षात् कन्दर्प इव रूपवान्, परमसौभाग्यधरः परममनोहरः शौरीपुरे यत्र यत्र मार्गे यदा यदा भ्रमति तत्र तत्र तदा तदा स्त्रीणां वृन्दं गृहकार्यं त्यक्त्वा वसुदेवस्य पृष्टे भ्रमति। गृहाणि शून्यानि मुञ्चति, शिशवो रुदन्ति, पततः घृतकुम्भान् त्यजन्ति,

पतयोऽपि ईर्षां कुर्वन्ति, परं स्त्रियो हि वसुदेवस्य रूपाकर्पिताः सत्यः किमपि न मन्यन्ते, वसुदेवश्च क्रीडार्थं एकवारं, द्विवारं, त्रिवारं वा रात्रौ वा दिवसे वा नगरे निस्सरति। स च यदा निस्सरति तदा पौरस्त्रिय एवमेव कुर्वन्ति, स्वभर्तृभिः निषिद्धा अपि न तिष्ठन्ति, गृहं शून्यं दृष्ट्वा चौराः प्रमुष्णन्ति। तदा सर्वैः लोकैः आगत्य वसुदेवस्य भ्रमणनिवारणाय समुद्रविजयो विज्ञप्तः। स्वामिन्! तव राज्ये वसतां अस्माकं कदाऽपि किमपि स्वप्नेऽपि दुःखं भयं वा नाऽऽसीत्। परं इदानीं वसुदेवकुमारो नगरमध्ये एकवारं, द्विवारं, त्रिवारं भ्रमति। राजकुमारत्वात् केनाऽपि निवारयितुं न शक्यते, नार्यस्तु तद्रूपमोहिता गृहाणि शून्यानि मुक्त्वा वसुदेवकुमारस्य पृष्ठे भ्रमन्ति, गृहाणि शून्यानि दृष्ट्वा चौरा मुष्णन्ति, तेन हेतुनाऽस्माकं कुत्रचित् अन्यत्र निवासाय स्थानं दातव्यं, इति अस्माकं विज्ञप्तिरस्ति। तदा समुद्रविजयो राजा हसित्वा पञ्चलोकान् उवाच–इयं वार्ताऽस्ति अत्र का चिन्ता, यूयं स्वकीयगृहे यात, यथा भवतां सुखं भविष्यति तथा करिष्यामि। इत्युक्त्वा लोकान् विसर्जयामास। अत्रान्तरे वसुदेवो राज्ञः समुद्रविजयस्य पादौ नन्तुं समागतः, समुद्रविजयो वसुदेवं उत्सङ्गे आरोप्य शरीरं हस्तेन संस्पृश्य, उवाच–भो भ्रातः! अद्य कल्ये त्वं शरीरे दुर्वलो दृश्यसे, ग्राममध्ये वहु पर्यटसि एकाकी सन्, यदा तदा भ्रमणं मा कुरु, केचित् सज्जनाः भवन्ति, केचिद् दुर्जना भवन्ति। दुर्जना अकाल–सकालवेलायां छलं दृष्ट्वा किञ्चिद् विरूपं दुःखं कुर्वन्ति। अथ वहु पर्यटतः पुरुषस्य अधीता विद्याऽपि सर्वा विसरति। तेनेदानीं त्वं मन्दिरेष्वेव, मन्दिरोपासन्नारामेषु एव क्रीडां

स्वपक्षदोषं नावलोकयन्ति । यदि च स्वपक्षभक्षी दोषो नेत्रपथमवगाहेत तदा तु नायमायासावसरः यदि तु स्वदोषमवगणय्य परकीयमपि स्वमतिशिल्पिकल्पनाकल्पितं निर्मूलमेव दूषणं समुद्धोष्य ते समानन्दन्ति, तर्हि तु तेषाम् अपूर्वं सौजन्यम्, प्राज्ञत्वं च । पुनश्च श्रीवीरगर्भापहारस्तु सुस्पष्टमेव कल्याणकम्, तत्र पूर्वोक्तकल्याणकस्वरूपस्य सुस्पष्टतया ज्ञायमानत्वात् । किञ्च यथा अन्यतीर्थकरच्यवनकल्याणकसमये, जनन्याश्चतुर्दशस्वप्नदर्शनः, इन्द्रासनकम्पः, स्वर्गाद् देवसमवतारः, देवेन्द्रकृतस्तुतिश्च समालोक्यते कल्याणकाराधकैः, तथा अत्राऽपि श्रीवीरगर्भापहारे तत् सर्वं सुस्पष्टतया प्रतिभाति । तथा च कलिकालसर्वज्ञकल्पाः श्रीहेमचन्द्रसूरयः—

"देवानन्दागर्भगते प्रभौ तस्य द्विजन्मनः । बभूव महती ऋद्धिः कल्पद्रुम इवागते ॥६॥ तस्या गर्भस्थिते नाथे ह्यशीतिदिवसात्यये सौधर्मकल्पाधिपतेः सिंहासनमकम्पत ॥७॥ ज्ञात्वा चावधिना देवानन्दागर्भगतं प्रभुम् । सिंहासनात् समुत्थाय शक्रो नत्वेत्यचिन्तयत् ॥८॥" तथाच—"कृष्णाश्विनत्रयोदश्यां चन्द्रे हस्तोत्तरास्थिते । स देवस्त्रिशलागर्भे स्वामिनं निभृतं न्यधात् ॥२९॥ गजो वृषो हरिः साभिषेकश्रीः स्रक् शशी रविः । महाध्वजः पूर्णकुम्भः पद्मसरः सरित्पतिः ॥ ३० ॥ विमानं रत्नपुञ्जश्च निर्धूमोऽग्निरिति क्रमात् । ददर्श स्वामिनी स्वप्नान् मुखे प्रविशतस्तदा ॥३१॥ इन्द्रैः पत्या च तज्ज्ञैश्च तीर्थकृज्जन्मलक्षणे । उदीरिते स्वप्नफले त्रिशला देव्यमोदत ॥ ३२ ॥ ××× गर्भस्थेऽथ प्रभौ शक्राज्ञया जृम्भकनाकिनः । भूयो भूयो निधानानि न्यधुः सिद्धार्थवेश्मनि ॥ ३४ ॥

श्रीत्रिषष्टिशलाकापुरुषचरित्रे, दशमपर्वे द्वितीयसर्गे (जैनधर्मप्रसारकसभा) यस्मिन् श्रीवीरगर्भापहाररूपद्वितीयेच्च्यवने जाते सति पूर्वश्लोकनिर्दिष्टं सर्वं मङ्गलरूपं संजातम्, स गर्भापहारः कथं न कल्याणकतामासादयेत्? इति धीधनैर्विचारणीयम् । किञ्च, अत्र कल्याणकविषये

कुरु, विद्यां अधीतां च स्मर। वसुदेवोऽपि राज्ञ आदेशं प्रमाणीकृत्य गृहे एव क्रीडति, नगरलोका अपि स्वस्था वभूवुः। एवं तिष्ठतः, उष्णकालः समागतोऽस्ति, एकदा राज्ञः समुद्रविजयस्य शरीरे विलेपनार्थं शिवादेव्याः चन्दनं घर्षयित्वा कच्चोलकं भृत्वा दास्याः हस्ते प्रहितमासीत्। अन्तराले वसुदेवेन दासीहस्ते वर्तुलकं आच्छादितं दृष्ट्वा पृष्टम्—किमस्ति तव हस्ते? तदा दास्या उक्तम्—महाराज्ञ्या महाराजस्य शरीरे विलेपनार्थं चन्दनं प्रहितमस्ति इति वसुदेवः श्रुत्वा वलात्कारेण दास्याः हस्ताद् गृहीत्वा स्वशरीरे प्रलिप्तवान्, तदा दासी रुष्टा प्राह—चेत् एतादृशो वर्तसे तदा गृहमध्ये कारागारे पतितोऽसि, कुमारोऽपि इति वाक्यं श्रुत्वा हठात् पृष्टवान्, तदा सर्वा वार्ता निवेदिता। लोकास्तव पूत्कृतिं नृपाऽग्रे चक्रुः। तस्मात् त्वं राज्ञा भ्रमणान्निवार्य, गृहमध्ये रक्षितोऽसि इति श्रुत्वा वसुदेवोऽन्तः-कोपं कृत्वा मनसाऽऽलोच्य नगरलोकोपरि तथा नृपोपरि सामर्षः सन् मध्यरात्रे नगरात् एकाकी निःसृत्य एकं अनाथं मृतकं नगरप्रतोलीद्वारे प्रज्वाल्य कपाटे स्वरुधिरेण इति लिखित्वा—भो भो नगरलोकाः! भ्रातुः सुखाय, भवतां सुखाय अहं चितायां प्रज्वलितोऽस्मि, भवद्भिः सर्वैः सुखिभिः भाव्यं इति कृत्वा प्राक्तनान् अन्वेषकान् निषेध्य प्रचलितः, प्रायोऽपुण्यो मनुष्यः सम्पूर्णेऽपि रिक्तः, पुण्यवतो मनुष्यस्य अरण्येऽपि नगरं भवति, अथ प्रभातसमये प्रतीहारेण प्रतोली यदा उद्घाटिता तदा मृतकं प्रज्वलितं दृष्ट्वा अक्षराणि वसुदेवस्य लिखितानि वीक्ष्य राज्ञोऽग्रे निवेदितम्—राजा आगत्य दृष्ट्वा वसुदेवस्य मरणं ज्ञात्वा सर्वलोकैः सहितः शोकं चकार। राज्ञा समुद्रविजयेन वसुदेवस्य

पृष्ठे मरणस्य साहसं प्रारब्धम्, तदा लोकैः प्रधानामात्यैश्च सर्वैः महाग्रहं विधाय सिंहासने स्थापितः, राजाऽपि सशोकः सन् राजकार्यं चकार, अथ वसुदेवकुमारो गृहान्निर्गत्य प्राचीननिदानवशात् पुण्यफलविपाकात् यत्र यत्र जगाम तत्र तत्र दिव्यकन्यानां पाणिग्रहणं चकार । एवं विद्याधराणां तथा चतुर्वर्णानां रमणीयकन्यासमुदायं ७२ सहस्रं द्वाभ्यां ऊनं परणीतवान् । अस्मिन् अवसरे अरिष्टपुरे रोहकराज्ञः पुत्री रोहिणीनाम्नी, तस्याः स्वयम्वरः मिलितोऽस्ति, तत्र अनेके भूपालाः त्रिखण्डमध्यवर्तिनः जरासन्धभूपप्रमुखाः कन्यायाः पित्रा दूतान् सम्प्रेक्ष्य सम्प्रेक्ष्य आहूताः सन्ति । समस्ता यादवाः समुद्रविजयकंसप्रमुखास्तेऽप्यागताः सन्ति, तस्मिन् समये वसुदेवस्य रात्रौ स्वप्ने रोहिण्या प्रज्ञप्त्या विद्यया च आगत्य निवेदितम्–हे वसुदेव ! याहि रोहिण्याः स्वयंवरे, त्वां रोहिणी परिणेष्यति । एका अपरा कन्या च त्वां परिणेष्यति, एवं अद्यापि कन्याद्वयस्य तव प्राप्तिर्भाविनी । तस्मात् त्वं किं सुप्तोऽसि, प्रभाते त्वया रोहिण्याः स्वयंवरे गन्तव्यं मृदङ्गधारिणो रूपं विधाय मृदङ्गमध्ये एह्येहि कुरङ्गाक्षि! कुरङ्गीव किमीक्षसे इति मृदङ्गो वादनीयः, विद्यादेवी च रात्रौ रोहिणीं कन्यां प्रत्युवाच–हे रोहिणि ! प्रभाते मृदङ्गवादकरूपेण कुब्जो वामनरूपधारी वसुदेवः समेष्यति स त्वया परिणेतव्यः, एह्येहीति मृदङ्गमध्ये वादयिष्यति । अथ प्रभाते स्वयंवरमण्डपं शृङ्गारितं, मध्यभागे स्वर्णमयस्तंभ ऊर्ध्वीकृतः, चतुष्कोणेषु चतस्रः पुत्रलिकाः स्वर्णमय्यः स्वर्णरत्नाभरणमण्डिताः स्थापिताः सन्ति ।

मञ्चानां पङ्क्तौ यथावृद्धं सर्वे राजानः सिंहासने स्थिताः सन्ति । सर्वे राजकुमाराः स्फारशृङ्गारधराः स्वकीयनामाङ्कितेषु उपविष्टास्तावत् रोहिणीराजकन्या षोडशशृङ्गाराणि शरीरे धृत्वा सखीभिः परिवृता पुष्पमालां गृहीत्वा स्वयंवरमण्डपे प्रविष्टा, तदा सर्वे भूपालाः कन्यायां दत्तदृष्टयो बभूवुः चित्रलिखिता इव आसन् । अथ रोहिणी राजकन्या सती वर्तते । सा च स्वभर्तारं विना अपरस्य राज्ञः सन्मुखं न विलोकयति—यदा पश्यति तदा असती भवति, तदा वरस्य शुद्धिः कथं भवति, प्रतीहारीहस्ते आदर्शोऽस्ति, तन्मध्ये राज्ञां रूपं कुमार्यै दर्शयति, राज्ञां वंशं आचारं गुणं च श्रावयति । जरासंधभूपादारभ्य सर्वेषां भूपानां यादवानां अन्येषामपि नानावंशे समुत्पन्नानां प्रतीहार्या रूपाणि दर्शितानि, वंशाचारगुणकुलानि श्रावितानि, परं कोऽपि राजा कन्यायाश्चित्ते न लगितः, कुलदेव्या वचनं हृदये संधार्य मृदङ्गवादकरूपेण वसुदेवं कुब्जाङ्गं एह्येहीति शब्दं वादयन्तं दृष्ट्वा तद्गले वरमालां रोहिणी चिक्षेप, तदा कुब्जो ननर्त, अहो! सर्वे भूपाला दौर्भाग्यदूषिताः, अहं सौभाग्यवान्, यतः—सर्वेषु भूपेषु स्थितेषु एव कन्यया अहं वृतः, तदा सर्वे राजानः रोहिण्यास्तत्स्वरूपं दृष्ट्वा कन्योपरि क्रुद्धाः, केचित् कन्यायाः पितरं निन्दयामासुः, केचित् कन्यां निनिन्दुः, केचित् ऊचुः कन्यांहन्मः, केचित् ऊचुः कन्याया जनकं मारयामः, केचिदूचुः कुब्जस्य पार्श्वात् वरमाला उद्दाल्य ग्रहीतव्या, अयं कुब्जो व्यापाद्यः इति परस्परं प्रोचुः, यस्य सेवकाः कुब्जसमीपाद्वरमालां गृण्हन्ति, स राजा कन्यां वृणुते, इति श्रुत्वा राज्ञां सेवका वरमालाग्रहणाय धाविताः, अथ ये ये राज्ञां सेवकाः वरमालापाताय आगतास्ते सर्वे मृदङ्गेनाऽऽहत्य

भूमौ पातिता मूर्च्छां प्रापुः । ततस्तेषां सेवकानां भूपाः पश्चात् शस्त्राणि गृहीत्वा गृहीत्वा धाविताः, तदा वसुदेवेन विद्यावलेन निरायुधाः कृताः केचिन्मुण्डितश्मश्रुकूर्चिकाः, केचित् अर्द्धमुण्डितशिरसः, एवं विरूपा विहिताः, एकाकिना वसुदेवेन सर्वे विखिन्नीकृताः, तस्मिन् प्रस्तावे जरासंधभूपः समुद्रविजयसन्मुखं पश्यति स्म । तदा समुद्रविजयो राजा सन्नाहं परिधाय धनुर्वाणं गृहीत्वा युद्धाय उत्थितः, तदा वसुदेवेन चिन्तितं–अयं समुद्रविजयो राजा मम वृहद्भ्राता पितुः स्थाने, अनेन युद्धं कर्तुं न युक्तं, अथ स्वरूपमपि प्रकटयामि वहुकालं प्रच्छन्नः स्थितः । प्रकटीभावेन विना संग्रामोऽपि न स्थास्यति इति विमृश्य कुब्जरूपं परिहार्य मृदङ्गं त्यक्त्वा वसुदेवः स्वाभाविकं परमसुन्दरं मौलं रूपं विधाय धनुर्गृहीत्वा एकं स्वनामकं वाणं समुद्रविजयाय चिक्षेप । तस्य वाणस्य मध्ये वसुदेवः प्रणमतीति वर्णाः स्वर्णेन लिखिताः सन्ति, समुद्रविजयो वाणाऽक्षराणि वाचयित्वा मनसि विस्मयं चकार, वसुदेवे मृते सति कियन्ति वर्षाणि ययुः, कुतोऽयं वसुदेवः कश्चिद् इन्द्रजालिकविद्यावान् मा भूत्, मामपि विगोपयिष्यति इति विमृश्य यावत् संशयापन्नोऽभूत् तावद्वसुदेवः समागत्य समुद्रविजयस्य पादयोः पपात। समुद्रविजयोऽपि वसुदेवमुपलक्ष्य हर्षपूर्णहृदयः सञ्जातः, जरासंधप्रमुखाः सर्वे भूपालाः प्रसन्नाः सञ्जाताः, सर्वैरुक्तं धन्या इयं कन्या, कथं अनया वसुदेवोऽयं इति उपलक्ष्य परिणीतः, महामहोत्सवेन तत्र वसुदेवेन रोहिणी कन्या परिणीता, आकाशे विद्याधरविद्याधरीणां वृन्दं जयजयशब्दं चकार । यद्दिनात्प्रभृति गृहान्निर्गत्य यत्र यत्र कन्यानां पाणिग्रहणं कृतं तत्स्वरूपं समु-

द्रविजयादीनां पुरतो वसुदेव उक्तवान्। एकोन ७२ सहस्रकन्याः एकत्रीकृत्य विमानं भृत्वा गृहं आगतः, ततो वसुदेवः कंसेन मित्रस्नेहेन मथुरायां आनीतः, तथा देवकनृपस्य पुत्री देवकी वसुदेवाय परिणायितुं समानीताऽस्ति। तत्रैव मथुरायां उभावपि कंस-वसुदेवौ स्नेहेन एकत्र तिष्ठतः, देवकी जीवयशासार्द्धं क्रीडते। जीवयशा तु पितृगर्वेण उन्मत्ताऽस्ति, एकदा देवक्या विवाहे जीवयशया मद्यपानं कृतमस्ति, देवकीं स्वस्कन्धे आरोप्य नर्त्तति, तस्मिन् समये कंसस्य लघु भ्राता अतिमुक्तकनामा साधुर्विहरन् कंसगृहं आगतो मदोन्मत्तया जीवयशया दृष्टः, सा धावित्वा साधोः कण्ठे लग्ना सम्यक् कृतं देवर! अवसरे आगतोऽसि। एकां राजकन्यां त्वां परिणाययिष्यामि, तदा साधुना तस्याः सकाशात् आत्मानं मोचयितुं तां भापयितुं इत्यूचे-अग्रेतनं साधु असाधु वा किमपि न विचारितम्। अरे मूर्खे! किं नर्तसे या त्वया स्कन्धे उत्पाटिताऽस्ति, तस्याः सप्तमो गर्भः तव भर्तुः तव पितुश्च हन्ता भावी, इति साधुवचनं श्रुत्वा तया अतिमुक्तकसाधुर्मुक्तः। साधुरन्यत्र जगाम। जीवयशा मनसि शङ्किता भीता नान्यथा ऋषिभाषितं इति विचिन्त्य कंसस्याऽग्रे सर्वं साधुवचनं एकान्ते प्रोक्तम्। भर्त्रा कंसेनाऽपि सत्यं मानितं तद्वचनं अलीककरणार्थं स्वजीवितरक्षणार्थं च जलात् पूर्वं पालिर्बन्धनीयेति विमृश्य यावत् इदं रहस्यं कोऽपि न जानाति तावदत्र प्रतीकारः करणीय इति विमृश्य एकदा वसुदेवं सन्तुष्टं दृष्ट्वा एकान्ते कंसं प्रति इति वदन्तम्-हे कंस! अहं सन्तुष्टोऽस्मि त्वं यद् याचयेस्तत्तुभ्यं ददामि, त्वं मार्गय तदा कंसोऽवादीत्-भो मित्र! चेत् त्वं तुष्टोऽसि तदा देवक्याः गर्भसप्तकं

मह्यं देयं पश्चाद् वचनान्। न चलनीयम् वसुदेवेन सरलचित्तेन मानितं, प्रदत्ताः मया देवक्याः सप्तगर्भास्तुभ्यं इदं मदीयवचनं निश्चलं, गृहे चागत्य वसुदेवेन देवक्याः निवेदितं तदा च वसुदेवाय अतिमुक्तकमुनिवचनं देवक्या निरूपितं, सप्तगर्भान् कंसो हनिष्यति, पश्चात्तापस्तु कृतः, परं यद् वचनं जल्पितं तद् जल्पितमेव, सत्पुरुषाणां एकमेव वचनं तस्माद्विचार्य एव चतुरैर्वक्तव्यं, यो विचार्य न वदति तस्य शोको यावज्जीवं न याति, अत्र वसुदेवस्यैव दृष्टान्तो ज्ञेयः, अथ तस्मिन्नवसरे भद्दिलपुरे नागनामा एकः श्रेष्ठी वसति। तद्भार्या सुलसा, सा निन्दू वर्तते। मृतं अपत्यं प्रसूते, तया हरिणेगमेपीदेव आराधितः, स देवस्तृतीये उपवासे प्रकटो जातः, देवेनोक्तं यदर्थं स्मृतः स चार्थो ममाग्रे निवेद्यः। तदा सुलसया प्रोक्तम्–हे स्वामिन्! मम निन्दूदोषं निवारय, जीवतः पुत्रान् प्रसवामि तथा कुरु, तदा देवेनोक्तम्–अत्र कर्म प्रमाणं अहं कर्म दूरीकर्तुं न समर्थः, परं पुत्रस्येच्छां तव पूरयिष्यामि, यथा कोऽपि न ज्ञास्यति तथा करिष्यामि, मथुरायां देवक्याः षड् गर्भास्तुभ्यं दास्यामि, तव मृतपुत्रान् देवक्यै दास्यामि इत्युक्त्वा देवो गतः, दैवसंयोगात् उभयोरपि गर्भाधानसमयः समकाले सञ्जायते। अथ देवक्याः सुलसायाश्च समकालं गर्भो भवति। समकालं एव जन्म भवति, हरिणेगमेपीदेवः जीवन्तं देवक्याः पुत्रं सुलसायाः पार्श्वे मुञ्चति, सुलसायाः मृतं पुत्रं देवकीपार्श्वे मुञ्चति। यदा च गर्भप्रसवसमयः निकटः समायाति तदा कंसस्य सेवकाः देवकीपार्श्वे तिष्ठन्ति, जन्मनि जाते सति तन्मृतं पुत्रं लात्वा कंसाय ददति, कंसो लात्वा शिलायां आस्फाल्य मारयति, अनया रीत्या जीवन्तो देवक्याः ६ सुताः सुल-

सायै हरिणेगमेषिणा अर्पिताः, सुलसायाः षड् मृताः सुताः कंसेन हताः, देवक्या हि प्राग्भवे सपत्न्याः सप्त रत्नानि चोरितानि आसन्, सपत्नीं रुदतीं दृष्ट्वा एकम् अमूल्यं रत्नं कृपया पुनर्दत्तमासीत्, तेन देवक्याः षट् पुत्राः अन्यत्र वर्द्धिताः, तेषां नामानि—अनीकयशाः १ अनन्तसेनः २ विजितसेनः ३ निहितारिः ४ देवयशाः ५ शत्रुसेनः ६ अथ सप्तमो गर्भः सप्तभिः स्वप्नैः सूचितः पञ्चमदेवलोकाच्च्युत्वा देवक्या उदरे उत्पन्नः। कंसस्य सेवकाः गर्भग्रहणार्थं तिष्ठन्ति। देवक्या च वसुदेवाय निवेदितम्—स्वामिन्! केनचिद् अन्योपायेन अयं उत्तमगर्भो रक्षणीयः अत्राऽर्थे असत्यमपि भाषणीयम् इति देवक्याः वचनं श्रुत्वा, देवक्याः परिणयनसमये नन्दगोपः यशोदा च उभौ दम्पती देवकराज्ञा देवकीजनकेन दायजेन वसुदेवाय दत्तौ स्तः, यशोदाया अपि गर्भो जातोऽस्ति, यस्मिन् समये देवक्याः कृष्णः पुत्रोऽभूत्। श्यामाङ्गं दृष्ट्वा कृष्णकृष्णेत्यभिवादितः, तस्मिन् एव समये यशोदायाः पुत्री अभूत्, कंसस्य सेवकाः कृष्णस्य अङ्गरक्षकैः देवैः निद्रया घूर्णिताः कृताः, तदा कृष्णं लात्वा वसुदेवः प्रच्छन्नतया आद्यमथुरातो निर्गच्छन् प्रतोलीदेशे काष्ठपञ्जरे प्रक्षिप्तं उग्रसेनं तं बालं दर्शयित्वा तव काष्ठपञ्जरभञ्जकोऽयं बालो भावीत्युक्त्वा यमुनां उल्लङ्घ्य, कृष्णस्य अङ्गरक्षका देवाः सार्थे वर्तन्ते, तैरेव देवैः प्रतोलीकपाटौ उद्घाटितौ, एवं प्रकारेण द्वारान् निर्गत्य तटस्थस्य नन्दगोपस्य गृहे गत्वा यशोदायै समर्पयामास। यशोदायास्तत्कालजनितां पुत्रीं लात्वा गृहे आगत्य देवक्याः पार्श्वे मुमोच, तावत् प्राहरिका जागरिताः, तैः पृष्टं च देवक्याः किं अपत्यमभूत्? तदा वसुदेवेन यशोदायाः पुत्री कंसाय अर्पिता, कंसेन तां कन्यां

दृष्ट्वा तस्याः एकनासां छित्वा पश्चादर्पिता । शिवशासने इत्युक्तमस्ति—"सा कन्याऽपि शिलायां आस्फाल्य हृता, सा विद्युद्बभूव इति कृत्वा कंसो निश्चिन्तो बभूव"। वसुदेवोऽपि कृष्णस्य भलामनिकां वह्नीं नन्दाय ददौ। कृष्णो यशोदया पाल्यमानः सुखेन वर्द्धते। अथ कृष्णस्य विलोकनाय पर्वमिषं कृत्वा पक्षे पक्षे, मासे मासे यशोदागृहे गोपूजनवत्सद्वादशीगोत्रजादिपर्वमिषेण कृष्णं विलोकयति । उत्सङ्गे स्थापयति, स्तन्यं पाययति, एवं कृष्णं क्रीडयित्वा गृहे आयाति, वसुदेवो देवकीं निवारयति, हे प्रिये ! त्वया गोकुले भूयो भूयो न गन्तव्यं, चेत् कंसो ज्ञास्यति तदा किञ्चित् उत्पातं करिष्यति। अथ कृष्णो यदा सप्ताष्टवार्षिको जातः। तदा कलाभ्यासार्थं रोहिण्याः पुत्रो वलदेवः कंसेन अदृष्टः, कृष्णस्य पार्श्वे रक्षितः, वलदेवाय सर्वं कृष्णस्य गुप्तरक्षणं निवेदितमस्ति। अथ उभौ वलकृष्णौ नन्दगोपगृहे तिष्ठतः। कृष्णं वलो विद्यां पाठयति, कलां शिक्षयति। एवं कृष्णश्चतुर्दशवार्षिको जातः। अथ रामकृष्णौ गोपालैः सार्धं गानं कुरुतः, नृत्यं कुरुतः, नीलपीताम्बरधरौ, कृष्णो मस्तके मयूरपिच्छं धारयति, मोरलीं वादयति, गोपीभिः सह गानं करोति, एवं सर्वस्मिन् वासरे क्रीडां कृत्वा संध्यासमये गृहं आगतः। अत्रान्तरे एकदा कंसेन एकनासा कन्या दृष्टा। मनसि दूनो जातः, एकान्ते एको निमित्ती पृष्टः। भो निमित्तिन्! साधुवचनं सत्यं वाऽसत्यं वा मद्वैरी कश्चिदस्ति, मृतो वा, तदा नैमित्तिको निमित्तं दृष्ट्वाऽवादीत्, तव शत्रुः कुत्रचिद् वर्धते, मृतो नास्ति, यः कालीयनागं वश्यमानेष्यति, केशीनामकं अश्वं दमिष्यति, खरमेषौ हनिष्यति, अरिष्ठनामानं संडं जेष्यति तथा स्वयंवरे सारङ्गं धनुरधिज्यं करि-

ष्यति, चाणूरमल्लं मौष्टिकमल्लं मल्लानां अक्षवाटे हनिष्यति, नगरप्रतोलीद्वारे चम्पोत्तर—पद्मोत्तरगजौ हनिष्यति, स एव तव हन्ता ज्ञेयः। एतैरभिज्ञानैः त्वया स्वकीयशत्रुरुपलक्ष्यः। एवं निमित्तिकवचनं श्रुत्वा निमित्तिकं विसर्ज्य कंसस्तद्दर्शनार्थं उपायं चिन्तयामास। अथ कंसेन उद्घोषणा दत्ता—यः सारङ्गधनुरारोपयति तं अहं सत्यभामां मम भगिनीं पाणिं ग्राहयामि, इति उद्घोषणां श्रुत्वा स्थानस्थानस्थाः भूपाः आयान्ति। तस्मिन् अवसरे एको वसुदेवस्य पुत्रोऽनादृष्टिः वलिष्ठः सोऽपि धनुरारोहणाय आगच्छन् संध्यासमये गोकुले निवासं गृहीतवान्। तदा बलभद्रेण उपलक्ष्य वह्वी सेवा कृता, प्रातःसमये बलभद्रं अनादृष्टिरवादीत्—अस्माकं एकः कश्चिन्मार्गदर्शको देयः, यो गोकुलस्य मार्गे मथुरा दर्शयित्वा पश्चादायाति, इत्युक्ते सति अनादृष्टिसार्थे कृष्णो मार्गदर्शनाय बलभद्रेण प्रेषितः, कृष्णोऽपि बलभद्रस्य वचनं प्रमाणीकृत्य, अनादृष्टिं प्रेषयितुं चलितः। मार्गे गच्छतोऽनादृष्टे रथो वृक्षान्तरे क्षुभितः, अनादृष्टिं रथं निष्कासयितुमशक्तं दृष्ट्वा कृष्णेन लत्ताप्रहारेण उभयोः पार्श्वयोरुभौ वृक्षौ उन्मूल्य रथश्चालितः, तदा तद्बलं अनादृष्टिः दृष्ट्वा रथं आरोप्य मथुरायां ययौ, तत्र च यदा अनादृष्टिः यावत् सारङ्गधनुरारोहयितुं गृह्णाति, करौ प्रसारयति तावद्देवप्रभावात् पश्चात् पपात। अनादृष्टिं पतन्तं दृष्ट्वा सर्वे हास्यं चक्रुः। कृष्णस्तु अनादृष्टेर्हास्यं दृष्ट्वा धनुर्गृहीत्वा लीलया आरोपयामास, सत्यभामया पार्श्वस्थया दर्शनेन वृतः, तदा च वसुदेवः अनादृष्टेरुपरि क्रोधं चकार। त्वया गोकुलात् किमर्थं कृष्ण आनीतः? याहि एनं गोकुले मुञ्च, तदा कृष्णो गोकुले वसुदेवेन अनादृष्टिं प्रच्छन्नं रहस्यं कृष्णस्य रक्षण-

मुक्त्वा मोचितः। एतावत्कालं यावत् हरिरेवं न जानाति वलभद्रो मद्भ्राताऽस्ति । अथ कृष्णः षोडशवार्षिको जातः, तदा वलभद्रो कृष्णं प्रति सर्वं संवन्धं ज्ञापयितुमिच्छति। अस्मिन्नवसरे कंसेन केशी अश्वः, खरो मेषश्च अरिष्टनामा वलीवर्दश्च एते सर्वे मुक्ता गोकुले समागताः, सर्वत्र उपद्रवं कुर्वतस्तान् दृष्ट्वा कृष्णो जघान। अथ च तस्मिन्नवसरे मथुरायां कंसेन मल्लाक्षवाटः मण्डितोऽस्ति, सर्वतो मल्लाः समाहूतास्सन्ति। द्वौ महामल्लौ चाणूरमौष्टिकाख्यौ स्तः। कंसो जानाति अहं एकवारं शत्रुं विलोकयामि। यदा च शार्ङ्गं धनुरारोपितस्तदा तु सम्यग् न दृष्टः, त्वरितं गतः, अथ येन केनचित् प्रकारेण तं मारयामि, कीदृशोऽस्तीति पश्यामि, एवं ज्ञात्वा मल्लाक्षवाटः सज्जितोऽस्ति, तत्र सर्वान् स्वसेवकान् आहूय कंसेन स्वरक्षार्थं ते स्थापिताः सन्ति, तदा यादवैरपि कंसस्य छलं ज्ञात्वा एकस्मिन्नेव पार्श्वे संमील्य सभायां स्थीयते स्म, अथ च मल्लयुद्धकौतूहलं मथुरायां श्रुत्वा कृष्णो वलभद्रं प्राह—(वलभद्रेण कृष्णः पाठितोऽस्ति, वयसा वृद्धोऽस्ति वलभद्रः, तेन हेतुना कृष्णः वलभद्रस्य विनयं कृत्वा वदति)—हे स्वामिन्! अद्य मथुरायां गत्वा मल्लयुद्धकौतुहलं विलोक्यते। तदा रामोऽप्याह—वरं, वलभद्रेण ज्ञातं, मथुरायां यदा यास्यावस्तदा कंसेन सहयुद्धं चेद्भवेत्तर्हि कृष्णं प्रति स्ववार्तां ज्ञापयामि, अयं अवसरोऽस्ति इति ज्ञात्वा वलभद्रो यशोदामाह—हे यशोदे! उष्णजलं स्नानार्थं अस्माकं देहि, येन स्नानं कृत्वा वयं मथुरायां व्रजामः, तदा यशोदया गृहकार्यव्यग्रतया वलभद्रवचनं न अवधारितं, वलभद्रो रुष्टा कथं रे यशोदे! तव दासीत्वं विस्मृतं मद्भ्रातरं कृष्णं प्रपाल्य किं राज्ञी जाता, यदस्माकं वचनं न श्रूयते,

काचिद् युक्तिः प्रतन्यते—शब्दव्युत्पत्त्या कल्याणकं नाम माङ्गल्यसूचकः क्रियाविशेषः, तथा च श्रीवीरगर्भापहारः कल्याणकम्, अकल्याणकं वा? यदि अकल्याणकं तदा अनुभवबाधः, शास्त्रबाधा च। तथाहिः—नहि नाम क्काऽपि, कदापि कस्मिन् अपि अकल्याणके जाते माङ्गल्यं संजायते, अकल्याणकस्य अमङ्गलफलत्वात्। अत्र तु श्रीवीरगर्भापहारे यद् जातं मङ्गलजातं तत् सर्वं प्राचीनश्लोकैरेव अस्माभिः संनिर्दिष्टम्। ततो मङ्गलफले श्रीवीरगर्भापहारे अकल्याणकताया गन्धलवोऽपि नायाति। बलादपि तस्य अकल्याणकतास्वीकारे पूर्वोक्तशास्त्रापलापप्रसङ्गः। नातः केनापि कयाऽपि युक्त्या श्रीवीरगर्भापहारे कल्याणकाभावता संनिवेशयितुं शक्या। यदि च स कल्याणकरूपः तर्हि कथमायासः कार्यते, चिरं जीवन्तु भवन्तः तं कल्याणकत्वेन कक्षीकुर्वाणाः। अत्र केचिद् एवं निरूपयन्ति यद् यथा केषुचित् शास्त्रेषु कल्याणकषट्कनिर्देशः संदर्श्यते, तथैव पञ्चाशकसूत्रवृत्तौ कल्याणकपञ्चकत्वमपि प्रपञ्चितम्। तदत्र किं कर्तव्यम्, किञ्चात्र समाधानम्?। उच्यते, शास्त्ररचनाप्रकारो द्विधा—सामान्यरूपः, विशेषरूपश्च। ततश्च यानि शास्त्राणि सामान्यरूपेण रचितानि तत्र विशेषविषये तद्व्याख्यानकारेण औदासीन्यमेव संश्रितम्, नातो हि एवं ज्ञातुं शक्यं येन विशेषाभावः स्यात्। लोकेऽपि एवमेव व्यवहारः—यथा वने अनेकपादपसद्भावेऽपि येषां पादपानामाधिक्यम्, तेनैव तद् वनं व्यवह्रियते यथा च आम्रवणम्, तेन तद्गतनिम्ब—जम्बीर—ताल—तमाल—हिन्तालादिवृक्षाणाम् अभावो ज्ञातुम्, विधातुं न शक्यः। तथा च चतुर्विंशतितीर्थंकराणां कल्याणकगणनप्रस्तावे सामान्येन पञ्च कल्याणकान्येव गणयितुमुचितानि, तत्संख्याया एव प्राधान्यात्। नातः एवं ज्ञातुम्, ज्ञापयितुम्, निरूपयितुं वा समुचितं यत् सर्वजिनान्तर्गतः षट्कल्याणकोऽपि जिनः पञ्चकल्याणकः, पूर्वोक्तवनोदाहरणवत्। ततश्च पञ्चाशकसूत्रवृत्तौ सामान्यव्याख्यानप्रकरणेषु कल्याणकपञ्चकगणना न षट्क-

त्वया न अवधार्यते इत्युक्त्वा कृष्णं गृहीत्वा हे भ्रातः ! अग्रे गन्तव्यं, यमुनायां स्नानं कृत्वा मथुरायां यास्यामः । कृष्णस्तु बलभद्रवाक्याद् दूनः सञ्जातः, तदा अग्रे मार्गमध्ये गच्छता रामेण सर्व–षड्भ्रातृवधात् कंसभयात् यशोदा–नन्दयोः गृहे वसनं स्वस्य भ्रातृत्वं पृथग् जननीत्वं च कृष्णाय निवेदितं, अहं तव रक्षार्थं विद्याभ्यासार्थं पित्रा वसुदेवेन रक्षितोऽस्मि, इति श्रुत्वा कृष्णः प्रतिज्ञां चकार, तदाऽहं कृष्णो यदा अद्यैव षण्णां भ्रातॄणां वैरं गृह्णामि । कंसं आच्छोटयामि, इति कृत्वा मार्गे यमुनायां कालीयह्रदे कालिनागस्य वक्रं विद्ध्वा मध्ये कमलं प्रक्षिप्य उपरि आरुह्य अश्ववत् कृष्णो वाहयामास, तत्स्वरूपं दृष्ट्वा मथुरायां सर्वैः लोकैः कंससहितैः श्रुतं अद्य नन्दपुत्रेण कालियनागो दमितः, तावच्च रामकृष्णौ गोपवृन्देन सहितौ आगच्छन्तौ नगरद्वारे चम्पोत्तर–पद्मोत्तरगजाभ्यां रुद्धौ तदा गोपालाः सर्वेऽपि त्रस्ताः राम–कृष्णाभ्यां उभौ गजौ दन्ताभ्यां व्यापादितौ, तौ हत्वा चाऽग्रे मथुराया मध्ये भूत्वा मल्लाक्षवाटे समागतौ रामकृष्णौ तत्र एकं भूपालं मञ्चात् निपात्य तत्र स्थितौ, तदा रामेण कृष्णाय स्ववर्गो दर्शितः, कंसोऽपि सगर्वो दर्शितः कंसेनाऽपि कृष्ण–बलभद्रौ दृष्ट्वा चाणूरमौष्टिकमल्लौ युद्धाय सज्जीकृतौ, अनुक्रमेण ताभ्यां सह युद्धं कृत्वा कृष्णेन चाणूरमल्लो मुष्टिना हतः, बलभद्रेण मुष्टिकमल्लो व्यापादितः, तत्समये अयं श्लोकः–

दामोदरकराघातविह्वलीकृतचेतसा । दृष्टं चाणूरमल्लेन शतचन्द्रं नभस्तलम् ॥ १ ॥

उभयोर्मल्लयोः वधं दृष्ट्वा कंसो रुष्टः, भोः ! एतौ कृष्णसर्पौ केन पोषितौ ? । भोः सेवकाः ! यूयं व्रजत, नन्दं यशोदां

वद्ध्वा आनय, यथा तथा तयोर्यन्त्रनिष्पीडनं करोमि, यावत् कंस एवं वदति तावदेव कृष्णः कूर्दयित्वा मम षण्णां भ्रातॄणां वैरं गृह्णामि, इत्युक्त्वा कंसस्य केशान् आकृष्य मञ्चान्निष्पात्य मुष्टिप्रहारेण, पादप्रहारेण च कंसं जघान, कंसो मृत्वा नरकं गतः। तदैव यादवाः सर्वेऽप्येकत्रीभूय उग्रसेनं काष्ठपञ्जरान्निकाश्य सभाया स्थापयामासुः। तदा सर्वैः लोकैरुपलक्षितौ राम–कृष्णौ वसुदेवपुत्रौ, उग्रसेनभूपेन तदैव कृष्णाय सत्यभामा परिणायिता। कृष्णः षोडशवार्षिकः, सत्यभामा त्रिशतवार्षिका। अथ जरासन्धोः प्रभुत्वं ज्ञात्वा, आत्मीयज्ञातीयं च कंसं ज्ञात्वा यादवाः कंसस्य प्रेतक्रियायै जीवयशां पप्रच्छुः, कंसस्य दाहं दद्मः, तदा जीवयशा रुष्टा वदति, बहूना यादवानां दाहो भविष्यति, यदि बलभद्रकृष्णयोर्दाहः कंसस्य सार्थे भवति, तदा भव्यं, तदाऽहं जलाञ्जलिं दद्मि, तदा कृष्णेन निर्भर्त्सिता सती, ततो निर्गत्य पितुः नगरं राजगृहं जरासन्धसमीपे गता, उद्घाटितमस्तका तत्र गत्वा रुरोद, त्वयि जीवति तव जामाता एवं हतः, यादवाः अतीव उन्मत्ताः सञ्जाताः, जरासन्धोऽपि इति श्रुत्वा वत्से! धीरा भव यज्जातं तत्तु जातं, परं यादवा मम अपराधिनं कृष्णं तथा बलभद्रं चेन्मम समर्पयिष्यन्ति, तदैव मम देशेऽत्र स्थास्यन्ति, नो चेत् सर्वेषां यादवानां क्षयं करिष्यामीत्युक्त्वा जीवयशायै धीरत्वं दत्वा एकः सोमाख्यः सामन्तोऽस्ति, तं यादवानां समीपे प्रहितवान्, स चागत्य समुद्रविजयादीन् प्राह–भो भोः समुद्रविजयाद्या यादवा यद्भाव्यं तज्जातं परं द्वौ गोपालौ भवद्दासयोर्यशोदा–नन्दयोः पुत्रौ राम–कृष्णौ वद्ध्वा मत्सार्थे जरासन्धभूपतये भवद्भिः प्रेषितव्यौ, तयोरर्थे भवद्भिः कुल-

क्षयो न विधेयः; तौ जरासन्धभूपतेरपराधिनौ स्तः, यदा च तौ भवत्पुत्रौ तथाऽपि जरासन्धनृपतये दातव्यौ इति श्रुत्वा समुद्रविजयोऽवादीत्, भोः सोमाख्य ! एतादृशौ गुणवन्तौ बलवन्तौ पुत्रौ हननाय दत्त्वा वयं वृद्धाः कियत्कालं जीविष्यामः, यद्भाव्यं तद्भविष्यति। तदा च राम-कृष्णौ ऊचतुः—भोः सोमाख्य ! त्वं पितुः सकाशात् पुत्रौ मार्गयन् न लज्जसे ? । अथ च मया तु षण्णां भ्रातॄणां वैरमध्ये एकस्य भ्रातुर्वैरेण कंसो हतोऽस्ति, पञ्चानां तु भ्रातॄणां वैरं तिष्ठत्येव, त्वं चेत्स्वस्य भव्यं वाञ्छति तदा व्रज, नो चेत् फलं दर्शयिष्यामि, यदा सोमाख्यः सामन्तः कृष्णेन भापितस्तदा स गतः, यादवाः मनसि शङ्किताः क्रोष्टिकनैमित्तिकं पप्रच्छुः—भो निमित्तिन् ! अस्माकं कस्या दिशः सकाशात् जयोऽस्ति, तां दिशं दर्शय, तदा नैमित्तिको निमित्तं दृष्ट्वाऽवदत्—भो यादवा! भवतां कुले एतौ राम-कृष्णौ महापुरुषौ स्तः, कृष्णस्य प्रभुत्वं ददत, अथ च यूयं पश्चिमायां व्रजत यत्र समुद्रतटे सत्यभामा द्वौ पुत्रौ युगलतया जनयिष्यति तत्रैव स्थातव्यं तत्र भवतां वृद्धिः भवित्री, अत्र न स्थातव्यं, एवं श्रुत्वा यादवाः शौर्यपुरात् ११ कुलकोटिप्रमाणाः श्रीसमुद्रविजयप्रभृतयो निस्सृताः मथुरानगरीतः सप्तकुलकोटिप्रमाणाः यादवा उग्रसेनप्रमुखाः निस्सृताः, एवं सर्वे १८ कुलकोटिप्रमाणाः यादवा एकत्र मिलित्वा सौराष्ट्रदेशं प्रति सकुटुम्बाः प्रचलिताः, अथ सोमाख्योऽपि नृपः सर्वं स्वरूपं जरासन्धनृपतये उक्तवान्, जरासन्धोऽपि यात्राभेरीं दापयित्वा यादवानामुपरि यदा चलति तावत्कालकुमाराः सहदेवजवनप्रमुखाः पुत्राः जरासन्धं निवार्य पितुरग्रे एतादृशं पणं

कृत्वा, तदा कालोऽहं त्वदीयः पुत्रः यदि गोपालाः यादवा यत्र यान्ति, तत्र गत्वा तान् हन्मि, यद्याकाशे यान्ति तदा निःसरणीं स्थापयामि, यदि भूमौ प्रविशन्ति तदा खनित्वा हन्मि, पानीयमध्ये प्रविशन्ति तदाऽगस्तीभूय शोषयामि, अथवा जालं मुक्त्वा वन्धयामि, यद्यग्नौ प्रविशन्ति तदाऽहमपि अग्नौ झम्पां दत्वा प्रविश्य तान् हन्मि, इति प्रतिज्ञां कृत्वा पञ्चशतभ्रातृभिः सहितः कालकुमारः शस्त्राणि धृत्वा पितुः पादयोर्लगित्वा स्वभगिनीं प्रति उवाच–हे भगिनि ! यदि यादवानां क्षयं कृत्वा भगिनीपतेः वैरं लात्वा आयामि, तदाऽहं तव वन्धुः इत्युक्त्वा यावद् व्रजति तावद्भगिनी आशीर्वादं ददौ त्वया मर्तव्यं परं यादवानां क्षयः कर्तव्यः, प्रायः यादृशं भाव्यं भवति तादृशं एव वचः निस्सरति । अथ कालकुमारः सेनां लात्वा स्ववन्धुभिः सहितः अच्छिन्नप्रयाणैर्यादवानां पृष्ठे चलितः, यादवाश्च शनैः शनैः व्रजन्ति, कालकुमारस्य यादवानां च यावत् एकप्रयाणस्यान्तरं स्थितम् । अथ च यादवानां कुले एते उत्तमपुरुषाः सन्ति, श्रीनेमिस्तीर्थङ्करः, कृष्णो वासुदेवः, रामो वलदेवः, अन्येऽपि वहवस्तद्भवसिद्धास्तेषां पुण्याकर्षिता कुलदेवी समागता, समागत्य तयोः कालकुमारसैन्ययादवयोरन्तराले पर्वतं रचयामास । तस्य पर्वतस्य घट्टिकाऽन्तराले अग्निचिता दृश्यते, अग्निचितायाः पार्श्वे स्थविरारूपेण रुरोद, तावत्तत्र कालकुमारः आगत्य स्थविरां पप्रच्छ–हे स्थविरे! का इयं चिता ? के चात्र ज्वलन्तो दृश्यन्ते तदा यादवानां कुलदेवी कालकुमारं छलयितुं रुदती, उवाच–हे वत्स ! कालकुमारभयात् यादवाः सकुटुम्बाः सर्वेऽप्यत्र चितायां प्रज्वलिताः, एकोऽपि न उद्धरितः, मम कोऽपि सेवां कर्तुं न स्थित-

स्तेनाऽहं अपि प्रविशामीत्युक्त्वा स्थविराऽपि ज्वलने प्रविवेश। कालकुमारो देवच्छलात् व्यामोहितः सन् पूर्वस्ववाक्यं स्मरन् प्रतिज्ञावशात् अन्यैरपि बहुभिः सामन्तैः सहितः कतिभिर्भ्रातृभिरपि सहितः खड्गं निष्कास्य, अग्नौ प्रविष्टः, स च भस्मीबभूव। प्रातः सर्वे केचित् शेषाः लोकाः तां देवमायां ज्ञात्वा पश्चात् ययुः । यादवाश्च प्रमुदिताः सन्तः, पश्चिमसमुद्रतटे आगताः, तदा च सत्यभामया भानुभामरनामकं पुत्रयुगलं प्रसूतम् । निमित्तिकवचनात्तत्रैव यादवैः स्थितं, कृष्णेन उपवासत्रयं कृत्वा सुस्थितनामा लवणसमुद्राऽधिप आराधि, स च आगतस्तदा कृष्णः स्वनिवासाय स्थानं ययाचे। तदा सुस्थितोऽवादीत्–इन्द्राज्ञया दास्यामि। इन्द्रं पृष्टवान्–तदा इन्द्रेण धनदं प्रेष्य, सुस्थितसमीपात् द्वादशयोजनं यावत् पानीयं संवृतं तत्र धनदेन द्वारिकानाम्नीं पुरीं वासयित्वा अष्टादशहस्तोन्नतेन द्वादशहस्तपृथुलेन नवहस्तपृथिव्यां स्थितेन सौवर्णमयेन रत्नमयकपिशीर्षेण खातिकायुक्तेन देववृक्षवाटिकासहितेन वप्रेण वेष्टितां द्वारिकां साक्षात् धनदपुरीसदृशीं धनददेवो वासवाज्ञया कृष्णाय ददौ। तत्र द्वारिकायां अन्तराले कृष्णस्य गृहं सप्तभूमिकं कल्पवृक्षवाटिकायुक्तं तस्य पार्श्वे समुद्रविजयादीनां दशानां गृहाणि, अपरस्मिन् पार्श्वे उग्रसेनस्य गृहं, तस्य पार्श्वे बन्धूनां गृहाणि त्रिभूमिकानि सर्वाणि गृहाणि त्रिदिशं यावद् धनधान्यवस्त्रालङ्कारैर्भृत्वा समर्प्य धनदः स्वस्थाने ययौ। तत्र यादवाः सर्वे वसन्ति। ५० वर्षाणां मध्ये अष्टादशकुलकोटीनां ५६ षट्पञ्चाशतकुलकोटी जाता, यादवानां तत्र तिष्ठतां एतादृशी वृद्धिर्बभूव। अत्रान्तरे व्यवहारिणां गमनागमनात् राजगृहे जरासन्धस्य 'यादवाः द्वारिकायां सुखिनः तिष्ठन्ति'

इति शुद्धिः श्रुता, तदा जरासन्धः कटकं लात्वा युद्धाय चलितः । अस्मिन् प्रस्तावे नारदऋषिः जरासन्धसेनां कृष्णस्योपरि व्रजन्तीं ज्ञात्वा द्वारिकायां तावद् गत्वा कृष्णाय शुद्धिं ददौ । कृष्णोऽपि सैन्यं संमील्य पाटलापञ्चासराग्रामं यावत्, उभयोः कृष्ण–जरासन्धयोः कटकं एकयोजनांतराले स्थितं । परस्परं युद्धं लग्नं, लक्षशो मनुष्या मृताः, ततो युद्धे कृष्णं अजेयं मत्वा जरासन्धभूपेन जरा विद्या मुक्ता, तया कृष्णस्य सैन्यं रुधिरं वमत् भूमौ पपात । ततः श्रीनेमिनाथवचनेन श्रीकृष्णेन उपवासत्रयं कृत्वा पद्मावती आराधिता । तया प्रत्यक्षीभूय धरणेन्द्रस्य देवालयात्, भावितीर्थंकरस्य श्रीपार्श्वनाथस्य प्रतिमा आनीय दत्ता । तदा मङ्गलनिमित्तहृष्टेन कृष्णेन शङ्खो वादितः तत्रैव स्थाने विम्बं स्थापितम् । शङ्खपूरणात् शङ्खेश्वरा इति तीर्थं जातम् । पुनः श्रीनेमिनाथेन इन्द्रेण मातलिसारथिना समं मुक्तो यो रथः तमारुह्य शङ्खनादः कृतस्तेन जरासन्धसैन्यं निष्प्रयासं जातम् । ततो दिनत्रयं श्रीशङ्खेश्वरपार्श्वनाथप्रतिमास्नात्रोदकेन श्रीकृष्णस्य सैन्यं सज्जं जातम् । पुनर्जरासन्धेन कृष्णाय स्वकीयं चक्रं मुक्तम् । परं न प्रभवितं ततस्तदेव चक्रं गृहीत्वा कृष्णेन मुक्तम् । तेन जरासन्धमस्तकं च्छिन्नं, मृतो जरासन्धः । देवैः कृष्णस्य उपरि पुष्पवृष्टिं कृत्वा उच्चैः प्रोक्तम् । भो भोः श्रीकृष्णो नवमो वासुदेवो जातः । अथ एनमेव सर्वेऽप्याश्रयध्वम् । ततः सर्वमपि जरासन्धसैन्यं श्रीकृणस्य मिलितम् । अथ श्रीकृष्णवासुदेवो द्वारिकामागत्य त्रिखण्डराज्यं भुञ्जानस्तिष्ठति ॥

अथ श्रीवासुदेवः सुखेन द्वारिकायां राज्यं करोति, श्रीनेमिकुमारः आबालब्रह्मचारी यौवनवयः प्राप्तस्तदा मात्रा श्रीशिवया देव्या उक्तः–हे वत्स! अस्माकं हर्षं उत्पादय, एककन्यां परिणीय मत्पादयोर्वधूं नामय, तदा श्रीनेमिकुमार उवाच–हे मातः। यदाऽहं मद्योग्यां कन्यां विलोकयिष्यामि तदा परिणेष्यामि, एवमुक्त्वा मातरं हर्षयति, अस्मिन्नवसरे कृष्णस्यायुधशालायां नेमिकुमारः पाञ्चजन्यं शंखं पूरयामास। तस्य शब्देन हस्तिनो निर्मदा बभूवुः, शृङ्खलां त्रोटयित्वा भ्रेमुः। चक्रं भ्रामितं, शार्ङ्गं धनुरारोपितं, टङ्कारं चकार, सर्वे लोकाः भीताः शङ्खशब्दं धनुष्टङ्कारं श्रुत्वा, नादेन विश्वं बधिरं जातं, धरा धडहडिता, नगरी च प्रचकम्पे, पर्वताः सश्चेलुः, समुद्रा उच्छलिताः, दिग्गजाः त्रासं प्रापुः, यादवा मूर्च्छिता इव जाताः, ब्रह्माण्डं भयविह्वलं जातं, कृष्णश्चेतसि चकम्पे। किं नवीनो वासुदेवोऽवतीर्णः, यदा नेमिकुमार एतादृशो बलवान् तदा राज्याऽधिपोऽयं भविता, तदा बलभद्र उवाच–हे भ्रातः? मा भयं कुरु, एकामपि भार्यां न परिणयति, एतादृशो वीतरागः किमर्थं तव राज्यं गृह्णाति, तदा आकाशवाण्यपि बभूवः—

यो राज्यं न समीहते गजघटाटङ्कारसंराजितं, नैवाकाङ्क्षति चारुचन्द्रवदनां लीलावतीं योऽङ्गनाम्।
यः संसारमहासमुद्रमथने भावी च मन्थाचलः, सोऽयं नेमिजिनेश्वरो विजयते योगीन्द्रचूडामणिः॥ १ ॥

अयं श्रीनेमिकुमारः स्वकीयाऽवसरे दीक्षां लास्यति, तदा कृष्णो हर्षितः। तदा नेमिनाथोऽपि तत्राऽऽजगाम,

कृष्णः पप्रच्छ—भो भ्रातः! शङ्खो भवता पूरितः? तदा नेमिस्वामिना प्रोक्तम्—भो भ्रातः! मयैव लीलया पूरितः। कृष्णेन पुनरपि प्रोक्तम्—आगम्यतां मल्लयुद्धेन बलस्य परीक्षा क्रियते। आवयोर्मध्ये कोऽधिकबली, तदा बलपरीक्षार्थं पूर्वं कृष्णेन स्वबाहुः प्रसारितस्ततः श्रीनेमिस्तं कमलनालवत् सुखेन नामयामास, पश्चाद् भगवताऽपि स्वबाहुं वज्रतुल्यं विस्तारितं परं कृष्णो वालयितुमशक्तो जातः, तदा कृष्णेन स्वशरीरबलं सर्वं प्रदत्तं, तदाऽपि न वलितः कपिवत् शाखायां हिण्डोलितो हरिः सर्वैर्दृष्टः। कृष्णेन चिन्तितम्—अथ महान् बलवान्, यदाऽयं वधूं परिणयति तदा हीनबलो भवति, एवं विचार्य समुद्रविजय—शिवादेव्याज्ञया श्रीकृष्णो द्वात्रिंशत्सहस्रप्रमितान् अन्तःपुरदारान् षोडशसहस्रगोपाङ्गनागणं सार्धं लात्वा, वसन्ततौं गिरिनारिवने नेमिना सह जगाम, नेमिस्वामी यदुस्त्रीभिः सह क्रीडां चकार, परं विकृतिं चेतसि न धत्ते, पुष्पफलादिभिः क्रीडां कृत्वा जलकुण्डे आयाति, तत्र रुक्मिणी प्रमुखानार्यो नेमिं हसित्वा ऊचुः। भो देवर! किं रमण्या उदरभरणभयात् न परिणयसि। अत्र तु त्वं चिन्तां मा कुरु, तव भ्राता श्रीकृष्णस्तव जायायाः पोषणं करिष्यति। अथ पुनः त्वं किं नवीनो मुक्तिगामी असि?। पूर्वमपि ऋषभाद्याः जिनवराः पाणिग्रहणं विधाय भोगं भुङ्क्त्वा, पश्चाद्दीक्षां लात्वा, मुक्तिं जग्मुः, एवं बहूक्त्वा सर्वाः कृष्णवध्वः सर्वा गोप्यश्च एवं ऊचुः। अद्य यदि विवाहं मानयिष्यसि तदा त्वं छुटिष्यसि, नो चेत् मोक्ष्यामो नहि। एवं उक्त्वा काचित्तैलं प्रक्षेपयामास, काचिद् गुलालमुष्टिं, काचि-

ज्जलसेकं, एवं तासां अत्याग्रहेण नेमिना मौनं गृहीतम्। ताभिस्तदा उक्तम्–श्रीनेमिना विवाहो मानितः, मानित इति सर्वाभिः कृष्णो विज्ञप्तः, श्रीनेमिनाथाय विवाहोऽङ्गीकारितः, श्रीकृष्णदेवः स्वयं श्रीउग्रसेनस्य गृहे गत्वा तत्पुत्रीं नेमिविवाहाय राजीमतीं याचयामास । क्रौष्टिकनिमित्तिनमाहूय लग्नं शोधितम् । वर्षाकाले लग्नं न भवति, परं उत्तालवशात्, श्रीकृष्णवाक्यात् श्रावणशुद्धषष्ठीदिनं निर्दोषमस्ति, इति निमित्तिना प्रतिपादितम् । अथ उभयोर्गृहे पक्वान्नानि निष्पाद्यन्ते । याचका जयशब्दं जल्पन्ति, गीतानि गायन्ति । अथ लग्नदिवसे श्रीनेमीश्वरस्य अङ्गे पिष्टिका क्रियते, जलेन जवाङ्कुराः सिच्यन्ते, नेमिशिरसि मुकुटो बध्यते, पट्टहस्तिशीर्षे नेमिरारोप्यते, अष्टकोटियदुकुमाराः नानाजातीयतुरङ्गमस्कन्धे आरोप्य सार्थे गृह्यन्ते, श्रीकृष्णदेवो बलभद्रो दश दशार्हाश्च अग्रे प्रचलन्ति, पृष्ठतः शिवादेवी सपरिकरा व्रजति, भगिनी लवणमुत्तारयति, ऋद्धिं विस्तारयति, एवं श्रीनेमिनाथो महताऽऽडम्बरेण उग्रसेनस्य द्वारदेशे आगच्छति । अथ स्वयं श्रीकृष्णदेवो हांसलेऽश्वे स्थितोऽस्ति, मस्तके छत्रं धारयति श्वेतचामरैर्वीज्यमानः, अन्येऽपि यादवाः नानाजातीयेषु अश्वेषु आरूढा नेमिकुमारसार्धं यान्ति, श्रीनेमिकुमाराग्रेऽष्टमङ्गलानि रच्यन्ते, सार्धद्विलक्षवाजित्राणां निर्घोषाग्रे कर्णपतितोऽपि शब्दो न श्रूयते, एवं रीत्या आगच्छता श्रीनेमिना उच्चैर्धवलगृहं दृष्ट्वा सारथिः पृष्टः, कस्येदं धवलगृहं? तदा सारथिना प्रोक्तम्–स्वामिन् ! तव श्वशुरस्य श्रीउग्रसेनभूपस्य कैलासशिखरवत् विराजते एषः प्रासादः, तत्र

प्रासादे गवाक्षस्थाऽनेकस्फारशृङ्गारभारेण विराजमाना मेघघटाया विद्युदिव राजीमती भवत्सम्मुखं विलोकयन्ती दृश्यते। अस्मिन् अवसरे सहजसौन्दर्येण भासमानो भूषणैश्चाधिकं विराजमानः श्रीनेमिकुमार आयाति। तं राजीमती दृष्ट्वा चिन्तयति, किमयं इन्द्रः, किं वा चन्द्रः, किं वा पातालवासी नागकुमारोऽस्ति, अथवा मया ज्ञातोऽयं मदीयप्राग्भवसत्को भर्ताऽस्ति, अथवा मदीयं मूर्तिमत् पुण्यं वर्तते, अस्मिन्नवसरे तोरणवन्दनाय आयाति, श्वश्रूः विवाहमङ्गलाचरणकरणाय द्वारदेशे स्थिताऽस्ति, तत्समये नेमिकुमारः पशुजीवानां पूत्कृतिं श्रुत्वा सारथिं पप्रच्छ–एते जीवाः किमर्थं संमीलिताः सन्ति? तदा सारथिः प्राह–स्वामिन्! तव विवाहे एतेषां आमिषेण भोजनं भविता, तदा श्रीनेमिस्तेषां पूत्कृतिं श्रुत्वा मनसि चिन्तयति, अहह!!! श्रवणकटुकोऽयं शब्दः श्रोतुं अशक्यः, तेन उत्सवेन अलम्, येन उत्सवेन कृत्वा अन्ये निरपराधिनो हन्यन्ते, तं उत्सवं विवाहं धिक्! अस्मिन्नवसरे राजीमती सखीभ्यः प्राह–हे सख्यः! कथं मदीयं दक्षिणं चक्षुः स्फुरति, किञ्चिद् अमङ्गलं भविष्यति। तदा सख्यः प्रोचुः–हे भगिनि! इदानीं मङ्गलावसरे एतादृशं अमङ्गलं वाक्यं मा ब्रूहि। तावत् नेमिस्वामी सारथिनं कथयति स्म–भोः सारथिन्! रथं पश्चाद् वालय। अस्मिन् अवसरे एको हरिणः नेमिसम्मुखं दृष्ट्वा रुदनं कुर्वन् स्वकीयग्रीवया हरिण्या ग्रीवां विधाय इमां गाथां प्राह–

मा पहरसु मा पहरसु एयं मह हिययहारिणिं हरिणिं। सामी! अज्ज मरणा वि हु दुस्सहो पियतमाविरहो ॥१॥

ल्याणकावरोधिनी इति विदुषां विदितमेव । विशेषव्याख्यारूपग्रन्थेषु, विशेषतादर्शकमूलपाठेषु वा कल्याणकषट्कं नामग्राहमेव संनिदर्शितम्, ततश्च 'सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत्, इत्यादिभिर्लोकशास्त्रतर्कशास्त्रप्रसिद्धन्यायैः पूर्वोक्तसामान्यव्याख्यातो विशेषव्याख्यैव बलीयसी, ततश्च श्रीवीरस्य कल्याणकषट्कमेव इति वज्रपाषाणरेखा । यच्चोच्यते कैश्चित् 'यदस्ति आश्चर्यभूतं लोक-शास्त्रव्यवहारातीतं तन्न कल्याणकम् । अयं च श्रीवीरगर्भापहारोऽपि आश्चर्यरूपः-लोकातीतः, शास्त्रातीतश्च, ततः स कथं कल्याणकरूपः ? इति । तदेतत् सर्वमसमीक्षिताभिधानम् । यदि परैरेवं नियम्यते 'यदस्ति आश्चर्यरूपं तन्न कल्याणकम्' तदा तु पराभिमतः । श्रीमल्लिजिन सकलवृत्तान्त एव आश्चर्यरूपः, ततस्तस्य जन्मादीनि कल्याणकतया कथं कक्षीकरणीयानि परैः । तथाहि-सर्वेषां श्वेतवाससामयं सिद्धान्तः-तीर्थंकरः पुरुषरूपेणैव स्यात्, नतु स्त्रीरूपेण । परं च प्राक्कर्मबलात् श्रीमल्लिजिनः स्त्रीरूपेण जातः, स च सर्वैरपि आश्चर्यरूपः स्वीक्रियते, सत्यपि एवं यथा तदीयजन्मप्रभृति कल्याणकतया स्वीक्रियते, एवं श्रीवीरोऽपि प्राक्कर्मबलाद् एव गर्भाद् गर्भान्तरे संचारितः, तच्च तस्य संचारणमाश्चर्यभूतमपि श्रीमल्लिजिनवत् कल्याणकत्वेन स्वीकरणीयमेव, तदस्वीकारे च श्रीमल्लिजन्मप्रभृत्यपि न कल्याणकत्वेन कलनीयम्, उभयत्र युक्तिबलस्य तुल्यत्वात् । शास्त्रकारैस्तु श्रीमल्लिजिन-श्रीवीरजिनयोः यद् आश्चर्यभूतं तदपि श्रीआदीश्वर अष्टोत्तरशतमुनिभिः सार्द्धं मोक्षगमन आश्चर्यवत् कल्याणकत्वेन नामग्राहं न्यरूपि, युक्तिरपि एवमेव साधयति । पुनरपि-श्रीसमवायांगसूत्रवृत्तौ-

**ब्राह्मणकुण्डग्रामे ऋषभदत्तब्राह्मणस्य भार्याया देवानन्दायाः कुक्षौ उत्पन्न इति पञ्चमो भवः । ततो द्व्यशीतितमे दिवसे क्षत्रियकुण्डग्रामनगरे सिद्धार्थमहाराजस्य त्रिशलाऽभिधानभार्यायाः कुक्षौ इन्द्रवचनकारिणा हरिणैगमेषिनाम्ना देवेन संहृतो-नीतस्तीर्थ-**

अर्थः—हे स्वामिन्! इमां मृगीं मम हृदयहारिणीं वल्लभां मा प्रहर, मा प्रहर, स्वामिन्! अद्य मरणादपि प्रियतमाया विरहो दुस्सहः, तस्मात् पूर्वं अहं हन्तव्यः, पश्चादेषा हन्तव्या। तदा हरिणी अपि स्वकीयभर्तारं हरिणं प्राह—

एसो पसन्नवयणो तिहुयणसामी अकारणो बंधू। ता विन्नवेसु वल्लह! रक्खत्थं सव्वजीवाणं ॥ १ ॥

अर्थः—हे स्वामिन्! अयं नेमिस्वामी प्रसन्नवदनोऽस्ति, त्रिभुवनस्वामी निष्कारणो बन्धुर्विज्ञाप्यः—रक्षार्थं सर्वजीवानां अस्याऽग्रे विज्ञप्तिः करणीया इत्यर्थः—तदा हरिण्या प्रेरितो हरिणो नेमिं प्रत्याह—

निज्झरणे नीरपाणं अरण्णतिणभक्खणं च वणवासो। अम्हाण निरवराहाण जीवियं रक्ख रक्ख पहो! ॥१॥

अर्थः—स्वामिन्! अस्माकं निरपराधानां जीवितं रक्ष रक्ष, अस्माकं कोऽपराधः? वयं निर्जराणां पानीयं पिबामः, अरण्यतृणानां भक्षणं कुर्मः, वने वसामः, कस्यापि विकृतं न कुर्मः, एवं सर्वे जीवा स्वकीयभाषया प्रभोः अग्रे विज्ञप्तिकां कुर्वन्ति। भगवान् ज्ञानेन तेषां विज्ञप्तिं ज्ञात्वा पशुपालकान् प्राह—भो भोः पशुपालकाः! भवन्तः इमान् पशून् मोचयन्तु, इत्युक्त्वा सर्वान् जन्तून् मोचयित्वा स्वयं तोरणादेव पश्चात् चचाल, तावत् समुद्रविजयेन शिवादेव्या च रथाऽग्रे आगत्य रथो रुद्धः, हे पुत्र! पूर्वमस्मन्मनोरथान् पूरय, एकवारं वधूं परिणीय तव वधूमुखं अस्मान् दर्शयित्वा भोगान् भुङ्क्त्वा पश्चाद् दीक्षां गृहाण, त्वं मातापित्रोर्भक्तोऽसि, तस्माद् अस्माकं

आज्ञाभङ्गं मा कार्षीः, तदा नेमिरवादीत्-हे मातः ! एषः कदाग्रहो न कर्तव्यः, भवतां दृढनेमि-सत्यनेमिप्रमुखाः अन्ये पुत्राः सन्ति, ते मनोरथं पूरयिष्यन्ति, एषा स्त्री मलमूत्रयोर्भस्त्रिका मह्यं न रोचते, मुक्तिकान्तायां मे मनो लग्नमस्ति, तस्मात् अत्रार्थे किमपि न वक्तव्यं, इमां वार्तां श्रुत्वा, राजीमती क्षणं निःश्वस्य एवं वदति-

हा ! यादवकुलदिणयर ! हा निरुवमनाह ! हा जगस्सरण ! ।
हा ! करुणायरसामी ! मुत्तूणमहं कहं चलिओ ? ॥ १ ॥

अर्थः-अहो यादवकुले सूर्य !, अहो निरुपमनाथ !, अहो जगत्शरण ! अहो दयानिधानस्वामिन् ! मां मुक्त्वा कथं चलितोऽस्ति, पुनर्निःश्वासं मुक्त्वा राजीमती वदति-

हा हियय ! धिट्ठ निट्ठुर, निल्लज्ज ! अज्ज वि जीवियं वहसि । अन्नत्थ वद्धराओ जाओ नाहो अप्पणो नाहो ॥१॥

अर्थः-हा इति दुःखार्थे वचनं, स्वकीयहृदयाय उपालम्भं ददाति, अरे धृष्ट, अरे निष्ठुर, अरे निर्लज्ज, मम हृदय ! अद्यापि त्वं जीवसि, यदुनाथः, श्रीनेमिनाथः, आत्मीयस्वामी, अन्यत्र वद्धरागो जातः, पुनर्विलप्य वदति, हे धूर्त ! यदि त्वं मुक्तिगणिकायां अनेकसिद्धैर्भुक्तायां रक्तोऽसि तदा किमर्थं मम पाणिग्रहणार्थं समागतोऽभूः ? ॥

किमर्थं विवाहेन विगोपिता । अस्मिन् समये राजीमतीं प्रति सख्यः प्राहुः-हे राजीमति ! अनेन भव्यं कृतं

यदि चेत् परिणीय त्वां अमोक्ष्यत् तदाऽसौ अभव्यमभविष्यत्, अनेन निःस्नेहेन भर्त्रा किम् ? अन्यः सस्नेहो भर्त्ता गवेषणीयः । यदूनां कुमारा एकएकेभ्योऽधिकगुणवन्तः सन्ति, यदा सखीभिरित्युक्तम् तदा राजीमती हस्ताभ्यां कर्णौ पिधाय वदति–हे सख्यः ! एतादृशीं वार्तां पुनर्मा ब्रूत, यदा सूर्यः पश्चिमायां उदेति, मेरुचूलाचलति, सिन्धुर्मर्यादां त्यजति, तदाऽपि नाऽन्यो मे वरः, अनेन कायेन मे नेमिरेव भर्त्ता, यदि इदानीं मम पाणिग्रहणं नेमिर्न करिष्यति तदाऽपि दीक्षाकाले शीर्षे हस्तं दास्यत्येव, इति राजीमत्याः वचः श्रुत्वा सख्यः प्रोचुः–हे राजीमति ! त्वं सत्या सती असि, तव जन्मप्रमाणं, तदा राजीमती सखिभ्यो वदति–हे सख्यः ! एतावद्दुःखं मया सोढुं अशक्यं, इत्युक्त्वा धवलगृहं प्रविष्टा, तदा च सर्वे यादवाः दशाऽपि दशार्हाः कृष्णबलभद्रादयश्च नेमिप्रभुं प्रतिबोधयन्ति स्म । हे नेमे ! ऋषभाद्या अपि जिनाः पाणिग्रहणं कृत्वा भोगसुखं भुङ्क्त्वा पश्चाद् मुक्तिं ययुः, इति निश्चयः कोऽपि नाऽस्ति, यत् अपरिणीता एव मुक्तिं यान्ति, परिणीताः किं मुक्तिं न यान्ति, तदा नेमिः प्राह–अहं क्षीणभोग्यकर्मा, धर्मकार्ये अन्तरायो न विधेयः, अर्हन् श्रीअरिष्टनेमिः वर्षशतत्रयं कुमारवासे न्युषितवान्, तदनन्तरं च लोकान्तिकदेवा आजग्मुः । आगत्य भगवद्दीक्षाऽवसरं ज्ञात्वा इमां वाणीं प्राहुः–

जय जय नंदा ! जय जय भद्दा ! जय जय खत्तियवरवसहा ! तं चेवं सव्वं भाणियव्वं ॥

अर्थः–हे स्वामिन् ! त्वं जय, त्वं नन्द, त्वं धर्मतीर्थं प्रवर्तय, तथा इन्द्रादयो देवाः सर्वेभ्यः प्रबोधयामासुः ।

एष नेमिस्वामी तीर्थंकरो ब्रह्मचर्यधारी दीक्षां गृहीत्वा धर्मतीर्थं प्रवर्तयिष्यति, अस्य दीक्षामहोत्सवः कर्तव्यः, तदा भगवान् संवत्सरदानं अदात्। अथ दीक्षाऽवसरं सूत्रकारो वदति–

तेणं कालेणं तेणं समयेणं अरहा अरिट्ठनेमी जे से वासाणं पढमे मासे दुच्चे पक्खे सावणसुद्धे, तस्स णं सावणसुद्धस्स छट्ठीपक्खे णं पुवण्हकालसमयंसि उत्तरकालसमयंसि उत्तरकुराए सीयाए सदेवमणुआसुराए परिसाए अणुगम्ममाणमग्गे जाव बारवईए नयरीए मज्झंमज्झेणं निग्गच्छइ, निग्गच्छित्ता जेणेव रेवयए उज्जाणे, तेणेव उवागच्छइ, उवागच्छित्ता असोगवर-पायवस्स अहे सीयं ठावेइ, ठावित्ता सीयाओ पच्चोरुहइ, पच्चोरुहित्ता सयमेव आभरणमल्ला-लंकारं ओमुयइ, ओमुइत्ता सयमेव पंचमुट्ठियं लोयं करेइ, करित्ता छट्ठेणं भत्तेणं अपाणएणं चित्तानक्खत्तेणं जोगमुवागएणं एगं देवदूसमादाय एगेणं पुरिससहस्सेणं सद्धिं मुंडे भवित्ता आगाराओ अणगारियं पव्वइए ॥ १७३ ॥

अर्थः–तस्मिन् काले तस्मिन् समये अर्हन् अरिष्टनेमिर्यो वर्षाकालस्य प्रथमो मासो द्वितीयः पक्षः श्रावणस्य

शुक्लः पक्ष इत्यर्थः। तस्य श्रावणशुक्लपक्षस्य षष्ठ्यां तिथौ प्रथमप्रहरे उत्तरकुरायां शिविकायां स्थित्वा देव-असुर-मनुष्यपर्षत्सहितः द्वारिकानगरीमध्ये भूत्वा निर्गच्छति, यत्र रेवताचलस्य उद्यानं तत्रागत्य अशोकवृक्षस्य तले शिविकां स्थापयित्वा पञ्चमुष्टिं लोचं विधाय चतुर्विधाहारत्यागसहितेन षष्ठभक्तेन चित्रानक्षत्रे चन्द्रसंयोगे आगते सति इन्द्रेण दत्तं देवदूष्यवस्त्रं स्कन्धे धृत्वा गृहवासं त्यक्त्वा अनगारो यती जातः, एकसहस्रपुरुषैः सार्द्धं दीक्षां गृहीतवांस्तदा मनःपर्यायज्ञानमुत्पन्नम्-

अरहा णं अरिट्ठनेमी चउपन्नं राइंदियाइं निच्चं वोसट्ठकाए चियत्तदेहे, तं चेव सव्वं जाव० पणपन्नगस्स राइंदियस्स अंतरा वट्टमाणस्स जे से वासाणं तच्चे मासे पंचमे पक्खे आसोयबहुले, तस्स णं आसोयबहुलस्स पन्नरसीपक्खे णं दिवसस्स पच्छिमे भाए उज्जिंतसेलसिहरे वेडसपायवस्स अहे छट्ठेणं भत्तेणं अपाणएणं चित्तानक्खत्तेणं जोगमुवागएणं झाणंतरियाए वट्टमाणस्स जाव अणंते अणुत्तरे-जाव सव्वलोए सव्वजीवाणं भावे जाणमाणे पासमाणे विहरइ ॥ १७४॥

अर्थः-अर्हन् अरिष्टनेमिः चतुःपञ्चाशत् ५४ दिनानि यावत् दीक्षाग्रहणानन्तरं नित्यं व्युत्सृष्टदेहस्त्यक्तशरीरशुश्रूषः, ये केचित् उपसर्गा उत्पद्यन्ते तान् सर्वान् सम्यक् सहते, एवं दीक्षां पालयतो नेमिस्वामिनः पञ्च-

पञ्चाशत्तमं दिनं वर्त्तते, तदा वर्षाकालस्य तृतीये मासे पञ्चमे पक्षे एतावता आश्विनकृष्णमासस्य अमावास्यायां पश्चात्प्रहरे रेवताचलस्य उपरि वेतसवृक्षस्य अधोभागे अष्टमभक्तेन चतुर्विधाहारत्यागसहितेन चित्रानक्षत्रे चन्द्रसंयोगे प्राप्ते सति स्वामिनः शुक्लध्यानं ध्यायतः केवलज्ञानं उत्पन्नम् । तदा भगवान् सर्वं जानन् सर्वं पश्यन् विहरति, तदा च सहस्राम्रवनवनपालकेन द्वारिकायां आगत्य कृष्णस्य वर्द्धापनिका दत्ता, तदा द्वादशकोटिरूप्यस्य स्वर्णस्य च वर्द्धापनिका वनपालाय प्रदत्ता, श्रीकृष्णदेवो वन्दनाय गिरिनारपर्वते आगतः । तत्र चतुर्विधदेवनिकायो मिलितः, समवसरणं रचितं, भगवान् सिंहासने स्थितो देशनां ददाति स्म, तदा राजीमत्यपि समवसरणे समेताऽस्ति । तस्मिन् अवसरे राजीमत्याः स्नेहकारणं भगवतो नेमिनाथस्य श्रीकृष्णेन पृष्टम्–तदा भगवता सम्यक्त्वप्राप्तेरारभ्य अष्टभवानां संबन्धः प्रोक्तः । नवमो भवो वर्तमानः । प्रथमे भवे धनो धनवती च, द्वितीये भवे सौधर्मे देवलोके देवो देवी च, तृतीये भवे चित्रगतिविद्याधरो रत्नवती विद्याधरी, चतुर्थे भवे माहेन्द्रदेवलोके मित्ररूपौ देवौ, पञ्चमे भवे अपराजितो राजा प्रियमती राज्ञी, षष्ठे भवे एकादशमे आरणदेवलोके मित्ररूपौ देवौ, सप्तमे भवे शंखो राजा यशोमती राज्ञी, अष्टमे भवे अपराजिते मित्ररूपौ देवौ, नवमे भवे अहं नेमिः सञ्जातः, एषा राजीमती संजाता । अग्रे स्नेहबन्धनं त्रुटितम् । इत्थं भवावलीं श्रुत्वा राजीमती दीक्षां जग्राह । दीक्षां गृहीत्वा च रथनेमिर्वान्ताहारग्रहणदृष्टान्तेन धर्ममार्गे स्थिरीकृतः ।

एकस्मिन् समये मेघवृष्टिवशात् आर्द्रवस्त्राणां शुष्कीकरणाय गिरिनारिगुफायां प्रविष्टया राजीमत्या रथनेमिः प्रतिबोधितः । पूर्वं निर्वस्त्रां राजीमतीं दृष्ट्वा रथनेमिना प्रोक्तम्—

एहि ता भुंजिमो भोए, माणुस्सं खलु दुलहं । भुत्तभोगी तओ पच्छा, जिणमग्गं चरिस्सामो ॥ १ ॥

अर्थः-रथनेमिः राजीमतीं साध्वीं एवमवादीत्—हे सुन्दरि ! आगच्छ आवां भोगान् भुञ्जावः, भुक्तभोगिनौ च भूत्वा पश्चात् संयमं ग्रहीष्यावः, इति रथनेमेर्वचः श्रुत्वा राजीमती स्वाङ्गोपाङ्गं बाहुभ्यां संगोप्य उपदेशं ददौ । हे देवानुप्रिय ! त्वं अन्धकवृष्णिकुले उत्पन्नः, अहं भोजकवृष्णिकुले उत्पन्ना । आवां अगन्धनकुले उत्पन्नसर्पसदृशौ भवावः । यथा-अगन्धकुलोत्पन्नसर्पस्य अग्निप्रवेश एव करणीयः भवति, न तु विषस्य पश्चाद् ग्रहणं करणीयं भवति, तथा तव मरणं एव श्रेयः, न पुनः शीलखण्डनं श्रेयः, यदि रूपवतीं कामिनीं दृष्ट्वा कामुको भविष्यसि, तदा वायुना विधूतशेवाल इव अस्थिरात्मा भविष्यसि । एतादृशीं धर्मदेशनां दत्त्वा अङ्कुशेन गज इव वशीकृत्य संयममार्गे आनीतः, एतादृशी राजीमती महासती । अथ रथनेमिसाधुः ४०० चत्वारि शतवर्षाणि गृहवासे स्थितः, एकवर्षं छद्मस्थदशायां स्थितः, पञ्चशतवर्षाणि केवलपर्याये स्थितः, एवं सर्वायुर्नवशतएकोत्तरवर्षाणि प्रपाल्य नेमेः सकाशात् पूर्वं चतुःपञ्चाशद्दिनानां अन्तरालेन मुक्तिं गतः । अथ नेमिप्रभोः परिवारं वदति—

अरहओ णं अरिट्ठणेमिस्स अट्ठारस गणा (१८) अट्ठारस (१८) गणहरा होत्था ॥ १७५ ॥ अरहओ णं अरिट्ठनेमिस्स वरदत्तपामुक्खाओ अट्ठारस समणसाहस्सीओ (१८०००) उक्कोसिया समणसंपया हुत्था ॥ १७६ ॥ अरहओ णं अरिट्ठनेमिस्स अज्जजक्खिणिपामुक्खाओ चत्तालीसं अज्जियासाहस्सीओ (४००००) उक्कोसिया अज्जियासंपया हुत्था ॥ १७७॥ अरहओ णं अरिट्ठनेमिस्स नंदपामुक्खाणं समणोवासगाणं एगा सयसाहस्सीओ अउणत्तरिं च सहस्सा (१६९०००) उक्कोसिया समणोवासगाणं संपया हुत्था ॥१७८॥ अरहओ णं अरिट्ठ० महासुव्वयापामुक्खाणं समणोवासिगाणं तिण्णि सयसाहस्सीओ छत्तीसं च सहस्सा (३३६०००) उक्कोसिया समणोवासिआणं संपया हुत्था ॥१७९॥ अरहओ णं अरिट्ठनेमिस्स चत्तारि सया (४००) चउद्दसपुव्वीणं अजिणाणं जिणसंकासाणं सव्वक्खर० जाव हुत्था ॥१८०॥ पन्नरससया (१५००) ओहिनाणीणं, पन्नरससया (१५००) केवलनाणीणं, पन्नरससया (१५००) वेउव्विआणं, दस-

**सया (१०००) विउलमईणं, अट्ठसया (८००) वाईणं, सोलससया (१६००) अणुत्तरोववाइआणं, पन्नरस समणसया (१५००) सिद्धा, तीसं (३०००) अज्जियासयाइं सिद्धाइं ॥ १८१ ॥**

**अरहओ णं अरिट्ठनेमिस्स दुविहा अंतगडभूमी हुत्था, तंजहा—जुगंतगडभूमी, परियायंतगडभूमी य—जाव अट्ठमाओ पुरिसजुगाओ जुगंतगडभूमी, दुवासपरिआए अंतमकासी ॥ १८२ ॥**

अर्हतो अरिष्टनेमेः अष्टादशगणधरा अष्टादशगणा बभूवुः, अर्हतो अरिष्टनेमेर्वरदत्तप्रमुखाः १८००० अष्टादशसहस्रप्रमिताः स्वहस्तदीक्षिताः साधुसम्पत् संजाता । अर्हतोऽरिष्टनेमेः आर्ययक्षिणीप्रमुखा ४०००० चत्वारिंशत्सहस्रं साध्वीनां सम्पत् संजाता । अर्हतोऽरिष्टनेमेर्नन्दप्रमुखा एकलक्षएकोनसप्ततिसहस्र १६९००० प्रमाणा श्रावकाणां संपत्सञ्जाता । अर्हतोऽरिष्टनेमेः त्रिलक्षषट्त्रिंशत्सहस्र ३३६००० प्रमाणा श्राविकाणां संपत्सञ्जाता । अर्हतोऽरिष्टनेमेः चतुःशतप्रमाणा चतुर्दशपूर्वधराणां संपत्, पञ्चदशशतप्रमाणा अवधिज्ञानिनां संपत्, पञ्चदशशतप्रमाणा केवलिनां संपत्, पञ्चशतदशप्रमाणा वैक्रियलब्धिधारिणां संपद् आसीत् । दशशतं विपुलमतयः, अष्टशतं वादिनः, षोडशशतं पञ्चानुत्तरगामिनः, पञ्चदशशतं साधवस्सिद्धाः, साध्वीनां त्रिशतशती सिद्धा, श्रीनेमीश्वरस्य अष्ट पट्टधारिणः मुक्तिं गताः, एषा युगान्तकृतभूमिः, केवलज्ञानोत्पत्त्यनन्तरं

द्वादशभिर्वर्षैः मुक्तिमार्गो व्यूढः, एषा पर्यायान्तकृतभूमिः कथ्यते ॥ अथ भगवतो निर्वाणकल्याणं कथ्यते—

तेणं कालेणं तेणं समएणं अरहा अरिट्ठनेमी तिण्णि वाससयाइं कुमारवासमज्झे वसित्ता चउपन्नं राइंदियाइं छउमत्थपरिआयं पाउणित्ता देसूणाइं सत्त वाससयाइं केवलिपरिआयं पाउणित्ता परिपुण्णाइं सत्तवाससयाइं सामण्णपरिआयं पाउणित्ता एगं वाससहस्सं सवाउअं पालइत्ता खीणे वेयणिज्जाउयनामगुत्ते इमीसे ओसप्पिणीए दूसमसुसमाए समाए बहुविइक्कंताए जे से गिम्हाणं चउत्थे मासे अट्ठमे पक्खे आसाढसुद्धे तस्स णं आसाढसुद्धस्स अट्ठमीपक्खेणं उप्पिं उज्जिंतसेलसिहरंसि पंचहिं छत्तीसेहिं अणगारसएहिं सद्धिं मासिएणं भत्तेणं अपाणएणं चित्तानक्खत्तेणं जोगमुवागएणं पुवरत्तावरत्तकालसमयंसि नेसज्जिए कालगए (ग्रं० ८००) जाव सवदुक्खप्पहीणे ॥ १८३ ॥ अरहओ णं अरिट्ठनेमिस्स कालगयस्स जाव सवदुक्खप्प-हीणस्स चउरासीइं वाससहस्साइं विइक्कंताइं, पंचासीइमस्स वाससहस्सस्स नव वाससयाइं

करतया च जात इति षष्ठः। उक्तभवग्रहणं हि विना नान्यद्भवग्रहणं षष्ठं श्रूयते भगवत इति ॥

देवानन्दाकुक्षेः त्रिशलाकुक्षौ अवतरणं भवद्वयं विवक्षितम्, अत एव श्रीवीरस्य च्यवनद्वय संसिद्धम्, तथा तीर्थंकरावतरणसमये त्रिशलया चतुर्दशमहास्वप्ना दृष्टाः तथैव आश्विनकृष्णत्रयोदश्याम् इन्द्रस्य आसनप्रकम्पः, अवधिनावलोकनं शक्रस्तवेन च नमस्कारकरणम्; तथा त्रिशलागृहे इन्द्राऽऽगमनं, चतुर्दश स्वप्नफलं तव पुत्रस्तीर्थंकरो भविष्यति इति कथनम्, एतद् आगमानुसारेण युक्त्यनुसारेण च वीरस्य गर्भसंक्रमणरूपं द्वितीयच्यवनकल्याणकं प्राज्ञैः ज्ञेयम् ॥

तथाहि श्रीवटगच्छीयश्रीविनयचन्द्रसूरिकृत—श्रीकल्पसूत्रनिरुक्तौ षट्कल्याणकसंसाधकः पाठो यथा--'तेणं कालेणं' इत्यादि 'तेणं' ति प्राकृतशैलीवशात् तस्मिन् काले, तस्मिन् समये, यः पूर्वतीर्थंकरैः श्रीवीरस्य च्यवनादि हेतुर्ज्ञातः, कथितश्च; यस्मिन् समये तीर्थंकरच्यवनं स एव समय उच्यते, समयः कालनिर्धारणार्थः, यतः कालो वर्णोऽपि, तथा हस्त उत्तरो यासां ता हस्तोत्तरा उत्तराफाल्गुन्यः, वहुवचनं बहुकल्याणकाऽपेक्षम्, तस्यां विभोश्च्यवनम्, गर्भाद् गर्भे संक्रान्तिः, जन्म, व्रतम् केवलं चाऽभवत्; निर्वृतिः स्वातौ। इति ॥

पुनरपि श्रीतपगच्छीयश्रीकुलमण्डनसूरिकृता श्रीकल्पसूत्राऽवचूरिका यथा—वर्तमानतीर्थाऽधिपतित्वेन आसन्नोपकारित्वात् प्रथमं श्रीवर्धमानस्वामिनश्चरितम् ऊचुः श्रीभद्रबाहुस्वामिपादाः—'तेणं कालेणं' इत्यादि, 'तेणं' ति प्राकृतशैलीवशात् तस्मिन् काले—वर्तमाना—ऽवसर्पिण्याश्चतुर्था—ऽरकलक्षणे, एवं तस्मिन् समये—तद्विशेषे, यत्र असौ भगवान् देवानन्दायाः कुक्षौ दशमदेवलोकगतपुष्पोत्तरविमानाद् अवतीर्णः, 'णं' शब्दो वाक्याऽलंकारे, अथवा सप्तम्यर्थे, आर्षत्वात् तृतीया, एवं हेतौ वा; ततस्तेन कालेन, तेन च समयेन हेतुभूतेन

**विइक्कंताइं, दसमस्स वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ ॥ १८४ ॥**

अर्थः—तस्मिन् काले, तस्मिन् समये अर्हन् अरिष्टनेमिः त्रिशतवर्षाणि कुमारवासे उषित्वा, चतुःपञ्चाशद् दिनानि छद्मस्थावस्थायां स्थितः सन् चारित्रं प्रपाल्य देशोनं सप्तशतवर्षं केवलं प्रपाल्य एवं सर्वमेकसहस्रवर्षप्रमाणम् आयुः संपाल्य वेदनीयाऽयुर्नाम-गोत्र-कर्मणां नाशं कृत्वा, अवसर्पिणीकालस्य चतुर्थे अरके बहुनि व्यतीते सति उष्णकालस्य चतुर्थे मासे, अष्टमे पक्षे आषाढस्य सिते पक्षे अष्टमीदिवसे गिरिनारपर्वतोपरि पञ्चशतषट्त्रिंशत्साधूनां परिवारेण सहित एकमासस्य चतुर्विधाहारं छित्त्वा चित्रानक्षत्रे चन्द्रसंयोगं प्राप्ते सति मुक्तिं गतः। अर्हतोऽरिष्टनेमेर्मुक्तिगमनादनन्तरं चतुरशीतिसहस्रनवशताशीतिवर्षेषु व्यतीतेषु सत्सु कल्पादिसूत्रं पुस्तकेषु लिखितम्। इत्यनेन प्रकारेण श्रीपार्श्वनाथ-नेमिनाथयोः पञ्च पञ्च कल्याणकानि व्याख्यातानि[1] ॥

अथ तीर्थकराणां सर्वेषाम् अन्तरकालः कथ्यते—

**नमिस्स णं अरहओ कालगयस्स जाव—सव्वदुक्खप्पहीणस्स पंच वाससयसहस्साइं, चउरासीइं च वाससहस्साइं नव य वाससयाइं विइक्कंताइं, दसमस्स य वाससयस्स अयं असी-**

---

१. केचिद् अत्र षष्ठं व्याख्यानं समापयन्ति, अग्रे चतुर्विंशतितीर्थकराणाम् अन्तरकालं सप्तमे व्याख्याने वाचयन्ति ॥

इमे संवच्छरे काले गच्छइ ॥ १८५ ॥ २१ ॥ मुणिसुव्वयस्स णं अरहओ कालगयस्स इक्कारस वाससयसहस्साइं चउरासीइं च वाससहस्साइं नव वाससयाइं विइक्कंताइं, दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ ॥ १८६ ॥ २० ॥ मल्लिस्स णं अरहओ जाव–सव्वदुक्खप्पहीणस्स पन्नट्ठिं वाससयसहस्साइं चउरासीइं च वाससहस्साइं नव वाससयाइं विइक्कंताइं, दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ ॥ १८७ ॥ ॥ १९ ॥ अरस्स णं अरहओ जाव–सव्वदुक्खप्पहीणस्स एगे वासकोडिसहस्से विइक्कंते, सेसं जहा मल्लिस्स। तं च एयं–पंचसट्ठिं लक्खा चउरासीइं सहस्सा विइक्कंता, तम्मि समए महावीरो निव्वुओ, तओ परं नव वाससया विइक्कंता, दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ । एवं अग्गओ, जाव–सेयंसो ताव दट्ठव्वं ॥ १८८ ॥ १८ ॥ कुंथुस्स णं अरहओ जाव–सव्वदुक्खप्पहीणस्स एगे चउभागपलिओवमे विइक्कंते, पंचसट्ठिं वाससयस-

हस्सा, सेसं जहा मल्लिस्स ॥ १८९ ॥ १७ ॥ संतिस्स णं अरहओ जाव–सव्वदुक्खप्पहीणस्स एगे चउभागूणे पलिओवमे विइक्कंते पन्नट्ठिं च, सेसं जहा मल्लिस्स ॥ १९० ॥ १६ ॥ धम्मस्स णं अरहओ जाव–सव्वदुक्खप्पहीणस्स तिण्णि सागरोवमाइं विइक्कंताइं पन्नट्ठिं च, सेसं जहा मल्लिस्स ॥ १९१ ॥ १५ ॥ अणंतस्स णं अरहओ जाव–सव्वदुक्खप्पहीणस्स सत्त सागरोवमाइं विइक्कंताइं पन्नट्ठिं च, सेसं जहा मल्लिस्स ॥ १९२ ॥ १४ ॥ विमलस्स णं अरहओ जाव–सव्वदुक्खप्पहीणस्स सोलस सागरोवमाइं विइक्कंताइं पन्नट्ठिं च, सेसं जहा मल्लिस्स ॥ १९३ ॥ १३ ॥ वासुपुज्जस्स णं अरहओ जाव–सव्वदुक्खप्पहीणस्स छायालीसं सागरोवमाइं विइक्कंताइं पन्नट्ठिं च, सेसं जहा मल्लिस्स ॥ १९४ ॥ १२ ॥ सिज्जंसस्स णं अरहओ जाव–सव्वदुक्खप्पहीणस्स एगे सागरोवमसए विइक्कंते पन्नट्ठिं च, सेसं जहा मल्लिस्स ॥ १९५ ॥ ॥ ११ ॥ सीअलस्स णं अरहओ जाव–सव्वदुक्खप्पहीणस्स एगा सागरोवमकोडी तिवास-

अद्धनवमासाहिअबायालीसवाससहस्सेहिं ऊणिआ विइक्कंता, एयम्मि समए वीरो निव्वुओ, तओऽवि य णं परं नव वाससयाइं विइक्कंताइं, दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ ॥१९६॥ १० ॥ सुविहिस्स णं अरहओ पुप्फदंतस्स जाव–सव्वदुक्खप्पहीणस्स दस सागरोवमकोडीओ विइक्कंताओ, सेसं जहा सीअलस्स, तं च इमं–तिवासअद्धनवमासाहिअबायालीसवाससहस्सेहिं ऊणिआ विइक्कंता इच्चाइ ॥ १९७ ॥ ९ ॥ चंदप्पहस्स णं अरहओ जाव–सव्वदुक्खप्पहीणस्स एगं सागरोवमकोडिसयं विइक्कंतं, सेसं जहा सीअलस्स, तं च इमं–तिवासअद्धनवमासाहियबायालीससहस्सेहिं ऊणिआ इच्चाइ ॥१९८॥ ८ ॥ सुपासस्स णं अरहओ जाव–प्पहीणस्स एगे सागरोवमकोडिसहस्से विइक्कंते, सेसं जहा सीअलस्स, तं च इमं–तिवासअद्धनवमासाहिअबायालीससहस्सेहिं ऊणिआ इच्चाइ ॥ १९९ ॥ ७ ॥ पउमप्पहस्स णं अरहओ जाव–प्पहीणस्स दस सागरोवमकोडिसहस्सा विइक्कंता, तिवास-

अद्धनवमासाहियबायालीससहस्सेहिं इच्चाइयं, सेसं जहा सीअलस्स ॥ २०० ॥ ६ ॥ सुमइस्स णं अरहओ जाव–प्पहीणस्स एगे सागरोवमकोडिसयसहस्से विइक्कंते, सेसं जहा सीअलस्स, तिवासअद्धनवमासाहियबायालीससहस्सेहिं इच्चाइयं ॥ २०१ ॥ ५ ॥ अभिनंदणस्स णं अरहओ जाव–प्पहीणस्स दस सागरोवमकोडिसयसहस्सा विइक्कंता, सेसं जहा सीअलस्स, तिवासअद्धनवमासाहियबायालीसवाससहस्सेहिं इच्चाइयं ॥ २०२ ॥ ४ ॥ संभवस्स णं अरहओ जाव–प्पहीणस्स वीसं सागरोवमकोडिसयसहस्सा विइक्कंता, सेसं जहा सीअलस्स, तिवासअद्धनवमासाहियबायालीसवाससहस्सेहिं इच्चाइयं ॥ २०३ ॥ ३ ॥ अजियस्स णं अरहओ जाव–प्पहिणस्स पन्नासं सागरोवमकोडिसयसहस्सा विइक्कंता, सेसं जहा सीअलस्स, तिवासअद्धनवमासाहियबायालीसवाससहस्सेहिं इच्चाइयं ॥ २०४ ॥ २ ॥



## सुखावबोधाय परस्परं श्रीतीर्थंकराणाम् अन्तरसूचकं यन्त्रम् ॥

| | | |
|---|---|---|
| संस्कृत—<br>१ श्रीपार्श्वनाथतीर्थंकर—श्रीमहावीरयोर् अन्तरं सार्धे द्वे शते वर्षाणाम्, ततः परं ९८० वर्षैः सिद्धान्तः पुस्तकारूढो जातः ॥ | २ श्रीनेमिनाथतीर्थंकर—श्रीमहावीरयोर् अन्तरं चतुरशीतिसहस्रवर्षाणि, ततः परं ९८० वर्षैः सिद्धान्तः पुस्तकारूढो जातः ॥ | ३ श्रीनमिनाथतीर्थंकर—श्रीमहावीरयोर् अन्तरं पञ्च लक्षाः, चतुरशीतिसहस्राश्च वर्षाणि, ततः परं ९८० वर्षैः सिद्धान्तः पुस्तकारूढो जातः ॥ |
| हिन्दी—<br>१ श्रीपार्श्वनाथस्वामिके निर्वाण वाद दोसौ पचास (२५०) वर्षे श्रीवीरप्रभुका निर्वाण हुआ, उसके वाद नवसौ अस्सी (९८०) वर्षे सिद्धान्त लिखे गये ॥ | २ श्रीनेमिनाथजीके और श्रीमहावीरस्वामिके ८४ हजार वर्षका अंतर है, उसके वाद नवसौ अस्सी (९८०) वर्षे सिद्धान्त लिखे गये ॥ | ३ श्रीनमिनाथजीके और श्रीमहावीरस्वामिके ५ लाख, ८४ हजार वर्षका अंतर है, उसके वाद ९८० वर्षे सिद्धान्त लिखे गये ॥ |

| | | |
|---|---|---|
| ☞संस्कृत—<br>४ श्रीमुनिसुव्रतस्वामितीर्थंकर—श्रीमहावीरयोर् अन्तरम् एकादश लक्षाः, चतुरशीतिसहस्राश्च वर्षाणि, ततः परं ९८० वर्षैः सिद्धान्तः पुस्तकारूढः ॥ | ५ श्रीमल्लिनाथतीर्थंकर—श्रीमहावीरयोर् अन्तरं पञ्चषष्टिलक्षाः, चतुरशीतिसहस्राश्च वर्षाणि, ततः परं ९८० वर्षैः सिद्धान्तः पुस्तकारूढः ॥ | ६ श्रीअरनाथतीर्थंकर—श्रीमहावीरयोर् अन्तरम् एका सहस्रः कोटी, पञ्चषष्टिलक्षाः, चतुरशीतिसहस्राश्च वर्षाणि, ततः परं ९८० वर्षैः सिद्धान्तः पुस्तकारूढः ॥ |
| ☞हिन्दी—<br>४ श्रीमुनिसुव्रतस्वामिके और श्रीमहावीरस्वामिके ११ लाख, ८४ हजार वर्षका अंतर है, उसके बाद ९८० वर्षे सिद्धान्त लिखे गये ॥ | ५ श्रीमल्लिनाथजीके और श्रीमहावीरस्वामिके ६५ लाख, ८४ हजार वर्षका अंतर है, उसके बाद ९८० वर्षे सिद्धान्त लिखे गये ॥ | ६ श्रीअरनाथजीके और श्रीमहावीरस्वामिके १ हजार क्रोड, ६५ लाख, ८४ हजार वर्षका अंतर है, उसके बाद ९८० वर्षे सिद्धान्त लिखे गये ॥ |

संस्कृत—

| | | |
|---|---|---|
| ७ श्रीकुन्थुनाथतीर्थंकर—श्रीमहावीरयोर् अन्तरं पल्योपमस्य एकश्चतुर्थो भागः, पञ्चषष्टिलक्षाः, चतुरशीतिसहस्राश्च वर्षाणि, ततः परं ९८० वर्षैः सिद्धान्तः पुस्तकारूढः ॥ | ८ श्रीशान्तिनाथतीर्थंकर—श्रीमहावीरयोर् अन्तरं पादोनं पल्योपमम्, पञ्चपष्टिलक्षाः, चतुरशीतिसहस्राश्च वर्षाणि, ततः परं ९८० वर्षैः सिद्धान्तः पुस्तकारूढः ॥ | ९ श्रीधर्मनाथतीर्थंकर—श्रीमहावीरयोर् अन्तरं त्रीणि सागरोपमाणि, पञ्चपष्टिलक्षाः, चतुरशीतिसहस्राश्च वर्षाणि, ततः परं ९८० वर्षैः सिद्धान्तः पुस्तकारूढः ॥ |

हिन्दी—

| | | |
|---|---|---|
| ७ श्रीकुन्थुनाथजीके और श्रीमहावीरस्वामिके एक पल्योपमका चोथाइ भाग, ६५ लाख, ८४ हजार वर्षका अंतर है, उसके वाद ९८० वर्षे सिद्धान्त लिखे गये ॥ | ८ श्रीशांतिनाथजीके और श्रीमहावीरस्वामिके पौणा पल्योपम, ६५ लाख, ८४ हजार वर्षका अंतर है, उसके वाद ९८० वर्षे सिद्धान्त लिखे गये ॥ | ९ श्रीधर्मनाथजीके और श्रीमहावीरस्वामिके ३ सागरोपम, ६५ लाख, ८४ हजार वर्षका अंतर है, उसके वाद ९८० वर्षे सिद्धान्त लिखे गये ॥ |

संस्कृत—

| | | |
|---|---|---|
| १० श्रीअनन्तनाथतीर्थंकर—श्रीमहावीरयोर् अन्तरं सप्त सागरोपमाणि, पञ्चषष्टिलक्षाः, चतुरशीतिसहस्राश्च वर्षाणि, ततः परं ९८० वर्षैः सिद्धान्तः पुस्तकारूढः ॥ | ११ श्रीविमलनाथतीर्थंकर—श्रीमहावीरयोर् अन्तरं षोडश सागरोपमाणि, पञ्चषष्टिलक्षाः, चतुरशीतिसहस्राश्च वर्षाणि, ततः परं ९८० वर्षैः सिद्धान्तः पुस्तकारूढः ॥ | १२ श्रीवासुपूज्यतीर्थंकर—श्रीमहावीरयोर् अन्तरं षट्चत्वारिंशत् सागरोपमाणि, पञ्चषष्टिलक्षाः, चतुरशीतिसहस्राश्च वर्षाणि, ततः परं ९८० वर्षैः सिद्धान्तः पुस्तकारूढः ॥ |

हिन्दी—

| | | |
|---|---|---|
| १० श्रीअनंतनाथजीके और श्रीमहावीरस्वामिके सात सागरोपम, ६५ लाख, ८४ हजार वर्षका अंतर है, उसके बाद ९८० वर्षे सिद्धान्त लिखे गये ॥ | ११ श्रीविमलनाथजीके और श्रीमहावीरस्वामिके १६ सागरोपम, ६५ लाख, ८४ हजार वर्षका अंतर है, उसके बाद ९८० वर्षे सिद्धान्त लिखे गये ॥ | १२ श्रीवासुपूज्यजीके और श्रीमहावीरस्वामिके ४६ सागरोपम, ६५ लाख, ८४ हजार वर्षका अंतर है, उसके बाद ९८० वर्षे सिद्धान्त लिखे गये ॥ |

संस्कृत—

| | | |
|---|---|---|
| १३ श्रीश्रेयांसतीर्थंकर—श्रीमहावीरयोर् अन्तरम् एकं सागरोपमशतम्, पञ्चषष्टिलक्षाः चतुरशीतिसहस्राश्च वर्षाणि, ततः परं ९८० वर्षैः सिद्धान्तः पुस्तकारूढः ॥ | १४ श्रीशीतलनाथ—श्रीमहावीरयोर् अन्तरम् एका सागरोपमकोटी (परं सा कीदृशी ?) द्विचत्वारिंशत्सहस्रैस्त्रिभिर्वर्षैः सार्धाष्ट (८॥) मासैश्च ऊना ततः परं ९८० वर्षैः सिद्धान्तः पुस्तकारूढः ॥ | १५ श्रीसुविधिनाथ—श्रीमहावीरयोर् अन्तरं दश सागरोपमकोट्यः, (परं ताः कीदृश्यः ?) द्विचत्वारिंशत्सहस्रैस्त्रिभिर्वर्षैः सार्धाष्ट (८॥) मासैः ता ऊनाः, ततः परं ९८० वर्षैः सिद्धान्तः पुस्तकारूढः ॥ |

हिन्दी—

| | | |
|---|---|---|
| १३ श्रीश्रेयांसनाथजीके और श्रीमहावीरस्वामिके एकसौ १०० सागरोपम, ६५ लाख, ८४ हजार वर्षका अंतर है, उसके बाद ९८० वर्षे सिद्धान्त लिखे गये ॥ | १४ श्रीशीतलनाथजीके और श्रीमहावीरस्वामिके ४२ हजार, ३ वर्ष और ८॥ माससे न्यून एक क्रोड सागरोपमका अंतर है, उसके बाद ९८० वर्षे सिद्धान्त लिखे गये ॥ | १५ श्रीसुविधिनाथजीके और श्रीमहावीरस्वामिके ४२ हजार, ३ वर्ष और ८॥ माससे न्यून दश कोटि सागरोपमका अंतर है, उसके बाद ९८० वर्षे सिद्धान्त लिखे गये ॥ |

इति व्याख्येयम् । अथ तच्छब्दस्य पूर्वपरामर्शित्वाद् अत्र किं परामृश्यते इति चेत् ? उच्यते–यौ काल–समयौ भगवता श्रीऋषभदेवस्वामिना, अन्यैश्च तीर्थंकरैः श्रीवर्धमानस्य षण्णां च्यवनादीनां कल्याणकानां हेतुत्वेन कथितौ तौ एव इति ब्रूमः –श्रमणस्तपस्वी, समग्रैश्वर्ययुक्तो भगवान् महावीरः कर्मशत्रुविजयाद् अन्वर्थनामा चरमजिनः ! 'पंचहत्थुत्तरे' त्ति हस्तस्येव उत्तरस्यां दिशि वर्तमानत्वाद् हस्तोत्तरा, हस्त उत्तरो यासां ता हस्तोत्तरा उत्तराफाल्गुन्यः। बहुवचनं बहुकल्याणकाऽपेक्षम्, पञ्चसु–च्यवन–गर्भापहार–जन्म–दीक्षा–ज्ञानकल्याणकेषु हस्तोत्तरा यस्य सा तथा च्यवनादीनि पञ्च उत्तराफाल्गुनीषु जातानि । निवार्णस्तु स्वातौ संजातत्वाद् इति भावः । 'होत्थ'त्ति अभवन् ॥

एवं वीरचरित्राऽधिकारे, सूत्रनिर्युक्ति–चूर्णि–वृत्ति–प्रकरणादिषु बहुषु शास्त्रेषु तीर्थंकर–गणधर–पूर्वाचार्यैः श्रीवीरस्य षट्कल्याणकानि प्रतिपादितानि सन्ति परमत्र विस्तरभयात् स्वस्थलीयपाठो नैवोद्धृतः । ततश्च प्रियुक्ति–शास्त्रैः सर्वैरपि श्रीवीरस्य कल्याणकषट्कमेव समाराध्यम् । एतद्विषये विशेषरूपेण सविस्तरो निर्णयः अस्मत्कृतेन 'पर्युषणानिर्णय' ग्रन्थेन समवसेयो निपुणैः–मणिसागरः.

श्रीकल्पसूत्रवरनाममहागमस्य गूढार्थभावसहितस्य गुणाकरस्य ।
लक्ष्मीनिधेर्विहितवल्लभकामितस्य व्याख्यानमाद्यमगमत् परिपूर्तिभावम् ॥ १ ॥

इति उपाध्यायश्रीलक्ष्मीवल्लभविरचितायां श्रीकल्पसूत्रकल्पद्रुमकलिकायां प्रथमं व्याख्यानं समासम् ॥

१ एकादशवाचनाऽपेक्षयाऽत्र प्रथमं व्याख्यानं संपूर्णम् इति केचिद् वदन्ति.

☞संस्कृत—

| | | |
|---|---|---|
| १६ श्रीचन्द्रप्रभस्वामि—श्रीमहावीयोर् अन्तरम् एकं सागरोपमकोटीशतम् ( परं कीदृशं तत् ? ) द्विचत्वारिंशत्सहस्रैस्त्रिभिर्वर्षैः सार्धाष्ट (८॥) मासैश्च ऊनम्, ततः परं ९८० वर्षैः पुस्तकारूढः ॥ | १७ श्रीसुपार्श्वनाथ—श्रीमहावीरयोर् अन्तरम् एकं सागरोपमकोटीसहस्रम् ( परं तत् कीदृशम् ? ) द्विचत्वारिंशत्सहस्रैस्त्रिभिर्वर्षैः सार्धाष्ट (८॥) मासैश्च ऊनम्, ततः परं ९८० वर्षैः पुस्तकारूढः ॥ | १८ श्रीपद्मप्रभ—श्रीमहावीरयोर् अन्तरं दश सागरोपमकोटिसहस्राः (परं कीदृशाः ?) द्विचत्वारिंशत्सहस्रैस्त्रिभिर्वर्षैः सार्धाष्टमासैश्च ऊनाः, ततः परं ९८० वर्षैः पुस्तकारूढः ॥ |

☞हिन्दी—

| | | |
|---|---|---|
| १६ श्रीचन्द्रप्रभस्वामिके और श्रीमहावीरस्वामिके ४२ हजार, ३ वर्ष और ८॥ माससे न्यून एकसौ क्रोड सागरोपमका अंतर है, उसके बाद ९८० वर्ष सिद्धान्त लिखे गये ॥ | १७ श्रीसुपार्श्वनाथजीके और श्रीमहावीरस्वामिके ४२ हजार, ३ वर्ष और ८॥ माससे न्यून हजार क्रोड सागरोपमका अंतर है, उसकें बाद ९८० वर्ष सिद्धान्त लिखे गये ॥ | १८ श्रीपद्मप्रभजीकें और श्रीमहावीरस्वामिके ४२ हजार, ३ वर्ष और ८॥ माससे न्यून दश हजार क्रोड सागरोपमका अंतर है, उसकें बाद ९८० वर्ष सिद्धान्त लिखे गये ॥ |

☞संस्कृत—

| | | |
|---|---|---|
| १९ श्रीसुमतिनाथ–श्रीमहावीरयोर् अन्तरम् एकं सागरोपमकोटिलक्षम् (परं तत् कीदृशम् ?) द्विचत्वारिंशत्सहस्रैस्त्रिभिर्वर्षैः सार्धाष्टमासैश्च ऊनम्, ततः परं ९८० वर्षैः पुस्तकारूढः ॥ | २० श्रीअभिनन्दन–श्रीमहावीरयोर् अन्तरं दश सागरोपमकोटिलक्षाः (परं कीदृशाः ?) द्विचत्वारिंशत्सहस्रैस्त्रिभिर्वर्षैः सार्धाष्टमासैश्च ऊनाः, ततः परं ९८० वर्षैः पुस्तकारूढः ॥ | २१ श्रीसंभवनाथ–श्रीमहावीरयोर् अन्तरं विंशतिसागरोपमकोटिलक्षाः (परं कीदृशाः?) द्विचत्वारिंशत्सहस्रैस्त्रिभिर्वर्षैः सार्धाष्टमासैश्च ऊनाः, ततः परं ९८० वर्षैः पुस्तकारूढः ॥ |

☞हिन्दी—

| | | |
|---|---|---|
| १९ श्रीसुमतिनाथजीके और श्रीमहावीरस्वामिके ४२ हजार, ३ वर्ष और ८॥ माससे न्यून एक लाख क्रोड सागरोपमका अंतर है, उसके बाद ९८० वर्ष सिद्धान्त लिखे गये ॥ | २० श्रीअभिनन्दनजीके और श्रीमहावीरस्वामिके ४२ हजार, ३ वर्ष और ८॥ माससे न्यून दश लाख क्रोड सागरोपमका अंतर है, उसके बाद ९८० वर्षे सिद्धान्त लिखे गये ॥ | २१ श्रीसंभवनाथजीके और श्रीमहावीरस्वामिके ४२ हजार, ३ वर्ष और ८॥ माससे न्यून २० लाख क्रोड सागरोपमका अंतर है, उसके बाद ९८० वर्षे सिद्धान्त लिखे गये ॥ |

☞संस्कृत—

| | |
|---|---|
| २२ श्रीअजितनाथ—श्रीमहावीरयोर् अन्तरं पञ्चाशत्सागरोपमकोटिलक्षाः ( परं कीदृशाः? ) द्विचत्वारिंशत्सहस्रैस्त्रिभिर्वर्षैः सार्धाष्टमासैश्च ऊनाः, ततः परं ९८० वर्षैः सिद्धान्तः पुस्तकारूढः ॥ | २३ श्रीआदिनाथ–श्रीमहावीरयोर् अन्तरम् एका सागरोपमकोटीकोटिः(परं कीदृशी?)द्विचत्वारिंशत्सहस्रैस्त्रिभिर्वर्षैः सार्धाष्टमासैश्च ऊना, ततः परं ९८० वर्षैः सिद्धान्तः पुस्तकारूढः॥ इति २४ तीर्थ० २३ अं० |

☞हिन्दी—

| | |
|---|---|
| २२ श्रीअजितनाथजीके और श्रीमहावीरस्वामिके ४२ हजार, ३ वर्ष और ८॥ माससे न्यून ५० लाख कोटि सागरोपमका अंतर है, उसके बाद ९८० वर्षे सिद्धान्त लिखे गये ॥ | २३ श्रीआदिनाथजीके और श्रीमहावीरस्वामिके ४२ हजार, ३ वर्ष और ८॥ माससे न्यून एक कोटाकोटि सागरोपमका अंतर है, उसके बाद ९८० वर्षे सिद्धान्त लिखे गये ॥ २४ तीर्थंकरोके २३ आंतरे ॥ |

**एवं प्रकारेण सर्वेषां तीर्थंकराणाम् अन्तरकालः कथितः। शासनाधीश्वरश्रीवर्धमानस्वामी, गुरुक्रमेण श्रीगौतमस्वामी, यावद् वर्तमानश्रीचतुर्विधसंघस्य श्रेयो भवतु ॥**

**श्रीकल्पसूत्रवरनाममहागमस्य, गूढार्थभावसहितस्य गुणाकरस्य।**
**लक्ष्मीनिधेर्विहितवल्लभकामितस्य, व्याख्यानमाप परिपूर्तिमिहैव षष्ठम् ॥ ६ ॥**

इति श्रीलक्ष्मीवल्लभोपाध्यायविरचितकल्पद्रुमकलिकायां षष्ठं व्याख्यानं समाप्तम् ॥

## अथ सप्तमं व्याख्यानम् ॥

नमः श्रीवर्द्धमानाय श्रीमते च सुधर्मणे । सर्वानुयोगवृद्धेभ्यो वाण्यै सर्वविदे तथा ॥ १ ॥

'वंदामि भद्दबाहुं' इत्यादि ॥ अर्हतो भगवतः श्रीमन्महावीरस्य शासने अतुलमङ्गलमालाप्रकाशने श्रीपर्युषणापर्वराजाधिराजस्य समागमने श्रीकल्पसिद्धान्तस्य वाचनाः भण्यन्ते ॥

तत्र अधिकारत्रयं वर्तते, प्रथमं जिनचरित्रम्, तदनन्तरं स्थविरकल्पः, तदनन्तरं साधुसामाचारीकल्पः। तत्र श्रीजिनचरित्राधिकारे पश्चानुपूर्व्या श्रीभगवतो महावीरदेवस्य षट् कल्याणकानि यथाक्रमं वर्णितानि। ततः पश्चात् श्रीपार्श्वनाथस्य तथा श्रीनेमिनाथस्य पञ्च २ कल्याणकानि कथितानि, पुनश्चतुर्विंशतितीर्थकराणाम् अन्तरकालश्च कथितः। अथ श्रीप्रथमतीर्थंकरस्य ऋषभदेवस्य पञ्च कल्याणकानि निरूप्यन्ते—तत्रादौ ऋषभदेवस्य त्रयोदश भवा वर्ण्यन्ते, सम्यक्त्वप्राप्तेरनन्तरं यावन्तो भवाः कृतास्तावताम् एव सङ्ख्या भवति। अपरेषां भवानां सङ्ख्या काऽपि नास्ति ॥

धण १ मिहुण २ सुर ३ महब्बल ४ ललियंग य ५ वयरजंघ ६ मिहुणो य ७।
सोहम्म ८ विज्जु ९ अच्चुय १० चक्की ११ सव्वट्ठ १२ उसभो य १३ ॥ १ ॥

अस्या गाथायाः अर्थः—प्रथमे भवे धनसार्थवाहोऽभूत्, तदा सम्यक्त्वं प्राप्तं तदुच्यते—इहैव जम्बूद्वीपे पश्चिममहाविदेहक्षेत्रे सुप्रतिष्ठितनाम्नि नगरे प्रियंकरो नाम राजा। तस्मिन् नगरे एको धननामा महान् सार्थवाहो वसति, तेन एकदा वसन्तपुरे गमनाय सार्थो मेलितः, नगरे उद्घोषणा दापिता—यः कश्चिद् वसन्तपुरे गन्तुं वाञ्छेत् स चाऽस्माकं सार्थे समायातु, तस्य वयं सर्वं निर्वाहं करिष्यामः, इति श्रुत्वा बहवो लोकाः सार्थे मिलिताः, अतीव महान् सार्थोऽभूत्। तत्र च श्रीधर्मघोषसूरयः पञ्चशतसाधुवर्गसहिताः यात्रानिमित्तं वसन्तपुरे गन्तुं मनसो बभूवुः, तदा धर्मघोषा अपि धनसार्थवाहस्य समीपे आगत्य धर्मलाभं दत्त्वा अनुमतिं मार्गयामासुः। हे सार्थेश! चेद् भवदाज्ञा भवेत् तर्हि भवतां सार्थेन समं वयमपि वसन्तपुरे समागच्छामः। धनः श्रुत्वा धर्मघोषसूरीन् उवाच—आगम्यतां स्वामिन्! मम सार्थे सुखेन, तद्वचनं श्रुत्वा धर्मघोषा अपि सार्थे प्रचेलुः, ततः सर्वोऽपि सार्थश्चचाल। मार्गे सार्थस्य बहुलत्वात् स्तोकं स्तोकम् एव चङ्क्रमणं बभूव, अन्तरा अटव्यां वर्षाकालः समाजगाम, तदा पूर्वदिक्सत्काः वायवो ववुः, मेघाः आकाशे जगर्जुः, विद्युतः स्फुरन्ति स्म, नद्यः पर्वतेभ्यः उत्तीर्य मार्गं रुरुन्धुः, हरिताङ्कुरैः सर्वं भूतलं निरुद्धम्, इन्द्रगोपैर्भूतलं भूषितम्, दर्दुराः अव्यक्तं शब्दं चक्रुः, मयूरा नृत्यन्ति स्म, मार्गाः पङ्काकुला जाताः, तदा सर्वोऽपि सार्थः पदमेकमपि चलितुं न शक्नोति। तदा सार्थेशेन स्वसार्थं संमील्य एकत्र तस्थे, पटगृहाणि लोकैः विस्तारितानि, तदा धर्मघोषा अपि एकस्यां

गिरिगुहायां निरवद्यायां स्थित्वा स्थानं मार्गयित्वा सर्वसाधुपरिवारसहिता धर्मध्यानं चक्रुः। सर्वेषां लोकानां बहुभिर्दिनैः शम्बलः क्षीणः, लोकाः सर्वेऽपि अटव्यां कन्दमूलफलैरुदरवृत्तिम् आचरन्ति। अथैकदा धनसार्थवाहः स्वसार्थस्य चिन्तां कुर्वन् पश्चाद्रजन्यां कस्यचिद् वन्दिजनस्य भट्टादेः—"अङ्गीकृतं सुकृतिनः परिपालयन्ति" यथोक्तम्—"अद्यापि नोज्झति हरः किल कालकूटम्, कूर्मो बिभर्ति धरणीं निजपृष्ठभागे। अम्भोनिधिर्वहति दुस्समवाडवाग्निम्, अङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ १ ॥"

इति वाक्यं श्रुत्वा श्रीधर्मघोषसूरीन् सस्मार। मद्वचनाद् मत्सार्थे चलितानां तेषां मया ततः पश्चात् कदापि शुद्धिर्न गृहीता, मया तैः सह विश्वासघातः कृतः। अथ प्रातस्तेषां पुरतो गत्वा स्वापराधं क्षमयामि इति विचार्य प्रभाते स्वमित्रेण समं तेषां समीपे गत्वा, वन्दनां कृत्वा लज्जया अधोवदनः साधून् विज्ञप्तिं धनश्चकार। स्वामिन्! ममाऽपराधः क्षम्यताम्, मया कदापि भवतां शुद्धिरपि न पृष्टा, सर्वे लोकाः क्षीणशम्बलाः सञ्जाताः सन्ति। अथ मह्यं काञ्चिद् आज्ञां ददातु, तदा श्रीधर्मघोषाः ऊचुः—सार्थेश! अस्मदर्थे कापि चिन्ता न कार्या, अस्माकं सुखेन धर्मध्यानस्य निर्वाहो भवति, भवत्सार्थेन समं वह्वी अटवी उल्लङ्घिताऽस्ति। तदा सन्तुष्टेन सार्थेशेन स्वनिवासे आहारदानार्थं साधवः समाहूताः, साधुभिः शुद्धं घृतं दृष्ट्वा गृहीतम्, धनसार्थवाहेन तादृग्मनोपरिणामेन घृतदानं दत्तं येन सम्यक्त्वं प्राप्य आत्मा निर्मलीकृतः। अथ वर्षाकाले व्यतीते

सार्थवाहसार्थो वसन्तपुरे गतः, धर्मघोषसूरयोऽपि तीर्थयात्रायै सार्थवाहं धर्मलाभं दत्त्वा जग्मुः। ततो धनसार्थवाहश्चिरं सम्यक्त्वं प्रपाल्य अन्त्यावस्थायां मनुष्यायुषमुपार्ज्य च्युत्वा द्वितीये भवे उत्तरकुरुक्षेत्रे युगलिकोऽभूत्। तत्र पल्यत्रयस्य आयुः प्रपाल्य युगलिकभवसुखानि भुक्त्वा आयुःक्षये च्युत्वा तृतीये भवे सौधर्मदेवलोके देवत्वं प्राप्तः। ततश्च्युत्वा पश्चिममहाविदेहे क्षेत्रे गन्धिलावतीविजये शतबलो नाम भूपः; चन्द्रकान्ता राज्ञी, तयोः पुत्रो महाबलनामाऽभूत्, इति चतुर्थो भवः। तत्र संप्राप्तयौवनो महाविषयी सदा स्त्रीसमूहेन परिवृतः गीत-गान-नृत्यादिशृङ्गाररसलुब्धो महाबलः तिष्ठति। उदयास्तमपि न जानाति, धर्मे कदाऽपि मतिं न करोति। एकदा प्रस्तावे नाटकं भवति, मधुरस्वरेण गीत-गानं च जायते, महाबलो नृपतिरेकाग्रचित्तस्तिष्ठति। तदा तस्य मन्त्री सुबुद्धिः तत्प्रबोधार्थं गाथां प्राह:—

सव्वं विलवियं गीयं, सव्वं नट्टं विडंबणा। सव्वे आभरणा भारा, सव्वे कामा दुहावहा ॥ १ ॥

अर्थः—सर्वं गीतं विलपितं विलापसदृशम्, सर्वं नृत्यं विटम्बनासदृशं भूतग्रस्तचेष्टासदृशम् इत्यर्थः, सर्वाणि आभरणानि भारसदृशानि, सर्वाणि कामसुखानि दुःखदायकानि दुःखरूपाणीत्यर्थः; इति गाथां श्रुत्वा महाबलो मन्त्रिणं प्राह—भोः सुबुद्धे! अप्रस्तावे किमिदमुक्तम्, तदा मन्त्रिणोक्तम्—हे राजन्! केवलिना ममाऽग्रे इत्युक्तम्—महाबलभूपस्य एकमासम् आयुरस्ति, तेन मया इयं गाथा उक्ता। इति श्रुत्वा राजा भीतो मन्त्रिणं पप्रच्छ—अथ

किं क्रियते ? अथ यावदहं विषयेष्वेव समतिष्ठम्, अथ च आयुस्तोकमेव, एकमासमध्ये किं भवति ? तदा मन्त्रिणोक्तम् एकमासमध्ये तु प्रचुरमेव धर्मोपार्जनं भवति । एकदिवसेऽपि सम्यक् पालितः साधुधर्मो मोक्षदायको भवति, यदि मोक्षं न प्राप्नुयात् तदाऽपि वैमानिकदेवस्तु अवश्यमेव भवति; इति मन्त्रिवचः श्रुत्वा पुत्रं राज्ये संस्थाप्य दीक्षां लात्वा अनशनं कृत्वा पञ्चमे भवे ईशानदेवलोके महाबलजीवो देवो बभूव। इति पञ्चमो भवः। तत्र स्वयंप्रभविमाने ललिताङ्ग इति नाम आसीत् । इन्द्रसामानिकपदं भुङ्क्ते, स्वयंप्रभा तत्र देवी अत्यन्तवल्लभा, तया सह ललिताङ्गदेवो विषयसुखं विललास। सा च कियति काले च्युता तदा ललिताङ्गदेवेन महद्दुःखं कृतम्, यदा मनुष्यस्य तादृग् दुःखं स्यात् तदा हृदयं स्फुटित्वा म्रियते। तस्मिन् समये पूर्वभवमन्त्री सुबुद्धिजीवो धर्ममाराध्य मृत्वा तत्रैव देवलोके देवो जातोऽस्ति, तेन ललिताङ्गस्य स्वयंप्रभायाः विरहदुःखं दृष्ट्वा ललिताङ्गाय प्रोक्तम्–भो ललिताङ्ग ! त्वं दुःखं मा कुरु, यथा स्वयंप्रभा तव मिलिष्यति तथा करिष्यामि । अस्मिन् अवसरे नन्दनाम्नि ग्रामे एको नागिलनामा दरिद्रो वसति, तस्य नागश्रीभार्या, तया एकनालेन षट् पुत्र्यः प्रसूताः । एकं गृहे दारिद्र्यम्, अपरं पुत्र्याः प्रसूतिर्बह्वी, तदा महादुःखं तस्याश्च पुनरपि दैवयोगात् सप्तमी अपि पुत्री बभूव। तदा च दुःख–क्रोधवशात्तस्याः अभिधानमपि न दत्तम्, लोके निर्नामिका इति तस्याः प्रसिद्धिरभूत्। सा च अत्यन्तं दुर्भगा, कोऽपि न वाञ्छति । काष्ठभारं वनादानीय विक्रीय उदरं बिभर्ति, एवं दुःखेन निर्वहति, एकदा तया

काष्टभारं लात्वा नगरम् आगच्छन्त्या मार्गे युगंधरनामा केवली वन्दितः, धर्मं श्रुत्वा पुनः पप्रच्छ—स्वामिन्! मम भर्तृप्रमुखं किमपि सुखं नास्ति तत् किं कारणम् ? तदा केवलिनोक्तम्—भद्रे ! सौख्यं धर्मं विना न स्यात्, यदि त्वं सुखाभिलाषिणी वर्तसे तदा धर्मं कुरु, सा च केवलिवचः श्रुत्वा श्रावकधर्मं चकार। पर्वदिवसे पौषधं नमस्कारगुणनं देवगुर्वोर्वन्दनं धर्मश्रवणं विदधतीं तां दृष्ट्वा लोके धार्मिणी इति नाम प्राप। अथ च सर्वे साधर्मिकास्तस्याः साहाय्यं चक्रुः। सा च धर्मप्रसादाद् इह लोके तु सुखिनी आसीत्, अथ च सा बहुभिस्तपोभिः क्षीणशरीरा, यस्मिन् अवसरे स्वयंप्रभा च्युता तस्मिन्नेव अवसरे सा धार्मिणी अनशनं गृहीत्वा स्थिता। ललिताङ्गस्य रूपं लात्वा सुबुद्धिमन्त्रिदेवजीवेन तत्रागत्य धर्सिण्यै दर्शयित्वा निदानं कारितम्, सा च मृत्वा स्वयंप्रभा जाता, तया सह ललिताङ्गो बहुकालं सुखम् अभुनक्। ततो ललिताङ्गश्च्युत्वा षष्ठे भवे पूर्वमहाविदेहे लोहार्गलनगरे सुवर्णजङ्घो राजा, लक्ष्मीवती राज्ञी, तयोः पुत्रो वज्रजङ्घः इति षष्ठो भवः। स्वयंप्रभा च वज्रसेनचक्रवर्तिपुत्री श्रीमती नाम्ना सञ्जाता, सा च एकदा तीर्थकरसभायां देवान्, देवाङ्गनाश्च दृष्ट्वा जातिं सस्मार। निर्नामिकाभवात् स्वयंप्रभाभवे ललिताङ्गम्, स्वपतिं च सस्मार। चक्रवर्तिना पृष्टा सती सर्वं प्रागभवम् उवाच। चक्रिणा च श्रीमत्याः प्रागभवपतिर्ललिताङ्गः क्व समुत्पन्नः इति केवलिनं पृष्ट्वा वज्रजङ्घं ज्ञात्वा परिणायिता। केचिद् इति वदन्ति—श्रीमती चक्रिणा पृष्टा सती स्वप्रागभवं देवलोकसत्कं स्वयंप्रभाललिताङ्गादिस्वरूपम् उक्त्वा, चेत् पूर्वभवपतिं लभे तदा तमेव परिणयामि

इति निश्चयं चक्रे। तदा च चक्रिणा स्वपुत्र्याः प्रतिज्ञापूरणार्थं स्वयंवरमण्डपमहोत्सवः प्रारब्धः। श्रीमत्या च स्वप्राग्भवे देवभवे यत्र क्रीडाशैले नन्दनवन–भद्रशालवनादिषु प्रच्छन्ना स्वभर्त्रा ललिताङ्गेन समं क्रीडाः कृतास्ताः सर्वाश्चित्रपट्टे चित्रकारपार्श्वे सर्वं लिखित्वा स्थापितमभूत्। यदा स्वयंवरे सर्वे भूपालाः आगतास्तदा श्रीमती भूपालान् प्राग्भवस्वरूपं पप्रच्छ। भूपालान् सर्वानपि स्वार्थवशाद् वृथा यथा तथा प्रलापिनो ज्ञात्वा तान् तत्याज, तत्र च वज्रजङ्घकुमारः परिणीतः, अनुक्रमेण वज्रजङ्घ–श्रीमत्यौ सुखं भुञ्जाते स्म। एकदा वज्रजङ्घः प्राप्तराज्यः प्रजालोकं पालयन् ग्रहावासे तिष्ठन्, सन्ध्यासमये सन्ध्यास्वरूपं दृष्ट्वा वैराग्यं प्राप्य मनसि निश्चयं चकार–प्रभाते पुत्राय राज्यं दत्त्वा दीक्षां गृहीष्यामि, रात्रौ श्रीमत्या सह प्रसुप्तस्य वज्रजङ्घस्य तस्य पुत्रेण विषधूम्रप्रयोगेण वधः कृतः,। ततः तौ मृत्वोत्तरकुरुक्षेत्रे युगलिकत्वेन समुत्पन्नौ। अयं सप्तमो भवः। ततश्च्युत्वा सौधर्मदेवलोके अष्टमे भवे द्वावपि मित्रत्वेन देवौ जातौ। अयमष्टमो भवः। ततश्च्युत्वा महाविदेहे सुविधिवैद्यः, तत्पुत्रो जीवानन्दनामा बभूव, तस्य च राज्ञः पुत्रः १ मन्त्रिपुत्रः २ श्रेष्ठिपुत्रः ३ सार्थवाहजः ४ एते चत्वारः, पञ्चमः श्रीमतीजीवश्च तत्रैव एकस्य श्रेष्ठिनः पुत्रः केशवनामा ५, एते पञ्चापि जीवानन्दस्य वैद्यस्य मित्रत्वेन मिलिताः, षडपि स्नेहेन तिष्ठन्ति, घटिकामात्रमपि पृथग् न तिष्ठन्ति, एकदा ते सर्वेऽपि वैद्यमित्रगृहे मिलित्वा स्थिताः सन्ति, तदैव एकः कश्चित् कुष्ठी साधुराहाराय आगतः, तं दृष्ट्वा ते पञ्चाऽपि वैद्यमित्रं निनिन्दुः–वैद्यो हि निर्दयो

## अथ द्वितीयं व्याख्यानम् ।

[२] वंदामि भद्दबाहुं पाईणं चरमसयलसुअनाणिं । सुत्तस्स कारगं इसिं दसाणुकप्पे य ववहारे ॥

अर्हद्भगवच्छ्रीमन्महावीरस्य शासने अतुलमङ्गलमालाप्रकाशने श्रीपर्युषणापर्वराजाधिराजसमागमने श्रीकल्पसिद्धान्तवाचना क्रियते । तत्र त्रयोऽधिकाराः प्रवर्तन्ते । प्रथमेऽधिकारे श्रीजिनचरितम्, तदनन्तरं स्थविरकल्पः, तदनन्तरं साधुसमाचारी, कल्पः कथ्यते । तत्र श्रीजिनचरिताधिकारे पश्चानुपूर्व्या श्रीमहावीरदेवस्य षट् कल्याणकानि व्याख्यातानि । अथ द्वितीयवाचनायां विस्तरभावेन श्रीमहावीरदेवस्यैव श्रीसंघस्य माङ्गलिक्यार्थं कल्याणकषट्कं व्याख्यायते ।

ते णं काले णं, ते णं समए णं समणे भगवं महावीरे जे से गिम्हाणं चउत्थे मासे, अट्ठमे पक्खे, आसाढसुद्धे, तस्स णं आसाढसुद्धस्स छट्ठीदिवसे णं महाविजयपुप्फोत्तरपवरपुंडरी-

---

१. नमः श्रीवर्द्धमानाय श्रीमते च सुधर्मणे सर्वानुयोगवृद्धेभ्यो वाण्यै सर्वविदस्तथा ॥ १ ॥ २. वन्दे भद्रबाहुं प्राचीनं चरमसकलश्रुतज्ञानिनम् । सूत्रस्य कारकम्—ऋषिं दशानुकल्पे च व्यवहारे ॥

लोभी च भवति, यत्र किञ्चित् स्वार्थं पश्यति तत्रैव औषधं करोति । चेद् धर्मात्मा भवति तदा एतादृशः पुण्यक्षेत्रस्य साधोरौषधेन वैयावृत्त्यं करोति। तत् श्रुत्वा वैद्यो वदति–लक्षपाकतैलं मम गृहे वर्तते, परं रत्नकम्बल–गोशीर्षचन्दनं न वर्तते, यदा एतद् औषधद्रव्यं भवति तदाऽस्य साधोः वैयावृत्त्यं करोमि, इति श्रुत्वा सार्द्धद्विलक्षद्रव्यं दीनारादिकं लात्वा ते षडपि मित्राः हट्टे गत्वा श्रेष्ठिनो वृद्धस्याऽग्रे द्रव्यं मुक्त्वा रत्नकम्बल-वस्त्रम्, गोशीर्षचन्दनं च मार्गयामासुः । तदा स श्रेष्ठी पप्रच्छ–किं कार्यं भवतां रत्नकम्बल–चन्दनयोस्ततस्ते साधोः वैयावृत्त्यर्थं प्रोचुः । तच्छ्रुत्वा तेषां श्लाघां कृत्वा तद्धनं धर्मार्थं कृत्वा, साधुनिमित्तं कम्बल–चन्दनं च दत्त्वा श्रेष्ठी स्वयं दीक्षां लात्वा अन्तकृत्केवली भूत्वा मोक्षं ययौ। अथ ते षडपि भैषज्यसामग्रीं गृहीत्वा वनमध्ये कायोत्सर्गस्थितस्य कुष्ठिनः साधोरनुजानीध्वमित्युक्त्वा चर्मोपरि रोगिणं साधुं स्थापयित्वा वैद्यो लक्षपाकतैलेनाऽभ्यङ्गं चन्दनस्य लेपं कृत्वा उपरि रत्नकम्बलेन शरीरं जुगोप । ततः प्रथमेनाऽभ्यङ्गेन संतप्ताः चर्मस्थाः कृमयः चर्म निर्भेद्य चन्दनस्य शैत्येन रत्नकम्बले आगत्य आगत्य लग्नास्ताः कृमयः एकस्मिन् गोकलेवरे निक्षिप्ताः, एवं द्वितीयेनाभ्यङ्गेन मांसस्थाः, तृतीयेनाभ्यङ्गेन अस्थिमज्जास्थाः सर्वाः कृमयो निर्गताः । तदनन्तरं संरोहिण्या औषध्या तस्य सरन्ध्रं शरीरं लिप्तम्, साधोः शरीरं स्वर्णवर्णमभवत् । अनेन विधिना साधुं निर्बाधं कृत्वा स्वगृहं ते षडप्याजग्मुः । रत्नकम्बलं विक्रीय तद् द्रव्यं सप्तक्षेत्रेषु व्ययीचक्रुः। ततस्ते षडपि चारित्रं जगृहुः । इति नवमो

भवः। ततो निरतिचारं चारित्रं प्रपाल्य द्वादशे देवलोके ते षडपि मित्रत्वेन देवाः समुत्पन्नाः। इति दशमो भवः। ततश्च्युत्वा पूर्वमहाविदेहे पुण्डरीकिण्यां नगर्यां वज्रसेनराजा, धारिणी राज्ञी, तस्या उदरे षडपि पुत्राः सञ्जाताः। षण्णां मध्ये वैद्यस्य जीवश्चतुर्दशस्वप्नसूचितः, एकादशे भवे पुत्रत्वेन उत्पन्नः। मातृ-पितृभ्यां वज्रनाभः इति नाम दत्तम्। इति एकादशो भवः। तेषां षण्णामपि मित्राणाम् इमानि नामानि नृपसुतजीवो बाहुः १ मन्त्रिसुतजीवः सुबाहुः २ श्रेष्ठिसुतजीवः पीठः ३ सार्थवाहपुत्रजीवो महापीठः ४ निर्नामिकाजीवोऽपि तदा राजपुत्रो बभूव ५ स च वज्रनाभस्य चक्रवर्तिनोऽतीव प्रिय आसीत्। एवं षडपि जीवाः सुखेन तिष्ठन्ति। अथ वज्रनाभचक्रवर्तिनः पिता वज्रसेनो वज्रनाभपुत्रं राज्ये संस्थाप्य लोकान्तिकदेववचसा संवत्सरदानं दत्त्वा प्रव्रज्य कर्मक्षयात् केवलमुत्पाद्य तीर्थकरत्वं प्राप्य विहरन् पुण्डरीकिण्यामेव समाजगाम। तत्र समवसरणे पितुस्तीर्थकरस्य देशनां श्रुत्वा ते षडपि प्रव्रज्यां ललुः। तत्र प्रथमो वज्रनाभश्चक्रवर्तिर्दीक्षां गृहीत्वा चतुर्दशपूर्वाणि पपाठ। अन्यैः पञ्चभिः एकादशाङ्गान्यधीतानि। बाहुसाधुः पञ्चशतसाधूनाम् आहारपानीयम् आदाय ददाति, सुबाहुसाधुस्साधूनां विश्रामणां करोति, पीठ-महापीठौ स्वाध्यायं कुरुतः। अथ बाहु-सुबाहुभ्यां गुरवः प्रशंसन्ति। धन्यौ इमौ मुनी, यौ मुनीनां विश्रामणां कुरुतः। तदा पीठ-महापीठौ असूयां कुरुतः। आवां स्वाध्यायकारकौ आवाभ्यां गुरवो न श्लाघयन्ति। गुरवोऽपि स्वार्थिनः। अथ वज्रनाभचक्रवर्तिसाधुर्विंशतिस्थानकानि

सेवित्वा तीर्थकरगोत्रनामकर्म उपार्जितम् । बाहुसाधुना साधूनाम् आहारपानीयमानीय ददता भोगफलं कर्मोपार्जितम् । सुबाहुसाधुना विश्रामणां कुर्वता बाह्वोर्बलमुपार्जितम् । पीठ-महापीठाभ्याम् असूयां कुर्वाणाभ्यां स्त्रीवेदकर्म समुपार्जितम् । षष्ठो निर्नामिकाजीवः श्रेयांसो भावी, एवं षडपि जीवाश्चारित्रं प्रपाल्य सर्वेऽपि सर्वार्थसिद्धे विमाने देवत्वेन उत्पन्नाः । इति द्वादशो भवः। अत्र श्रीआवश्यकचूर्णौ एवं प्रोक्तमस्ति-आदीश्वरजीवो वज्रनाभः सर्वार्थसिद्धं गतः ततः पश्चात् षट्पूर्वलक्षाः व्यतीताः, तत्पश्चात् बाहु-सुबाहु-पीठ-महापीठप्रमुखाः सर्वार्थसिद्धं गताः, नो चेत्, कथं मिलन्ति आदीश्वरस्य षट्पूर्वलक्षाः जाताः ? ततः पश्चाद् बाहुप्रमुखा भरतादयः पुत्राः जाताः ॥ अथ ततः च्युत्वा कुत्र उत्पद्यन्ते तत् सूत्रकारः प्राह—

ते णं कालेणं, ते णं समए णं उसभे णं अरहा कोसलिए चउ-उत्तरासाढे अभीइपंचमे हुत्था,
तं जहा-उत्तरासाढाहिं चुए-चइत्ता गब्भं वक्कंते, जाव-अभीइणा परिनिव्वुए ॥ २०५ ॥

अर्थः-तस्मिन् काले, तस्मिन् समये अवसर्पिणीकाले तृतीयारकस्य प्रान्ते चतुरशीतिपूर्वलक्षाणि चत्वारि वर्षाणि षड्भिर्मासैः किञ्चिन्न्यूनानि इयति काले शेषे सति अस्मिन् समये श्रीऋषभदेवः कौशलेषु देशेषु भवः कौशलिकः, तस्य चत्वारि कल्याणकानि उत्तराषाढानक्षत्रे जातानि। पञ्चमं कल्याणकम् अभीचनक्षत्रेऽभूत् ।

उत्तराषाढानक्षत्रे सर्वार्थसिद्धविमानाद् देवलोकात् च्युत्वा जनन्याः कुक्षौ गर्भत्वेन उत्पन्नः । उत्तराषाढानक्षत्रे जन्म जातम्, उत्तराषाढानक्षत्रे दीक्षां जग्राह । उत्तराषाढानक्षत्रे केवलज्ञानमुत्पन्नम्, अभीचनक्षत्रे निर्वाणमासीत् । इत्यनेन संक्षेपेण श्रीऋषभदेवस्य पञ्च कल्याणकानि उक्तानि । अथ विस्तरत्वेन प्रकाश्यते—

ते णं काले णं, ते णं समए णं उसभे णं अरहा कोसलिए जे से गिम्हाणं चउत्थे मासे, सत्तमे पक्खे आसाढबहुले तस्स णं आसाढबहुलस्स चउत्थीपक्खे णं सवट्ठसिद्धाओ महाविमाणाओ तित्तीसं सागरोवमट्ठिइआओ अणंतरं चयं चइत्ता इहेव जंबूद्दीवे दीवे भारहेवासे इक्खागभूमीए नाभिस्स कुलगरस्स मरुदेवीए भारियाए पुव्वरत्तावरत्तकालसमयंसि आहारवक्कंतीए, जाव–गब्भत्ताए वक्कंते ॥ २०६ ॥

अर्थः–तस्मिन् काले, तस्मिन् समये श्रीऋषभदेवोऽर्हन् कौशलिको ग्रीष्मकालस्य चतुर्थे मासे सप्तमे पक्षे आषाढकृष्णचतुर्थीदिने सर्वार्थसिद्धविमानात् ३३ त्रयस्त्रिंशत्सागरोपममिताऽऽयुष्कं प्रपाल्य अनन्तरं च्युतश्च्युत्वा अस्मिन्नेव जम्बूद्वीपे भरतक्षेत्रे इक्ष्वाकुभूमौ नाभिकुलकरस्य भार्याया मरुदेवायाः कुक्षौ मध्यरात्रसमये देवानाम् आहारव्यतिक्रान्ते देवानां भवव्यतिक्रान्ते, गर्भत्वेन व्युत्क्रान्तः समुत्पन्नः इत्यर्थः । अथ इक्ष्वा-

कुभूमिस्वरूपं वदति–इक्ष्वाकुवंशस्तत्र समुत्पन्नः, तेन सा भूमिरिक्ष्वाकुभूमिरुच्यते । सर्वे युगलिकास्तत्रैव उत्पद्यन्ते । तत्र प्रायो नगरं किमपि नाऽस्ति, तत्र कल्पवृक्षा एव गृहमनोरथं पूरयन्ति। अथ नाभिकुलकरः सप्तमः कुलकरोऽस्ति । पूर्वं षट् कुलकरास्तत्र बभूवुः । तेषाम् उत्पत्ति–स्थितिस्वरूपमाह–

उस्सप्पिणी इमीए, तईयाइ समाइ पच्छिमे भागे । पलियोवमट्ठभागे, सेसम्मि कुलगरुप्पत्ती ॥ १ ॥

अर्थः–अस्याम् एव अवसर्पिण्यां तृतीयारकस्य प्रान्ते पल्योपमस्य अष्टमे भागे शेषे सति तदा सप्तकुलकराणाम् उत्पत्तिर्जाता । तेषां कुत्र उत्पत्तिर्जाता तदाह–

अद्धभरहमज्झिल्लतियभाए गंगासिंधुमज्झम्मि । इत्थ बहुमज्झदेशे उप्पन्ना कुलगरा सत्त ॥ २ ॥

अर्थः–दक्षिणदिग्भरतस्यार्द्धस्य त्रयो भागाः क्रियन्ते, तत्र मध्यदेशे सप्त कुलकरा उत्पन्नाः । तावत् प्रथमकुलकरस्योत्पत्तिं वर्णयति–पश्चिममहाविदेहे द्वौ वणिजौ अभूताम् । तौ च परस्परं मित्रौ, तयोः मध्ये एको मायावी, अपरः सरलस्वभावः, परस्परं द्रव्यवण्टनवेलायां मायावी सरलं वञ्चयित्वा द्रव्यम्, वस्तु च प्रच्छन्नं स्थापयति । सरलश्च निष्कपटं व्यवहरति । एवं तौ आयुः प्रपाल्य मृत्वा सरलो वणिग् इक्ष्वाकुभूमौ युगलिकोऽभूत् । अपरो मायावी वणिक् तत्रैव प्रदेशे हस्ती जातः । एकदा प्रस्तावे हस्तिना भ्रमता स युगलिकः सरलवणिग्जीवो दृष्टः, दृष्ट्वा च प्रीतिवशात् तं युगलिकमुत्पाट्य स्वस्कन्धे आरोप्य तत्र स हस्ती चचाल । अथ

च तं युगलिकं श्वेतगजारूढं विलोक्य तस्य विमलवाहन इति नाम्ना सर्वेऽन्ये युगलिनः प्रोचुः। उभयोरपि जातिसरणज्ञानं समुत्पन्नम्। परस्परमधिकप्रीतिरासीत्, कियत्यपि काले गते सति हीनकालस्य महिम्ना कल्पवृक्षाः यथा पूर्ववाञ्छितदायका आसन् तथा न बभूवुः। तदा युगलिनः परस्परं कलिं चक्रुः। स्वकीयस्य स्वकीयस्य कल्पवृक्षस्य रक्षां कुर्वन्तस्तिष्ठन्ति। एको युगलिकः स्वकीयं कल्पवृक्षं त्यक्त्वा अपरस्य कल्पवृक्षस्य समीपे मार्गयति तदा तत्स्वामी तेन सह कलिं कुर्वन् विमलवाहनसमीपे आयाति। विमलवाहनश्च हकारनीतिदण्डं तस्य शिरः करोति। विमलवाहनस्य 'हः' इति अक्षरेण दण्डनीतिरभूत्। अन्यदपि यदा किञ्चिद् अनुचितं कोऽपि करोति, विमलवाहनस्तस्य हकाराऽक्षरेण दण्डनीतिं ददाति। सोऽपि जानाति मम सर्वस्वं राज्ञा गृहीतम्। पुनरपि स तत्कार्यं न करोति। इयं दण्डनीतिः कियत्यपि काले युगलिनामभूत्। तस्य विमलवाहनस्य चन्द्रयशा भार्याऽभूत्। नवशतधनुष्प्रमाणं तदा शरीरमानम् आसीत् १। ततो द्वितीयो युगलिकश्चक्षुष्मान् कुलकरो बभूव। तद्भार्या चन्द्रकान्ता, तच्छरीरमानम् अष्टशतधनुष्प्रमाणम् २। तस्याऽपि हकारनीतिरेव। ततस्तृतीयो युगलिको यशोमान् कुलकरः। तद्भार्या सुरूपा, तस्याऽपि हकारेणैव दण्डनीतिः। तत्र च सप्तशतधनुष्प्रमितं देहप्रमाणमभूत् ३। ततश्चतुर्थो युगलिकोऽभिचन्द्रकुलकरः, तद्भार्या प्रतिरूपा, तस्य मकारेण दण्डनीतिः। सार्द्धषट्शतधनुष्प्रमितं देहमानं तस्य अभूत् ४। ततश्च पञ्चमयुगलिकः

प्रसेनजितकुलकरः, तद्भार्या चक्षुष्मती, षट्शतधनुष्प्रमितं शरीरम् आसीत्। धिक्कारेण दण्डनीतिः ५। ततः षष्ठो युगलिको मरुदेवः कुलकरः समुत्पन्नः, तद्भार्या श्रीकान्ता, तस्य धिक्कारेण दण्डनीतिः, तस्य पञ्चशतपञ्चाशद्धनुष्प्रमाणं शरीरमानम् ६। ततः सप्तमो नाभिकुलकरः। तद्भार्या मरुदेवी, तस्याऽपि धिक्कारेण दण्डनीतिः, तस्य च पञ्चशतपञ्चविंशतिर्धनुष्प्रमाणं शरीरमानम् आसीत् ७, स नाभिः सप्तमः कुलकरः सुखेन तिष्ठति, यदा कश्चिद् युगलिको वैरूपं करोति, तदा नाभिपार्श्वे तं समानयति। पूर्वं हकार–मकार–धिक्कारदण्डनीतिरासीत्। तदानीं तु कश्चिद् युगलिकः कालमहिम्ना दण्डनीत्या भयं च स्तोकं करोति। तस्मिन् समये श्रीऋषभदेवो मरुदेव्या गर्भे सङ्क्रान्तोऽस्ति।

उसभे णं अरहा कोसलिए तिन्नाणोवगए आविहुत्था, तं जहा—चइस्सामिति जाणइ, जाव—सुमिणे पासइ, तं जहा—गयवसह० । सव्वं तहेव, नवरं—पढमं उसभं मुहेणं अइंतं पासइ, सेसाओ गयं । नाभिकुलगरस्स साहइ, सुमिणपाढगा नत्थि, नाभिकुलगरो सयमेव वागरेइ ॥ २०७ ॥

अर्थः—ऋषभोऽर्हन् कौशलिकस्त्रिभिर्ज्ञानैः सहितः आसीत्। देवलोकात् च्यविष्यामीति जानाति, च्यव-

मानस्तत्समयं न जानाति, च्युतोऽहमित्यपि जानाति। यदा च देवलोकात् च्युत्वा मरुदेव्याः गर्भे समुत्पन्नः, तदा च मरुदेव्या चतुर्दशस्वप्नाः दृष्टाः, ते च नाभिकुलकरस्याऽग्रे निवेदिताः। नाभिकुलकरेणैव तेषाम् अर्थो निवेदितः। तत्र स्वप्नलक्षणपाठकः कोऽपि नाऽस्ति। स्वप्नविलोकने अयमेव विशेषः–मरुदेवी पूर्वं वृषभं पश्यति। तेषां फलं च नाभिकुलकरमुखात् श्रुत्वा मरुदेवी प्रसन्ना सती तिष्ठति।

ते णं काले णं ते णं समए णं, उसभे णं अरहा कोसलिए जे से गिम्हाणं पढमे मासे, पढमे पक्खे चित्तबहुले। तस्स णं चित्तबहुलस्स अट्ठमी पक्खे णं नवण्हं मासाणं बहुपडिपुण्णाणं, अद्धट्ठमाणं राइंदियाणं, जाव–उत्तरासाढाहिं नक्खत्तेणं जोगमुवागयेणं, जाव–आरोग्गा आरोग्गं दारयं पयाया ॥२०८॥ तं चेव सव्वं, जाव–देवा, देवीओ य वसुहारवासं वासिंसु, सेसं तहेव। चारगसोहणं माणुम्माणवड्ढणं उस्सुक्कमाइयट्ठिइवडियजूयवज्जं सव्वं भाणिअव्वं ॥२०९॥

अर्थः–तस्मिन् काले तस्मिन् समये ऋषभोऽर्हन् कौशालिकः उष्णकालस्य प्रथमे मासे, प्रथमे पक्षे, चैत्रवद्यष्टम्या दिने नवभिर्मासैः, ससभिर्दिनैः अर्द्धाष्टमदिनसहितैर्गर्भकाले सम्पूर्णे जाते सति, उत्तराषाढानक्षत्रे चन्द्रसंयोगे समागते सति आरोग्यया मरुदेव्या, आरोग्यः श्रीऋषभः पुत्रः प्रसूतः। तत्र सर्वम्–५६ दिक्कुमा-

रीणां आगमनम्, वसुधाराणां वर्षणम्, शक्रादिभिर्जन्माभिषेककरणं देवानां कर्तव्यं श्रीवर्द्धमानस्वामिजन्मवद् ज्ञेयम्। प्रातः समये च बन्दिमोक्षणम्, मानोन्मानप्रमाणवर्द्धनम्, करादीनां मोक्षणम्, जूसरमुशलादीनाम् ऊर्द्धकरणम्, इत्यादि मनुष्याणां पुत्रजन्मयोग्यो व्यवहारो नाऽभूत्। अयमेव विशेषः—यतस्ते युगलिकाः सन्ति, किमपि व्यवहारं न जानन्ति तेन हेतुना इन्द्रादयो देवाः सर्वं स्वकीयविधिव्यवहारं कुर्वन्ति। अथ मरुदेव्याः, पूर्वं स्वप्नसमये वृषभस्य दर्शनात्, पुत्रस्य उभयोर्जङ्घयोः रोम्णाम् आवर्तभ्रमणावलोकाद् वृषभ-स्याकारस्य लञ्छनाद् नाभिकुलकरेण 'ऋषभः' इति नाम दत्तम्। अथ च भगवान् देवभवात् च्युत्वा आगतो महोत्कृष्टरूपलावण्यधारीदेव–देवीवृन्दैः लाल्यमानः, इन्द्राणीभिः स्वाङ्के धार्यमाणः। सुनन्दया युगलिन्या सहितः, अपरया च सुमङ्गलानाम्ना अकाले मस्तके पतिततालफलेन मृतभ्रातृकया युगलिन्या, युगलिकैरानीय नाभिभूपाय समर्पितया नाभिराज्ञा ऋषभस्य विवाहार्थं रक्षितया वर्द्धमानः, भ्रमरवर्णशिरोरुहः, कमलदललोचनः, पक्वबिम्बसदृशोष्ठः, दाडिमबीजसदृशदशनः, तप्तकाञ्चनशरीरद्युतिः, कमलसुगन्धश्वासः, अप्रतिपातिज्ञानत्रयविराजमानः, सर्वलक्षणैः सम्पन्नः ऋषभदेवो वर्तते। अथ श्रीऋषभकुमारो बाल्यावस्थया क्रीडन् मातुः हृदये सन्तोषमुत्पादयन् जानुभ्यां गृहाङ्गणे सञ्चलन्, मन्मनभाषया जल्पन्, सम्यक्प्रकारेण हसन्, दूरस्थितं वस्तु आनयनाय शनैः शनैः व्रजन्, एवं बाललीलां कुर्वन् मरुदेव्या विलोक्यते स्म। तदा च

मरुदेवी श्रीऋषभदेवं दृष्ट्वा मनसि चिन्तयति–हे पुत्र ! त्वं सर्वेषां देवानां देवीनां च वल्लभः, अत्यन्तं सौभाग्ययुक्तः । देवाङ्गनाभिरेव लाल्यसे, इन्द्रेण अङ्गुष्ठे सञ्चारितामृतेनाऽऽहारं करोषि, तर्हि अहं केन गुणेन तव जननी भवामि ? । अथ च भगवतो देशोन ऊनं वर्षमभूत् । अस्मिन् समये इन्द्रो वंशस्थापनार्थं हस्ते इक्षुयष्टिं गृहीत्वा आगच्छति । इन्द्रं च आगच्छन्तं दृष्ट्वा श्रीऋषभदेवो जानुभ्यां चलित्वा, इक्षुयष्टिं गृहीत्वा उत्थितः, इन्द्रेण मनसि ज्ञातम्–भगवतः इक्षुयष्टिभक्षणाऽभिलाषो जातः, ततः इक्ष्वाकुवंशो ज्ञेयः । अपरे तीर्थकरा बाल्यावस्थायाम् अङ्गुष्ठसञ्चारिताहारं कुर्वन्ति, पश्चादग्निपक्वाऽमृताहारं गृह्णन्ति, ऋषभदेवस्तु देवाऽऽनीताद् देवकुरु–उत्तरकुरुक्षेत्रात् कल्पवृक्षफलाहारं कुर्वन्ति । संयमग्रहणानन्तरं प्रासुकाहारं गृह्णन्ति । अथ पुनर्मरुदेवी ऋषभदेवं धूलिधूसरशरीरं रममाणं दृष्ट्वा चक्षुर्निमील्य, हृदयेन संपीड्य तिष्ठति । अत्र कविर्भावं विचारयति–मरुदेवी चक्षुषी संमील्य मध्ये विलोकयति, मम हृदयं हर्षेण कियत् पूर्णं वर्तते । अथ कियत् पूरणीयमस्ति । हृदयं तु बाह्यदृष्ट्या विलोकयितुं न शक्यते । पुनरहं तव उपकारं किमपि कर्तुमशक्ता, त्वया तु मम बहून्युपकाराणि कृतानि । तव प्रभावात् सर्वैः देवेन्द्रैरहं वन्दनीया, पूजनीया, नमनीया सञ्जाता इत्युक्त्वा प्रमोदयति । एवं मातृपित्रोः मनोरथेन सह भगवान् श्रीऋषभदेवो वर्द्धते । अथ भगवान् भोगसमर्थो जातस्तदा चतुर्निकायानां देवाः, देव्यश्च मिलित्वा सौधर्मेन्द्र इन्द्राण्या सहितश्चागत्य वरपक्षे इन्द्रादयो भूत्वा,

आओ महाविमाणाओ वीसं सागरोवमट्ठिइआओ आउक्खएणं, भवक्खएणं, ठिइक्खएणं अणंतरं चयं चइत्ता ॥

तस्मिन् काले, तस्मिन् समये श्रमणो भगवान् महावीरः, यो ग्रीष्मस्य उष्णकालस्य, चतुर्थो मासः, अष्टमः पक्षस्तत्र, आषाढस्य सितपक्षस्तत्र, षष्ठीदिवसे महान् विजयो यत्र एतादृशात् पुष्पोत्तरप्रवरपुण्डरीकनामविमानाद् विंशतिसागराऽऽयुष्कात्, तत्र आयुषः क्षयेण, तत्रत्यस्थितिक्षयेण, देवसंबन्धिभवक्षयेण अनन्तरं ततो विमानात् च्युत्वा ॥

इहेव जंबुद्दीवे दीवे, भारहे वासे दाहिणड्ढभरहे इमीसे ओसप्पिणीए सुसमसुसमाए समाए वइक्कन्ताए ।१। सुसमाए समाए वइक्कन्ताए ।२। सुसमदुसमाए समाए वइक्कन्ताए ।३। दुसमसुसमाए समाए बहुवइक्कन्ताए सागरोवमकोडाकोडीए बायालीसवाससहस्सेहिं, ऊणिआए पंचहत्तरीए वासेहिं अद्धनवमेहि य मासेहिं, सेसेहिं ।४। इक्कवीसाइ तित्थयरेहिं इक्खागुकुलसमुप्पन्नेहिं कासवगुत्तेहिं, दोहिं य हरिवंसकुलसमुप्पन्नेहिं गोतमस्सगुत्तेहिं तेविसाए तित्थयरेहिं वइक्कन्तेहिं ॥

इन्द्राण्यः कन्ययाः पक्षे जाताः । सर्वे उत्सवमहोत्सवान् चक्रुः । विवाहविधिं विदधुः । स इन्द्रदर्शितो विवाहविधिरद्याऽपि लोके भवति । सुनन्दा–सुमङ्गलाभ्यां सहितस्य श्रीऋषभदेवस्य विषयसुखं भुञ्जानस्य षट्पूर्वलक्षाणि व्यतीतानि । तदा सुमङ्गलया भरत–ब्राह्मीरूपं युगलं प्रसूतम् । सुनन्दया बाहूबलि–सुन्दरीरूपं युगलं प्रसूतम् । ततः पश्चात् पुनः सुमङ्गलया एकोनपञ्चाशद् युगलानि प्रसूतानि । सुनन्दायाश्च एकमेव युगलमऽभूत्, पुनः सन्तानं किमपि नाऽभूत् । अथ यदा यदा कालो हीनो हीनः समागतः तथा तथा कल्पवृक्षाणां महिमा न्यूनो जातः । युगलिनः परस्परं क्रोधाद् विरूपं कुर्वन्तो हकार–मकार–धिक्कारादिनीतिवाक्यैर्निर्भर्त्स्यमाना अपि न विरमन्ति । नाभिकुलकरो वृद्धो बभूव तदा युगलिनो मिलित्वा ऋषभं विज्ञपयन्ति, अस्माकं न्यायं कुरु । तदा श्रीऋषभो वक्ति–यो राजा भवति स दण्डं करोति । अहं तु राजा नास्मि । युगलिभिरुक्तम्–अस्माकं भवानेव राजा । तदा श्रीऋभदेवेनोक्तम्–नाभिकुलकराः प्रष्टव्याः, ते यद् वदन्ति तत् प्रमाणम् । युगलिभिर्नाभिकुलकराज्ञया गङ्गानदीतटे रेणुपुञ्जोपरि ऋषभदेवं संस्थाप्य स्वयं राज्याभिषेकार्थं जलानयनाय युगलिनो जग्मुः । तस्मिन् प्रस्तावे इन्द्रस्य आसनप्रकम्पो बभूव । अवधिज्ञानेन श्रीऋषभदेवस्य राज्याभिषेकोत्सवावसरं ज्ञात्वा इन्द्र आगत्य राज्ययोग्यं मुकुट–कुण्डल–हाराद्यलङ्कारं परिधाप्य, उच्चैः स्वर्णसिंहासने संस्थापयामास । तावत् ते युगलिनो कमलिनीपत्रे नीरं भृत्वा आजग्मुः । सर्वशरीरं सालङ्कारं दृष्ट्वा, वस्त्रादिभूषितं

दृष्ट्वा पादयोरङ्गुलीनामुपरि पानीयं ढौकयामासुः। इन्द्रस्तेषु विवेकम्, विनयं च दृष्ट्वा "साहु-विणीया पुरिसा, जाया विणीया हु नाम नयरीए। इंदेण कयं नामं, लोयपसिद्धा य सा जाया" ॥ तत्र विनीता नगरी स्थापिता। इन्द्रेण धनदस्य नगरस्य स्थापनाय आदेशो दत्तः। धनदेनागत्य द्वादशयोजनाऽऽयामा नवयोजनविस्तीर्णा, अष्टौ प्रतोल्यः, एकशतधनुरुच्चेन, पञ्चाशद्धनुःपृथुलेन, स्वर्णवप्रेण वेष्टिता। तत्र मध्ये ईशानकूणे सप्तभूमिकं मन्दिरं नाभिभूपस्य निवासार्हं चतुष्कोणं कृतम्। पुनः पूर्वस्यां दिशि तादृक्स्वरूपमेव भरतस्य गृहम् अपि कृतम्। पुनरग्निकूणे बाहूबलवसनार्थं रचितम्। अष्टानवतिकुमाराणां भुवनानि दक्षिणस्यां दिशि। अन्येषामपि क्षत्रियाणां यथायोग्यानि निर्मितानि पश्चिमायाम्। नवनारू-नवकारूणां गृहाणि कृतानि उत्तरस्याम्। व्यापारिणां गृहाणि निर्मितानि नगर्या अन्तराले। एकविंशतिभूमिकं त्रैलोक्यविभ्रमं नाम प्रासादं श्रीऋषभदेवस्य निवासार्हम् एकशताष्टाधिकजालिकासहितं कृतम्। अन्यैरपि घनैर्जिनमन्दिरैः सहिता विनीता नगरी स्थापिता ॥ जन्मकालादारभ्य विंशतिपूर्वलक्षवर्षाणि यदा श्रीऋषभदेवस्य व्यतीतानि तदा राज्याभिषेकोत्सव इन्द्रेण कृतः, देवदूष्याणि परिधापितानि, चन्दनस्य विलेपनानि भगवतः शरीरे कृतानि। एवं विनीतानगर्यां श्रीऋषभदेवं संस्थाप्य इन्द्रः स्वस्थानं जगाम। अथ श्रीऋषभदेवेन हस्तिनः, अश्वाः, गावश्च मनुष्याणां योग्यास्तेषां संग्रहः कारितः, पश्चाचतुर्वर्णस्थापनं कृतम्, पश्चान्नगर्या रक्षाकाराः कोट्टपालाः स्थापिता-

स्तेषाम् उग्रवंशः १ ये गुरुत्वेन स्थापितास्तेषां भोगवंशः २ ये च मित्रत्वेन स्थापितास्तेषां राजन्यवंशः ३ अन्ये ये सेवकत्वेन स्थापितास्ते क्षत्रियाः ४ । अष्टादशवर्णस्थापनं कृतम् । भरतस्य सार्थे प्रसूता ब्राह्मी सा बाहूबलाय परिणायिता, बाहूबलसार्थे जाता सुन्दरी सा भरतस्यार्पिता, भरतेन स्त्रीरत्नार्थं रक्षिता, एवं युगलधर्मो निवारितः श्रीऋषभदेवेन, अथ कालवशात् क्षुधा बह्वी लगति, कल्पवृक्षा नष्टप्रभावाः सञ्जातास्तदा युगलिनः कन्दफलमूलपत्रादीनाम् आहारं कुर्वन्ति तदाहारो न पचति । तदा शालिधान्यं निष्पन्नं श्रीऋषभस्वामिना दृष्टं तल्लात्वा, हस्तेन मर्दयित्वा कणान्निष्काश्य युगलिनां दत्तम्, तदाप्युदरं तुदति । कचम् अन्नं मूलं फलं चाऽपि कल्पवृक्षप्रदत्ताहारभक्षकाणां तेषाम् उदरे न जीर्यते । ते चागत्य ऋषभदेवाय उदरं दर्शयन्ति । भगवानपि तेषाम् उदरं पीड्यमानं स्पर्शयित्वा निराबाधं करोति । कल्पवृक्षैर्विना ते अतीव दुःखिनो भवन्ति । तस्मिन् प्रस्तावे वनमध्ये अग्निरुत्पन्नः, तत्र च पुरा अष्टादशकोटिसागरपर्यन्तं भरतक्षेत्रे बादरोऽग्निर्नासीत् । तम् अपूर्वम्, नवीनम्, निर्मलम्, आश्चर्यकरं पदार्थं दृष्ट्वा युगलिनस्तं गृहीतुं करं चिक्षिपुः । ते च तेन ज्वलन्ति स्म । तदा श्रीऋषभाय स्वकीयम् अङ्गं दर्शयन्ति । स्वामिना अग्नेरुत्थानं ज्ञात्वा तेभ्यः आदेशो दत्तः—अतः परं कन्दमूलबीजपुष्पपत्रादिकम् अग्नौ पक्वं भृष्टं कृत्वा भक्षणीयम् । तत् श्रुत्वा ते कन्दादिकं प्रज्वलति अग्नौ क्षिपन्ति तत् पुनः गृहीतुं न शक्नुवन्तश्चैव तत्रैव तद् भस्मीभवति । पुनः ऋषभदेवाग्रे आगत्य पूत्कूर्वन्ति—

स्वामिन् ! स चाऽग्निरस्मादपि अतीव क्षुधातुरः, वयं यत् तत्र पाकाय क्षपयामः तदस्मभ्यं पश्चान्न ददाति, वयं किं कुर्मः? क्षुधितं निजोदरं दर्शयन्ति, रुदन्ति। तदा श्रीऋषभदेवो गजमारुह्य बहिर्निर्गत्य तटाकात् सार्द्रमृत्तिकां तेभ्य आनाय्य गजकुम्भस्थलोपरि मृत्तिकाया हण्डिकां घटित्वा, अग्नौ संपाच्य तन्मध्ये पानीयान्नयोः प्रमाणं पाकविधिं दर्शयित्वा तान् युगलिनो भोजियामास। ततः पश्चात् सर्वत्र पचनविधिलोके प्रकटीबभूव। तदा श्रीऋषभदेवेन पञ्च शिल्पानि प्रकटीकृतानि–घटकर्म कुम्भकारकर्म १ लोहकारकर्म २ चित्रकर्म ३ सूत्रधारकर्म ४ नापितकर्म्म ५ एतानि कर्माणि पुनर्भगवता शतभेदानि दर्शितानि। अत्र च एकस्य एकस्य कर्मणो विंशतिरवान्तरभेदाः भवन्ति। तदा च शतभेदाः भवन्ति। ततो भगवतः प्रजापतिरिति नाम अभूत्। अथ श्रीऋषभदेवेन ब्राह्मीं दक्षिणहस्तेन अष्टादशलिपयो दर्शिताः, लेखनं लिपिः १८ नन्दीसूत्रे उक्ताः, तद्यथा—हंसलिपि १ भूतलिपि २ यक्षलिपि ३ राक्षसीलिपि ४ उड्डीलिपि ५ यावनीलिपि ६ तुरक्कीलिपि ७ कीरीलिपि ८ द्राविडीलिपि ९ सैन्धवीलिपि १० मालवीलिपि ११ नडीलिपि १२ नागलीलिपि १३ लाटीलिपि १४ पारसीलिपि १५ अनिमित्तीलिपि १५ चाणक्कीलिपि १७ मौलदेवी १८। देशविशेषादन्या अपि लिपयः, तद्यथा—लाटी १ चौडी २ डाहली ३ कानडी ४ गूर्जरी ५ सोरठी ६ मरहट्ठी ७ कौंकणी ८ खुरासाणी ९ मागधी १० सिंहिली ११ हाडी १२ कीरी १३ हम्मीरी १४ परतीरी १५ मसी १६ मालवी १७ महायोधी १८ इत्यादयो

लिपयः। पुनरङ्कानां गणितकला दर्शिता। वामहस्तेन सुन्दरीं प्रति लिपिर्दर्शिता।

ते णं काले णं ते णं समए णं, उसभे णं अरहा कोसलिए दक्खे, दक्खपइण्णे पडिरूवे अल्लीणे भद्दए विणीए वीसं पुव्वसयसहस्साइं कुमारवासमज्झे वसइ, कुमारवासमज्झे वसित्ता तेवट्ठिं च पुव्वसयसहस्साइं रज्जवासमज्झे वसइ, तेवट्ठिं च पुव्वसयसहस्साइं रज्जवासमज्झे वसमाणे लेहाइआओ गणियप्पहाणाओ, सउणरुयपज्जवसाणाओ बावत्तरिं कलाओ। चउसट्ठिं महिलागुणे। सिप्पसयं च कम्माणं, तिन्नि वि पयाहिआओ उवदिसइ, उवदिसित्ता पुत्तसयं रज्जसए अभिसिंचइ, अभिसिंचित्ता—

अर्थः—ऋषभोऽर्हन् कोशलिकः दक्षो विचक्षणः, तथा दक्षप्रतिज्ञः प्रतिज्ञानिर्वाहकः, प्रतिरूपः सर्वगुण-पूर्णः, आलीनः अलिप्तः, भद्रकः सरलस्वभावः, विनीतो विंशतिपूर्वलक्षाणि कुमारवासे, त्रिषष्टिपूर्वलक्षाणि राज्यं भुञ्जानः। लिखनकलात आरभ्य गणितप्रधानाः, शकुन—रुतपर्यवसानाः द्वासप्ततिपुरुषकलाः प्रकटीकृत्य, स्त्रीणां चतुःषष्ठिकलाः प्रकटीकृत्य; अथवा चतुःषष्ठिगुणान् स्त्रीणां प्रकटीकृत्य, सर्वप्रजाभ्यः उपदिश्य शिल्प-

शतम्, विज्ञानशतमुपदिश्य त्रिविधं सेवा-वाणिज्य-कर्षणादिकम् उदरवृत्त्युपायमुपादिश्य पुत्रशतं राज्ये प्रस्थापयति । पुरुषाणां द्वासप्ततिकला इमाः—

लिखितं[1]-पठितं[2]-सङ्ख्या[3] गीतं[4]-नृत्यादि[5]-ताला[6]ः, पटह[7]-मुरज[8]-वीणा[9]-वंश[10]-भेरीपरीक्षा[11] ॥ द्विरद[12]-तुरगशिक्षा[13]
धातु[14]-दृग्[15]-मन्त्रवादौ[16], वलिपलितविनाशो[17] रत्न[18]-नारी[19]-नृलक्ष्म[20] ॥ १ ॥ छन्द[21]स्तर्क[22]-सुनीति[23]-तत्त्व[24]-कविता[25] ज्यो[26]-
तिःश्रुति[27]-वैद्यकं[28], भाषा[29]-योगं[30]-रसायना[31]-ऽञ्जनलिपि[32]ः स्वप्ने[33]-न्द्रजालं[34]-कृषिः[35] ॥ वाणिज्यं[36] नृपसेवनं[37] च शकुनं[38]
वायवं[39]-ग्निसंस्तम्भनं[40], वृष्टि[41]र्लेपन[42]-मर्दनो[43]-र्ध्वगतयो[44] बन्ध[45]भ्रमौ[46] द्वौ घटे ॥ २ ॥ पत्रच्छेदन[47]-मर्मभेदन[48]-फलाकृष्ट्य[49]-
म्बुकृष्टिमता[50], लोकाचार[51]-जनानुवृत्ति[52]-फलभृत्[53] खड्ग[54]-क्षुरीबन्धनम्[55] ॥ मुद्रा[56]-ऽयो[57]-रद[58]-काष्ठ[59]-चित्रकृति[60]-दो[61]-
र्दृग्[62] -मुष्टि[63]-दण्डा[64]-ऽसि[65]-वाग्[66]-युद्धं गारुडं[67]-सर्प[68]-भूतदमनं[69] योगा[70]-ऽब्दं[71]-नामालयम्[72] ॥ ३ ॥

अर्थः-लिखितकला १, पठितकला २, गणितकला ३, गीतकला ४, नृत्यकला ५, तालवादनकला ६, पटहवादनकला ७, मुरजमृदङ्गवादनकला ८, वीणावादनकला ९, वंशपरीक्षा १०, भेरीपरीक्षा ११, गजशिक्षा १२, तुरगशिक्षा १३, धातुवादः १४, दृष्टिवादः १५, मन्त्रवादः १६, वलीपलितविनाशः १७, रत्नपरीक्षा १८, स्त्रीपरीक्षा १९, नरपरीक्षा २०, छन्दोबन्धनम् २१, तर्कजल्पनम् २२, नीतिविचारः २३, तत्त्वविचारः २४, कवित्व-

शक्तिः २५, ज्योतिःशास्त्रज्ञानम् २६, वैद्यकज्ञानम् २७, षड्भाषाज्ञानम् २८, योगाभ्यासः २९, रसायनविधिः ३०, अञ्जनविधिः ३१, अष्टादशलिपिज्ञानम् ३२, स्वप्नलक्षणज्ञानम् ३३, इन्द्रजालदर्शनम् ३४, कृषिज्ञानम् ३५, वाणिज्यविधिः ३६, नृपसेवा ३७, शकुनविचारः ३८, वायुस्तम्भनम् ३९, अग्निस्तम्भनम् ४०, मेघवृष्टिः ४१, विलेपनविधिः ४२, मर्दनविधिः ४३, ऊर्द्ध्वगमनम् ४४, घटबन्धनम् ४५, घटभ्रमः ४६, पत्रच्छेदनम् ४७, मर्मभेदनम् ४८, फलाकर्षणम् ४९, जलाकर्षणम् ५०, लोकाचारः ५१, लोकरञ्जनं ५२, अफलवृक्षाणां सफलीकरणं ५३, खड्गबन्धनं ५४, क्षुरीबन्धनं ५५, मुद्राविधिः ५६, लोहज्ञानं ५७, दन्तसंमारणं ५८, काललक्षणं ५९, चित्रकरणं ६०, बाहुयुद्धं ६१, दृष्टियुद्धं ६२, मुष्टियुद्धं ६३, दण्डयुद्धं ६४, खड्गयुद्धं ६५, वाग्युद्धं ६६, गारुडविद्या ६७, सर्पदमनं ६८, भूतदमनं ६९, योग–द्रव्यानुयोग–अक्षरानुयोग–औषधानुयोगादि ७०, वर्षज्ञानं ७१, नाममाला ७२, इत्यादि पुरुषाणां द्वासप्ततिर्कला भरत–बाहुबलप्रमुखपुत्रेभ्यो दर्शिताः ॥ तथा महिलानां स्त्रीणां चतुःषष्टिर्गुणाः, कला वा दर्शिताः, तद्यथा–नृत्यकला १, औचित्यकला २, चित्रकला ३, वादित्रं ४, मन्त्रं ५, तन्त्रं ६, ज्ञानं ७, विज्ञानं ८, दण्डं ९, जलस्तम्भं १०, गीतगानं ११, तालमानं १२, मेघवृष्टिः १३, फलाकृष्टिः १४, आरामरोपणं १५, आकारगोपनं १६, धर्मविचारः १७, शकुनविचारः १८, क्रियाकल्पनं १९, संस्कृतजल्पनं २०, प्रसादनीतिः २१, धर्मनीतिः २२, वाणीवृद्धिः २३, सुवर्णसिद्धिः २४, सुरभितैलं २५, लीलासञ्चारणं २६, गज–तुरगपरीक्षणं २७,

स्त्री-पुरुषलक्षणं २८, सुवर्ण-रत्नभेदः२९, अष्टादशलिपिपरिच्छेदः३०, तत्कालबुद्धिः३१, वस्तुसिद्धिः३२, वैद्यकक्रिया ३३, कामक्रिया ३४, घटभ्रमं ३५, सारपरिश्रमं ३६, अञ्जनयोगं ३७, चूर्णयोगं ३८, हस्तलाघवं ३९, वचनपाटवं ४०, भोज्यविधिः ४१, वाणिज्यविधिः ४२, मुखमण्डनं ४३, शालिखण्डनं ४४, कथाकथनं ४५, पुष्पग्रथनं ४६, वक्रोक्तिजल्पनं ४७, काव्यशक्तिः ४८, स्फारवेशं ४९, सकलभाषाविशेषः ५०, अभिधानज्ञानं ५१, आभरणपरिधानं ५२, नृत्योपचारं ५३, गृहाचारः ५४, शाठ्यकरणं ५५, परनिराकरणं ५६, धान्यरन्धनं ५७, केशबन्धनं ५८, वीणादिनादं ५९, वितण्डावादं ६०, अङ्कविचारः ६१, लोकव्यवहारः ६२, अन्ताक्षरिका ६३, प्रश्नप्रहेलिका ६४ इत्यादयः चतुःषष्टिर्ब्राह्मी-सुन्दरीपुत्रीभ्यां स्त्रीयोग्याः कला दर्शिताः । अथ पुत्रशताय राज्यं ऋषभदेवः स्वस्वनाम्ना देशान् संस्थाप्य ददौ । तेषां नामानि आह-श्रीभरतः १, बाहूबलिः २, मस्तकः ३, पुत्राङ्गारकः ४, मल्लिदेवः ५, अङ्गज्योतिः ६, मलयदेवः ७, भार्गवतीर्थः ८, वङ्गदेवः ९, वसुदेवः १०, मगधनाथः ११, मानवर्तिकः १२, मानयुक्तः १३, वैदर्भदेवः १४, वनवासनाथः १५, महीपकः १६, धर्मराष्ट्रः १७, मायकदेवः १८, आस्मकः १९, दण्डकः २०, कालिङ्गः २१, ईषिकदेवः २२, पुरुषदेवः २३, अकलः २४, भोगदेवः २५, वीर्यभोगः २६, गणनाथः २७, तीर्णनाथः २८, अर्बुदपतिः २९, आयुर्वीर्यः ३०, वल्लीवसुः ३१, नायकः ३२, काक्षिकः ३३, आनर्तकः ३४, सारिकः ३५, ग्रहपतिः ३६, कुरुदेवः ३७, कच्छनाथः ३८, सुराष्ट्रः ३९,

नर्मद: ४०, सारस्वत: ४१, तापसदेव: ४२, कुरु: ४३, जङ्गल: ४४, पञ्चाल: ४५, सूरसेन: ४६, पुट: ४७, कालङ्कदेव: ४८, काशीकुमार: ४९, कौशल्य: ५०, भद्रकाश: ५१, विकाशक: ५२, त्रिगर्त्त: ५३, आवर्ष: ५४, साल्लु: ५५, मत्सदेव: ५६, कुलीयक: ५७, मूषकदेव: ५८, बाल्हीक: ५९, काम्बोज: ६०, मधुनाथ: ६१, सान्द्रक: ६२, आत्रेय: ६३, यवन: ६४, आभीर: ६५, वानदेव: ६६, वानस: ६७, कैकेय: ६८, सिन्धु: ६९, सौवीर: ७०, गन्धार: ७१, काष्ठदेव: ७२, तोषक: ७३, शौरक: ७४, भारद्वाज: ७५, सुरदेव: ७६, प्रस्थान: ७७, कर्णक: ७८, त्रिपुरनाथ: ७९, अवन्तिनाथ: ८०, वेदपति: ८१, विकन्ध: ८२, किष्कन्ध: ८३, नैषध: ८४, दशार्णनाथ: ८५, कुसुमवर्ण: ८६, भूपालदेव: ८७, पालप्रभु: ८८, कुशल: ८९, पद्म: ९०, विनिद्र: ९१, विकेश: ९२, वैदेह: ९३, कच्छपति: ९४, भद्रदेव: ९५, वज्रदेव: ९६, सान्द्रभद्र: ९७, सेतज: ९८, वत्सनाथ: ९९, अङ्गदेव: १०० इति पुत्रशतस्य नामानि ज्ञेयानि, एतेषां पृथक् पृथग् देशानां राज्यं दत्तम्, तथा विनीताया नगर्याः भरताय राज्यं दत्तम्, बहुलीदेशे तक्षशिलाया नगर्या बाहूबलिने राज्यं दत्त्वा श्रीऋषभदेव: सुखं तिष्ठति ।

उसभे णं अरहा कोसलिए कासवगुत्ते णं तस्स णं पंच नामधिज्जा एवमाहिज्जंति, तं जहा—उसभे इ वा, पढमराया इ वा, पढमभिक्खायरे इ वा, पढमजिणे इ वा, पढमतित्थयरे इ वा ॥२१०॥

अर्थः—ऋषभोऽर्हन् कौशलिकस्तस्य पञ्च नामानि उच्यन्ते, तानि कानि—ऋषभः १ प्रथमराजा २ प्रथमभिक्षाचरः ३ प्रथमजिनः—प्रथमकेवली ४ प्रथमतीर्थंकरः ५ अथ श्रीऋषभदेवः एवं लोकस्थितिं सर्वां दर्शयित्वा, ततो दीक्षां गृहीत्वा, ततः केवलज्ञानं प्राप्य, धर्मोपदेशेन भव्यजनान् प्रतिबोध्य मोक्षं प्राप्तः। तथा सूत्रकारो वदति—

पुणरवि लोअंतिएहिं जिअकप्पिएहिं देवेहिं ताहिं इट्ठाहिं, जाव—वग्गूहिं, सेसं तं चेव सव्वं भाणिअव्वं, जाव—दाणं दाइआणं परिभाइत्ता।—

अर्थः—पुनस्तस्मिन् अवसरे लोकान्तिकदेवाः आगत्य, ताभिरिष्टाभिः वाग्भिः दीक्षाऽवसरे भगवन्तं प्रेरयन्ति। तदा काले तु प्रायशो लोकाः निर्धनाः, दरिद्राश्च न सन्ति, तथाऽपि स्वर्णरत्नादिकम् अन्नादिदानं धर्मस्थिति-दर्शनार्थं संवत्सरं यावद् दानं ददाति॥

जे से गिम्हाणं पढमे मासे, पढमे पक्खे चित्तबहुले, तस्स णं चित्तबहुलस्स अट्ठमीपक्खे णं, दिवसस्स पच्छिमे भागे सुदंसणाए सिबियाए सदेवमणुआसुराए परिसाए समणुगम्ममाण-मग्गे, जाव—विणीयं रायहाणिं मज्झंमज्झेणं णिग्गच्छइ, णिग्गच्छित्ता जेणेव सिद्धत्थवणे

श्रमणो भगवान् महावीरः चरमतीर्थंकरः, प्रथमतीर्थंकरेण श्रीआदीश्वरेण भरतस्य अग्रे कथितः। स भगवान् ब्राह्मणकुण्डग्रामे नगरे ऋषभदत्तस्य ब्राह्मणस्य कोडालसगोत्रस्य भार्याया देवानन्दाया ब्राह्मण्या जालंधरसगोत्रिण्याः पूर्वरात्रापररात्रकालसमये—मध्यरात्रिसमये उत्तराफाल्गुनीनक्षत्रेण सह चन्द्रयोगे उपागते सति, देवसंबन्धिनि आहारे व्यतिक्रान्ते, देवसंबन्धिनि भवे व्यतिक्रान्ते देवसंबन्धिनि शरीरे व्यतिक्रान्ते कुक्षौ गर्भत्वेन अवक्रान्तः—समुत्पन्नः। 'मरीचिस्तव पुत्रः, अन्त्यतीर्थंकरो भविष्यति' इति आदीश्वरेण पुरा उक्तम्। तत्कथार्थं श्रीमहावीरस्य सप्तविंशतिर्भवाः कथ्यन्ते—

ग्रामे[1]श[2]स्त्रिदशो[3] मरीचिरमरो[4] षोढा परिव्राट्[10] सुरः[16], संसारो बहु विश्वभूतिरमरो[17][18] नारायणो[19] नारकः[20]।
सिंहो[21] नैरयिको[22] भवेषु[2] बहुशश्चक्री[23] सुरो[24] नन्दनः[25], श्रीपुष्पोत्तरनिर्जरो[26]ऽवतु भवाद् वीरस्त्रिलोकीगुरुः[27] ॥१॥

अथ भवस्वरूपं कथ्यते—अस्मिन् जम्बूद्वीपे पश्चिममहाविदेहे प्रतिष्ठानपत्तने एको नयसारनामा नृपस्य भृत्यो ग्रामचिन्तकः कणवारकोऽभूत्। स चैकदा नृपाज्ञया शकटानि, बहून् भृत्यांश्च लात्वा काष्ठग्रहणार्थं वने जगा-

१. आवश्यकनिर्युक्तिबृहद्वृत्तौ, लघुवृत्तौ; प्राकृतवीरचरित्रे तथा त्रिषष्टिशलाकापुरुषचरित्रान्तर्गते श्रीवीरचरित्रेऽपि चेत्यादिप्राचीनशास्त्रेषु प्रथममेव भववर्णनं कृतं तेन इहापि प्रथममेव भववर्णनं कृतमिति युक्तमेव ॥ २ 'तिरियमणुएसु' त्ति पुनः कतिचिद् भवग्रहणानि—तिर्यग्मनुष्येषूत्पद्य—इति आवश्यकबृहद्वृत्तौ ॥

उज्जाणे जेणेव असोगवरपायवे तेणेव उवागच्छइ, उवागच्छित्ता असोगवरपायवस्स अहे जाव-सयमेव चउमुट्ठिअं लोअं करेइ, करित्ता छट्ठेणं भत्तेणं अपाणएणं उत्तरासाढाहिं नक्खत्तेणं जोगमुवागएणं उग्गाणं, भोगाणं, राइण्णाणं, खत्तियाणं च चउहिं पुरिससहस्सेहिं सद्धिं एगं देवदूसमादाय मुंडे भवित्ता अगाराओ अणगारियं पव्वइए ॥ २११ ॥

अर्थः-स्वामी संवच्छरदानं दत्त्वा ग्रीष्मकालस्य प्रथमे मासे, प्रथमे पक्षे चैत्रवदिअष्टम्या दिने द्विप्रहराद्-नन्तरं सुदर्शनानाम्न्यां शिबिकायां स्थित्वा देव-मनुजश्रेण्या सहितो यथा महावीरदीक्षाऽवसरे स्नान-मज्ज-नालङ्कारवादित्रादिध्वनिमहोत्सववर्णितस्तथैवाडम्बरेण विनीताया नगर्या मध्ये भूत्वा यत्र सिद्धार्थवनं यत्राऽ-शोकस्तस्य छायायां समागत्य, शिबिकातः उत्तीर्य, स्वयमेव सर्वाभरणानि समुत्तार्य चातुर्मौष्टिकं लोचमक-रोत् । तदानीं गौरवर्णस्य पृष्ठदेशे पञ्चमुष्टिसत्कान् श्यामान् केशान् उभयोः स्कन्धयोः विस्तीर्णान् दृष्ट्वा इन्द्रेण स्वामी विज्ञप्तः । स्वामिन् ! एते केशा रमणीया दृश्यन्ते एते रक्षणीयाः । तदा इन्द्रवचसा भगवता श्रीऋषभेण चातुर्मौष्टिकं लुञ्चनमकारि । ततोऽद्याऽपि श्रीआदीश्वरप्रतिमास्कन्धोपरि जटा भवति । यदा दीक्षा गृहीता तदा स्वामिना षष्ठभक्तम्, तदाप्यपानकं कृतम् । पुनः यदा उत्तराषाढानक्षत्रे उग्र-भोग-राजन्य-क्षत्रियवंशानां

पुरुषाणां चतुःसहस्रेण श्रीऋषभदेववत् तैरपि तथैव कृतम्। दीक्षाऽवसरे इन्द्रेण भगवतः स्कन्धोपरि एकं देवदूष्यं वस्त्रं समर्पितम्। भगवान् गृहस्थावासं त्यक्त्वा अनगारो जातः। तस्मिन् समये च भगवतः ऋषभदेवस्य चतुर्थ मनःपर्यवज्ञानमुत्पन्नम् ॥

ते णं काले णं ते णं समये णं, उसभे णं अरहा कोसलिए एगं वाससहस्सं निच्चं वोसट्ठकाए चियत्तदेहे जे केइ उवसग्गा, जाव० अप्पाणं भावेमाणस्स इक्कं वाससहस्सं विइक्कंतं, तओ णं।

अर्थः-ऋषभोऽर्हन् कौशलिक एकसहस्रवर्षाणि नित्यं व्युत्सृष्टदेहः-देहस्य चिन्तारहितः, ग्रामाऽनुग्रामं विहरन्, चतुंस्सहस्रं राज्ञामपि तथैव भिक्षार्थं विहरन्, भिक्षाम् अलभमानम्, क्षुधाम् असहमानम्, कन्दमूलफलादिभिराहारं विधाय वनमध्ये स्थित्वा, लज्जया पश्चाद् न अव्रजत्। तापसधर्मं प्रकटीचकार। वल्कलचीवराणि दधौ। अथ च भगवतो दीक्षाऽवसरे कच्छ-महाकच्छयोः ऋषभदेवेन पुत्रत्वेन मानितयोः पुत्रौ नमि-विनमी नामानौ। तौ च कस्मैचित् कार्याय कुत्रचित् प्रदेशे गतौ अभूताम्। पृष्ठतः सर्वे देशाः सर्वेभ्यः पुत्रेभ्यो वण्टयित्वा प्रदत्ताः, तौ नमिविनमी च विस्मृतौ। दीक्षाग्रहणानन्तरं तौ समागतौ, भरतं पप्रच्छतुः। श्रीऋषभदेवोऽस्माकं पिता काऽस्ति? भरतेनोक्तम्-स्वामिना दीक्षा गृहीता, युवाभ्यां मम सेवा कर्तव्या, अहं युवाभ्यां

देशग्रासं दास्यामि। तदा तौ भरतम् अपमान्य राज्यार्थं स्वामिसमीपे आगत्य भगवतो विहारं कुर्वतोऽग्रे कण्टकादिकं मार्गाद् निवारयन्तौ, कायोत्सर्गेण स्थितस्य दंशमशकादीन् उड्डापयन्तौ; प्रातः प्रातर्वन्दनापूर्वकं स्वामिन्! राज्यप्रदो भव, इत्युक्तवन्तौ नित्यं तिष्ठतः। एकदा वन्दनार्थमागतेन धरणेन्द्रेण तयोर्भगवद्भक्तितुष्टेन भगवद्रूपं कृत्वा ताभ्याम् उभाभ्याम् अष्टचत्वारिंशत्सहस्रं पठितसिद्धा विद्याः प्रदत्ताः, षोडशविद्यादेव्यानां समाराधनं च दत्तम्। वैताढ्यपर्वते दक्षिणश्रेण्यां रथनूपुरचक्रवालप्रमुखाणि पञ्चाशद् नगराणि। अथ उत्तरश्रेण्यां गगनवल्लभप्रमुखाणि षष्टिर्नगराणि वासयित्वा प्रदत्तानि। तत्र विद्याबलेन लोकान् वासयित्वा यावन्ति नगराणि तावन्तो देशान् संस्थाप्य तौ पृथक् पृथग् नमि–विनमी तत्र राज्यं पालयामासतुः। अथ श्रीऋषभदेवस्य ग्रामनुग्रामं विहरतः भिक्षायै भ्रममाणस्य, एकस्मिन् प्राग्भवे बलीवर्दानां मुखे छीङ्कीबन्धनवशाद् उपार्जितान्तरायकर्मोदयवशाद् यत्र तत्र हस्त्य–श्व–रथ–कन्या–मणि–मुक्ताफलस्वर्णादिदानेन प्रार्थ्यमानस्य, शुद्धाहारम् अलभमानस्य एकं वर्षं जगाम। तदा च तस्मिन् कर्मणि क्षयाय उन्मुखे सति, हस्तिपुरे बाहुबलेः पुत्रस्य सोमयशसो राज्ञः पुत्रेण श्रेयांसकुमारेण रात्रौ ईदृशः स्वप्नो दृष्टः–मेरुः कलुषो दुग्धेन प्रक्षाल्य विशदीकृतः। तत्रैव पुनः सोमयशसो राज्ञश्च रजन्याम् एतादृशः स्वप्नोऽभूत्। कश्चित् सुभटो वैरिभिः पराभूयमानः श्रेयांसकुमारस्य साहाय्याद् जितकाशी जातः। तत्रैव एकेन नगरश्रेष्ठिना चैतादृशः स्वप्नो दृष्टः–सूर्यकिरणा भ्रश्य-

मानाः श्रेयांसकुमारेण करेण संयोजिताः। प्रातः सर्वेऽपि सभायाम् आगत्य ऊचुः–अथ श्रेयांसकुमारस्य कश्चिन् महान् लाभो भविता, इत्युक्त्वा यावत्ते सर्वे स्वगृहं प्राप्ताः । अस्मिन् प्रस्तावे श्रीऋषभस्वाम्यपि आहारार्थं नगरे भ्रममाणः आहारेण विना अपरैः वस्तुभिः प्राार्थ्यमानः श्रेयांसेन गवाक्षस्थितेन दृष्टः, जिनमुद्रादर्शनात् श्रेयांसस्य जातिस्मरणज्ञानमुत्पन्नम् । तदा साधुभ्यः आहारदानविधिं ज्ञात्वा भगवन्तं निमन्त्र्य, तत्समये एव समागतैरिक्षुरसघटैः शुद्धैः स्वामी निमन्त्रितः । स्वामिनाऽपि तदाऽऽहारं प्रासुकं विज्ञाय उभौ हस्तौ प्रसारितौ । अथ च कविकल्लोलाद् हस्तयोः वादः उच्यते–तस्मिन् करप्रसारणसमये पूर्वं दक्षिणो हस्तो वामं हस्तं प्रत्यवादीत्–भो वामहस्त! त्वं भिक्षां मार्गय, मया दानानि दत्तानि, तदाहं कथं दातुरग्रे दानाय व्रजामि, सदा उपरि एव अभूवम् अहम् इदानीं कथं नीचैः भवामि । राज्यस्थापनायां, पवित्रकर्मणि, देवपूजायाम्, नाटकविधौ, चित्रकर्माणि पुरा कृतानि सन्ति । तेन हेतुना भो वाम! त्वया इदमपि भिक्षाकर्म करणीयम् इति श्रुत्वा वामो हस्तः ईर्ष्यां कृत्वा अवादीत्–अरे दक्षिण उदरभरणतत्पर! कीदृशं मानं त्वं करोषि? भोजनाद्यवसरे सुकरे कार्ये त्वम् अग्रगो भवसि । रे कातर! दुष्करे कठिने कार्ये, सङ्ग्रामादौ बाणादिमोक्षणे, खेटकग्रहणे, रिपूणाम् अग्रे अहं व्रजामि । त्वं तु पश्चान्नष्ट्वा व्रजसि । त्वं मां नीचकर्मकारकं वदसि । स्वकीयं नीचत्वं न जानासि ।

मिष्टां मिष्टां वार्तां ब्रवीषि। नीच ! त्वमेव भिक्षां याचयस्व । एवम् उभयोर्महान् वादः सञ्जायते ॥ वर्षदिवसे आहारो मिलितस्तदा च उभयोर्हस्तयोर्विवादमण्डितं दृष्ट्वा भगवता उभयोः कलहं निवार्य–भो वाम ! त्वया शुभकर्म उत्पाद्यते, दक्षिणेन दानादिं दत्त्वा सफलीक्रियते संयोगसिद्धिः । एकाकी कदापि न भव्यः । उभाभ्यां मेलापं कृत्वा कार्यं कर्तव्यम् इति भगवद्वचः श्रुत्वा एकीभूतौ, भगवता इक्षुरसविहरणाय प्रसारितौ तदा कविर्वदति–श्रेयांससदृशं चित्तं, श्रीऋषभसदृशं पात्रम्, इक्षुरससदृशं वित्तं, पुण्येन एव तत्त्रयं प्राप्यते। श्रेयांसेन इक्षुरसेन भगवान् संतोषितः। भगवता करपात्रेण पारणं कृतम् । अत्र च कश्चित् वक्ष्यति–भगवतः कराद् इक्षुरसपतनाद् अयतना न भवति ? तत्र उत्तरम्—

माइज्ज घडसहस्सं, अहवा माइज्ज सायरा सव्वे। एयारसलद्धीओ, सा पाणिपडिग्गही भवयं ॥ १ ॥

अर्थः–सहस्रं घटा हस्तयोर्मायान्ति । अथवा सर्वे सागरा मायान्ति। इयं पाणिपात्रिकलब्धिरस्ति। 'श्रीआवश्यके भगवद्धस्ते एकाशताऽष्टघटकस्य दानं दत्तं श्रेयांसेन एवं उक्तमस्ति' अथ च तद्दानात् किं फलमभूत्। देवैरहो दानम् अहो दानम् इति उद्घोषणा कृता, आकाशे देवदुन्दुभयो वाद्यन्ते स्म, चतुर्निकायदेवाः मिलिता; सार्ध द्वादशकोटिः स्वर्णिकानां ववर्ष, श्रेयांसकुमारस्य गृहं धनेन भृतम्, यशसा भृतम्, भगवान् रसेन संतुष्टः; श्रेयांसेन पात्रदानाद् मोक्षफलमुपार्जितम् । यत्र च भगवतः पारणमभूत् तत्र रत्नमयं चत्वरं

कारितम्। तद्दिनं लोके 'अक्षयतृतीया' जाता। आदीश्वरस्य इक्षुरसेन पारणाम् अभूत्। अन्येषां तीर्थकराणां परमान्नेन अभूत्। तदा सर्वैर्लोकैः श्रेयांसः पृष्टः–वयम् आहारदानं न विद्मः, त्वया भगवान् आहारार्थी कथं ज्ञातः? तदा श्रेयांसो भगवज्जीवेन सह अष्टभवसत्कं सम्बन्धम् अवादीत्। यदा भगवज्जीवो ललिताङ्गदेवस्तदाऽहं स्वयंप्रभा देवी १, यदा च स्वामी वज्रजङ्घो राजा तदाऽहं श्रीमती राज्ञी २, पश्चाद् युगलिनौ ३, सौधर्मदेवलोके उभौ मित्रौ ४, स्वामी वैद्यस्तदाहमपि मित्रः ५, अच्युतदेवलोकेऽपि मित्रः ६, वज्रनाभचक्रवर्तिर्यदा प्रभुरभूत् तदाहं सारथी ७, तत्र च तीर्थंकरसमीपे दीक्षा गृहीता आसीत्। सा मुद्रा इदानीं भगवद्दर्शनान्मम स्मृता, तदा मया ज्ञातम् एते तीर्थकरा आहारार्थं भ्रमन्ति, एभ्यः शुद्धम् आहारं दातव्यम्, तत् श्रुत्वा लोकैः सर्वैरपि आहारविधिर्ज्ञातः। अथ श्रीऋषभस्वामी ग्रामानुग्रामं विहरन् बहुलीदेशे तक्षशिलायां बाहुबलराजधान्याम् उपवने सन्ध्यासमये आगत्य कायोत्सर्गे स्थितः। तदा वनपालकेन आगत्य बाहुबलिने वर्द्धापनिका प्रदत्ता। बाहुबलिना चिन्तितम्–प्रातःसमये ऋद्धिं विस्तार्य पितरं वन्दिष्ये इति विचार्य प्रभाते यावत् चतुर्विधां सेनां सज्जयति। अन्तःपुरादीन् शृङ्गारयति। तावन्महती वेला लग्ना। भगवता सूर्योदये विहारः कृतः। भगवान् वायुरिव अप्रतिबद्धविहारी। पश्चाद् बाहुबलि ऋद्धिं विस्तार्य आगत्य सकलं वनं विलोकितं, भगवन्तं अदृष्ट्वा अतीव दूनो मनसि अज्ञासीत्–यदि अहं सन्ध्यायामेव आगमिष्यं तदाहं अद्रक्ष्यं, मनसि महद् दुःखं कृत्वा

कर्णयोरङ्गुली क्षिप्त्वा 'बाबा आदम' इत्युच्चैः स्वरेण पुत्कृतिं चक्रे। पश्चाद् यत्र भगवान् कायोत्सर्गे स्थित आसीत्। तत्र रत्नमयपीठे पादुके अकारयत्। अथ श्रीऋषभदेवस्य दीक्षाग्रहणाद् अनन्तरं माता मरुदेवी भरतं प्रति नित्यं उपालंभयति। अहो भरत! म्लानां पुष्पमालामिव मां त्यक्त्वा गतः ऋषभः, सर्वां ऋद्धिं त्यक्त्वा एकाकी वनवासी सञ्जातः, क्षुधया तृषया पीडितो भविष्यति। क्वचित् स्मशान–गिरिगुहादौ तिष्ठन् शीत–वात–वर्षा–तप–दंश–मशकादिभिः पीड्यमानो भविष्यति, अहं च दुर्मरा पुत्रं दुःखिनं श्रुत्वा न म्रिये। मत्तुल्या पृथिव्यां न काचिद् दुःखभागिनी वर्त्तते, अहो भरत! त्वं राज्यसुखे लुब्धस्तिष्ठसि, मत्पुत्रस्य कदापि शुद्धिं न गृह्णासि, सर्वे भ्रातरो यूयं सरसवत्या आहारं नित्यं कुरुथ, मत्पुत्रो गृहे गृहे नीरसां भिक्षां मार्गयति। यूयं पट्टकूलवस्त्राणि परिधत्थ, मत्पुत्रो नग्नस्तिष्ठति। यूयं हंसतूलशय्यायां शयानाश्चामरैर्वीज्यमानाः सुस्वर-गीतध्वनिं शृण्वन्तो रजनीं गमयथ मत्पुत्रश्च विषमोन्नतभूमौ दर्भादेरुपरि शयानः, कायोत्सर्गादौ स्थितो वा कुत्रचिद् वनकुञ्जादौ वातेन पीड्यमानः कर्णयोर्मशकश्रेणीनां भणत्कृतिं शृण्वानो रात्रिं निर्गमयन् भविष्यति। मदीयपुत्र ऋषभो यादृशो दुःखी वर्तते तादृग् दुःखी अपरः कोऽपि नाऽस्ति। कर्हिचिद् इयं सर्वा ऋद्धिः मदीयपुत्रस्यैवाऽऽसीत्। सैवेयं ऋद्धिः भवद्भिः सर्वैः भ्रातृभिरेकत्रीभूय मत्पुत्रस्य राज्यं उद्दाल्य गृहीतमस्ति। मत्पुत्रो देशाद् बहिर्निष्कासितोऽस्ति। कदाऽपि तत् शुद्धिमपि न गृहीष्यथ इति नित्यं भरतमुपालंभ्य अश्रु-

पातपूर्वकं रुदत्या मरुदेव्याश्चक्षुषी पटलेन समाच्छादिते, तदा भरतो वदति–हे मातः! दुःखं मा कुरु, तव पुत्रः ऋषभोऽतीव सुखी वर्तते। तदा मरुदेवी वदति–इदानीं मां दर्शय, यदाऽत्रायास्यति तदा त्वां दर्शयिष्यामि। अथ भगवान् परदेशे विहरन् चारित्रं च पालयन्, एवं आत्मानं धर्मेण भावयतः श्रीऋषभदेवस्य वर्षाणां एकसहस्रं अभूत्। अथ भगवतः कदा केवलज्ञानं उत्पन्नं तत्सूत्रेणाह—

जे से हेमंताणं चउत्थे मासे, सत्तमे पक्खे फग्गुणबहुले, तस्स णं फग्गुणबहुलस्स इक्कारसी-पक्खेणं पुव्वण्हकालसमयंसि पुरिमतालस्स नयरस्स बहिआ सगडमुहंसि उज्जाणंसि नग्गोहवरपायवस्स अहे अट्ठमेणं भत्तेणं अपाणएणं आसाढाहिं नक्खत्तेणं जोगमुवागएणं झाणंतरिआए वट्टमाणस्स अणंते जाव० जाणमाणे पासमाणे विहरइ ॥ २१२ ॥

अर्थः–यः शीतकालस्य चतुर्थो मासः, सप्तमः पक्षः फाल्गुनकृष्णः तत्र फाल्गुनकृष्णस्य एकादश्यां प्रथम द्विप्रहरे पुरिमतालनगरस्य बहिः शकटमुखे उद्याने वटवृक्षस्य तले अष्टमभक्तेन तपसा अपानकेन उत्तराषाढा-नक्षत्रे शुक्लध्यानं ध्यायमानस्य श्रीऋषभदेवस्य केवलज्ञानं केवलदर्शनं समुत्पन्नं, तदा च भगवान् जीवाजीवादि षट् द्रव्याणां स्वभावं जानन् पश्यन् विहरति। तस्मिन्नेव समये श्रीभरतभूपस्य आयुधशालायां चक्ररत्नं

समुत्पन्नं। तदा उभयोः केवलज्ञान-चक्रयोः समकाल एव द्वाभ्यां पुरुषाभ्यां भरतभूपस्य वर्द्धापनिका प्रदत्ता, भरतेन च उभौ सन्तुष्टिदानेन विसर्जितौ। ततश्च भरतेन चिन्तितम्-प्रथमं कस्य महोत्सवं करोमि इति क्षणं विमृश्य ताते पूजिते, चक्रपूजनम् इति निश्चित्य, 'धर्मार्थे सकलं त्यजेत्' इति विचार्य मरुदेव्याः समीपे आगत्य वदति-हे मातः! त्वं मां सदा एव उपालम्भं ददाना आसीः। मत्पुत्रस्य यूयं शुद्धिमपि न गृह्णीथ। अद्य तव पुत्रस्य महिमानं दर्शयामि। त्वत्पुत्रः समागतोऽस्ति इत्युक्त्वा गजोपरि श्रीमरुदेवीम् आरोहयित्वा पश्चात् स्वयमारुह्य महताऽऽडम्बरेण समवसरणाय आनयाञ्चक्रे। मार्गे आगच्छन्ती मरुदेवी कर्णाभ्यां देवदुन्दुभिध्वनिं श्रुत्वा भरतं पप्रच्छ-कोऽयं ध्वनिः, कुत्र श्रूयते? तदा भरत उवाच-भो मातः! तव पुत्रस्याऽग्रे अयं वादित्राणां ध्वनिर्भवति। तथाऽपि मरुदेवी न मनुते स्म। ततश्चाग्रे आगच्छन्ती देव-देवीनां महान्तं कोलाहलं शुश्राव। पुनर्भरतं पप्रच्छ-कोऽयं कोलाहलः? तदा भरतः पुनरपि उवाच-तव पुत्रस्य सेवार्थं देवाः, देव्यश्च आयान्ति, यान्ति च तेषां कोलाहलोऽयं भवति। एतदपि वाक्यं न मनुते स्म। तदा पुनरपि भरतो वदति-हे मातः! चेत्तव पुत्रस्य गृहं स्वर्ण-रूप्य-रत्नमयं त्वं विलोकयेः तदा त्वमपि जानीयाः। तत्स्वरूपं तु मया वर्णयितुं न शक्यते इति श्रुत्वा सत्यं मन्यमाना, हर्षाश्रुसहिता नेत्रे हस्तेन मर्दयन्ती, निष्पटला जाता सती साक्षात् सर्वं समवसरणस्वरूपं तीर्थकरस्य सर्वं महिमानं ददर्श। दृष्ट्वा चिन्तितम्-अहो मोहविकलं जीवं धिक्! सर्वेऽपि जीवाः

स्वार्थिनः, अहमेवम् अज्ञासिषं मत्पुत्रः ऋषभः एकाकी दुःखी भविष्यति, भरताय उपालम्भं ददाना आसं, मया पुनरस्यैव दुःखेन चक्षुस्तेजोऽपि गमितम्, अयं तु कदाऽपि मम न सस्मार । मह्यं सन्देशमात्रमपि न प्रेषितम्–'हे मातः! त्वया मम चिन्ता न कार्या अहं गाढं सुख्यस्मि' इति । अयं मद्दुःखं न जानाति तर्हि मदीयं एकाङ्गं प्रेम, अहं सरागा, अयं वीतरागः एवं विचारयन्ती मरुदेवी द्वादश भावना भावयन्ती गुणस्थानकेषु आरोहणं कुर्वाणा क्षपकश्रेण्या अन्तकृत्केवलिभावं प्राप्य मुक्तिं जगाम । अत्र कविर्भावं वदति–श्रीऋषभ-देवसदृशः कोऽपि सुपुत्रो नाऽभूत् । यस्तु एकवर्षसहस्रं यावद् दुष्करं तपः कृत्वा केवलज्ञानरत्नमुत्पाद्य मात्रे ददौ । मरुदेवी सदृशी काचिद् माता नासीत् । या च पुत्रं सिद्धिनारीपरणयनाय उन्मुखं ज्ञात्वा तन्मेलापं कर्तुं पूर्वं सिद्धिपुर्यां जगाम । अथ पुनः मरुदेवीशरीरं क्षीरसमुद्रे देवैः प्रवाहितम् । भरतं च शोकहर्षाकुलं इन्द्रः प्रतिबोध्य, समवसरणे आनीय श्रीऋषभदेवं प्रणामयित्वा भरतस्य शोकं निर्वर्तयामास । श्रीआदीश्वरो द्वादश पर्षदाग्रे धर्मदेशनां प्रकाशयामास । तत्र प्रथमदेशनायां धर्मं श्रुत्वा पञ्चशतं भरतस्य पुत्राः, सप्तशतं भरतस्य पौत्राः प्रतिबोधं प्रापुः, द्वादशशतकुमारैर्दीक्षा गृहीता । तत्र पुण्डरीकः प्रथमो गणभृत् स्थापितः । द्वादशशतकुमारेषु मरीचिरपि दीक्षित आसीत् । तदा ब्राह्म्यपि बाहुबलं पृष्ट्वा दीक्षां जग्राह । सुन्दरी तु स्त्रीरत्नार्थं भरतेन रक्षिता । एवं धर्मं प्रकाश्य स्वामी अन्यत्र विजहार । अथ भरतः स्वगृहमागत्य चक्ररत्नस्य

म। एकस्य तरोस्तले स्वयं स्थितः। तत्र सार्थाद् भ्रष्टाः साधवः केचित् समागताः, तान् दृष्ट्वा, संमुखं गत्वा, वन्दित्वा, स्वस्थाने समानीय, पूर्वकृताहारेण प्रतिलाभ्य तेभ्यो धर्मं श्रुत्वा च स्वमार्गे प्रापितास्ते। तत्र साधूनां वन्दनादाऽहारदानाच्च नयसारेण सम्यक्त्वमुपार्जितम्। अयं प्रथमोभवः। ततः आयुःक्षये मृत्वा प्रथमदेवलोके देवो बभूव। इति द्वितीयो भवः। ततश्च्युत्वा ऋषभदेवस्य पुत्रो भरतचक्रवर्ती, तत्पुत्रो बभूव मरीचिरिति नाम्ना। एकदा ऋषभदेशनां श्रुत्वा दीक्षां जग्राह। तदाऽन्येऽपि भरतपुत्राः पञ्च शतानि, सप्त शतानि पौत्राः तैरपि दीक्षा गृहीता। तदा मरीचिर्दीक्षां पालयितुमक्षमः, साधुवेषं त्यक्त्वा त्रिदण्डिवेषं जग्राह। पादे पादरक्षा धृता, मस्तकस्य मुण्डनं कारयति–लुञ्चनं कारयितुमसमर्थः, हस्ते जलकमण्डलुकं धारयति, गैरिकरक्तानि वस्त्राणि परिदधाति, समवसरणस्य बहिर्द्वारदेशे अनेन वेषेण तिष्ठति, ये जनास्तत्पार्श्वे धर्मं शृण्वन्ति, तान् प्रतिबोध्य भगवतः पार्श्वे दीक्षां ग्राहयति। एकदा भरतः ऋषभदेवस्य वन्दनं कृत्वा समवसरणे इति प्रश्नं करोति स्वामिन्! अस्यामवसर्पिण्यां कति तीर्थंकरा भविष्यन्ति? तदा स्वामिनोक्तम्–चतुर्विंशतिस्तीर्थंकरा भविष्यन्ति। पुनरपि पृष्टम्–स्वामिन्! अस्मिन् समवसरणे कश्चित् तीर्थंकरजीवो विद्यते न वा? स्वामिनोक्तम्–समवसरणबाह्यद्वारदेशे मरीचिस्तव पुत्रः त्रिदण्डिवेषेण तिष्ठति, स चतुर्विंशतितमस्तीर्थंकरो महावीरनामा भविष्यति। स एव पुराऽस्मिन् एव भरते क्षत्रे त्रिपृष्ठनामा वासुदेवो भावी। पुनरपि महाविदेहे मूकानगर्यां प्रिय-

पूजार्थम् अष्टौ दिनानि यावद् महोत्सवं कृत्वा चक्ररत्नमाराधयामास । ततश्चक्ररत्नं चचाल । तस्य पश्चात् सैन्यं संमील्य षट् खण्डानि साधयामास। दिग्विजये षष्टिवर्षसहस्राणि लग्नानि । ततः पश्चाद् गृहे समागतस्तदा सुन्दरीम् आचाम्लतपः षष्टिवर्षसहस्राणि कृत्वा सञ्जातां दुर्बलशरीरां दृष्ट्वा, दीक्षायै कृतनिश्चयां ज्ञात्वा दीक्षायै अनुमतिं ददौ । तया स्वाम्यग्रे दीक्षा जगृहे । तदा आयुधशालायां चक्ररत्नं न प्रविवेश । महामात्यान् पप्रच्छ–आयुधशालायां कथं चक्ररत्नं न प्रविशति? तदा महामात्या ऊचुः–भ्रातरो न त्वया वशीकृताः । तद्-वचसा अष्टानवतिभ्रातॄन् दूतान् स्वसेवायै प्रेषयामास। ते च सर्वे मिलित्वा ऋषभस्वामिनम् अष्टापदे समवसृतं प्रष्टुं गताः, तदा भगवता वैतालीयाध्ययनं श्राव्य प्रतिबोध्य दीक्षिताः । ते च सर्वे केवलिनो बभूवुः । तत्सर्वं भरतेन श्रुतं तथापि चक्ररत्नम् आयुधशालायाम् अप्रविश्यमानं दृष्ट्वा । मन्त्रिवचनाद् एकं बाहूबलिं अजितं विज्ञाय मनसि शुशोचे–यावद् बाहूबलिर्न जितस्तावत् षट्खण्डसाधनमपि निष्फलमेवेति ज्ञात्वा सुवेगनामानं दूतवरं बाहूबलेराकारणाय लेखं दत्त्वा भरतः तक्षशिलायां प्रेषितवान् । सोऽपि तदीये देशे व्रजन् मुदमुदितलोकान् बाहूबले रागिणः, वनेऽपि क्षेत्ररक्षाकारिणस्त्रीजनान् मधुरस्वरैर्बाहूबलेर्गीतगुणान् गायतः, भरतस्य नाममात्रमपि अजानन् दृष्ट्वा विस्मयं प्राप । अनुक्रमेण तक्षशिलायां बाहूबलेस्सभायां सुवेगो दूतः समागत्य प्रणतिं विधाय बाहूबलये लेखं ददौ । बाहूबलिरपि भरतस्य कुशलपृच्छापूर्वकं लेखं वाचयित्वा स्वकीयाऽऽह्वानं

ज्ञात्वा रुष्टो दूतम् अपमान्य निर्भर्त्स्य निष्काशयामास । दूतश्च भीतः सन् जीवग्राहं नश्यन् भरताय सर्वं निवेदितवान् । तदा भरतः सर्वं सैन्यं संमील्य बाहूबलेरुपरि यात्रायै चचाल । बाहूबलिरपि तदागमनं विज्ञाय स्वसैन्यं संमील्य सेनानीं पुत्रं सोमयशसं कृत्वा स्वदेशसीमाशिरसि संस्थितः । भरतश्च स्वपुत्रं सूर्ययशसं सेनान्यं चकार । अनयोः महान् सङ्ग्रामोऽभूत्, द्वादशवर्ष यावत्, तत्सङ्ग्रामाद् बहवो देशा उद्वसिताः । तत् स्वरूपं ज्ञात्वा च इन्द्रस्समागत्य उभयो भ्रात्रोरग्रे कलिं निवारणाय न्याययुद्धस्य उपदेशं ददौ । तदा पञ्च युद्धानि स्थापितानि–प्रथमं दृग्युद्धं, द्वितीयं वाग्युद्धं, तृतीयं बाहुयुद्धं, चतुर्थं दण्डयुद्धम्, पञ्चमं मुष्टियुद्धम्, एतानि पञ्च युद्धानि कल्पितानि। उभयोरपि सैन्यं पृथक् पृथक् समतायां स्थितम्, इन्द्रादयो देवा अपि साक्षिणः स्थितास्सन्ति । तत्र प्रथमे दृग्युद्धे भरतो हारितः। द्वितीये वाग्युद्धेऽपि पुनर्भरतो हारितः। तृतीये बाहुमोटनयुद्धेऽपि भरत एव हारितः। चतुर्थे दण्डयुद्धे भरतो हारितः। अथ पञ्चमे मुष्टियुद्धे भरतेन बाहूबलिशिरसि मुष्टिप्रहारो दत्तः, तदा बाहूबलिराजा जानुप्रमाणं पृथव्यां गतः। पुनर्बलान्निसृत्य यदा मुष्टिम् उत्पाट्य बाहूबलिः भरतस्य हननाय धावितस्तदा भीतो भरतश्चक्रं मुमोच । चक्रं तु स्वगोत्रे न प्रभवति । अतो बाहूबलिमालिङ्ग्य भरतस्य हस्ते जगाम। तदा भरतो मनसि अतीवदूनो बाहूबलिं रुष्टम् आगच्छन्तं दृष्ट्वा किमयं नवीनश्चक्रवर्ती मदीयां सर्वां ऋद्धिं गृहीष्यति? इति यावत् चिन्तयति, देवा अपि बाहूबलेरेव सर्वेषु युद्धेषु जयमुद्घोषयन्ति। तावदेव मुष्टिं दृढां बद्धां

मारणाय आगच्छतो मार्गे बाहूबलेश्चेतसि विचारः समुत्पन्नः—मदीयोऽयं जेष्ठो भ्राता राज्यसुखार्थं किं हन्यते ? धिग् राज्यं, यदर्थं एतदकार्यं क्रियते एवं विचार्य, मदीया मुष्टिरपि विफलत्वं न याति इति विचार्य मस्तके मुष्टिना लोचं विधाय केवलज्ञानं मम उत्पत्स्यते तदाऽतः स्थानात् कायोत्सर्गं पारयित्वा श्रीऋषभदेवस्य समवसरणे गमिष्यामीत्यऽभिग्रहं बाहुबलिश्चकार। अथ च तदा भरतोऽपि आगत्य पादयोर्लगित्वा स्वापराधं क्षामयन् इन्द्रादिभिः प्रतिबोधितो बाहूबलेः सुताय पादयोर्नामयित्वा, पितृराज्यं च तस्मै दत्त्वा स्वगृहमाजगाम । अथ च बाहुबलिमुनेः कायोत्सर्गे स्थितस्य एकं वर्षं बभूव । तदा श्रीऋषभदेवेन आसन्नकेवलज्ञानं दृष्ट्वा तत्पार्श्वे तत्प्रतिबोधनाय ब्राह्मी-सुन्दर्यौ साध्व्यौ भगन्यौ प्रेषिते । तेऽपि तत्रागत्य मधुरस्वरेण—"वीरा तुम्हे गज थकी उत्तरो गज चढ्यां केवल न होइ रे" इति ध्वनिं चक्रतुः । तं गीतध्वनिं च श्रुत्वा बाहुबलिः वृक्षलता-तृणादिवेष्टित-शरीरः, पक्षिभिः स्मश्रु-कूर्च-कर्णादिषु कृतनीडो मनसि चिन्तयति स्म—अहो! मम भगन्योर्ब्राह्मीसुन्दर्योः साध्व्योः गीतध्वनिः, मया तु गजास्त्यक्ताः, इमे चैवं वदतः गजादुत्तीर्यताम् । तदा ज्ञायते सत्यम् अहं मानगजारूढोऽस्मि । जानामि-प्रथमं गृहीतदीक्षाणां भरतपौत्राणां कथं पादयोः लगामि, इति मम मनसि वृथाऽभिमानः। 'धर्मेऽभिमानो विनयघातकरः,' ततः इति विचार्य पादौ उत्पाटयतः, वल्लीतृणान् त्रोटयतः, मानस्य वलं मोटयत एव केवलज्ञानं बाहुबलेरुत्पन्नम् । तदा श्रीबाहुबलिः केवली समवसरणे केवलिपर्षदि समाजगाम ।

ब्राह्मीसुन्दौ अपि स्वस्थानं ईयतुः । इति भरतस्य बाहुबलेश्च सम्बन्धः संक्षेपेण अवसरवशादुक्तः ॥
अथ श्रीऋषभस्वामिनः परिवारं वदति सूत्रकारः—

उसभस्स णं अरहो कोसलियस्स चउरासी (८४) गणा, चउरासी (८४) गणहरा हुत्था । उसभसेणपामुक्खा णं चउरासीइओ समणसाहस्सीओ (८४०००) उक्कोसिया समणसंपया हुत्था ॥२१४॥ उसभस्स णं० बंभि–सुंदरिपामुक्खाणं अज्जियाणं तिण्णि सयसाहस्सीओ (३०००००) उक्कोसिया अज्जियासंपया हुत्था ॥ २१५ ॥ उसभस्स णं० सिज्जंसपामुक्खाणं समणोवासगाणं तिण्णि सयसाहस्सीओ पंचासयसहस्सा (३५००००) उक्कोसिया समणोवासगसंपया हुत्था ॥ २१६ ॥ उसभस्स णं० सुभद्दापामुक्खाणं समणोवासियाणं पंचसयसाहस्सीओ चउपण्णं च सहस्सा (५५४०००) उक्कोसिया समणोवासियाणं संपया हुत्था ॥२१७॥ उसभस्स णं० चत्तारि सहस्सा सत्तसया पण्णासा (४७५०) चउद्दसपुव्वीणं अजिणाणं जिणसंकासाणं

जाव–उक्कोसिया चउद्दसपुव्विसंपया हुत्था ॥२१८॥ उसभस्स णं नव सहस्सा ( ९००० ) ओहिनाणीणं उक्कोसिया० ॥ २१९ ॥ उसभस्स णं० वीससहस्सा ( २०००० ) केवलनाणीणं उक्कोसिया० ॥ २२० ॥ उसभस्स णं० वीससहस्सा, छच्च सया ( २०६०० ) वेउव्वियाणं उक्कोसिया० ॥ २२१ ॥ उसभस्स णं० बारस सहस्सा, छच्च सया, पण्णासा (१२६५०) विउलमईणं अड्ढाइज्जेसु दीवसमुद्देसु सन्नीणं पंचिंदियाणं पज्जतगाणं मणोगए भावे जाणमाणाणं, पासमाणाणं उक्कोसिआ विउलमइसंपया हुत्था ॥२२२॥ उसभस्स णं० बारस सहस्सा, छच्च सया, पण्णासा (१२६५०) वाईणं० ॥२२३॥ उसभस्स णं० वीसं अंतेवासिसहस्सा (२००००) सिद्धा, चत्तालीसं अज्जियासाहस्सीओ ( ४०००० ) सिद्धाओ ॥ २२४ ॥ उसभस्स णं० अरहओ बावीससहस्सा, नवसया ( २२९०० ) अणुत्तरोववाइयाणं गइकल्लाणाणं जाव–भद्दाणं उक्कोसिआ० ॥ २२५ ॥

श्रीऋषभस्याऽर्हतः कौशलिकस्य चतुरशीतिर्गणाः, ८४ चतुरशीतिर्गणधरा ८४ बभूवुः । ऋषभसेनप्रमुखाश्चतुर-

शीतिसहस्रप्रमाणाः (८४०००) साधूनां सम्पद् आसीत्॥ ऋषभस्यार्हतो ब्राह्मी–सुन्दरीप्रमुखाः त्रिलक्षप्रमाणाः ( ३०००००) साध्वीनां सम्पत् । ऋषभस्यार्हतः श्रेयांसप्रमुखाः त्रिलक्षपञ्चाशत्सहस्रप्रमाणाः ( ३५०००० ) श्राद्धानां संपत् ॥ ऋषभस्यार्हतः कौशलिकस्य सुभद्राप्रमुखाः पञ्चलक्ष–चतुःपञ्चाशत्सहस्रप्रमाणाः (५५४०००) श्राद्धीनां सम्पत् ॥ ऋषभस्यार्हतः कौशलिकस्य चतुःसहस्र–सप्तशत–पञ्चाशत्प्रमाणाः (४७५०) चतुर्दशपूर्वधराणाम् अजिनानामपि जिनसदृशानां सम्पद् आसीत् ॥ ऋषभस्यार्हतो नवसहस्रप्रमाणाः (९०००) अवधिज्ञानिनां सम्पत् ॥ ऋषभस्यार्हतः स्वहस्तदीक्षिता विंशतिसहस्रं (२००००) केवलिनो जाताः ॥ ऋषभस्यार्हतः कौशलिकस्य विंशतिसहस्रं षट्शताधिकं ( २०६०० ) वैक्रियलब्धीनां सम्पद् अभूत् ॥ ऋषभस्याऽर्हतः सार्द्धद्वयद्वीप–समुद्रान्तर्वर्तिनां संज्ञिपर्याप्तकपञ्चेन्द्रियाणां मनोभावज्ञानाम्, एतादृशानां मनःपर्यवज्ञानिनां साधूनां बिपुलमतीनां द्वादशसहस्र–षट्शत–पञ्चाशत् ( १२६५० ) प्रमाणाः, सम्पद् अभूत् ॥ ऋषभस्यार्हतः कौशलिकस्य द्वादशसहस्र–षट्शत–पञ्चाशत् ( १२६५० ) प्रमाणाः, वादिनाम् इन्द्रादिभिरपि अजेयानां संपद् आसीत् ॥ ऋषभस्यार्हतः कौशलिकस्य स्वहस्तदीक्षिताः विंशतिसहस्रं ( २०००० ) साधवो मोक्षं गताः । ऋषभस्यार्हतः कौशलिकस्य स्वहस्तदीक्षिताः साध्व्यश्चत्वारिंशत्सहस्र (४००००) प्रमाणाः मोक्षं जग्मुः ॥ ऋषभस्यार्हतः कौशलिकस्य द्वाविंशतिसहस्रनवशताधिकप्रमाणाः (२२९००) पञ्चानुत्तरविमानवासिनां साधूनाम् एकावतारिणां सम्पदासीत् ॥

उसभस्स णं० अरहओ दुविहा अंतगडभूमी हुत्था, तं जहा—जुगंतगडभूमी, परियायंतगडभूमी य। जाव—असंखिज्जाओ पुरिसजुगाओ जुगंतगडभूमी, अंतोमुहुत्तपरिआए अंतमकासी ॥ २२६ ॥

ऋषभस्यार्हतः कौशलिकस्य द्विविधा अन्तकृद्भूमिः—युगान्तकृद्भूमिः १, पर्यायान्तकृद्भूमिश्च २। श्रीऋषभदेवस्य पट्टेऽसङ्ख्याता भूपा मुक्तिं गताः। श्रीअजितनाथस्य पितरं जितशत्रुभूपं यावद् मुक्तिमार्गो व्यूढः एषा युगान्तकृद्भूमिः १। श्रीऋषभदेवस्य केवलज्ञानोत्पत्तेरनन्तरम् अन्तर्मुहूर्तेन मरुदेवी मुक्तिं प्राप्ता एषा पर्यायान्तकृद्भूमिः २ ॥

ते णं काले णं, ते णं समए णं उसभे अरहा कोसलिए वीसं पुव्वसयसहस्साइं कुमारवासमज्झे वसित्ता णं, तेवट्ठिं पुव्वसयसहस्साइं रज्जवासमज्झे वसित्ता णं, तेसीइं पुव्वसयसहस्साइं अगारवासमज्झे वसित्ता णं, एगं वाससहस्सं छउमत्थपरिआयं पाउणित्ता, एगं पुव्वसयसहस्सं वाससहस्सूणं केवलिपरिआयं पाउणित्ता पडिपुण्णं पुव्वसयसहस्सं सामण्णपरियागं पाउ-

णित्ता, चउरासीइं पुव्वसयसहस्साइं सव्वाउयं पालइत्ता खीणे वेयणिज्जा–ऽऽउय–नाम–गुत्ते इमीसे ओसप्पिणीए सुसमदुसमाए समाए बहुविइक्कंताए तिहिं वासेहिं, अद्धनवमेहि य मासेहिं सेसेहिं, जे से हेमंताणं तच्चे मासे, पंचमे पक्खे माहबहुले, तस्स णं माहबहुलस्स (ग्रं० ९००) तेरसीपक्खे णं उप्पिं अट्ठावयसेलसिहरंसि दसहिं अणगारसहस्सेहिं (१०००) सद्धिं चोद्दसमेणं भत्तेणं अपाणएणं अभीइणा नक्खत्तेणं जोगमुवागएणं पुव्वण्हकालसमयंसि संपलियंकनिसण्णे कालगए विइक्कंते, जाव–सव्वदुक्खप्पहीणे ॥ २२७ ॥

अर्थः–ऋषभोऽर्हन् कौशलिको विंशतिपूर्वलक्षाणां यावत् कुमारपदवीं भुङ्क्त्वा, त्रिषष्ठिपूर्वलक्षं यावद् राज्यं भुङ्क्त्वा, त्र्यशीतिपूर्वलक्षं यावद् गृहस्थावासे स्थित्वा, एकसहस्रवर्षं यावत् छद्मस्थदीक्षां प्रपाल्य एकसहस्रवर्षेणोनम् एकं पूर्वलक्षं केवलज्ञानसहितं चारित्रं प्रपाल्य, सम्पूर्णैकपूर्वलक्षं यावत् सर्वं चारित्रपर्यायं संपाल्य, चतुरशीतिपूर्वलक्षं यावत् सर्वायुः प्रपाल्य तस्यान्ते वेदनीयाऽऽयुर्नाम–गोत्राणां चतुर्णा अघातिकर्मणां क्षयेऽस्याम् एवावसर्पिण्यां तृतीये सुखमदुःखमारके प्रचुरे गते सति वर्षत्रये, सार्द्धाष्टमासे, तस्य तृतीयारकस्य

शेषे सति शीतकालस्य तृतीये मासे, पञ्चमे पक्षे, माघवदित्रयोदशीदिने; अष्टापदपर्वतस्योपरि दससहस्र-(१०००० ) साधुभिस्सहितः षड्भिरुपवासैरपानकैः अभीचिनक्षत्रे चन्द्रसंयोगे समागते सति प्रातःसमयाद् द्विप्रहरमध्ये पद्मासनेन स्थितो भगवान् मुक्तिं प्राप्तः । सर्वदुःखरहितः सञ्जातः ॥

उसभस्स णं अरहओ कोसलियस्स कालगयस्स जाव–सव्वदुक्खप्पहीणस्स तिण्णि वासा, अद्धनवमा य मासा विइक्कंता, तओ वि परं एगा सागरोवमकोडाकोडी तिवासअद्धनवमा-साहियबायालीसाए वाससहस्सेहिं ऊणिया विइकंता, एयम्मि समए समणे भगवं महावीरे परिनिव्वुडे, तओ वि परं नववाससया विइक्कंता, दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ ॥ २२८ ॥

श्रीऋषभस्य मुक्तिगमानादनन्तरं त्रिभिर्वर्षैः, सार्द्धाष्टभिर्मासैः तृतीयारक उत्तीर्णः, ततः पश्चाच्चतुर्थारको लग्नः, तत्र त्रयोविंशतितीर्थकराः बभूवुः । आदीश्वरस्य निर्वाणाद् एका कोटाकोटिः सागरोपमाणां त्रिवर्ष–सार्धाष्ट-मास–द्विचत्वारिंशत्सहस्रवर्षैरूना यदा गता तदा श्रीवीरस्य निर्वाणमभूत् । श्रीवीरनिर्वाणाद् नवशतवर्षैरशी-

तिवर्षैश्च (९८०) कल्पसूत्रं पुस्तकेषु लिखितम् । इत्यनेन श्रीआदीश्वरस्य पञ्च कल्याणकानि संक्षेपेण निरूपितानि । शासनाऽधीश्वरश्रीवर्धमानस्वामी, गुरुक्रमेण श्रीगौतमयावत् श्रीसङ्घे सर्वदा श्रेयः प्रवर्तताम् ॥

श्रीकल्पसूत्रवरनाममहागमस्य, गूढार्थभावसहितस्य गुणाकरस्य ।
लक्ष्मीनिधेर्विहितवल्लभकामितस्य, व्याख्यानसप्तममगात् परिपूर्तिभावम् ॥ ७ ॥

॥ इति श्रीकल्पसूत्रकल्पद्रुमकलिकायां लक्ष्मीवल्लभोपाध्ययविरचितायां सप्तमं व्याख्यानं समाप्तम् ॥ ७ ॥



मित्रो नाम चक्रवर्ती भावी। इमां वार्तां श्रुत्वा भरतो भगवतस्तस्य वन्दनस्य आज्ञां लात्वा प्रसन्नमना मरीचिं वन्दित्वेति अवादीत्–भो मरीचे! त्वं भरतक्षेत्रे प्रथमो वासुदेवो भविष्यसि। ततो महाविदेहे प्रियमित्रो नाम चक्रवर्ती भविष्यसि। पुनरत्रैव भरतक्षेत्रे चतुर्विंशतितमस्तीर्थंकरो भविष्यसि। तस्मात् त्वां वन्दे, न तु चक्रवर्त्यादिपदव्यर्थम्। 'यथा वर्तमानजिनो वन्दनीयः, तथा भावी जिनोऽपि वन्दनीयः, इत्युक्त्वा भरतः स्वगृहं गतः। ततो मरीचिरिति वचनं श्रुत्वा प्रसन्नीभूय अहंकारवाक्यं कथयामास–मम पिता चक्रवर्ती, मम पितामहस्तीर्थंकरः, अहं च चक्रवर्ती भविष्यामि, वासुदेवोऽपि भविष्यामि, तीर्थंकरोऽपि भविष्यामि। मम वासुदेवपदमधिकं समेष्यति, तस्माद् मम कुलमत्युत्तमम्। इत्युक्त्वा मुहुर्मुहुः स्वकीयभुजमास्फाल्य ननर्त, एवं कुलमदम्, गोत्रमदं कृत्वा नीचैर्गोत्रकर्म उपार्जितम्। अथैकदा मरीचिशरीरे व्याधिरुत्पन्नः, तदा साधुः कश्चित् तस्य वैयावृत्यं न करोति। ततो मरीचिना ज्ञातम्–यदा मम शरीरे समाधानं भवति, तदा अहमेकं कंचित् शिष्यं करोमि, मम शरीरे रोगादिक्रान्ते सति सेवां करोति। अथ च कतिषु दिनेषु मरीचिः स्वस्थो जातः, तदैकः कपिलनामा राजपुत्रो मरीचिपार्श्वे आगतः। मरीचिमुखाद् धर्मं श्रुत्वा, कपिलः प्रतिबुद्धोऽवादीत्–मह्यं दीक्षां देहि। तदा मरीचिरुवाच–ऋषभदेवपार्श्वे गत्वा दीक्षां गृहाण। तदा कपिलः ऋषभदेवं समवसरणस्य लीलाधारकं दृष्ट्वा आगत्य मरीचिं कथयामास–ऋषभदेवे धर्मः कोऽपि नास्ति, स तु राज्यलीलासुखं भुङ्क्ते।

## अथ अष्टमी वाचना स्थविरावली व्याख्यायते ।

ते णं काले णं, ते णं समए णं समणस्स भगवओ महावीरस्स नव गणा, इक्कारस गणहरा हुत्था ॥१॥ से केणट्ठेणं भंते! एवं वुच्चइ–समणस्स भगवओ महावीरस्स नव गणा, इक्कारस गणहरा हुत्था ॥ २ ॥

तस्मिन् काले, तस्मिन् समये श्रमणस्य भगवतो महावीरस्य नव गणाः, एकादश गणधराश्च अभवन् । 'से केण'त्ति 'से' शब्दः, अथशब्दार्थः, केनाऽर्थेन कारणेन हे भदन्त! एवमुच्यते–गणा नव, गणधरा एकादश । कथम्? यतः–'जावइया जस्स गणा तावइया गणहरा तस्स'त्ति वचनात्, यस्य तीर्थङ्करस्य यावन्तो गणा भवन्ति तावन्तस्तस्य गणधरा भवन्ति । सर्वजिनानां गणधर–गणयोस्तुल्यत्वेऽपि श्रीवीरस्य कथम् एवम्? तत्रोत्तरमाह–अकम्पिता–ऽचलभ्रात्रोरेकरूपैव वाचना जाता, एवं मेतार्य–प्रभासयोरपि; एकैव वाचना प्रजाता । समुदायो हि गणः, इति नव गणाः ॥

समणस्स भगवओ महावीरस्स जिट्ठे इंदभूई अणगारे गोयमगुत्ते णं पंच समणसयाइं वाएइ,

मज्झिमए अग्गिभूई अणगारे गोयमगुत्ते णं पंच समणसयाइं वाएइ, कणीअसे अणगारे वाउभूई गोयमगुत्ते णं पंच समणसयाइं वाएइ, थेरे अज्जवियत्ते भारद्दाए गुत्ते णं पंच समणसयाइं वाएइ, थेरे अज्जसुहम्मे अग्गिवेसायणे गुत्ते णं पंच समणसयाइं वाएइ, थेरे मंडितपुत्ते वासिट्ठे गुत्ते णं अद्धुट्ठाइं समणसयाइं वाएइ, थेरे मोरिअपुत्ते कासवे गुत्ते णं अद्धुट्ठाइं समणसयाइं वाएइ, थेरे अकंपिए गोयमे गुत्ते णं, थेरे अयलभाया हारिआयणे गुत्ते णं–पत्तेयं एते दुण्णि वि थेरा, तिण्णि तिण्णि समणसयाइं वाएंति; थेरे अज्जमेइज्जे, थेरे पभासे–एए दुण्णि वि थेरा कोडिन्न गुत्ते णं तिण्णि तिण्णि समणसयाइं वाएंति । से तेणट्ठेणं अज्जो ! एवं वुच्चइ–समणस्स भगवओ महावीरस्स नव गणा, इक्कारस गणहरा हुत्था ॥ ३ ॥ सव्वे वि णं एते समणस्स भगवओ महावीरस्स एक्कारस वि गणहरा दुवालसंगिणो, चउदसपुव्विणो समत्तगणिपिडगधारगा रायगिहे नगरे मासिएणं भत्तेणं अपाणएणं कालगया, जाव–सव्वदुक्खप्पहीणा ॥

थेरे इंदभूई, थेरे अज्जसुहम्मे य सिद्धिगए महावीरे पच्छा दुण्णि वि थेरा परिनिव्वुया ॥ जे इमे अज्जत्ताए समणा निग्गंथा विहरंति, एए णं सव्वे अज्जसुहम्मस्स अणगारस्स आवच्चिज्जा, अवसेसा गणहरा निरवच्चा वुच्छिन्ना ॥ ४ ॥

श्रीमहावीरस्य ज्येष्ठ इन्द्रभूतिनामा अनगारो गौतमगोत्रीयः स पञ्चशतश्रमणान् वाचयति–वाचनां ददाति १। मध्यमोऽग्निभूतिनामा अनगारो गौतमगोत्रीयः सोऽपि पञ्चशतश्रमणान् वाचयति २। कनिष्ठो लघुर्वायुभूतिनामा गौतमगोत्रीयः सोऽपि पञ्चशतश्रमणान् वाचयति, एते त्रयोऽपि भ्रातरः ३। चतुर्थ आर्यव्यक्तनामा भारद्वाजगोत्रीयः सोऽपि पञ्चशतश्रमणान् वाचयति ४। पञ्चमः सुधर्मस्वामी अग्निवैश्यायनगोत्रीयः सोऽपि पञ्चशतश्रमणान् वाचयति ५। षष्ठो मण्डितपुत्रो वासिष्ठगोत्रीयः, मण्डितश्चासौ पुत्रश्च धनदेवस्य मण्डितः पुत्रः। केचित्तु एवं व्याख्यानयन्ति–मण्डित इति धनदेवस्य नामान्तरम्, तस्य पुत्रो मण्डितपुत्रः, स सार्धत्रिशतश्रमणान् वाचयति ६। सप्तमो मौर्यपुत्रः काश्यपगोत्रीयः सोऽपि सार्धत्रिशतश्रमणान् वाचयति। अत्र मण्डित–मौर्यपुत्रयोरेकमातृत्वेन, भ्रात्रोरपि यद्भिन्नगोत्राभिधानं तत् पृथग्जनकापेक्षया। यतो मण्डितस्य पिता धनदेवः, मौर्यपुत्रस्य तु सूर्यः पिता, माता तु द्वयोरपि एकैव विजयादेवी। एवं कृते न विरोधः। यतः, तत्र देशे एकस्मिन् पतौ

मृते द्वितीयपतिकरणं न दोषाय, इति वृद्धाः ७। अष्टमोऽकम्पितो गौतमगोत्रीयः ८।, अचलभ्राता नवमो हार्यायनगोत्रीयः, एतौ द्वावपि गणधरौ त्रिशत–त्रिशतश्रमणान् वाचयति ९। दशमो मेतार्यः १०, एकादशमो प्रभासः, एतौ द्वावपि 'कोडिन्न'–कौण्डिन्यगोत्रीयौ त्रिशत–त्रिशतश्रमणान् वाचयति ११। तेन कारणेन नव गणाः, एकादश गणधराश्च, एतेषां परिवार ईयान् जातः–चत्वारः सहस्राश्चतुःशतानि च ४४००। एते एकादश गणधराः कीदृशा इत्याह–एते सर्वेऽपि गणधरा द्वादशाङ्गिणः, आचाराङ्गादि–दृष्टवादान्तश्रुतवन्तः। कथं? स्वयं तेषां प्रणयनात्। पुनः कीदृशाः? चतुर्दशपूर्विणः, पूर्वाणाम् अङ्गान्तर्गतत्वेऽपि पूर्वं प्रणयनात्, अनेकविद्या–मन्त्राद्यर्थमयत्वात्, महाप्रमाणत्वाच्च। प्राधान्यख्यापनार्थं पुनरुपादानम्। पुनः कीदृशाः? द्वादशाङ्गित्वं सूत्रमात्रेऽपि स्यादत आह–समस्तगणिपिटकधारकाः, गणोऽस्यास्तीति गणी भावाचार्यः, तस्य पिटकमिव रत्नादिकरण्डकमिव गणिपिटकं द्वादशाङ्गी, तदपि न देशतः स्थूलभद्रस्येव, किन्तु समस्तं सर्वाक्षरसन्निपातित्वाद् धारयन्ति सूत्रतोऽर्थतश्च। पुनः कीदृशाः? राजगृहे नगरे मासिकभक्तेन अपानकेन कालं गताः, तत्रापि नव गणधराः श्रीमहावीरे जीवति सति मोक्षं गताः। परं श्रीगौतमस्वामी वीरनिर्वाणाद् द्वादशवर्षे मोक्षं गतः। अथ च श्रीसुधर्मस्वामी पञ्चमगणधरो वीरनिर्वाणाद् विंशतिवर्षे मोक्षं गतः, परम् 'अज्जत्ताए' आर्यतया, अद्यतनयुगे वा ये इमे श्रमणा निर्ग्रन्था विहरन्ति, एते

आर्यसुधर्मस्य अपत्यानि–तत्सन्तानजा इत्यर्थः । अवशेषा गणधरा निरपत्याः–शिष्यसन्तानरहिता जाताः । स्वस्वमरणकाले स्वस्वगणस्य सुधर्मस्वामिनिसर्गात् । अथ सुधर्मतः स्थविरावलीं प्राह–

समणे भगवं महावीरे कासवगुत्ते णं । समणस्स णं भगवओ महावीरस्स कासवगुत्तस्स अज्जसुहम्मे थेरे अंतेवासी अग्गिवेसायणगुत्ते णं १, थेरस्स णं अज्जसुहम्मस्स अग्गिवेसायणगुत्तस्स अज्जजंबुनामे थेरे अंतेवासी कासवगुत्ते णं २, थेरस्स णं अज्जजंबुणामस्स कासवगुत्तस्स अज्जप्पभवे थेरे अंतेवासी कच्चायणसगुत्ते ३, थेरस्स णं अज्जप्पभवस्स कच्चायणसगुत्तस्स अज्जसिज्जंभवे थेरे अंतेवासी मणगपिया वच्छसगुत्ते ४, थेरस्स णं अज्जसिज्जंभवस्स मणगपिउणो वच्छसगुत्तस्स अज्जजसभद्दे थेरे अंतेवासी तुंगियायणसगुत्ते ॥ ५ ॥

अथ व्याख्यालापनिकामात्रेण श्रीमहावीरस्य अन्तेवासी अग्निवैश्यायनगोत्रीयः श्रीसुधर्मस्वामी १ । श्रीसुधर्मस्वामिनोऽन्तेवासी काश्यपगोत्रीयः श्रीजम्बूस्वामी २ । श्रीजम्बूस्वामिनोऽन्तेवासी कात्यायनगोत्रीयः श्रीप्रभवस्वामी ३ । श्रीप्रभवस्वामिनोऽन्तेवासी मनकपिता वत्सगोत्रीयः श्रीशय्यंभवः ४ । श्रीशय्यंभवस्वामिनोऽन्तेवासी

तुङ्गियायनगोत्रीयो श्रीयशोभद्रः ५॥ अथ एतेषां पञ्चानां स्थविराणां संबन्धा अनुक्रमेण एवं ज्ञेयाः, तथाहि–अथ श्रीवीरपट्टे सुधर्मस्वामी, तस्य संबन्धोऽयम्, तथाहि–कुल्लागसन्निवेशे धम्मिल्लनामा ब्राह्मणः, तस्य भार्या भद्दिला, तयोः पुत्रः सुधर्मा चतुर्दश (१४) विद्यानिधानः, पञ्चाशद्वर्षान्ते ५० वीरसमीपे दीक्षा। त्रिंशद्वर्षाणि ३० यावद्वीरचरणकमलसेवा। द्वादश वर्षाणि १२ वीरमोक्षात् छद्मस्थावस्थायां स्थितः। अष्टौ वर्षाणि ८ केवलपर्यायः, एवं वर्षशतं (१००) सर्वम् आयुः प्रपाल्य श्रीजम्बूस्वामिनं स्वकीयपट्टे स्थापयित्वा मोक्षं गतः १॥ जम्बूस्वामिचरित्रमिदम्–एकदा श्रीमहावीरदेवस्य समवसरणे अनेकदेव–चतुरग्रदेवीसहितः, महातेजःपुञ्जविराजमानो विद्युन्माली देवो वीरं वन्दितुं समागतः। तदा श्रेणिकेन पृष्टम्–हे स्वामिन्! अस्य देवस्य एतादृशी विस्मयकारिणी अधिका कान्तिः कथम्? ततः स्वामिना प्रोक्तम्–हे श्रेणिक! अनेन देवेन पूर्वभवे महाविदेहक्षेत्रे राजकुमारेण शिवेन वैराग्यं प्राप्य द्वादश वर्षाणि महत्तपः कृतम्। तथाहि–उपवासद्वयं कृत्वा पारणे आचाम्लम्, एवं द्वादश वर्षाणि निरन्तरं तपः कृतम्। तस्य प्रभावेन पञ्चमे ब्रह्मदेवलोके तिर्यग्जृम्भको देवो महर्द्धिकोऽभूत्। अथायं देवः सप्तमे दिने देवलोकतश्च्युत्वा राजगृहनगरे ऋषभदत्तः श्रेष्ठी, धारिणी भार्या, तयोः पुत्र उत्पत्स्यते। ततस्तथैवोत्पन्नः, जन्मोत्सवः कृतः। गर्भस्थेऽस्मिन् मात्रा जम्बूवृक्षो दृष्टः, ततो 'जम्बूकुमारः' इति नाम दत्तम्, क्रमाद्यौवनावस्थां प्राप्तः, परं श्रीसुधर्मस्वामिपार्श्वे धर्मं श्रुत्वा वैराग्यवान् जातः। मातृपितृ-

प्रमुखाऽऽग्रहाद् नीरागोऽपि अष्ट कन्यापाणिग्रहणं मेने । एकदा सुधर्मस्वामिपार्श्वे धर्मं श्रुत्वा दीक्षाया आदेशग्रहणार्थं गृहे आगच्छन् प्रतोल्यां यन्त्रादागताद् प्रस्तराद् मरणमागतं टालयित्वा पश्चान्निवृत्य श्रीसुधर्मस्वामिपार्श्वे ब्रह्मव्रतं ललौ । तस्मिन् गृहीतेऽपि मातृपितृप्रमुखाऽऽग्रहात् पाणिग्रहणं चक्रे। रात्रौ ता अष्टौ अपि कन्याः प्रतिबोधयित्वा, तालोद्धाटिनीविद्याभृचौर्यार्थं प्रविष्टः प्रभवनामा चौरोऽपि प्रतिबोधितः । प्रभाते जम्बूकुमारो दीक्षाग्रहणाय उत्थितस्तदा अष्टौ कन्याः ८, अष्टौ तासां मातरः ८, अष्टौ तासां पितरः ८, जम्बूस्वामिनो मातापितरौ २, एवं षड्विंशतिः २६, चौराणां पञ्चशत्या सह प्रभवः ५०१, सर्वैः ५२७ तैः सह जम्बूकुमारो दीक्षां ललौ, मुक्तिं गतः । येन जम्बूकुमारेण नवपरिणीता अष्टौ कन्याः, नवनवतिस्वर्णकोट्यश्च त्यक्ताः, पुनश्चरमकेवली जातः । श्रीमहावीराच्चतुःषष्टिवर्षे ६४ सिद्धः । यस्मिन् मुक्तिं गते एतानि दश वस्तूनि विच्छेदं गतानि । तथाहि— मनःपर्ययज्ञानम् १, परमावधिज्ञानम् २, पुलाकलब्धिः ३, आहारकशरीरम् ४, क्षपकश्रेणिः ५, उपशमश्रेणिः ६, जिनकल्पमार्गः ७, परिहारविशुद्धिचारित्रं सूक्ष्मसंपरायचारित्रं यथाख्यातचारित्रम् इति संयमत्रिकम् ८, केवलज्ञानम् ९, सिद्धिगमनम् १० इति। श्रीजम्बूस्वामिनोऽहोऽधिकं सौभाग्यम्, यतो यं पतिं प्राप्य अद्यापि शिवश्रीरन्यं पतिं न वाञ्छति । पुनर्जम्बूसमः कोऽपि ईदृशः कोट्टपालो 'न भूतो न भविष्यति' यश्चौरानपि मोक्षमार्गवाहकान् साधून् अकरोत् । पुनर्जम्बूकुमारो वणिग्जातित्वाद् महालोभी, यतो मुक्तिनगरे प्रविश्य, अनन्त-

सौख्यं प्राप्य, अन्याऽऽगमननिरोधाय मुक्तेः कपाटं दत्तवान् इति जम्बूसंबन्धः २ ॥ श्रीजम्बूस्वामिना श्रीप्रभवः सूरिपदे स्थापितः । अथ श्रीप्रभवस्वामिना गच्छमध्ये, सङ्घमध्ये च उपयोगो दत्तः कस्य सूरिपदं दीयते? गच्छे पट्टयोग्यं साधुमदृष्ट्वा परतीर्थे राजगृहे यज्ञं कुर्वन् शय्यंभवभट्टो दृष्टः, ततः श्रीप्रभवसूरिणा साधुद्वयं शिक्षयित्वा मुक्तम् । तेन तत्र गत्वा प्रोक्तम्—अहो कष्टम्! अहो कष्टं!! तत्त्वं न ज्ञायते । तदा शय्यंभवभट्टेन श्रुतम्, ततस्तत्त्वज्ञानपृच्छार्थं गुरुपार्श्वे गत्वा पृष्टो गुरुः खड्गम् उत्पाट्य तत्त्वं वद? गुरुणा विचारितं शिरच्छेदे तत्त्वं वक्तव्यं, न दोषः । भोः! यज्ञकीलस्याधोभागे श्रीशान्तिनाथप्रतिमा शान्तिकारी वर्तते, तेन शान्तिर्जायते । ततो जातजैनधर्मरुचिर्गुरुपार्श्वे गत्वा धर्मं श्रुत्वा दीक्षां जग्राह शय्यंभवभट्टः । अथ श्रीप्रभवस्वामी गृहवासे वर्षाणि त्रिंशत् ३०, छद्मस्थावस्थायां च पञ्चपञ्चाशद्वर्षाणि ५५, सर्वमायुः पञ्चाशीतिर्वर्षाणि ८५ पालयित्वा श्रीशय्यंभवं स्वस्य पट्टे स्थापयित्वा स्वर्गं जगाम । इति प्रभवस्वामिसंबन्धः ३ ॥ अथ श्रीप्रभवस्वामिना श्रीशय्यंभवः सूरिपदे स्थापितः । पश्चात् सगर्भा शय्यंभवेन भार्या मुक्ताभूत् तया पुत्रो जनितः, तस्य मनक इति नाम दत्तम् । स लेखकशालायां पठन् केलिकरणाय गतः, बालैः 'निष्पितृकः' इति प्रोक्तम् । ततो दुःखं कृत्वा मातृपार्श्वे आगत्य पितृनामपृष्टम्, तया प्रोक्तम्—शय्यंभवः । तेनोक्तं कुत्रास्ति ? मात्रा दीक्षास्वरूपं प्रोक्तम्, ततो गतस्तन्नगरे, गुरोर्बहिर्गतस्य एकान्ते मिलितो मनकः । पृष्टं मनकेन—अत्र शय्यंभवसूरिः श्रूयते स कुत्रास्ति? गुरुणा प्रोक्तम्—

किं प्रयोजनम्? मनकेन स्वकीयं स्वरूपम्, आगमनप्रयोजनं च ज्ञापितम्। ततो गुरुः प्रकारान्तरेण आत्मानं ज्ञापयामास, संसारस्यासारतादर्शनेन प्रतिबोधितो बभाषे–मम दीक्षां देहि। गुरुर्वक्ति–'यदि पितृसंबन्धं साधूनां न ज्ञापयसि तदा व्रतं ददामि'। मनकेन प्रतिपन्नम्। ततो दीक्षा दत्ता, गुरुणा स्तोकमायुर्ज्ञात्वा सिद्धान्तादुद्धृत्य दशवैकालिकं कृत्वा मनकस्य पठनाय दत्तम्, षण्मासेन पठितम्। ततो मनकश्चारित्रमाराध्य स्वर्गं गतः। श्राद्धा अग्निसंस्कारं कृत्वा गुरुपार्श्वे आगतास्तदा यशोभद्रः पार्श्वेऽभूत्। गुरुभिरुपदेशो दत्तस्तदा गुरोर्नेत्रयोरश्रूणि पेतुः। ततो यशोभद्रेण, सङ्घेन च प्रोक्तम्–हे पूज्य! युष्माकम् अनेके साधवः परलोकं गच्छन्ति, परम् अश्रुपातः कदापि न दृष्टः सांप्रतं कथम् अश्रुपातः? गुरुः प्राह–मोहात्, को मोहः? गुरुणा प्रोक्तम्–अयं मनकोऽस्माकं पुत्रो भवति। साधुभिः प्रोक्तम्–कथं न ज्ञापितः पुत्रसंबन्धः? गुरुणा प्रोक्तम्–यदि पुत्रसंबन्धो ज्ञाप्यते तदा न कोऽपि वैयावृत्त्यं कारयति, तस्याऽकरणे च कथमात्मनः निस्तारः स्यात्? ततो गुरुभिर्दशवैकालिकं सिद्धान्ते पश्चात्क्षिप्यमाणं सङ्घेन निवारितम्। ततः श्रीशय्यंभवसूरयः स्वकीयपट्टे यशोभद्रसूरिं स्थापयित्वा श्रीवीराद्दष्टानवति ९८ वर्षे स्वर्गं जग्मुः ४॥ अथ श्रीयशोभद्रसूरितोऽग्रे संक्षेपवाचनया स्थविरावली व्याख्यायते—

संखित्तवायणाए अज्जजसभद्दाओ अग्गओ एवं थेरावली भणिया, तं जहा–थेरस्स णं अज्ज-

जसभद्दस्स तुंगियायणसगुत्तस्स अंतेवासी दुवे थेरा–थेरे अज्जसंभूअविजए माढरसगुत्ते, थेरे अज्जभद्दबाहू पाईणसगुत्ते; थेरस्स णं अज्जसंभूअविजयस्स माढरसगुत्तस्स अंतेवासी थेरे अज्जथूलभद्दे गोयमसगुत्ते, थेरस्स णं अज्जथूलभद्दस्स गोयमसगुत्तस्स अंतेवासी दुवे थेरा–थेरे अज्जमहागिरी एलावच्चसगुत्ते, थेरे अज्जसुहत्थी वासिट्ठसगुत्ते; थेरस्स णं अज्जसुहत्थिस्स वासिट्ठसगुत्तस्स अंतेवासी दुवे थेरा–सुट्ठियसुप्पडिबुद्धा, कोडियकाकंदगा वग्घावच्चसगुत्ता; थेराणं सुट्ठियसुप्पडिबुद्धाणं, कोडियकाकंदगाणं वग्घावच्चसगुत्ताणं अंतेवासी थेरे अज्जइंददिन्ने कोसियगुत्ते, थेरस्स णं अज्जइंददिन्नस्स कोसियगुत्तस्स अंतेवासी थेरे अज्जदिन्ने गोयमसगुत्ते, थेरस्स णं अज्जदिन्नस्स गोयमसगुत्तस्स अंतेवासी थेरे अज्जसीहगिरी जाइस्सरे कोसियगुत्ते, थेरस्स णं अज्जसीहगिरिस्स जाइस्सरस्स कोसियगुत्तस्स अंतेवासी थेरे अज्जवइरे गोयमसगुत्ते, थेरस्स णं अज्जवइरस्स गोयमसगुत्तस्स अंतेवासी थेरे अज्जवइरसेणे उक्कोसियगुत्ते, थेरस्स णं

त्वयि किञ्चिद् धर्मो विद्यते न वा?। तदा मरीचिना ज्ञातम्-अयं मम योग्योऽस्ति, तदा मरीचिः ब्रवीति स्म-मय्यपि धर्मो विद्यते, नास्ति कथम्? दीक्षां गृहाण, दास्यामि तव दीक्षाम्, इति स्वार्थाय उत्सूत्रं बभाषे। तेनोत्सूत्रवचनलेशेन कोटाकोटिसागरप्रमितं संसारे भवभ्रमणमुपार्जितम्। इति तृतीयो भवः। अथ मरीचिश्चतुरशीतिलक्षपूर्वमायुः प्रपाल्य समाधिमरणेन मृत्वा पञ्चम देवलोके देवत्वेनोत्पन्नः। इति चतुर्थो भवः। अथ पञ्चमे भवे ब्राह्मणो बभूव,। तापसीं दीक्षां लात्वा अज्ञानतपश्चक्रे। पञ्चमो भवः। ततः षष्ठे भवे देवो बभूव। ततश्च्युत्वा सप्तमे भवे पुनर्ब्राह्मणो बभूव, तापसीं दीक्षां लात्वा अष्टमे भवे देवो बभूव। ततश्च्युत्वा नवमे भवे पुनर्ब्राह्मणो जातः, तापसीं दीक्षां लात्वा दशमे भवे देवो बभूव। ततश्च्युत्वा पुनर्ब्राह्मणो भूत्वा तापसो जातः, दीक्षां लात्वा द्वादशमे भवे देवो बभूव। ततश्च्युत्वा त्रयोदशमे भवे ब्राह्मणो बभूव, तापसीं दीक्षां लात्वा देवो बभूव। चतुर्दशो भवः। ततश्च्युत्वा पञ्चदशमे भवे ब्राह्मणो भूत्वा तापसीं दीक्षां जग्राह। ततः षोडशे भवे देवो बभूव। ततो देवभवात् च्युत्वा कर्मवशाद् बहवः सूक्ष्मभवाः कृताः। अथ सप्तदशभवे राजगृहनगर्यां चित्रनन्दी नृपः, तस्य प्रियङ्गुनाम्नी राज्ञी। तस्य पुत्रो विशाखनन्दी वर्तते। नृपस्य लघुभ्राता विशाखभूतिरस्ति। स युवराजाऽस्ति। तस्य स्त्री धारणी विद्यते। तस्याः कुक्षौ मरीचिजीव आगत्य समुत्पन्नः। पूर्णे समये पुत्रो जातः, तस्य नाम विश्वभूतिरिति दत्तम्। क्रमात् स

अज्जवइरसेणस्स उक्कोसिअगुत्तस्स अंतेवासी चत्तारि थेरा–थेरे अज्जनाइले १, थेरे अज्जपोमिले-२, थेरे अज्जजयंते ३, थेरे अज्जतावसे ४; थेराओ अज्जनाइलाओ अज्जनाइला साहा निग्गया (१), थेराओ अज्जपोमिलाओ अज्जपोमिला साहा निग्गया (२), थेराओ अज्जजयंताओ अज्ज-जयंती साहा निग्गया (३), थेराओ अज्जतावसाओ अज्जतावसी साहा निग्गया (४) इति ॥६॥

अर्थः–संक्षेपवाचनया कृत्वा आर्ययशोभद्राद् अग्रतः एवं स्थविरावली भणिता। तथाहि–श्रीआर्ययशोभद्र-सूरेस्तुङ्गिकायनगोत्रस्य द्वौ शिष्यौ–एकः संभूतिविजयो माढरगोत्रीयः १, द्वितीयो भद्रबाहुः प्राचीनगोत्रीयः २; भद्रबाहुसंबन्धो यथा–प्रतिष्ठानपुरवासिनौ वराहमिहिरः १, भद्रबाहुः २ नामानौ द्वौ भ्रातरौ ब्राह्मणौ अभू-ताम्। श्रीयशोभद्रसूरिपार्श्वे धर्म श्रुत्वा प्रव्रजितौ, क्रमाच्चतुर्दशपूर्वधरौ जातौ, गुरुणा भद्रबाहुः विनीतत्वात् सूरिपदं ददे। वराहमिहिरस्य तु अविनीतत्वान्न दत्तम्। कथम्? यतो यो गणधरशब्दो गौतमादिगणधरैर्म-हापुरुषैर्व्यूढस्तं शब्दं यो गुरुः कुपात्रे, अयोग्ये स्थापयति स गुरुर्महापापी, अनन्तसंसारी च स्यात्। ततो वरा-हमिहिरो रुष्टः सन् गच्छाद्बहिर्निर्गतः, गुरौ द्वेषं वहति स्म। चतुर्दशपूर्वभणनाद् नवीनानि ज्योतिःशास्त्राणि करोति स्म। 'वराहसंहिता' नामा ग्रन्थो येन कृतः, साधुवेषं मुक्त्वा द्विजवेषं कृत्वा निमित्ती जीवति स्म।

पुनर्लोकानामग्रे एवं कथयति स्म–भो लोकाः! मया एकदा नगराद्वहिर्लग्नं मण्डितमासीत् परं विस्मृत्या लग्नं न भग्नम्, गृहागतेन विचारितम् अहो!! मम ज्ञानस्य विराधना जाता, ततस्तं लग्नभङ्गं कर्तुं पुनरहं तत्र स्थाने गतः, लग्नस्योपरि तस्याधिष्ठायकं सिंहं पुच्छाच्छोटं कुर्वन्तम् अपश्यम्, तथापि लग्नभक्त्या साहसं कृत्वा लग्नोपरि हस्तक्षेपे कृते सिंहः सूर्यो भूत्वा प्राह–भो वराहमिहिर! वरं वृणु, तदा मया प्रोक्तम्–नक्षत्रादीनाम् आचारं साक्षाद्दर्शय। ततस्तेन अहं सूर्यादीनां यत्र मण्डलानि तत्र नीतः, सर्वं सर्वेषां ग्रहाणां चारो–दया–ऽस्तमन–वक्रातिचारस्वरूपं दर्शितः। ततोऽहं सर्वं ज्योतिष्कबलेन अतीता–ऽनागत–वर्तमानस्वरूपं जानामि, इति कथयन् राजादीनां चमत्कारदर्शनेन मनांसि रञ्जयामास॥ तस्मिन्नगरे भद्रबाहुस्वामी समागतः, श्रावकैः प्रवेशोत्सवकरणादिना महती महिमा कृता, परं वराहमिहिरो न सहते, तेषां माहात्म्यपातं वाञ्छति। ततो राजसभायां गत्वा राजाऽग्रे प्रोक्तम्–इतः पञ्चमे दिने पूर्वतो मेघः समेष्यति १, तृतीयप्रहरप्रान्ते २, पुरो लिखितकुण्डलिकायाः मध्ये ३, द्विपञ्चाशत्पलमितो मत्स्यः पतिष्यति ४ इति निमित्तं भाषितं श्रुत्वा श्रावकैः भद्रबाहुस्वामिने प्रोक्तम्। गुरुणा प्रोक्तम्–किञ्चित्सत्यम्, किञ्चिद् असत्यम्। कथम्? ततो गुरुणा प्रोक्तम्–मेघो न पूर्वतः समेष्यति, किन्तु ईशानकोणतः १। तृतीयप्रहरप्रान्ते न, किन्तु दिनघटीषट्के शेषे सति २। कुण्डलिकाया मध्ये न, किन्तु किञ्चिद्बहिः ३। द्विपञ्चाशत्पलमानो न, किन्तु वायुना भक्षितत्वात् सार्धैक-

पञ्चाशत्पलमानस्तुलितो भविष्यति ४ । भद्रबाहुविशेषज्ञाननिमित्तमपि राज्ञा श्रुतम्, ततः पञ्चमे दिने मेघवृष्टिर्जाता परं सर्वं श्रीभद्रबाहुस्वामिवचनं सत्यं जातम् । वराहमिहिरः सत्याऽसत्यवादी लोकमध्ये जातः, भद्रबाहुस्वामी तु सत्यवादी जातः । पुनरेकदा राज्ञः पुत्रो जातः, वराहमिहिरेण वर्षशतायुर्वर्तनेन जन्मपत्रिका लिखिता । ततः सर्वेऽपि लोकाः अक्षतभाजनानि लात्वा वर्द्धापनाय राज्ञो गृहे समेताः, एवं दर्शनिलोका अपि आशीर्प्रदानाय समेता विना भद्रबाहुम् । ततो वराहमिहिरेण राज्ञोऽग्रे प्रोक्तम्—हे राजन् ! भवदीयपुत्रजन्म भद्रबाहोर्न रुचितं तेन नागतः । एतत्स्वरूपं श्रावकैः भद्रबाहुस्वामिनः प्रोक्तम् । गुरुभिः प्रोक्तम्—वारं वारं कथं गम्यते, एकवारं यास्यामि । कथमेवम् ? गुरुणा प्रोक्तम्—अष्टमे दिने रात्रौ बिलाडीतो मरणं राजपुत्रस्य भावी इति । राज्ञापि एतद्वाक्यं श्रुत्वा बिलाडिकाऽप्रवेशनादौ यत्नशतं कृतम्, कारितं च । ततोऽष्टमे दिने दैवयोगाद् दासीहस्तादर्गला पतिता बालकोपरि, मृतो बालकः । वराहोऽवदत्—बिलाडिकातो न मृतः, गुरुणा अर्गलायां बिलाडिकारूपं दर्शितम्, ततो वराहो लज्जितः । ततो वराहोऽन्यत्र गत्वा मृत्वा व्यन्तरो भूत्वा जैनानां मरकोपद्रवं करोति स्म । ततः श्रावकाणाम् उपद्रवनिवारणाय महाप्रभावमयम् "उवसग्गहरं" स्तोत्रं कृत्वा अर्पितम् । तत्सङ्घेन सर्वत्र गृहे पठितम्, तत्प्रभावेण व्यन्तरो नष्ट्वा गतः, जातं सर्वत्र शुभम्, महाप्रभावं स्तोत्रम् । गौरपि कदाचित् कथञ्चिद्दुग्धं न दत्ते तदापि लोका इदं स्तोत्रं गुणयन्ति,

ततः शेषनाग आगत्य विघ्नं वारयति । एवं प्रत्यहं प्रतिगृहम् आगच्छन् शेषनागः खिन्नः सन् गुरुं विज्ञपयति स्म–अहं सङ्घपार्श्वात् क्षणमपि स्थातुं न शक्नोमि, ततः षष्ठी गाथा अतिशयभृता दूरीक्रियताम्, अहं स्वस्थानस्थोऽपि गाथापञ्चकेनापि विघ्नं स्फोटयिष्यामि । ततो गुरुणा षष्ठी गाथा भाण्डागारे क्षिप्ता । श्रीभद्रबाहुस्वामिकृताः "श्रीआवश्यकनिर्युक्ति" आद्योऽनेके ग्रन्थास्सन्ति । एवंविधाः श्रीभद्रबाहुस्वामिनः श्रीवीरात् सप्तत्यधिकवर्षशतेन १७० स्वर्गं जग्मुः ६ ॥ श्रीसंभूतिविजयस्य माढरगोत्रस्य अन्तेवासी शिष्यः स्थूलभद्रो गौतमगोत्रीयोऽभूत्, तस्य चाऽयं संबन्धः–श्रीपाटलिपुरनगरे नवमनन्दमन्त्री सगडालः, भार्या लाच्छिलदेवी, तयोः पुत्रद्वयम्–स्थूलभद्रः १, सिरीयकश्च २ । एकदा वररुचिर्भट्टः आगतः, स राजानं प्रत्यहम् अष्टोत्तरशत १०८ काव्यैः स्तौति, परं मिथ्यात्वित्वाद् मन्त्री न प्रशंसति; तस्य प्रशंसां विना राजा किमपि न दत्ते । तदा भट्टेन लाच्छिलदेवी मन्त्रिणी आवर्जिता । तत्प्रेरणया मन्त्रिणा प्रोक्तम्–भव्यानि काव्यानि, ततो राज्ञा तुष्टेन प्रत्यहम् अष्टोत्तरशतं दीनारदानं क्रियते स्म । ततो मन्त्रिणा द्रव्यक्षयं ज्ञात्वा एकादिपाठसिद्धाः सप्तपुत्रिका अभूवन् तासां श्रावणात्, तासां मुखतो भणनाच्च न नवीनानि काव्यानि इत्युक्त्वा निर्भर्त्स्य निष्कासितो राजकुलात् । ततो गङ्गामध्ये यन्त्रप्रयोगेण सन्ध्यासमये मुक्तानि दीनारपञ्चशतानि गङ्गां स्तुत्वा लाति, वक्ति च–मम गङ्गादेवी तुष्टा सती ददाति, इति ख्यातिं लोकमध्येऽकरोत् । ततो मन्त्रिणा तद्धनं गुप्तम् आनाय्य नृपादिसमक्षं तदीय-

कूटप्रपञ्चः प्रकटीकृतः। ततो मन्त्रिण उपरि द्वेषं वहन्, छात्रान् पाठयन्, तेषां मुखेभ्य इति कथापयति स्म–"राउ नंद न वि जाणही, जं सगडाल करेसि॥ नंद राउ मारे य करि, सिरीयो राज ठवेसि"॥१॥इति राज्ञा श्रुतम्। सिरीयकस्य विवाहसामग्रीं युद्धसामग्रीमिति ज्ञात्वा रुष्टो राजा कुटुम्बसहितं सगडालं मारयिष्यामि। ततो मन्त्रिणा कुलरक्षार्थं सिरीयकस्य प्रोक्तम्–राज्ञः प्रणामसमये त्वया मम मस्तकं छेदनीयम्, ततो राजसमीपगमने सगडालेन प्रणामे कृते राजा पराङ्मुखो जातः, ततः सिरीयकेन प्रोक्तम्–अरे! यो राजद्वेषी भवति स हन्तव्य एव, खड्गेन हतः पिता। ततो हृष्टेन राज्ञा प्रोक्तम्–भोः सिरीयक! त्वं गृहाण पितुरधिकारम्। स प्राह–मम वृद्धभ्राता स्थूलभद्रोऽस्ति तस्मै अधिकारो दीयताम्। राज्ञा प्रोक्तम्–स क्वास्ति? तेनोक्तम्–द्वादशवर्षाणि जातानि कोशावेश्यागृहे तिष्ठति, द्वादशस्वर्णकोट्यश्च तया सह भक्षिताः। राज्ञा स्थूलभद्रमाहूय प्रोक्तम्–गृहाण पितृमुद्राम्, ततः स्थूलभद्रो वररुचिभट्टप्रपञ्चेन पितृमरणं श्रुत्वा संसारमसारं ज्ञात्वा, वैराग्येण स्वयं कृतलोचः, रत्नकम्बलेन कृतरजोहरणः श्रीसंभूतिविजयपार्श्वे दीक्षां ललौ। तदा राज्ञा सिरीयकस्य मन्त्रिमुद्रा दत्ता। श्रीस्थूलभद्रो गुर्वादेशात् कोशागृहे चातुर्मासीं स्थितः १, अन्यो द्वितीयः साधुः सिंहगुहायां स्थितः २, तृतीयः सर्पबिलमुखे ३, चतुर्थः कूपविचालकाष्ठोपरि स्थितः ४। तत्र स्थूलभद्रस्य काठिन्यम्। यथा–कालस्तु वर्षाकालः, मेघा गर्जन्ति, विद्युद् झात्कारं करोति, मयूराः केकारवं कुर्वन्ति, बहुविधाः पक्षिणः 'प्रियु प्रियु'

इति जल्पन्ति, दर्दुरा रटन्ति। स्वयं चित्रशालायां स्थितः, षड्भिरपि रसैः सदा भोजनं कुरुते, कोशा रागवती षोडशशृङ्गारान् रचयित्वा सखीभिः सह नृत्यं कुर्वन्ती, कामोद्दीपकसरागवचनानि वदन्ती नाटकमकरोत्। परं महापुरुषो रोममात्रं न क्षुब्धः, प्रत्युतो धर्मोपदेशदानेन कोशावेश्यां श्राविकामकरोत्। चातुर्मासीपारणे चत्वारोऽपि साधवो गुरुसमीपे गतास्तदा त्रिषु आगतेषु गुरुणा किञ्चिदुत्थाय–स्वागतं भो दुष्करकारकाः! इत्युक्तम्। स्थूलभद्रे आगते गुरुणा उत्थाय स्वागतं दुष्कर–दुष्करकारक! इत्युक्तम्। ततस्तेषु यः सिंहगुहावासी साधुः सोऽमर्षेण आगामिचातुर्मास्यां स्पर्धया गुरुवारितोऽपि कोशागृहे गतः, तां रूपवतीं दृष्ट्वा क्षुब्धः। वेश्यया प्रोक्तम्–धनमानय। तेनोक्तम्–तत् कुत्रास्ति? कोशया प्रोक्तम्–नेपालदेशे राजा याचकानां सपादलक्षं रत्नकम्बलं ददाति। तदानीं हि ततस्तेन वर्षाकालेऽपि गत्वा राजपार्श्वाद्रत्नकम्बलं प्राप्याऽऽनीय वेश्यायाः दत्तम्। तया च स्नानं कृत्वा अङ्गप्रोञ्छनं कृत्वा तत्प्रबोधार्थं खालमध्ये प्रक्षिप्तम्॥ साधुराह–अहो! त्वया अज्ञानेन किं कृतं, मया कष्टेनानीतम् अमूल्यं रत्नकम्बलं खालमध्ये क्षिप्तम्? कोशा प्राह–रे मूर्ख! त्वया किं कृतम्, चारित्रं दुर्लभं उभयलोकसाधकं रत्नकम्बलादपि अनन्तमूल्यं मम अङ्गेषु मलाविलेषु अशुचिषु निक्षिप्तम्। ततः प्रतिबुद्धो गुरुसमीपे आगत्य मिथ्यादुष्कृतं ददौ, एवं स्वकामिनं रथकारं पुङ्खपुङ्खार्पितैर्बाणैर्दूरस्थाया आम्रलुम्ब्या आनयनकलागर्वितं सर्षपराशिस्थसूच्यग्रपुष्पोपरि नृत्यन्ती कोशा प्राह–"न दुक्करं अंबयलुंबितोडणं,

न दुक्करं सिक्खियनच्चियाए ॥ तं दुक्करं तं च महाणुभावो, जं सो मुणी पमयवणम्मि वुज्झो ॥ १ ॥" ततो रथकारो व्रतं जगृहे । अन्यदा द्वादशवर्षदुर्भिक्षप्रान्ते पाटलीपुरे अगुणनादिना विस्मृतामेकादशाङ्गीं ज्ञात्वा, सङ्घेन मिलित्वा दृष्टिवादपठनाय श्रीभद्रबाहुस्वामिसमाहूतिकृते मुनिद्वयं मुक्तं तत्र गतम्, परं भद्रबाहुस्वामी प्राह—मया सांप्रतं महाप्राणायामध्यानं प्रारब्धं ततोऽनागमनं भावीति मुनिद्वयं पश्चात् प्रहितम्। पुनः सङ्घेन कथापितम्—सङ्घादेशं यो न मन्यते तस्य को दण्डः ? भद्रबाहुस्वामिना प्रोक्तम्—गच्छाद्बहिष्क्रियते, परमागमने ध्यानभङ्गो भवति। ततः श्रीसङ्घः शिष्यान् अत्र प्राहिणोतु यथा पाठयामि। ततः स्थूलभद्रादि ५०० शिष्याः प्रहिताः। गुरुभिर्वाचनासप्तके दत्तेऽन्ये उद्विग्नाः। स्थूलभद्रस्तु दशपूर्वाणि वस्तुद्वयेन ऊनानि पपाठ। अन्यदा यक्षाद्याः सप्तापि साध्व्यः स्थूलभद्रभगिन्यो बान्धववन्दनार्थं समागताः। गुरुं वन्दित्वा ताः प्रोचुः स्थूलभद्रः क्वास्ति? गुरुणा प्रोक्तम्—गिरिगुहायां पूर्वाणि गुणयन्नस्ति। ततो गतास्तत्र ताः, आयातीर्ज्ञात्वा ज्ञानबलेन स्थूलभद्रश्चमत्कारदर्शनाय सिंहरूपं पुच्छाच्छोटं कुर्वन्तं कृत्वा स्थितः। ताः सिंहं दृष्ट्वा भीता गुरुपार्श्वे गत्वा प्रोचुः—तत्रास्माकं भ्राता नास्ति, सिंहः स्थितोऽस्ति। तदा गुरुभिर्ज्ञातम्—विद्याबलं प्रयुक्तम्। पुनर्प्रोक्तम्—पुनर्यात भ्राता तत्रैवास्ति। पुनस्तास्तत्र गत्वा, भ्रातरं दृष्ट्वा, हर्षेण वंदन्ते स्म। पुनर्गुरुसमीपे आगत्य प्रोचुः—अस्माभिः सह सिरीयः प्रव्रजितोऽभूत्, तं श्रीपर्युषणापर्वणि मया उपवासं कारितः, स्वर्गं गतः। ततोऽहं तत्प्रायश्चित्तयाचनाय श्रीसीमंधरस्वामि-

पार्श्वे गमिष्यामि। ततः श्रीसङ्घे कायोत्सर्गे स्थिते शासनदेव्या आगत्य सीमन्धरस्वामिसमीपे नीता। तन्मुखाच्चूलाद्वयं लात्वा अत्रागता। ततस्ता गुरून् वन्दित्वा स्वस्थाने गताः। अन्यदा श्रीस्थूलभद्रः पूर्वमित्रब्राह्मणगृहे गतोऽभूत्, पृष्टम्–क मे मित्रम्? भार्यया प्रोक्तम्–दरिद्रत्वेन भिक्षार्थं जगाम। स्थूलभद्रेण ज्ञानेन ज्ञातम्–अहो अस्य गृहस्याऽमुकस्थाने निधानं वर्त्तते, परं न जानाति। ततो निधानस्थानं दृशा दर्शयित्वा निर्गतः। मित्रेणागत्य भार्यावचनेन तत्स्थानं खनितं, महानिधानं प्रकटितम्, स ब्राह्मणः सुखी जातः। ततः सिंहविकुर्वणम्, निधानदर्शनं च अपराधं ज्ञात्वा वाचनाग्रहणाय आगतस्य स्थूलभद्रस्य प्रोक्तम्–त्वम् अयोग्योऽसि, नातः परं वाचनादानम्। तथापि श्रीसङ्घाग्रहेण 'अन्यस्मै त्वया न देया' इति शपथं कारयित्वा अग्रतः सूत्रतो वाचना दत्ता, परं नार्थतः। एवंविधः श्रीस्थूलभद्रो वीरात् पञ्चदशाधिकद्विशतवर्षे (२१५) स्वर्गं गतः ७। तथा जम्बूस्वामी चरमकेवली।१। प्रभवस्वामी १, शय्यंभवसूरिः २, यशोभद्रसूरिः ३, संभूतिविजयः ४, भद्रबाहुः ५, स्थूलभद्रः ६, एते षडपि श्रुतकेवलिनः। ७। श्रीस्थूलभद्रस्य द्वौ शिष्यौ–आर्यमहागिरिः एलावत्यगोत्रीयः १, द्वितीयः आर्यसुहस्ती वासिष्ठगोत्रीयः २। तत्रार्यमहागिरिणा व्यवच्छिन्नेऽपि जिनकल्पे जिनकल्पतुलना कृता, पुनर्यस्य आर्यमहागिरेः गोचर्यां भ्रमतः श्रेष्ठिगृहे स्थितः श्रीआर्यसुहस्तिसूरिः संस्तवनं कृतवान् ८। अथ श्रीआर्यसुहस्तिसूरिसम्बन्धो यथा–अन्यदा दुष्काले जाते धान्यं न लभ्यते, लोको दुःखी जातः, राजा-

नोऽपि रङ्का जाताः, तथापि श्रावकाः साधूनां विशेषतो दानं ददुः । एको भिक्षुः साधून् बहुभिक्षां प्रतिगृहं लभमानान् दृष्ट्वा प्राह—भोः! मह्यं दीक्षां ददातु। साधुभिः प्रोक्तम्–गुरवो जानन्ति। ततो गुरुसमीपे समागतः, गुरुभिर्लाभं विभाव्य दीक्षां दत्त्वा यथेच्छं भोजितः, परं विषूचिकया चारित्राऽनुमोदनाद् मृत्वा उज्जयिनीनगरे श्रेणिकराजः १, तत्पट्टे कोणिकः २, तत्पट्टे उदाईराजा ३, तत्पट्टे नव नन्दाः १२, तत्पट्टे चन्द्रगुप्तः १३, तत्पट्टे बिन्दुसारः १४, तत्पट्टे अशोकश्रीः १५, तस्य पुत्रः कुणालः १६, तस्य पुत्रः संप्रतिनामा राजाभूत् १७ तस्य हि जातमात्रस्यैव पितामहराज्यं मन्त्रिभिर्दत्तम्, अनुक्रमेण त्रिखण्डभोक्ता जातः। एकदा रथयात्रार्थम् आगतं श्रीआर्यसुहस्तिसूरिं दृष्ट्वा जातिस्मरणं ज्ञानम् उत्पन्नम्, ततः आगत्य गुरूणां पृष्टम्–हे स्वामिन्! अव्यक्तसामायिकस्य किं फलम्? ततो गुरुभिः प्रोक्तम्–राज्यादिकम्, ततो विशेषतः प्रत्ययो जातः; गुरुभिरपि उपयोगेन ज्ञातस्तस्य पूर्वभवः, प्रतिबोधितश्च । गृहीतश्रावकधर्मेण संप्रतिभूपेन सपादलक्षं नवीनाः (१२५०००) जिनप्रासादाः कारिताः। सपादकोटिबिम्बानि (१२५०००००) कारयित्वा प्रतिष्ठापितानि। त्रयोदशसहस्रा (१३०००) जीर्णोद्धाराः कारिताः। पञ्चनवतिसहस्रपित्तलप्रतिमाः (९५०००) कारिताः। सप्तशतानि (७००) दानशालाः सत्राकारा मण्डिताः। देवगृहप्रतिमादिभिस्त्रिखण्डामपि पृथिवीं मण्डितामकरोत्। करं मुक्त्वा पूर्वं साधुवेषधारिस्ववंठप्रेषणादिना अनार्यदेशानपि साधुविहारयोग्यान् अकरोत्। अनार्यदेशीयभूपान्

जिनधर्मरतान् अकरोत्। पुनर्यो वस्त्र–पात्र–धान्य–दुग्ध–घृतादिकं प्रासुकद्रव्यविक्रयं कुर्वन्ति तेषां संप्रतिभूपेन ज्ञापितम्–भोः ! साधूनामग्रे सर्वं ढौकनीयम्, यच्च ते साधवो लान्ति तत्तेभ्यो देयमेव, भवतां च तन्मूल्यं लाभसहितं मम कोष्ठागारिकः प्रच्छन्नं दास्यति; तैस्तथा कृतम्, साधुभिरपि अशुद्धमपि शुद्धबुद्ध्या गृहीतम् ! संप्रतिभूपः श्रीआर्यसुहस्तिसूरिप्रतिबोधित एवंविधो बभूव । एवंविधाः श्रीआर्यसुहस्तिसूरयश्चारित्रं प्रतिपाल्य स्वर्गं जग्मुः ९ ॥ श्रीआर्यसुहस्तिसूरेर्द्वौ शिष्यौ–कोटिक–काकन्दकनामानौ । किंविशिष्टौ सुस्थितौ, सुविहितक्रियानिष्ठौ। पुनः किं विशिष्टौ सुप्रतिबुद्धौ, सुज्ञाततत्त्वौ । अन्ये तु आचार्या एवमाहुः–सुस्थितसुप्रतिबुद्धनामानौ किं विशिष्टौ? कोट्यंशसूरिमन्त्रजापपरिज्ञानादिना कौटिकौ, पुनः किं विशिष्टौ काकन्द्यां नगर्यां जातत्वात्काकन्दकौ इति विरुद्प्रायं विशेषणद्वयम् ११ । कौटिक–काकन्दकयोर्व्याघ्रापत्यगोत्रयोः शिष्य इन्द्रदिन्नः कौशिकगोत्रीयः १२ । इन्द्रदिन्नस्य शिष्यो गौतमगोत्रीयो दिन्ननामा जातः १३ । दिन्नस्य शिष्यः कौशिकगोत्रीय आर्यसिंहगिरिर्जातिस्मरो जातः १४। श्रीसिंहगिरेः शिष्यो गौतमगोत्रीयः श्रीवज्रस्वामी १५ । श्रीवज्रस्वामिशिष्य उत्कौशिकगोत्रीयः श्रीवज्रसेनो जातः १६ । वज्रसेनस्य चत्वारः शिष्याः स्थविरा जाताः–नागिलः १, पोमिलः २, जयन्तः ३, तापसः ४ । एतेभ्यश्चतुर्भ्यः चतस्रः शाखाः स्वस्वनाम्ना निर्गताः–नागिला १, पोमिला २, जयन्ती ३, तापसी ४ इति २० ॥ अत्र श्रीसिंहगिरि–श्रीवज्रस्वामि–श्रीवज्रसेनसूरीणां संलग्नः

यौवनं प्राप्तः, पित्रा परिणायितः । स च विश्वभूतिः स्वनारीभिः सार्धं राजवाटिकायां क्रीडां करोति । एकदा चित्रनन्दिनाम्ना नृपस्य पुत्रेण विशाखनन्दी क्रीडन् दृष्टः । मनसि चिन्तितम्–अहो ! धिग् माम्, अहं नृपस्य पुत्रोऽस्मि, अयं तु युवराजपुत्रः, राजवाटिकायां कदापि मया क्रीडा कर्तुं न शक्यते, अनेन राजवाटिका नित्यं रुद्धा । अथ तदा मम जीवितं सफलम्, यदि स्वकीयनारीभिः सह अस्यां वाटिकायां विश्वभूतिरिव अहं क्रीडां करोमि । इति विचिन्त्य पितुः पार्श्वे गत्वा विज्ञप्तिः कृता । विश्वभूतिः अतः स्थानाद् निष्कासनीयः, यथाऽस्यां वाटिकायां अहं क्रीडामि । तदा पित्रोक्तम्–पुत्र ! कश्चित् प्रपञ्चं कृत्वा विश्वभूतिं निष्कास्य त्वां प्रति दास्यामि, इत्युक्त्वा पुत्रं तोषयामास । तदा राज्ञा विश्वभूतिनिष्कासनार्थं प्रयाणभेरी दापयांचक्रे । लोकेषु इति उद्घोषणां च कारयामास । सिंहनाम्नो राज्ञ उपरि राजा प्रयाति, इति वार्तां जनमुखाद् विश्वभूतिः श्रुत्वा राज्ञोऽग्रे समागत्य अवादीत्–स तु सिंहो वराकः, तस्योपरि भवतां किं प्रयाणकरणम् ? तस्योपरि तु अहमेव यास्यामि, तं बद्ध्वा आनयामि इत्युक्त्वा विश्वभूतिर्बलं लात्वा निर्गतः । तदा च राज्ञा विश्वभूतेः अन्तःपुरं वाटिकातो निष्कास्य स्वपुत्रस्य अन्तःपुरं स्थापितम् । सोऽपि सुखेन स्वस्त्रीभिः सह वाटिकायां चिक्रीड । विश्वभूतिरपि कतिभिश्चिद् दिनैः सिंहं जित्वा, बद्ध्वा राज्ञे समर्पयामास । तदा विश्वभूतेर्महद् यशोऽभूत् । ततश्च विश्वभूतिः स्वदारान् लात्वा क्रीडार्थं वाटिकायां जगाम । तत्र च वाटिकाया द्वारे विशाखनन्दिनो भृत्यैर्निषिद्धः–भोः

संबन्धो यथा–श्रीसिंहगिरिगुरोः पार्श्वे सुनन्दाया भ्राता आर्यशमितः, भर्ता च धनगिरिः, द्वौ अपि दीक्षां जगृहतुः । सुनन्दा च तदा तुम्बवनग्रामे गर्भवती मुक्ताऽभूत्, जातः पुत्रः । जन्मसमये एव पितुर्दीक्षां श्रुत्वा जातिस्मरणज्ञानं प्राप, ततो मातुरुद्वेगार्थं निरन्तरं रोदिति, चारित्राभिलाषी जातः । माता उद्विग्ना जाता सती तिष्ठति, जानाति त्यजामि क्वचिद्, ददामि कस्मैचित् । तस्मिन् प्रस्तावे श्रीसिंहगिरिसूरयः समेताः धनगिरिर्यदा विहर्तुं निर्गतस्तदा गुरुभिर्लाभं ज्ञात्वा प्रोक्तम्–अद्य गोचरीगमने सचित्ता, अचित्ता वा या भिक्षा लभ्यते सा ग्राह्या । ततो धनगिरिर्गतः सुनन्दागृहे, सुनन्दा प्राह–तव पुत्रेण सन्तापिता, त्वं गृहाण आत्मीयं पुत्रम् । साधुना प्रोक्तम्–अद्य त्वं ददासि परं पश्चाद्दुःखं करिष्यसि । तया प्रोक्तम्–नाहं करिष्यामि । ततो धनगिरिर्बहुस्त्रीजनान् साक्षिणः कृत्वा पुत्रं लात्वा झोलिकामध्ये क्षिप्त्वा समेतो गुरुपार्श्वे । गुरुणा च वज्रवद्भारत्वात् 'वज्रः' इति नाम दत्तम् । ततो न रुरोद, शय्यातरश्राविकाभ्यः पालनार्थं दत्तः । स च साध्वीशालायाः पार्श्वस्थः षण्मासवयाः साध्वीभिः पठ्यमानानि एकादश अङ्गानि पपाठ । ततः सा पुत्रं त्रिवार्षिकं जातं ययाचे । राजसमक्षे सङ्घो मिलितः । राजाज्ञया गुरुभिर्मुखवस्त्रिका, रजोहरणादीनि साधूपकरणानि बालस्याग्रे मुक्तानि, मात्रा तु सुखभक्षिका, कन्दुकबालक्रीडकानि मुक्तानि । गुरुणा प्रोक्तम्–रजोहरणं गृहाण । मात्रा तु प्रोक्तम्–सुखभक्षिकादीनि । ततो बालेन चारित्रं वाञ्छता गृहीतं रजोहरणम्, मस्तके धृत्वा नृत्यति स्म ।

भग्नो वादः । अष्टवर्षान्ते गृहीता दीक्षा, पश्चान् मात्रापि दीक्षा गृहीता । पुनर्यस्य पूर्वभवमित्रैर्जृम्भकदेवैर्महाटव्याम् उज्जयिनीमार्गे वृष्टौ निवृत्तायां कूष्माण्डभिक्षायां गृहस्थरूपैर्दीयमानायाम् अनिमिषत्वादिना देवपिण्डोयमिति निश्चित्य भिक्षाया अग्रहणे तुष्टेन वैक्रियलब्धिर्दत्ता । पुनर्यस्य ग्रीष्मकाले घृतपूरैः परीक्षां कृत्वा आकाशगामिनी विद्या दत्ता । पुनरन्यदा वज्रमुनिर्गुरुषु बहिर्भूमौ गतेषु, साधुषु च विहर्तुं गतेषु साधुसंस्तारिकवेष्टिका एकीकृत्य स्वयं विचाले स्थित्वा शिष्याणामिव एकादशानामङ्गानां पृथक् पृथग् वाचनां दातुमारेभे । गुरुभिर्द्वारे आगत्य, स्थित्वा च सर्वं श्रुतम् । ततः साधूनां तस्यातिशयज्ञापनार्थम् अन्यदा ग्रामान्तरं गच्छद्भिः गुरुभिः प्रोक्तं भोः शिष्याः ! भवतां वाचनाचार्यो वज्रोऽस्ति, इत्युक्त्वा चलिताः । पश्चाद्वज्रेण तेषां विनीतानां तथा वाचना दत्ता यथा अनेकवाचनाभिः पठ्यते तथा एकैकया वाचनया पठितम् । साधुभिर्विचारितं यदि गुरवः कियन्तं कालं विलम्बन्ते तदा वरम्, यथास्माकं शीघ्रं श्रुतस्कन्धः पूर्णो भवति । ततः आगतैर्गुरुभिः पृष्टम्–भोः ! भवतां वाचना सुखेन जाता । तैः प्रोक्तम्–अतः परमस्माकं वाचनाचार्यो वज्र एव भवतु । पश्चाद्गुरुणा स्वयमपि वज्राय ११ एकादशाङ्गवाचना दत्ता । ततो वज्रस्वामिना दशपुराद् उज्जयिन्यां गत्वा गुर्वाऽऽज्ञया श्रीभद्रगुप्ताचार्यसमीपे दश पूर्वाणि अधीतानि । तत आचार्यपदे स्थापितो गतः पाटलीपुरे । रूपेण लोकानां मनःक्षोभो मा भवतु, इति व्याख्याने रूपं संक्षिप्य सामान्यं कृत्वा राजादीनामग्रे देशना दत्ता । द्वितीयदिने

साधुभिर्लोकमुखात् श्रुतम् अहो ! गुरूणां देशना अमृतश्राविणी, परं न तादृशं रूपम्। गुरुभिः साधुमुखात् श्रुत्वा सहस्रदलस्वर्णकमलोपरि स्थित्वा स्वाभाविकदिव्यरूपेण धर्मोपदेशो दत्तः। सर्वेऽपि लोका विस्मयं प्राप्ताः। पुनरपि यो धनश्रेष्ठिपुत्रीं रुक्मिणीं साध्वीभ्यः पूर्वं प्रभुगुणश्रवणेन जातानुरागां, पित्रापि धनकोटिसहितां दीयमानां प्रतिबोध्य प्राव्राजयत् (पुनर्येन वज्रस्वामिना पदानुसारिलब्ध्या श्रीआचाराङ्गमहापरिज्ञाध्ययनात् मानुषोत्तरपर्वतं यावद्गमनविषया सा आकाशगामिनी विद्या उद्धृता) पुनर्योऽन्यदा उत्तरस्यां दिशि दुर्भिक्षे जाते श्रीसङ्घं पट्टे संस्थाप्य पानीयग्रहणार्थं गतं शय्यातरमपि लोचकरणेन साधर्मिकोऽहं भवतामिति वदन्तं पट्टे आरोप्य आकाशे स्थित एव स्थाने स्थाने मार्गे चैत्यानि वन्दमानो महानसीं पुरीं प्रापयामास। तत्र तु सुभिक्षम्, परं बौद्धो राजा। श्रीपर्यूषणापर्वणि समागते बौद्धश्रावकप्रेरितेन राज्ञा जिनचैत्येषु पुष्पाणि निषिद्धानि। सङ्घेन वज्रस्वामी विज्ञप्तः। ततः स्वाम्याह—मा चिन्ता क्रियताम्, इत्युक्त्वा आकाशे उत्पत्य माहेश्वरीपुर्यां हुताशननामदेवस्य वने पितृ-मातृमित्रमारामिकं तडितनामानं पुष्पमेलनाय सावधानी कृत्य हिमवद्गिरौ प्राप्तः। तत्र श्रीदेव्या वन्दितः। तदानीं यद् देवपूजार्थं पूर्वं लक्षदलकमलमानीतमासीत्तदेव तया दत्तम्। तद् गृहीत्वा पुनः पश्चाद्वलमानेन हुताशनवनादपि विंशतिलक्षपुष्पाणि लात्वा आकाशे विमानमारूढः। प्राक्तनमित्रजृम्भकदेवकृतगीतगानवादित्रादिमहोत्सवः आगत्य पुष्पविंशतिलक्षाणि श्राद्धानां दत्त्वा जिनचैत्येषु महिमानम्

अकारयत् । हर्षितः सङ्घः, चमत्कृतो राजा, जातो जैनश्च । पुनरन्यदा दक्षिणापथि विहरन् श्रीवज्रस्वामी श्लेष्मणि जाते साधूनामकथयत्–अद्य गोचरीगमने शुण्ठिरानेया, तैरानीता, गुरुभिः कर्णोपरि धृता, परं विस्मृत्या न भक्षिता, पर प्रतिक्रमणे कर्णप्रतिलेखने पतिता । गुरुभिर्विचारितम्–मम दश पूर्वधरस्य का विस्मृतिः ? परमायुरल्पम् । ततोऽनशनं कृतम्, द्वादशवर्षीयं दुर्भिक्षं ज्ञात्वा स्वशिष्यस्य वज्रसेनस्य प्रोक्तम्–त्वं सोपारकपत्तने याहि । कदा सुभिक्षं भावी, इति पृष्टे यस्मिन् दिने लक्ष्यमूलेन एकां हण्डिकां पच्यमानां द्रक्ष्यसि तद्दिनादग्रिमदिने सुभिक्षं भविष्यति इत्युक्त्वा मुक्तो वज्रसेनः । पश्चान्निजपार्श्वे स्थितान् साधून् भिक्षामलभमानान् विद्यापिण्डेन कियद्दिनानि भोजयित्वा संविग्नान् पञ्चविंशतिमितान् साधूनादाय अनशनार्थं वार्यमाणमपि अतिष्ठन्तम् एकं लघुक्षुल्लकं मोहाद्विप्रतार्य पर्वतमारोहयत् । क्षुल्लकस्तु माभूद्गुरूणामप्रीतिः, पश्चादागत्य पर्वतमूले एव तप्तशिलायां सुप्तोऽनशनं कृत्वा सुकमालशरीरत्वात् क्षणमेव शुभध्यानतः स्वर्गं जगाम । देवैस्तस्य महिमानं क्रियमाणं ज्ञात्वा साधवो विशेषतो धर्मे स्थिरा जाताः । परं तत्र मिथ्यादृष्टिदेव्या मोदकादिभिर्निमन्त्रणे अनशने कृते उपसर्गिताः । ततस्तत्र तस्या अप्रीतिं ज्ञात्वा साधवः ततस्थानादुत्थाय अन्यत्राऽऽसन्नपर्वतेऽनशनं कृत्वा शुभध्यानेन सर्वेऽपि वज्रस्वामिप्रमुखाः, स्वर्गं जग्मुः । ततः इन्द्रेण रथसहितेन गिरिं प्रदक्षिणीकृत्य साधवो वन्दिताः, तेन तस्य पर्वतस्योपरि चक्ररेखापतनाद् 'रथावर्तः' इति नाम जातम् । तत्रस्था वृक्षा

अपि साधूनां नमनाभ्यासादद्यापि निम्नीभूता इव तिष्ठन्ति, दृश्यन्ते च तथैव। तस्मिन् स्वर्गं गते दशमं पूर्वं, चतुर्थम् अर्धनाराचं नामसंहननं च विच्छिन्नम्। तथा तदनु श्रीवज्रसेनः सोपारके जिनदत्तश्रावकः, तस्य भार्या ईश्वरी, तद्द्वयमपि श्रीवज्रस्वामिना पूर्वं प्रतिबोधितमासीत् तस्य गृहे भिक्षार्थं गतः। तस्मिन् प्रस्तावे ईश्वरीश्राविकया चतुष्पुत्रयुतया धान्याभावाद् धान्यमानीय हण्डिका पाकार्थम् अग्नौ स्थापिताऽस्ति, विचारितम्–मध्ये विषं क्षिप्त्वा धान्यं भुक्त्वा अनशनं कृत्वा सपुत्रा अहं मरिष्यामि। वज्रसेनेन विषं क्षिपन्तीं दृष्ट्वा पृष्टम्–किमिति मरणोपायः क्रियते? तया प्रोक्तं धनं बहु वर्तते, परं धान्यं नगरमध्ये न लभ्यते। ततो वज्रसेनेन प्रोक्तम्–श्रीपूज्येन मम अभिज्ञानं लक्ष्यमूल्येन धान्यहण्डिकापाकरूपं प्रोक्तं वर्तते, आगामिदिने सुभिक्षं भावी। तस्या अपि श्रीपूज्यवचनस्य आस्था, ततस्तया कथितम्–यद्येवं जातं तदा मम पुत्राश्चत्वारो वर्त्तन्ते ते मया दत्ताः, भवतां पार्श्वे दीक्षां गृहीष्यन्तीति प्रतिज्ञा कृता। ततो द्वादशप्रहरैः पूर्वं दुर्वातेन दूरतटे निक्षिप्तानि युगन्धरीवाहनानि आगतानि, सुभिक्षं जातम्, युगमुद्धृतमिति युगन्धरी नाम जातम्। ततस्तया चत्वारोऽपि निजपुत्राः नागेन्द्र (१) चन्द्र (२) निर्वृत्ति (३) विद्याधराः (४) नामानस्तेषां दीक्षा दापिता। पश्चात् स्वयमपि माता–पितरौ दीक्षां ललतुः। ते चत्वारोऽपि बहुश्रुताः सूरयो जाताः, तेभ्यश्चतस्रः शाखा जाताः, ता अद्यापि दृश्यन्ते। इति श्रीसिंहगिरिः १ वज्रस्वामी–वज्रसेन–संबन्धः (२३) एवं श्रीमहागिरि–श्रीसुहस्तिसूरि–श्रीगुणसु-

न्दरसूरि–श्रीश्यामाचार्य–श्रीस्कन्दलाचार्य–रेवतीमित्र–श्रीधर्म–श्रीभद्रगुप्त–श्रीगुप्त–श्रीवज्रस्वामिनामान एते युगप्रधाना दशपूर्वधरा जाताः । तथा पूर्वं तु संक्षेपवाचनया स्थविराली उक्ता । सांप्रतं विस्तरवाचनया स्थविरावलीमाह—

अत्राऽऽलापके इदं रहस्यम्, विस्तरवाचनायां बहवो भेदा वाचनाभेदात्, लेखकवैगुण्याद् जाताः । तत्र स्थविराणां च शाखाः, कुलानि च प्रायः सांप्रतं नाऽवबुध्यन्ते, नामान्तराणि तिरोहितानि वा भविष्यन्ति, अतो निर्णयः कर्तुं न पार्यते । पाठेषु, शाखासु क्वचिदादर्शे कोडुम्बाणीति दृश्यते, क्वचित् कुण्डधारीति, तथा क्वचित् पुण्यपत्तिया इति, क्वचिद् वणपत्तिया इति । एवं कुलेष्वपि क्वचिद् उल्लगच्छन्त इत्येवं पाठः, क्वचिद् अहउल्लगन्थन इति । तस्मादत्र बहुश्रुता एव प्रमाणम् । माभूदुत्सूत्रमिति । तत्र कुलम् एकाचार्यसन्ततिः, एकवाचनाऽऽचारयतिसमुदायो गणः, शाखास्तु तस्यामेव सन्ततौ पुरुषविशेषाणां पृथक् पृथग् अन्वयाः, अथवा विवक्षिताऽऽद्यपुरुषसन्तानः; यथा वइरस्वामिनाम्ना वइरी शाखा अस्माकम् । कुलानि तच्छिष्याणां पृथक् पृथगन्वयाः, यथा चान्द्रं कुलम्, नागेन्द्रकुलमित्यादि । 'अहावच्चा' इति यथार्थानि अपत्यानि–न पतन्ति येन जातेन दुर्गतौ, अयशःपङ्के वा पूर्वजास्तद् अपत्यम् । सुशिष्याश्च सद्वृत्ताः पूर्वजान् गुरून् न पातयन्ति, प्रत्युत भासयन्तीति । अत एव अभिज्ञाताः प्रत्याख्याताः । स्थविरावलीसूत्रपाठो यथा—

वित्थरवायणाए पुण अज्जजसभद्दाओ पुरओ थेरावली एवं पलोइज्जइ, तं जहा—थेरस्स णं अज्जजसभद्दस्स तुंगियायणसगुत्तस्स इमे दो थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा—थेरे अज्जभद्दबाहू पाईणसगुत्ते १, थेरे अज्जसंभूअविजए माढरसगुत्ते २, थेरस्स णं अज्ज-भद्दबाहुस्स पाईणसगुत्तस्स इमे चत्तारि थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा—थेरे गोदासे १, थेरे अग्गिदत्ते २, थेरे जण्णदत्ते ३, थेरे सोमदत्ते ४ कासवगुत्तेणं, थेरेहिंतो गोदासेहिंतो कासवगुत्तेहिंतो इत्थ णं गोदासगणे नामं गणे निग्गए। तस्स णं इमाओ चत्तारि साहाओ एवं आहिज्जंति, तं जहा—तामलित्तिया १, कोडीवरिसिया २, पंडु-वद्धणिया ३, दासीखब्बडिया ४,

अथ विस्तरस्थविरावल्या विवरणं क्रियते—तत्र श्रीयशोभद्रसूरितः कति स्थविराः? १, कति गणाः? २, कति शाखाः? ३, कति कुलानि जज्ञिरे? ४। तत्सर्वं सूत्रपाठानुसारेण कथ्यते—यशोभद्रस्थविरः, तस्य द्वौ शिष्यौ—भद्रबाहु—संभूतिविजयौ जातौ स्थविरौ। भद्रबाहुस्वामिनः चत्वारः शिष्याः—गोदासः १, अग्निदत्तः २, यज्ञ-

दत्तः ३, सोमदत्तश्च ४ स्थविराः। एवं स्थविराः सप्त (७)। गोदासतो गोदासाख्यो निर्गतो गणः १, गोदासगणस्य चतस्रः शाखा निर्गताः—तामलिप्तिका १, कोडीवर्षिका २, पाण्डुवर्द्धनिका ३, दासीखर्बटिका शाखा ४।

थेरस्स णं अज्जसंभूयविजयस्स माढरसगुत्तस्स इमे दुवालस थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा—नंदणभद्दे उवनंदण—भद्दे तह तीसभद्दे जसभद्दे ४ ॥ थेरे य सुमणभद्दे। मणिभद्दे पुण्णभद्दे य ॥ १ ॥ थेरे अ थूलभद्दे। उज्जुमई जंबुनामधिज्जे य ॥ थेरे अ दीहभद्दे। थेरे तह पंडुभद्दे य ॥ २ ॥ थेरस्स णं अज्जसंभूअविजयस्स माढरसगुत्तस्स इमाओ सत्त अंतेवासिणीओ अहावच्चाओ अभिण्णायाओ हुत्था, तं जहा—जक्खा १ य जक्खदिण्णा २। भूया ३ तह चेव भूयदिण्णा य ४ ॥ सेणा ५ वेणा ६ रेणा ७। भइणीओ थूलभद्दस्स ॥ १ ॥ थेरस्स णं अज्जथूलभद्दस्स गोयमसगुत्तस्स इमे दो थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा—थेरे अज्जमहागिरी एलावच्चसगुत्ते १, थेरे अज्जसुहत्थी वासिट्ठसगुत्ते २, थेरस्स णं अज्जमहागिरिस्स एलावच्चसगुत्तस्स

इमे अट्ठ थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा–थेरे उत्तरे १, थेरे बलिस्सहे २, थेरे धणड्ढे ३, थेरे सिरिड्ढे ४, थेरे कोडिन्ने ५, थेरे नागे ६, थेरे नागमित्ते ७, थेरे छलूए रोहगुत्ते, कोसियगुत्तेणं ८,

संभूतिविजयस्य द्वादश शिष्या जाताः–नन्दनभद्रः १, उपनन्दनः २, तिष्यभद्रः ३, यशोभद्रः ४, सुमनोभद्रः ५, मणिभद्रः ६, पुण्यभद्रः ७, स्थूलभद्रः ८, ऋजुमतिः ९, जम्बूः १०, दीर्घभद्रः ११, पाण्डुभद्रः १२, एते जाताः स्थविरा एकोनविंशतिः १९। पुनः संभूतिविजयस्य सप्त अन्तेवासिन्यः–साध्व्यो जाताः–'जक्खा १, जक्खदिन्ना २, भूया ३, भूयदिन्ना ४, सेणा ५, सेणास्थाने बहुषु आदर्शेषु 'एणा' दृश्यते। वेणा ६, रेणा ७ च एताः स्थूलभद्रस्य भगिन्यः। स्थूलभद्रस्य द्वौ शिष्यौ–आर्यमहागिरिः १, सुहस्ती २, एवं स्थविरा एकविंशतिः २१। श्रीआर्यमहागिरेरष्टौ शिष्याः–उत्तरः १, बलिसहः २, धनाढ्यः ३, श्रियाढ्यः ४, कौण्डिन्यः ५, नागः ६, नागमित्रः ७, छुलुयो रोहगुप्तः ८, एवं स्थविरा एकोनत्रिंशत् (२९)

थेरेहिंतो णं छलूएहिंतो रोहगुत्तेहिंतो, कोसियगुत्तेहिंतो तत्थ णं 'तेरासिया' निग्गया। थेरेहिंतो णं उत्तरबलिस्सहेहिंतो तत्थ णं 'उत्तरबलिस्सहे' नामं गणे निग्गए–तस्स णं इमाओ

चत्तारि साहाओ एवमाहिज्जंति, तं जहा–कोसंबिया १, सोइत्तिया २, कोडंबाणी ३, चंद-नागरी ४। थेरस्स णं अज्जसुहत्थिस्स वासिट्ठसगुत्तस्स इमे दुवालस थेरा अंतेवासी अहा-वच्चा अभिण्णाया हुत्था, तं जहा–थेरे अ अज्जरोहणे १। भद्दजसे २ मेहगणी ३ य कामिड्ढी ४ ॥ सुट्ठिय ५ सुप्पडिबुद्धे ६। रक्खिय ७ तह रोहगुत्ते ८ अ ॥ १ ॥ इसिगुत्ते ९ सिरिगुत्ते १०। गणी अ बंभे ११ गणी य तह सोमे १२ ॥ दस दो अ गणहरा खलु। एए सीसा सुहत्थिस्स ॥ २ ॥

अत्र छुलुयरोहगुप्तत्त्रैराशिकमतं निर्गतम्, कथम्? तत्रोच्यते–श्रीवीराच्चतुश्चत्वारिंशदधिकपञ्चशतवर्षेषु (५४४) व्यतीतेषु अन्तरञ्जिकायां नगर्यां श्रीगुप्ताचार्यस्य रोहगुप्तः शिष्यो वर्तते। तस्मिन् प्रस्तावे एको वादी पोट्टशालनामा परिव्राजकः समागतः, परं कीदृशः?–वृश्चिक–सर्प–मूषक–मृगी–वराही–काक–शकुनवि-द्याभिरुदरं मे स्फुटतीति बद्धोदरपट्टः पटहं नगरमध्ये वादयामास। यो मया सह वादं करोति स पटहं स्पृशतु

१. श्रीगुप्ताचार्यस्य नामसंबन्धिको व्यतिकरः श्रीउत्तराऽध्ययनवृत्तेः, स्थानाङ्गवृत्तेश्चाऽनुसारेण ज्ञेयः ॥

कुमार ! वाटिकामन्दिरेषु स्वस्त्रीभिर्विशाखनन्दी क्रीडति, त्वया न गन्तव्यम्, महाराजेन स्वपुत्राय वाटिका समर्पिता, तदा विश्वभूतिना मनसि चिन्तितम्–अहो ! राज्ञा कपटं कृत्वाऽहं निष्कासितः, वाटिकायां स्वपुत्रश्च स्थापितः। धिक् संसारमसारम्, सर्वोऽपि लोको मोहग्रस्तोऽस्ति, धिक् पापकरणं मोहम्, इति ज्ञात्वा विरक्तो भूत्वा स्वबलदर्शनार्थं वाटिकाया द्वारे कपित्थवृक्षस्य मुष्टिप्रहारेण कपित्थफलानि सर्वाणि भूमौ पातयामास, मुखेन इति कथयामास च यावती वेला मम कपित्थफलनिपातने लग्ना तावत्येव वेला शत्रूणां शिरःपातने लगति। परं लोकापवादाद् बिभेमि, इत्युक्त्वा साधूनां समीपे गत्वा दीक्षां गृहीत्वा बहूनि दीर्घाणि तपांसि चकार। एकदा च विश्वभूतिर्विहारं कुर्वन् मथुरायां समागतः। तदा च मासक्षपणपारणार्थं गल्लिकायामागच्छन् नवप्रसूतया धेन्वा पातितो विश्वभूतिः साधुः स्वसगृहसमागतेन गवाक्षस्थेन विशाखनन्दिना दृष्टः। हास्यं कृतम्–'अहो विश्वभूते ! तत् तव बलं क्व गतम्, येन बलेन मुष्टिप्रहारेण सर्वाणि कपित्थफलानि भूमौ पातितानि' इति वचः श्रुत्वा, उच्चैर्दृष्ट्वा विशाखनन्दिनमुपलक्ष्य च विश्वभूतिसाधोर्मनसि अहंकारः समागतः–अद्यापि असौ मां हसति, असौ वराको मनसि गर्वं विधत्ते, अयं जानाति–अस्य बलं गतं वर्तते, अयं भिक्षुर्जातः, अस्ति मम बलम्, न जानाति, तेन बलं दर्शयामि इति ध्यात्वा तामेव गां शृङ्गेण गृहीत्वा, शिरसि भ्रमयित्वा भूमौ मुमोच। विशाखनन्दिनमित्युवाच–मम बलं कुत्रापि न गतमस्ति, यदि मम तपसः फलं विद्यते, तदा

ततो रोहगुप्त उत्थितः, अहं वादं करिष्यामि । ततो गुरुणा तदीयविद्याप्रजैतृविद्या मयूरी, नकुली, विडाली, व्याघ्री, सिंही, उलूकी, होलावलीप्रमुखा दत्ताः । पुनः प्रोक्तम्–अन्यविद्याप्रयुञ्जने इदं मया अभिमन्त्रितं रजोहरणं भ्राम्यम्, त्वमजेयो भविष्यसि । ततो रोहगुप्तेन बलश्रीनामराजसभायां तेन वादिना समं वादः कृतः, परं न जीयते स्म । वादिना जीवाऽजीवौ स्थापितौ, ततो गुप्तेन दवरकाऽऽवर्तदानेन भूमौ क्षिप्त्वा चलाऽचलो दर्शितः । प्रोक्तम्–जीवा–ऽजीव–नोजीवश्च । एवं राशित्रयं स्थापयित्वा तं निर्जित्य जयं लब्ध्वा महामहोत्सवेन गुरुसमीपे गतः । गुरुणा प्रोक्तम्–त्वया वादी जितः, श्रीजिनशासनस्य उद्दीपना च कृता तच्चारु, परं नोजीवो नास्ति संघसमक्षं मिथ्यादुष्कृतं देहि । स चाऽभिमानी न ददाति, उवाच–नोजीवोऽप्यस्ति, कथं मिथ्यादुष्कृतं ददामि ? ततो गुरुणा समं षण्मासान् वादः कृतः, ततः कुत्रिकापणे गत्वा जीवा–ऽजीव–नोजीवमार्गणे जीवा–ऽजीवौ देवेन दत्तौ, नोजीवो न दत्तः, असत्त्वात् । तथा चतुश्चत्वारिंशताऽधिकशतेन ( १४४ ) पृच्छाभिर्जितो गुरुणा, कोपेन भस्ममल्लकं मस्तके भङ्क्त्वा गच्छाद्बहिष्कृतः । सोऽपि त्रैराशिकमतं प्रवर्तयति स्म । कथं ? ( कया रीत्या ? ) नवविधं द्रव्यम् ९, सप्तदशविधा गुणाः १७, पञ्चविधं कर्म ५, त्रिविधं सामान्यम् ३, एकविधो विशेषः १, एकविधः समवायः १, ( ३६ ) ततो जीवाऽ–जीव–नोजीव–नोऽजीवभेदैश्चतुर्गुणिताः जाताः १४४ प्रश्नभेदाः । नामव्युत्पत्तिरपि इयम्–षट्पदार्थप्ररूपकत्वात् षट्, गोत्रेण उलूकत्वाद्

उलूकः, षट् चासौ उलूकश्च षडुलूकः, तमेव व्यनक्ति–'कोसियगुत्तेणं'ति उलूक–कौशिकयोर्न भेदः ॥ तथा उत्तरवलिस्सहस्थविराद् 'उत्तरवलिस्सह'नामा गणो निर्गतः, एवं गणौ (२) तस्य उत्तरबलिस्सहगणस्य चतस्रः शाखा जाताः–'कौशाम्बिका १, सूक्तिमुक्तिका २, कौटुम्बिनी ३, चन्द्रनागरी ४ एवं शाखाः ८। सुहस्तिस्थविरस्य द्वादश शिष्या जाताः–रोहणः १, भद्रयशः २, मेघः ३, कामार्धिः ४, सुस्थितः ५, सुप्रतिबुद्धः ६, रक्षितः ७, रोहगुप्तः ८, ऋषिगुप्तः ९, श्रीगुप्तः १०, ब्रह्म ११, सौम्यः १२। इत्येवं स्थिवरा एकचत्वारिंशत् (४१)

थेरेहिंतो णं अज्जरोहणेहिंतो णं कासवगुत्तेहिंतो णं तत्थ णं उद्देहगणे नामं गणे निग्गए, तस्स इमाओ चत्तारि साहाओ निग्गयाओ, छच्च कुलाइं एवमाहिज्जंति। से किं तं साहाओ ? साहाओ एवमाहिज्जंति, तं जहा–उदुंबरिज्जिया १, मासपूरिआ २, मइपत्तिया ३, पुण्णपत्तिया ४; से तं साहाओ। से किं तं कुलाइं ? कुलाइं एवमाहिज्जंति, तं जहा–पढमं च नागभूयं १। बिइयं पुण सोमभूइयं २ होइ ॥ अह उल्लगच्छं तइअं ३। चउत्थयं हत्थलिज्जं ४ तु ॥ १ ॥ पंचमगं नंदिज्जं ५। छट्ठं पुण पारिहासयं ६ होइ ॥ उद्देहगणस्स एए, छच्च कुला

हुंति नायव्वा ॥ २ ॥ थेरेहिंतो णं सिरिगुत्तेहिंतो हारियसगुत्तेहिंतो इत्थ णं चारणगणे नामं गणे निग्गए, तस्स णं इमाओ चत्तारि साहाओ, सत्त य कुलाइं एवमाहिज्जंति, से किं तं साहाओ ? साहाओ एवमाहिज्जंति, तं जहा—हारियमालागारी १, संकासीआ २, गवेधुया ३, वज्जनागरी ४ से तं साहाओ । से किं तं कुलाइं ? कुलाइं एवमाहिज्जंति, तं जहा—

पढमित्थं वत्थलिज्जं १ । बीयं पुण पीइधम्मिअं २ होइ ॥ तइअं पुण हालिज्जं ३ । चउत्थयं पूसमित्तिज्जं ॥ १ ॥ पंचमगं मालिज्जं ५ । छट्ठं पुण अज्जवेडयं ६ होइ ॥ सत्तमयं कण्हसहं ७ । सत्त कुला चारणगणस्स ॥ २ ॥

रोहणस्थविराद् उद्देहनामा गणो निर्गतः, एवं गणास्त्रयः ( ३ ) उद्देहगणस्य चतस्रः शाखा जाताः—'उदुंबरिज्जिया १, मासपूरिया २, मइपत्तिया ३, पुण्णपत्तिया ४' एवं शाखा द्वादश ( १२ ) पुनरुद्देहगणात् षट् कुलानि जातानि—'नागभूयं १, सोमभूइयं २, उल्लगच्छं ३, हत्थलिज्जं ४, नंदिज्जं ५, पारिहासयं' ६ । एवं कुलानि षट् ( ६ ) श्रीगुप्तस्थविरात् चारणनामा गणो निर्गतः, एवं गणाश्चत्वारः ( ४ ) चारणगणाच्चतस्रः

शाखा निर्गताः-'हारियमालागारी १, संकासीआ २, गवेधुया ३, विज्जनागरी' ४। एवं शाखाः षोडशः (१६) पुनश्चारणगणात् सप्त कुलानि जातानि-'वत्थलिज्जं १, पीइधम्मअं २, हालिज्जं ३, पुसमित्तिज्जं ४, मालिज्जं ५, अज्जवेडयं ६, कण्हसहं ७'। एवं कुलानि द्वादश (१२)

थेरेहिंतो णं भद्दजसेहिंतो भारद्दायसगुत्तेहिंतो इत्थ णं उडुवाडियगणे नामं गणे निग्गए, तस्स णं इमाओ चत्तारि साहाओ, तिण्णि कुलाइं एवमाहिज्जंति। से किं तं साहाओ? साहाओ एवमाहिज्जंति, तं जहा-चंपिज्जिया १, भद्दिजिया २, काकंदिया ३, मेहलिज्जिया ४ से तं साहाओ। से किं तं कुलाइं? कुलाइं एवमाहिज्जंति, तं जहा-भद्दजसियं १ तह भद्द-गुत्तियं २ तइयं च होइ जसभद्दं ३॥ एयाइं उडुवाडिय-गणस्स तिण्णेव य कुलाइं ॥ १ ॥ थेरेहिंतो णं कामिड्ढीहिंतो कोडालसगुत्तेहिंतो इत्थ णं वेसवाडियगणे नामं गणे निग्गए, तस्स णं इमाओ चत्तारि साहाओ, चत्तारि कुलाइं एवमाहिज्जंति। से किं तं साहाओ? सा० तं जहा,-सावत्थिया १, रज्जपालिआ २, अंतरिज्जिया ३, खेमलिज्जिया ४

से तं साहाओ। से किं तं कुलाइं? कुलाइं एवमाहिज्जंति, तं जहा,—गणियं १ मेहियं २ कामिड्ढिअं ३ च तह होइ इंदपुरगं ४ च॥ एयाइं वेसवाडिय—गणस्स चत्तारि उ कुलाइं ॥ १॥

भद्रयशस्स्थविरात्–'उडुवाडियनामा' गणो निर्गतः, एवं गणाः पञ्च (५) पुनरुडुवाडियगणस्य चतस्रः शाखाः, ताश्च इमाः–'चंपिज्जिया १, भद्दिज्जिया २, काकन्दिया ३, मेहलिज्जिया ४। एवं शाखा विंशतिः (२०) तथा त्रीणि कुलानि जातानि–'भद्दजसियं १, भद्दगुत्तियं २, जसभद्दं' ३। एवं कुलानि (१७) कामर्धिस्थविराद् 'वेसवाडियनामा' गणो निर्गतः, एवं गणाः षट् (६) तस्य वेसवाडियगणस्य चतस्रः शाखा जाताः–'सावत्थिया १, रज्जपालिया २, अंतरिज्जिया ३, खेमलिज्जिया ४'। एवं शाखाश्चतुर्विंशतिः (२४) पुनर्वेसवाडियगणस्य चत्वारि कुलानि जातानि–'गणियं १, मेहियं २, कामिड्ढियं ३, इदपुरगं' ४। एवं कुलानि एकोनविंशतिः (१९)

थेरेहिंतो णं इसिगुत्तेहिंतो काकंदएहिंतो वासिट्ठसगुत्तेहिंतो इत्थ णं माणवगणे नामं गणे निग्गए, तस्स णं इमाओ चत्तारि साहाओ, तिण्णि य कुलाइं एवमाहिज्जंति, से किं तं साहाओ? साहाओ एवमाहिज्जंति, तं जहा—कासवज्जिया १, गोयमज्जिया २, वासिट्ठिया ३,

सोरट्ठिया ४ से तं साहाओ। से किं तं कुलाइं? कुलाइं एवमाहिज्जंति, तं जहा—इसिगुत्ति इत्थ पढमं १। बीयं इसिदत्तिअं मुणेयव्वं २॥ तइयं च अभिजयंतं ३। तिण्णि कुला माणव-गणस्स ॥ १ ॥ थेरेहिंतो सुट्ठिय—सुप्पडिबुद्धेहिंतो कोडिय—काकंदएहिंतो वग्घावच्चसगुत्तेहिंतो इत्थ णं कोडियगणे नामं गणे निग्गए, तस्स णं इमाओ चत्तारि साहाओ, चत्तारि कुलाइं एवमाहिज्जंति। से किं तं साहाओ? साहाओ एवमाहिज्जंति तं जहा—उच्चानागरि १ विज्जा-हरी य २ वइरी य ३ मज्झिमिल्ला ४ य ॥ कोडियगणस्स एया। हवंति चत्तारि साहाओ ॥ १ ॥ से तं साहाओ। से किं तं कुलाइं? कुलाइं एवमाहिज्जंति, तं जहा—पढमित्थं बंभ-लिज्जं १। बिइयं नामेण वत्थलिज्जं तु २॥ तइयं पुण वाणिज्जं ३। चउत्थयं पण्हवाहणयं ४ ॥ १ ॥ थेराणं सुट्ठिय—सुप्पडिबुद्धाणं कोडिय—काकंदयाणं वग्घावच्चसगुत्ताणं इमे पंच थेरा

अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा—थेरे अज्जइंददिन्ने १, थेरे पियगंथे २, थेरे विज्जाहरगोवाले कासवगुत्ते णं ३, थेरे इसिदत्ते ४, थेरे अरिहदत्ते ५।

तथा ऋषिगुप्तस्थविराद् 'माणवनामा' गणो निर्गतः, एवं गणाः सप्त (७) तस्य माणवगणस्य चतस्रः शाखा जाताः—'कासवज्जिया १, गोयमज्जिया २, वासिट्ठिया ३, सोरट्ठिया' ४। एवं शाखा अष्टाविंशतिः (२८) पुनर्माणवगणस्य त्रीणि कुलानि जातानि—'इसिगुत्तियं १, इसिदत्तियं २, अभिजयंतं' ३ एवं कुलानि द्वाविंशतिः (२२) सुस्थित–सुप्रतिबुद्धस्थविरतः 'कोडियनामा' गणो निर्गतः, एवं गणा अष्टौ (८) तस्य कोडियगणस्य चतस्रः शाखा जाताः—'उच्चानागरी १, विज्जाहरी २, वइरी ३, मज्झिमिल्ला' ४। एवं शाखा द्वात्रिंशत् (३२) पुनः कौटिकगणस्य चत्वारि कुलानि जातानि—'बंभलिज्जं १, वत्थलिज्जं २, वाणिज्जं ३, पण्हवाहणयं' ४। एवं कुलानि षड्विंशतिः (२६) पण्हवाहणयकुलाद् 'मलधारगच्छो' जातः, सुस्थित–सुप्रतिबुद्धानां पञ्च शिष्या जाताः—'इंददिन्ने १, पियगंथे २, विज्जाहरगोवाले ३, इसिदत्ते ४, अरिहदत्ते' ५। एवं स्थविराः षट्चत्वारिंशत् (४६)

थेरेहिंतो णं पियगंथेहिंतो एत्थ णं मज्झिमा साहा निग्गया, थेरेहिंतो णं विज्जाहरगोवाले-

हिंतो कासवगुत्तेहिंतो एत्थ णं विज्जाहरी साहा निग्गया ॥ थेरस्स णं अज्जइंददिन्नस्स कासवगुत्तस्स अज्जदिन्ने थेरे अंतेवासी गोयमसगुत्ते । थेरस्स णं अज्जदिन्नस्स गोयमसगुत्तस्स इमे दो थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा—थेरे अज्जसंतिसेणिए माढरसगुत्ते १, थेरे अज्जसीहगिरी जाइस्सरे कोसियगुत्ते २ ।

प्रियग्रन्थस्थविरसंबन्धस्तु एवम्—श्रीहर्षपुरे नगरे अजमेरवासन्ने, यत्र जिनमन्दिराणि त्रीणि शतानि (३००), लौकिकदेवगृहाणि चत्वारि शतानि ( ४०० ), अष्टौ सहस्राणि ब्राह्मणगृहाणि ( ८००० ), वणिजां गृहाणि षट्त्रिंशत्सहस्राणि ( ३६००० ); आरामा नवशतानि ( ९०० ), वाप्यः सप्तशतानि ( ७०० ), सत्रागाराः सप्तशतानि ( ७०० ) यत्र वर्तन्ते । तस्मिन् राजा सुभटपालनामा, एकदा ब्राह्मणैर्यज्ञे प्रारब्धे छागो हन्तुमारब्धः, तत्र श्रीप्रियग्रन्थसूरयः समागताः, तैः श्रावकस्य हस्ते वासक्षेपोऽभिमन्त्र्य दत्तः, तेन छागमस्तके क्षिप्तः । ततोऽम्बिका छागमधिष्ठितवती, ततश्छाग उड्डीय आकाशे स्थित्वा उवाच—'भोः ! यथा युष्माभिर्दयारहितैर्निरपराधी अहं हन्ये, अहं चेन्निर्दयः स्यां तदा सर्वान् युष्मान् हन्मि; पुनर्हनुमता राक्षसानां कुले यत्कृतं तद्भवतामप्यहं करोमि, परं यदि कृपा अन्तरायकारिणी न चेत्' । पुनः प्रोक्तम्—"पशुदेहे यावन्ति रोमकूपाणि

तत्पशुमारणे रोमकूपतुल्यानि वर्षसहस्राणि यावन्नरके पशुघातकाः पच्यन्ते । पुनरपि यो दाता स्वर्णमेरुं विभज्य याचकानां दत्ते, पुनर्यः पृथिवीं समस्तां दत्ते, तद्दानद्वयपुण्यादपि एकं जीवं मार्यमाणं रक्षेत्तत्पुण्यमधिकम् । पुनरपि दक्षिणा यागाः एकतः, एकतस्तु भयभीतस्य प्राणिनो रक्षणं तदधिकम् । पुनर्दानानां महताऽपि कालेन फलं क्षीयते, परम् अभयदानफलस्य क्षय एव नास्ति" । तदा यज्ञकारकैः प्रोक्तम्–कस्त्वम्, आत्मानं प्रकाशय ? तेनोक्तम्–अग्निदेवः, मम चेदं वाहनं छागरूपं कथं होतुमारब्धम् । तैः प्रोक्तम्–धर्मार्थम्, देवेन प्रोक्तम्–पशुवधे महापापम्, अत्राऽर्थे प्रियग्रन्थसूरयः पृष्टव्याः । ततस्तैः सूरयः पृष्टाः–जीवदयारूपं शुचिधर्मं प्राह । ततस्ते याज्ञिकाद्या बहवो लोकाः प्रतिबुद्धाः; जातो जिनधर्ममहिमा–प्रियग्रन्थसूरितो मध्यमा शाखा निर्गता १, विद्याधरगोपालतो विद्याधरी शाखा निर्गता, एवं शाखाश्चतुस्त्रिंशत् (३४) इन्द्रदिन्नस्य शिष्यो दिन्नो जातः । स्थविराः सप्तचत्वारिंशत् ( ४७ ) दिन्नस्य द्वौ शिष्यौ–'अज्जसंतिसेणिए १, सीहगिरी य' २ । स्थविरा एकोनपञ्चाशत् ( ४९ )

थेरेहिंतो णं अज्जसंतिसेणिएहिंतो माढरसगुत्तेहिंतो एत्थ णं उच्चानागरी साहा निग्गया । थेरस्स णं अज्जसंतिसेणियस्स माढरसगुत्तस्स इमे चत्तारि थेरा अंतेवासी अहावच्चा अभि-

णाया हुत्था, तं जहा–( ग्रं० १००० ) थेरे अज्जसेणिए १, थेरे अज्जतावसे २, थेरे अज्जकुवेरे ३, थेरे अज्जइसिपालिए ४। थेरेहिंतो णं अज्जसेणिएहिंतो एत्थ णं अज्जसेणिया १ साहा निग्गया, थेरेहिंतो णं अज्जतावसेहिंतो एत्थ णं अज्जतावसी २ साहा निग्गया, थेरेहिंतो णं अज्जकुवेरेहिंतो एत्थ णं अज्जकुवेरी ३ साहा निग्गया, थेरेहिंतो णं अज्जइसिपालिएहिंतो एत्थ णं अज्जइसिपालिया ४ साहा निग्गया। थेरस्स णं अज्जसीहगिरिस्स जाइस्सरस्स कोसियगुत्तस्स इमे चत्तारि थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा–थेरे धणगिरी १, थेरे अज्जवइरे २, थेरे अज्जसमिए ३, थेरे अरिहदिन्ने ४।

आर्यशान्तिसैनिकात्? 'उच्चानागरी' शाखा जाता, एवं पञ्चत्रिंशत् ( ३५ ) शाखाः। पुनः आर्यशान्तिसैनिकसूरेश्चत्वारः शिष्या जाताः–'अज्जसेणिए १, अज्जतावसे २, अज्जकुवेरे ३, अज्जइसिपालिए' ४। एवं स्थविरास्त्रिपञ्चाशत्(५३)। आर्यसैनिकसूरितः–'अज्जसेणिया' शाखा निर्गता, आर्यतापससूरितः–'अज्जतावसी' शाखा निर्गता २, आर्यकुवेरसूरितः–'अज्जकुवेरी' शाखा निर्गता ३, आर्य–ऋषिपालसूरितः–'अज्जइसिपालिया'

भवान्तरे अहं तव हन्ता स्यामिति निदानं चकार। ततश्च कोटिवर्षं यावत् चारित्रं प्रपाल्य अन्त्यसमये अनशनं कृत्वा अष्टादशमे भवे देवो बभूव। अथास्मिन् अवसरे पोतनपुरे प्रजापतिर्नृपः, तस्य धारिणी राज्ञी, तस्याः कुक्षिसंभवः चतुःस्वप्नसूचितः एकोऽचलनामा राजपुत्रोऽस्ति एका मृगावतीनाम्नी कन्या अस्ति। एकदा च धारिण्या स्नानं कारयित्वा, षोडशशृङ्गारान् अङ्गे धारयित्वा पितुः पार्श्वे विवाहचिन्तार्थं मृगावती कन्या प्रेषिता, सभामध्यस्थेन राज्ञा विलोकिता, राजा तां पुत्रीं दृष्ट्वा कामपीडितोऽभूत्, तां परिणेतुं वाञ्छति स्म। लोकापवादनिवारणार्थं सभालोकानां पुरत इत्युवाच–भोः सभालोकाः! यूयं कथयत, लोके यद् रत्नं वस्तु भवति तत् कस्य? तदा लोका ऊचुः–यानि उत्तमरत्नवस्तूनि तानि सर्वाणि राज्ञ एव, रत्नवस्तूनामन्यः को योग्यः?। यदा लोकैरित्युक्तम्, तदा नृपेण सा पुत्री परिणीता, यतः इयं कन्या रत्नं अपरस्मै कस्मै दीयते? मया एव गृह्यते। अनुक्रमेण प्रजापतिनृपस्तया सह विषयसुखं भुङ्क्ते। एकदा च स विश्वभूतिजीवो देवभवात् च्युत्वा मृगावत्याः कुक्षौ अवततार। मृगावत्या सप्त स्वप्ना दृष्टाः, संपूर्णमासे सुतो जातः, राज्ञा महान् महोत्सवः कृतः। दशदिनानन्तरं बालस्य त्रिपृष्ठ इति नाम दत्तम्। अनुक्रमेण त्रिपृष्ठो वृद्धिं प्राप्तः। अस्मिन् अवसरे शङ्खपुरनगरसमीपे तुङ्गीयापर्वतः, तत्र गुहायां विशाखनन्दी जीवः सिंहत्वेन उत्पन्नोऽस्ति, तत्र पर्वतस्य पार्श्वे अश्वग्रीवप्रतिवासुदेवस्य शालिक्षेत्रमस्ति अत्र क्षेत्रे यो मनुष्यो रक्षार्थं तिष्ठति तं सिंहो विनाशयति। एवं वर्षे

शाखा निर्गता ४। एवं शाखा एकोनचत्वारिंशत् (३९) सिंहगिरिसूरेः समुत्पन्नजातिस्मरणज्ञानस्य चत्वारः शिष्याः-'धणगिरी १, वइरे २, समिए ३, अरिहदिन्ने' ४। एवं स्थविराः ससपञ्चाशत् (५७)

**थेरेहिंतो णं अज्जसमिएहिंतो गोयमसगुत्तेहिंतो इत्थ णं बंभदीविया १ साहा निग्गया।**

आर्यसमितसूरितो ब्रह्मदीपिका शाखा निर्गता १, वज्रस्वामितो वज्री शाखा निर्गता २, एवं शाखा एकचत्वारिंशत् (४१) ब्रह्मदीपिकाशाखाया उत्पत्तिर्यथा-आभीरदेशे, अचलपुरासन्ने कन्न-बेन्नयोर्नद्योर्मध्ये ब्रह्मद्वीपोऽभूत्, तत्र पञ्चशत (५००) तापसाः प्रतिवसन्ति। तेषु एकस्तापसः पादलेपेन पादुकस्थेन बेन्नानदीमुत्तीर्य पारणाय याति, लोकास्तपस इयं शक्तिरिति ज्ञात्वा तापसभक्ता जाताः। श्राद्धान् प्रतिवदन्ति-यद्भवतां गुरुषु न कोऽपि प्रभाव इति। ततः श्रावकैः श्रीवज्रस्वामिमातुलाः श्रीआर्यसमितसूरय आकारिताः, तैः प्रोक्तम्-पादलेपशक्तिरियं, न तपश्शक्तिरिति। ततो गुरूपदेशात् श्रावकैः स तपस्वी भोजनार्थं गृहे निमन्त्र्य पादपादुकाधावनपूर्वं भोजितः, सत्कृतश्च। ततस्तेन समं श्रावका नदीतटे गताः। स प्रविष्टमात्र एव लेपाऽभावाद् ब्रुडितुं लग्नः, जाताऽपभ्राजना। ततः श्रीआर्यसमितसूरयस्तत्र समागताः, लोकबोधनार्थं चप्पटिकां दत्त्वा प्राहुः-बेन्ने! परं पारं यास्यामः, इत्युक्ते मिलितं कूलद्वयम्, लोका विस्मयं प्राप्ताः, ततः सूरयः पौरलोकसहिता एव

गतास्तापसस्थाने । धर्मोपदेशेन प्रतिबोधिताः सर्वेपि तापसाः, पञ्चशततापसा (५००) दीक्षिताः । चूर्णप्रयोगोऽयम्, न तस्य तपःप्रभाव । इति जिनशासनमहिमा जातः सूरयः संघसहिताः स्वस्थानं प्राप्ताः ततस्तेभ्यस्तापससाधुभ्यो ब्रह्मदीपिका शाखा जाता ।

थेरेहिंतो णं अज्जवइरेहिंतो गोयमसगुत्तेहिंतो इत्थ णं अज्जवइरी २ साहा निग्गया । थेरस्स णं अज्जवइरस्स गोयमसगुत्तस्स इमे तिण्णि थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं–जहा–थेरे अज्जवइरसेणे १, थेरे अज्जपउमे २, थेरे अज्जरहे ३ । थेरेहिंतो णं अज्जवइरसेणेहिंतो इत्थ णं अज्जनाइली साहा निग्गया । थेरेहिंतो णं अज्जपउमेहिंतो इत्थ णं अज्जपउमा साहा निग्गया । थेरेहिंतो णं अज्जरहेहिंतो इत्थ णं अज्जजयंती साहा निग्गया ।१। थेरस्स णं अज्जरहस्स वच्छसगुत्तस्स अज्जपूसगिरी थेरे अंतेवासी कोसियगुत्ते ।२। थेरस्स णं अज्जपूसगिरिस्स कोसियगुत्तस्स अज्जफग्गुमित्ते थेरे अंतेवासी गोयमसगुत्ते । ३। थेरस्स णं अज्जफग्गुमित्तस्स गोयमसगुत्तस्स अज्जधणगिरी थेरे अंतेवासी वासिट्ठसगुत्ते ।४। थेरस्स णं अज्जधणगिरि-

स्स वासिट्ठसगुत्तस्स अज्जसिवभूई थेरे अंतेवासी कुच्छसगुत्ते ।५। थेरस्स णं अज्जसिवभूइस्स कुच्छसगुत्तस्स अज्जभद्दे थेरे अंतेवासी कासवगुत्ते ।६। थेरस्स णं अज्जभद्दस्स कासवगुत्तस्स अज्जनक्खत्ते थेरे अंतेवासी कासवगुत्ते ।७। थेरस्स णं अज्जनक्खत्तस्स कासवगुत्तस्स अज्जरक्खे थेरे अंतेवासी कासवगुत्ते ।८। थेरस्स णं अज्जरक्खस्स कासवगुत्तस्स अज्जनागे थेरे अंतेवासी गोअमसगुत्ते ।९। थेरस्स णं अज्जनागस्स गोअमसगुत्तस्स अज्जजेहिले थेरे अंतेवासी वासिट्ठसगुत्ते ।१०। थेरस्स णं अज्जजेहिलस्स वासिट्ठसगुत्तस्स अज्जविण्हू थेरे अंतेवासी माढरसगुत्ते ।११। थेरस्स णं अज्जविण्हुस्स माढरसगुत्तस्स अज्जकालए थेरे अंतेवासी गोयमसगुत्ते ।१२। थेरस्स णं अज्जकालयस्स गोयमसगुत्तस्स इमे दो थेरा अंतेवासी गोयमसगुत्ता—थेरे अज्जसंपलिए १, थेरे अज्जभद्दे २ ।१३। एएसि णं दुण्ह वि थेराणं गोयमसगुत्ताणं अज्जवुड्ढे थेरे अंतेवासी गोयमसगुत्ते ।१४। थेरस्स णं अज्जवुड्ढस्स गोयमसगुत्तस्स अज्जसंघपालिए थेरे अंतेवासी गोयमस-

गुत्ते ।१५। थेरस्स णं अज्जसंघपालिअस्स गोयमसगुत्तस्स अज्जहत्थी थेरे अंतेवासी कासवगुत्ते ।१६। थेरस्स णं अज्जहत्थिस्स कासवगुत्तस्स अज्जधम्मे थेरे अंतेवासी सावयगुत्ते । १७। थेरस्स णं अज्जधम्मस्स सावयगुत्तस्स अज्जसिंहे थेरे अंतेवासी कासवगुत्ते ।१८। थेरस्स णं अज्जसिंहस्स कासवगुत्तस्स अज्जधम्मे थेरे अंतेवासी कासवगुत्ते ।१९। थेरस्स णं अज्जधम्मस कासवगुत्तस्स अज्जसंडिल्ले थेरे अंतेवासी । २० ।

अथ वयरस्वामिनस्त्रयः शिष्याः–'वयरसेणिए १, पउमे २, अज्जरहे' ३ एवं स्थविराः षष्टिः ( ६० )। वज्रसेनतो 'नाइली' शाखा निर्गता १, पद्मसूरितः 'पउमा' शाखा निर्गता २, आर्यरथतो 'जयन्ती' शाखा निर्गता। एवं शाखाश्चतुश्चत्वारिंशत् ( ४४ ) आर्यरथसूरेः शिष्यः पूष्यगिरिः १, पूष्यगिरिसूरेः शिष्यः फल्गुमित्रः २, फल्गुमित्रसूरेः शिष्यो धनगिरिः ३, धनगिरिसूरेः शिष्यः शिवभूतिः ४, ( शिवभूतिशिष्य एको बोटकनामाऽभूत्। तस्माद् वीरात् ( ६०९ ) वर्षे प्रवर्तमाने बोटकमतं जातम्–दिगम्बरमित्यर्थः ) शिवभूतिशिष्य आर्यभद्रः ५, आर्यभद्रस्य शिष्य आर्यनक्षत्रः ६, आर्यनक्षत्रशिष्य आर्यरक्षः ७, आर्यरक्षशिष्य आर्य-

नागः ८, आर्यनागस्य शिष्यः आर्यजेहिलः ९, आर्यजेहिलशिष्य आर्यविष्णुः १०, आर्यविष्णुशिष्य आर्यकालकः ११, आर्यकालकस्य द्वौ शिष्यौ–आर्यसंपालितः १, आर्यभद्रश्च २ (१३) एतयोर्द्वयोः शिष्य आर्यवृद्धः १४, आर्यवृधशिष्यः संधपालितः १६, संघपालितशिष्यः आर्यहस्ती १६, आर्यहस्तिशिष्यः आर्यधर्मः १७, आर्यधर्मशिष्य आर्यसिंहः १८, आर्यसिंहशिष्य आर्यधर्मः १९, आर्यधर्मशिष्य आर्यसण्डिलः २०, एवं स्थविरा अशीतिर्जाताः (८०) विस्तरवाचनासत्काः ॥

वंदामि फग्गुमित्तं, च गोयमं धणगिरिं च वासिट्ठं ॥ कुच्छं सिवभूइं पि य, कोसियदुज्जंत–कण्हे अ ॥ १ ॥ तं वंदिऊण सिरसा, भद्दं वंदामि कासवसगुत्तं ॥ नक्खं कासवगुत्तं, रक्खं-पि य कासवं वंदे ॥ २ ॥ वंदामि अज्जनागं, च गोयमं जेहिलं च वासिट्ठं ॥ विण्हुं माढर-गुत्तं, कालगमवि गोयमं वंदे ॥ ३ ॥ गोयमगुत्तकुमारं, संपलियं तह य भद्दयं वंदे । थेरं च अज्जवुड्ढं, गोयमगुत्तं नमंसामि ॥ ४ ॥ तं वंदिऊण सिरसा, थिरसत्तचरित्तनाणसंपन्नं ॥ थेरं च संघवालियं, गोयमगुत्तं पणिवयामि ॥ ५ ॥ वंदामि अज्जहत्थिं। च कासवं खंतिसागरं

धीरं ॥ गिम्हाण पढममासे, कालगयं चेव सुद्धस्स ॥ ६ ॥ वंदामि अज्जधम्मं । च सुव्वयं सीललद्धिसंपन्नं ॥ जस्स निक्खमणे देवो, छत्तं वरमुत्तमं वहइ ॥ ७ ॥ हत्थिं कासवगुत्तं, धम्मं सिवसाहगं पणिवयामि ॥ सीहं कासवगुत्तं, धम्मं पि य कासवं वंदे ॥ ८ ॥ तं वंदिऊण सिरसा, थिरसत्तचरित्तनाणसंपन्नं ॥ थेरं च अज्जजंबुं, गोयमगुत्तं नमंसामि ॥ ९ ॥ मिउमद्दवसंपन्नं, उवउत्तं नाण-दंसण-चरिते ॥ थेरं च नंदियपियं, कासवगुत्तं पणिवयामि ॥ १० ॥ तत्तो य थिरचरित्तं, उत्तमसम्मत्तसत्तसंजुत्तं । देसिगणिखमासमणं, माढरगुत्तं नमंसामि ॥ ११ ॥ तत्तो अणुओगधरं, धीरं मइसागरं महासत्तं ॥ थिरगुत्तखमासमणं, वच्छसगुत्तं पणिवयामि ॥ १२ ॥ तत्तो य नाण-दंसण-चरित्त-तवसुट्ठियं गुणमहंतं ॥ थेरं कुमारधम्मं, वंदामि गणिं गुणोवेयं ॥ १३ ॥ सुत्तत्थरयणभरिए, खम-दम-मद्दवगुणेहिं संपन्ने । देविड्ढिखमासमणे, कासवगुत्ते पणिवयामि ॥ १४ ॥ स्थविरावलीसूत्रं संपूर्णम् ॥

अथ श्रीसुधर्मस्वामी १, श्रीजम्बूस्वामी २, श्रीप्रभवस्वामी ३, श्रीशय्यंभवसूरिः ४ स्थविराः, संक्षिप्तवाचनासत्काश्चत्वारः सन्ति, तेषां मीलने स्थविराश्चतुरशीतिः ( ८४ ) ॥ शाखाः पञ्चचत्वारिंशत् ( ४५ ) ॥ गणाऽष्टौ (८) ॥ कुलानि च सप्तविंशतिः (२७) सन्ति ॥ अत्रान्तरे–'वंदामि फग्गुमित्तं च। गोयमं धणगिरिं य वासिट्ठं ॥ इत्यादि गाथावृन्दं बहुषु आदर्शेषु दृश्यते। कतिपयपुस्तकेषु च–'थेरस्स णं अज्जफग्गुमित्तस्स गोयमसगुत्तस्स अज्जधणगिरिथेरे अंतेवासी वासिट्ठगुत्ते' इत्यादि यावत्–'थेरस्स णं अज्जसीहस्स कासवगुत्तस्स अज्जधम्मे थेरे अंतेवासी कासवगुत्ते, थेरस्स णं अज्जधम्मस्स कासवगुत्तस्स अज्जसंडिल्ले अंतेवासी' इति पर्यन्तम्॥ दृश्यते च–'वंदामि फग्गुमित्तं। गोयमधणगिरिं य वासिट्ठं ॥ कुच्छं सिवभूइं पि य। कोसियदोज्जंत–कण्हे य ॥ १ ॥ इत्यादि

---

१. वन्दे फल्गुमित्रं । गौतमं धनगिरिं च वाशिष्ठम् ॥ कुच्छं शिवभूतिमपि च । कौशिक–दुर्यान्त–कृष्णं च ॥ १ ॥ तं वन्दित्वा शिरसा । भद्रं वन्दे काश्यपसगोत्रम् ॥ नक्षं काश्यपगोत्रं । रक्षमपि च काश्यपं वन्दे ॥ २ ॥ वन्देऽहम् आर्यनागं । च गौतमं जेहिलं च वाशिष्ठम् ॥ विष्णुं माढरगोत्रं । कालकमपि गौतमं वन्दे ॥ ३ ॥ गौतमगुप्तकुमारं । संपलितं तथा च भद्रकं वन्दे ॥ स्थविरं चाऽऽर्यवृद्धं । गौतमगोत्रं नमस्यामि ॥ ४ ॥ तं वन्दित्वा शिरसा । स्थिरसत्त्व–चरित्र–ज्ञानसंपन्नम् ॥ स्थविरं च सङ्घपालितं । गौमतगोत्रं प्रणमामि ॥ ५ ॥ वन्दे आर्यहस्तिनं । च काश्यपं क्षान्तिसागरं धीरम् ॥ ग्रीष्मस्य प्रथममासे । कालगतं चैत्रशुक्लस्य ॥ ६ ॥ वन्दे आर्यधर्मं । च सुव्रतं शीललब्धिसंपन्नम् ॥ यस्य निष्क्रमणे देवः । छत्रं वरमुत्तमं वहति ॥ ७॥ हस्तिनं काश्यपगोत्रं । धर्मं शिवसाधकं प्रणमामि ॥ सिंहं

गाथाः, तत्र गद्योर्थः पुनः पद्यैः संगृहीत इति पौनरुक्त्यं न भावनीयम्। गाथाश्च सुगमा एव अतो न विवृत्ताः, तथा अत्र स्थविरावलीमध्ये श्रीआर्यरक्षितादयो नोक्ताः, परं तेऽपि स्थविरा इव इति तेषां संबन्धो लिख्यते—दशपुरे नगरे सोमदेवः पुरोहितः, रुद्रसोमा भार्या; तयोः पुत्र आर्यरक्षितो विदेशे गत्वा चतुर्दश विद्याः पठित्वा आगतः, राज्ञा हस्तिस्कन्धे समारोप्य महामहोत्सवेन गृहे प्रापितः। मातुश्चरणौ ननाम, परं माता न तादृशी हर्षिता। कथं न हर्षिता? इति पृष्टा प्राह—अहं तु परमार्हता श्राविका, त्वया तु नरकपातकारिण्यो विद्या भणिताः किं ताभिः? यदि मां मन्यसे, सुबुद्धिश्च तदा दृष्टिवादं पठ। ततस्तं भणितुमिच्छन् दृष्टीनां दर्शनानां वादो विचारणा—'दृष्टिवादः' इति। नामाऽपि शोभनमस्य इति ध्यायन्, रात्रौ मातरं पृष्ट्वा तत्पठनाय चलितः।

---

काश्यपगोत्रं। धर्ममपि च काश्यपं वन्दे ॥ ८ ॥ तं वन्दित्वा शिरसा। स्थिरसत्त्व—चरित्र—ज्ञानसंपन्नम् ॥ स्थविरं चाऽऽर्यजम्बुं। गौतमगोत्रं नमस्यामि ॥ ९ ॥ मृदुमार्दवसंपन्नं। उपयुक्तं ज्ञान—दर्शन—चरित्रेषु ॥ स्थविरं च नन्दितपितरं। काश्यपगोत्रं प्रणमामि ॥ १० ॥ ततश्च स्थिरचारित्रं। उत्तमसम्यक्त्वसत्त्वसंयुक्तम् ॥ देशिगणिक्षमाश्रमणं। माढरगोत्रं नमस्यामि ॥ ११ ॥ ततोऽनुयोगधरं। धीरं मतिसागरं महासत्त्वम् ॥ स्थिरगुप्तक्षमाश्रमणं। वत्ससगोत्रं प्रणमामि ॥ १२ ॥ ततश्च ज्ञान—दर्शन—चरित्र—तपस्सुस्थितं गुणमहान्तम् ॥ स्थविरं कुमारधर्मं। वन्दे गणिं गुणोपेतम् ॥ १३ ॥ सूत्रा—ऽर्थरत्नभृतं। क्षम—दम—मार्दवगुणैः संपन्नम् ॥ देवर्धिक्षमाश्रमणं। काश्यपगोत्रं प्रणमामि ॥ १४ ॥

इक्षुवाटिकस्थस्य स्वमातुलस्य तोसलिपुत्राचार्यस्य समीपे अग्रे गच्छतः सम्मुखमीलनार्थमागच्छन् पितृमित्रद्वि-
जस्तस्य हस्ते सार्धनव ( ९ ॥ ) इक्षुयष्टयो दृष्टाः, शकुनं विचारितम्, दृष्टिवादं सार्धनवपूर्वाणि यावत् पठिष्या-
मि । ततस्ता इक्षुयष्टीर्मातुरर्पणायाऽऽदिश्य गतः । तेषामुपाश्रयद्वारे ढड्ढरश्राद्धवद् ढड्ढरस्वरेण गुरून् वन्दित्वा
अग्रे उपविष्टः श्राद्धवद्वन्दनाद् गुरुभिरभिनवश्राद्धः उक्तः । साधुभिरुपलक्षतोऽयं श्रीगुरूणां भागिनेयो भवति ।
गुरुभिर्देशनां दत्त्वा, योग्यतां ज्ञात्वा दीक्षितः । स्वपार्श्वस्थं श्रुतं पाठितम् पूर्वाध्ययनार्थं श्रीवज्रस्वामिसमीपे
मुक्तस्ततो गच्छन् उज्जयिन्यां श्रीभद्रगुप्तसूरिकृताऽनशनं निर्यापयामास । तेन कथितं वज्रस्वामितः पृथगुपा-
श्रये स्थेयम् । यतस्तेन सह सोपक्रमायुष्क एकरात्रमपि वसेत् स तेनैव सह म्रियते इति, ततस्तत्र गत्वा, पृथ-
गुपाश्रये उपधिं मुक्त्वा श्रीवज्रस्वामिनं नत्वा स्वयं पृथक् स्थितः । श्रीवज्रस्वामिना च तदागमनरात्रौ स्वप्नो
दृष्टः–यथाऽस्मत्पायसपात्रं केनचित्प्राघूर्णकेन आगत्य पीतं किञ्चित्स्तोकमेव स्थितम् । ततः प्रातरागतस्य आर्य-
रक्षितस्य पूर्वाण्यध्यापयद् दशमपूर्वयमकेषु अधीयमानेषु पितृभिः सन्देशकारकैराकारणेऽपि, अनागमनेऽपि
तस्य लघुभ्राता फल्गुरक्षितो मातृप्रमुखैर्मुक्तः, सोऽपि तत्राऽऽगतः, तं प्रतिबोध्य दीक्षितः । ततः स्वजनान्
प्रतिबोधयितुं गमनाय समुत्सुकः पप्रच्छ–दशमपूर्वमद्यापि कियत्तिष्ठति । गुरुभिः प्रोक्तम्–विन्दुमात्रं पठितम्,
समुद्रतुल्यं तिष्ठति । ततो भणनाय भग्नोत्साहोऽपि कियत् पपाठ । ततो गुरुभिः शेषश्रुतस्य तस्य स्वस्मिन् विच्छे

दकं कृत्वा अनुज्ञा दत्ता। ततः फल्गुरक्षितसार्द्धं दशपुरे गतः, राज्ञा प्रवेशोत्सवः कृतः। मातृ-भगिन्यादीन् असारसंसारस्वरूपं दर्शयित्वा प्राव्राजयत्। स्नुषादिकं लज्जया प्रव्रजितम्। पिता तु पुत्राऽनुरागेण प्रव्रजितः, परं छत्रिकाम्, कमन्डलुम्, यज्ञोपवितम्, उपानहौ, धौतिकं च न मुञ्चति। ततो गुरुशिक्षिता बालादयो वदन्ति सर्वसाधून् वयं वन्दामहे, परं छत्रिकावन्तं न। ततो वन्दनया वञ्चितः छत्रिकां मुमोच। एवं क्रमेण कमन्डलुम्, यज्ञोपवीतम्, उपानहौ च अमुञ्चत्। अन्यदा अनशनं कृत्वा कोऽपि साधुर्मृतः। गुरुशिक्षया वैयावृत्तिकरणार्थं साधुषु विवदमानेषु सोमदेवेन पृष्टम्-किमत्र महानिर्जरा वर्तते? गुरुणा प्रोक्तम्-एवम्। तर्हि अहं वहामि साधुम्, गुरुणा प्रोक्तम्-उपसर्गसहने शक्तिर्भवति तदा वह, नोचेद् नहि। अन्यथा अनिष्टं भवति। ततस्तमुत्क्षिप्य मार्गे व्रजन् गुरुशिक्षितैर्बालैर्धौतिकमपकृष्य चोलपट्टः परिधापितः पश्चात्स्थितेन स्नुषादिप्रव्रजितेन परिवारेण दृष्टो लज्जितः प्राह-अथ चोलपट्टपरिधापनेन किं? यद् द्रष्टव्यं तद् दृष्टमिति। प्रोक्तं गुरुभिः चोलपट्टस्तिष्ठतु। ततो लज्जाया भिक्षार्थं न याति। ततो गुरुभिः साधूनां प्रोक्तम्-भवद्भिर्नानीय देया, स्वयं यास्यति। इत्युक्त्वा गुरवोऽन्यत्र विहृताः। साधुभिरानीय स्वयमाहारः कृतः, तस्मै न दत्तः। स तु क्षुधित एव तस्थौ। द्वितीयदिने गुरव आगताः 'किं न वृद्धस्य आहारो दत्तः' इति कृत्रिमः कोपः कृतः। साधुभिः प्रोक्तम्-स्वयं कथं न याति? ततो गुरवः स्वयं तदर्थं प्रचलिताः। ततोऽविनयं ज्ञात्वा स्वयमेव गतः कस्यापि इभ्यस्य गृहे। परम-

वर्षे अश्वग्रीवप्रतिवासुदेवराजेन्द्रः स्वकीयसेवकान् रक्षार्थं प्रेषयति। अन्यदा प्रजापते राज्ञो वारकं समागतम्। तदा त्रिपृष्ठोऽचलेन बान्धवेन सह जनकस्य आज्ञया तत्रागतः, यत्र गुहायां सिंहस्तिष्ठति, तत्र रथे स्थित्वा, शस्त्राणि धृत्वा, कवचं परिधाय समाजगाम। तदा सिंहो रथशब्दं श्रुत्वा उत्थितः, सिंहं दृष्ट्वा त्रिपृष्ठश्चिन्तया-मास-अयं रथारूढो न, शस्त्राणि न धत्ते, देहे चास्य कवचं नास्ति; मयाऽपि रथं त्यक्त्वा शस्त्राणि मुक्त्वा, कवचम् उत्तार्य अनेन सह योद्धव्यम्। इति कृत्वा सिंहम्-अभिलाप्य मुखस्य ओष्ठसंपुटं विदार्य स्फा-टितः-जीर्णवस्त्रवत् सिंहो विनाशितः। भूमौ पातितः, परं सिंहस्य जीवः शरीराद् न निस्सरति। तदा सार-थिना उक्तम्-अहो सिंह! यथा त्वं मृगराजोऽसि, तथा अयमपि तव हन्ताऽपि नरराजोऽस्ति। येन तेन नरेण त्वं न व्यापादितोऽसि इति श्रुत्वा, सिंहो मृत्वा नरकं ययौ। अन्यदा अश्वग्रीवप्रतिवासुदेवं त्रिपृष्ठो नृपो जघान। वासुदेवपदवी त्रिपृष्ठस्य समागता। अथैकदा त्रिपृष्ठः सुप्तोऽस्ति, परदेशादागता गायका गीतगानं कुर्वन्ति। तदा च स्वशय्यापालकस्य वासुदेवेनोक्तम्-यदाऽस्माकं निद्रा समेति, तदा इमे गायकास्त्वया स्वस्थाने प्रेषितव्या इति। वासुदेवो यदा सुप्तस्तदा च शय्यापालकेन तेषां गीतश्रवणलुब्धेन तेन गायका न प्रेषिताः। क्षणेन वासुदेवो जजागार, रुष्टः शय्यापालकमवादीत्-किमरे! एते गायका न प्रेषिताः? शय्यापालकेन उक्तम्-स्वामिन्! एते गायकाः सरसं कर्णसुखदं गानं चक्रुः। तेन मया न विसर्जिताः, इति श्रुत्वा रुष्टेन वासुदेवेन

ऽज्ञानाद् अपरद्वारेण गच्छन् गृहस्वामिना प्रोक्तम्–भोः! मुख्यद्वारेण एहि । स उवाच भोः! 'लक्ष्मीर्यत्र यत्र आयान्ती तत्र तत्र भव्या' को विचारस्तत्र । द्वात्रिंशद् मोदकान् भिक्षया लब्ध्वा आगतः । गुरुभिर्विचारितम्–द्वात्रिंशत् शिष्या अस्माकं भविष्यन्ति । प्रथमलाभत्वात् ते मोदकाः साधूनां दत्ताः । पुनर्गत्वा परमान्नमानीय स्वयं बुभुजे । लब्धिसंपन्नत्वाद् गच्छाधारो जज्ञे । तस्य गच्छे त्रयः साधवः पुष्पमित्रा लब्धिसंपन्नाः–दुर्बलिकपुष्पमित्रः १, घृतपुष्पमित्रः २, वस्त्रपुष्पमित्रः ३, । चत्वारश्च महाप्राज्ञाः दुर्बलिकपुष्पमित्रः १, वन्ध्यः २, फल्गुरक्षितः ३, गोष्ठामाहिलः ४ । अन्यदा इन्द्रेण श्रीसीमन्धरवचसा कालिकाचार्यवद् निगोदसूक्ष्मविचारपृच्छया परीक्षिताः, वन्दित्वा, स्तुतिं कृत्वा, शालाद्वारं परावृत्य गत इन्द्रः स्वस्थानम् । ततः श्रीआर्यरक्षितसूरिभिर्बुद्धिहीनान् साधुन् ज्ञात्वा अनुयोगश्चतुर्द्धाऽपि पृथक् पृथग् व्यवस्थापितः । एवंविधाः श्रीआर्यरक्षितसूरयः स्थविरा जाताः ।

एवं विद्याधरगच्छीयौ वृद्धवादि–सिद्धसेनौ । तयोः संबन्धलेशो यथा–एकः साधुर्वृद्धत्वेऽपि उच्चैः स्वरेण पठन् राज्ञा दृष्टः, प्रोक्तं च–त्वं किं मुशलं फुल्लयिष्यसि । ततस्तेन वाग्देवीमाराध्य, विद्यां प्राप्य चतुष्पथे मुशलमूर्द्धं मण्डयित्वा राजसमक्षं फुल्लवितम् । काव्यं च प्राह–मद्रोश्शृङ्गं, शक्रयष्टिप्रमाणम् । शीतोवह्निः, मारुतो निष्प्रकम्पः ॥ यो यद्भूते सर्वथा तन्न किञ्चित् । वृद्धो वादी कः किमाहात्र वादी ॥१॥ तेन वृद्धवादिना सिद्धसेनो

विप्रो वादे जितः, तस्यैव शिष्यो जातः। सिद्धसेनेन श्रीविक्रमादित्यनामा राजा प्रतिबोधितः। विक्रमादित्येन शत्रुञ्जययात्रा कृता। तस्य संघे १७० स्वर्णमया देवालया आसन्। पुनः श्रीसिद्धसेनसूरीणामुपदेशेन अन्येऽपि राजानस्तीर्थोद्धारं चक्रुः। श्रीसिद्धसेनसूरिसान्निध्याद् विक्रमादित्यो राजा संवत्सरं प्रवर्तयामास। पूर्वं तु श्री-वीरसंवत्सरमासीत्। इति वृद्धवादि-सिद्धसेनसंबन्धः।

एवं श्रीहरिभद्रसूरिरपि महाप्रभावकः, तत्संबन्धो यथा-हरिभद्रनामा विप्रो व्याकरणादिशास्त्रपारगः सन् प्रतिज्ञां चक्रे। यस्य उक्तस्यार्थं अहं न वेद्मि तस्य शिष्यो भविष्यामि। एकदा सन्ध्यायां नगरमध्ये गच्छन् साध्व्या गुण्यमानां गाथां शुश्राव-"चक्किदुगं हरिपणगं। पणगं चक्कीण केसवो चक्की॥ केसव-चक्की केसव। दुचक्कि-केसव-चक्की य"॥ १॥ श्रुत्वा च प्राह-भोः साध्वि! कोऽयं चिगचिगायमानः शब्दो जायमानोस्ति। साध्वी प्राह-"नवीने लिम्पिते चिगचिगाटो जायते" एतत् श्रुत्वा विप्रो दध्यौ-मया हारितम्, अर्थानवगमात्। कोऽर्थोऽस्या गाथायाः? साध्वी प्राह-अस्माभिः प्रायो गृहस्थस्याऽग्रे अर्थो न कथ्यते। अस्मद्गुरवः उद्याने सन्ति ते कथयिष्यन्ति। ततस्तत्र गत्वा, गाथार्थं श्रुत्वा, प्रतिज्ञापालनार्थं दीक्षां ललौ। जैनशास्त्राण्यपि भणित्वा सूरि-पदं प्राप्तः। तस्य हरिभद्रसूरेर्हंस-परमहंसौ शिष्यौ बहुशास्त्रपारगामिनौ अभूताम्। परशासनविचाररहस्यग्र-

१. चक्रिद्विकं हरिपञ्चकम्। पञ्चकं चक्रिणा केशवश्चक्री॥ केशव-चक्रिणौ केशवः द्विचक्रि-केशव-चक्री च॥ १॥

हणार्थं बौद्धाचार्यसमीपे प्रेषितौ गतौ, छात्रीभूय बौद्धगुरुपार्श्वे पेठतुः। एकदा पुस्तकेषु खट्टिकां दत्तां दृष्ट्वाऽक्षरेषु ज्ञातं सूरिणा कावपि जैनौ स्तः। तत्परीक्षार्थं गुरुरुपरिभूमौ छात्रपाठनाय उपविष्टः, छात्रा उपरि आगत्य भणन्ति सोपानकेषु जिनप्रतिमा मुक्ता परीक्षार्थम्, बौद्धसाधवः प्रतिमोपरि पादौ दत्त्वा उत्तरन्ति। हंस-परमहंसौ जिनप्रतिमां वीक्ष्य खट्टिकया प्रतिमाहृदये यज्ञोपवीतं कृत्वा उत्तीर्णौ। ततो बौद्धैर्ज्ञातौ। मरणभयाच्छङ्कितौ स्वपुस्तिकां लात्वा स्वदेशं प्रतिचेलतुः। बौद्धगुरुवचनाद्राज्ञा पश्चात्कटकं प्रेषितम्। प्रथमं तैः सहस्रयोद्धैः हंसो हतः, पश्चाद् बहु बलम् आगच्छन् दृष्ट्वा चित्रकोटदुर्गपद्याऽऽसन्नाऽऽगतः परमहंसोऽपि हतः। तत्सैन्यं पश्चाद्गतम्। एतत्स्वरूपं ज्ञात्वा गुरुः कोपाक्रान्तो जातः। गुरुणा उत्तप्ततैलपूरितः कटाहः कृतः, मन्त्रं जपित्वा यदा कटाहे गुरुः कर्करं क्षिपति तदा बौद्धस्तपस्वी मंत्राकर्षितः तस्मिन् कटाहे पतित्वा म्रियते। एवं गुरुणा वहवो बौद्धा आकर्षिताः, तथापीर्ष्या न निवर्तते। तदा एकः श्राद्ध एतां गाथां श्रावयामास-"[१]जइ जलइ जलो लोए। कुसत्थपवणा उ कसायग्गी ॥ तं वुज्जं जिणसत्थं। वारिसत्तो वि पज्जलई" ॥ १ ॥ एनां गाथां श्रुत्वा श्रीहरिभद्रसूरिः कोपादुपशान्तः। कुत्रापि एवं लिखितमस्ति-याकिनीमहत्तरा श्राविकां लात्वा शालायामागत्य गुरून् पञ्चेन्द्रियवधालोचनां पप्रच्छ। गुरुणा पञ्च कल्याणे (उपवासे) प्रोक्ते। साध्वी प्राह-अज्ञानेनापि एकस्मिन्

१. यदि ज्वलति जलं लोके। कुशास्त्रपवनेन तु कषायाऽग्निः ॥ तं विध्यापक जिनशास्त्रम्। वर्षन्नपि प्रज्वलति ॥ १ ॥

पञ्चेन्द्रियवधे एतावती आलोचना दीयते तदा जानतां भवतां एतावद्बौद्धाकर्षणे कियती समेष्यति । ततः कोपादुपशान्तेन पश्चात्तापं कृत्वा बौद्धा मुक्ताः । स्वपापशुद्धेः कृते आकर्षितबौद्धप्रमाणानि १४४४ प्रकरणानि, पूजापञ्चाशकादिपंचाशक–अष्टक–षोडशादीन्यकरोत् । पुनः श्रीआवश्यकबृहद्वृत्तिप्रमुखाः वृत्तयोऽपि कृतवान् । एवंविधाः श्रीहरिभद्रसूरयो जाताः ।

एवं वप्पभट्टिसूरिरपि प्रभावको येन गोपनगरस्वामी 'आम'–नामा राजा प्रतिबोधितः । गुरुवचनाद् येन शत्रुञ्जययात्रा कृता तीर्थोद्धारश्च कृतः । अभिग्रहवद्धस्य गच्छतो देवतया 'खिवसरण्डी' ग्रामे शत्रुञ्जयावतारस्य प्रासादे प्रतिमापादुकामण्डिते दर्शिते अभिग्रहोऽपि पूर्णो जातः । तत्र शत्रुञ्जयाभिग्रहः पूर्यते । पुनस्तेन आमभूपेन गोपनगरे १०८ गजोच्चैस्तरप्रासादे १८ भारहेममयी श्रीवीरप्रतिमा स्थापिता । सा च अद्यापि भूमिमध्येस्ति । एवंविधाः श्रीवप्पभट्टिसूरयः ॥

एवं पादलिप्ताचार्योऽभूत्–यः पादलेपेन आकाशे उड्डीय शत्रुञ्जय–गिरनारा–ऽऽबु–अष्टापद–सम्मेतशिखरादिषु तीर्थेषु देवान् वन्दित्वा पारणमकरोत् । पुनर्यत्कृता निर्वाणकलिकाद्यो ग्रन्थास्सन्ति । एवं श्रीमलयगिरिः यत्कृता विशेषावश्यकवृत्तिप्रमुखा अनेके ग्रन्था सन्ति ॥ एवं श्रीहेमचन्द्रसूरिः पूर्णपल्लियगच्छे सार्धत्रिकोटि–ग्रन्थकर्ता, अष्टादशदेशस्वामी श्रीकुमारपालप्रतिबोधकः, लब्धपद्मावतीवरो बभूव । एवं उकेशवंशगच्छे श्रीर-

लप्रभसूरिः, येन उसियनगरे, कोरण्टनगरे च समकालं प्रतिष्ठा कृता । रूपद्वयकरणेन चमत्कारश्च दर्शितः ॥ एवं मानदेवसूरिः शान्तिस्तवकृत् ॥ एवं भक्तामरस्तोत्रकर्ता श्रीमानतुङ्गसूरिः ॥ एवं श्रीखरतरगच्छे नवाङ्गीवृत्तिकारकः श्रीस्तम्भनकपार्श्वप्रकटकः श्रीअभयदेवसूरिः ॥ एवं श्रीतपगच्छे भाष्य–कर्मग्रन्थादिशास्त्रकारकः श्रीदेवेन्द्रसूरिः ॥ पुनरेवं वादिवेतालश्रीशान्तिसूरिः ॥ पुनः एवं परकायप्रवेशकृत् श्रीजीवदेवसूरिः ॥ पुनरेवं कुमुदचन्द्रदिगम्बरजेता श्रीवादिदेवसूरिः ॥ एवमनेके प्रभावकपुरुषाः श्रीजिनशासने जाताः सन्ति, तेऽपि स्थविरावलीप्रान्ते वाच्याः ॥ तथा श्रीकालिकाचार्योऽपि स्थविरः, परं कालिकाचार्यास्त्रयो जाताः, तेषां विस्तरसंबन्धस्तु मत्कृतश्रीकालिकाचार्यकथातः पृथगेव ज्ञेयः । तथा यदि नव वाचना जायते । तदा स्थविरावल्या एकं व्याख्यानम्, वेला स्यात् तदा कालिकाचार्यकथाऽपि वाच्या ॥ अथ च यदि एकादश, त्रयोदश वाचना भवन्ति तदा एकं व्याख्यानं स्थविरावल्याः, द्वितीयं कालिकाचार्यकथा, सा मत्कृता अतिसरसा पृथगेवाऽस्ति ॥

॥ इत्यनेनाऽष्टमवाचनायां श्रीस्थविरावली व्याख्याता ॥ ८ ॥ यत्र पर्वणि केचिद् जीवा अभयदानं ददति, केचिच्छीलं पालयन्ति, केचित्तपस्तपन्ति, केचिज्जीवभावनां भावयन्ति ॥

श्रीकल्पसूत्रवरनाममहागमस्य, गूढार्थभावसहितस्य गुणाऽऽकरस्य ॥
लक्ष्मीनिधेर्विहितवल्लभकामितस्य, व्याख्यानमष्टममिमं किल श्रेयसेऽस्तु ॥ ८ ॥

इति श्रीलक्ष्मीवल्लभगणिविरचितायां कल्पद्रुमकलिकायाम् अष्टमं व्याख्यानं समाप्तम् ॥ ८ ॥

# अथ नवमं व्याख्यानम् ।

वंदाभिभद्दबाहुं, पाइणं चरमसयलसुयनाणिं । सूत्तत्थकारगमिसिं, दसाण कप्पे य ववहारे ॥ १ ॥

अर्हतो भगवतः श्रीमन्महावीरदेवस्य शासनेऽतुलमङ्गलमालाप्रकाशने श्रीपर्युषणापर्वराजाधिराजस्य समागमने श्रीकल्पसिद्धान्तस्य त्रयोऽधिकारा भण्यन्ते–प्रथमे श्रीजिनचरित्रम्, तदनन्तरं स्थविरकल्पम्, तदनन्तरं साधुसमाचारीकल्पम् । तत्राऽधिकारद्वयवाचनानन्तरम्, अथ तृतीयोऽधिकारः साधुसमाचारीरूपः श्रीभद्रबाहुस्वामिना वर्ण्यते–तत्रादौ सूत्रम्—

ते णं काले णं, ते णं समए णं समणे भगवं महावीरे वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसवेइ ॥ १ ॥ से केणट्ठेणं भंते! एवं वुच्चइ–समणे भगवं महावीरे वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसवेइ ?

अर्थः—तस्मिन् काले तस्मिन् समये श्रमणो भगवान् महावीरः आषाढचतुर्मासादारभ्य वर्षाकालस्यैकस्मिन् मासे विंशत्यहोरात्राधिके गते सति अर्थादाऽऽषाढचतुर्मासात् पञ्चाशदहोरात्रैः पर्युषणामकार्षीत्

गृहस्थानां पुरतो व्यक्तं वक्तव्यं साधुभिरस्माभिरत्र चतुर्मास्यां स्थितम्, वर्षाकालस्य चतुर्मास्यां स्थिता वयमिति साधुभिर्वाच्यम् । आषाढचतुर्मासप्रतिक्रमणानन्तरं पञ्चाशद्दिनैः पर्युषणापर्व प्रतिक्राम्यमित्यर्थः । अत्र बहुवक्तव्यमस्ति तट्टीकान्तरादवसेयम्, ग्रन्थगौरवभयात्, सूत्राऽर्थव्याघाताच्च न लिखितमस्ति । अथ पञ्चाशद्दिनैः पर्युषणापर्व विधेयम्, गृहस्थानां पुरतश्चातुर्मासी स्थितिर्वक्तव्या । तत्राधिकरणदोषप्रश्नोत्तरं वदन्ति। पूर्व शिष्यः पृच्छति–'से केण' इति। भोः स्वामिन्! हे पूज्य! सः कोऽर्थः? किं प्रयोजनं श्रमणो भगवान् महावीरो वर्षाकालस्य पञ्चाशद्दिनेषु गच्छत्सु लोकसमक्षं वर्षावासनिमित्तं 'पज्जोसवेइ' पर्युषणां करोति, आदावेवाऽऽषाढे एवं कथं न वदति? एतस्य शिष्यप्रश्नस्योपरि गुरुरुत्तरं वदति—

जओ णं पाएणं अगारीणं अगाराइं कडियाइं, उक्कंपियाइं, छन्नाइं, लित्ताइं, गुत्ताइं, घट्ठाइं, मट्ठाइं, संपधूमियाइं, खाओदगाइं, खायनिद्धमणाइं अप्पणो अट्ठाए कडाइं परिभुत्ताइं, परिणामियाइं भवंति; से तेणट्ठेणं एवं वुच्चइ–समणे भगवं महावीरे वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसवेइ ॥ २ ॥

अर्थः—हे शिष्य! येन कारणेन प्रायो बाहुल्येनाऽगारिणां गृहस्थानामगाराणि गृहाणि गृहस्थैः वर्षाकाल-

स्यादौ खस्य वसनार्थं 'कडियाइं' कटितानि कट–वंश–कम्बास्ताभिर्ग्रथितानि बद्धानि, वातच्छटादीनि वातादिनिवारणार्थम् । पुनरुत्कम्पितानि खटिकया धवलितानि । पुनः, छन्नानि घासादिनाऽऽच्छादितानि । पुनर्लिप्तानि गोमयेन । पुनर्गुप्तानि पार्श्वदेशे कृतवाटिकानि, द्वारदेशे वा कृतकपाटानि । घृष्टानि पुनरुच्चा–ऽवचभूमिदेशं भङ्क्त्वा समीकृतानि । पुनर्मृष्टानि कोमलपाषाणादिना संस्कृतानि सुकुमालानि कृतानीत्यर्थः । पुनस्संधूपितानि अगुरु–गुग्गल–दशाङ्गधूपैः सुगन्धीकृतानि । पुनः खातोदकानि उपरिभूम्यादिषु विहितजलवहनप्रणालिकानि । पुनः खातनिर्धमनानि कृतसमस्तगृहजलनिर्गमनमार्गाणि एतादृशानि गृहस्थैः स्वकीयगृहाणि स्वनिवासार्थं कृत्वा परि–सामस्त्येन भुक्तानि भवन्ति, परिणामितानि प्रासुकीकृतानि भवन्ति तेन हेतुना एकेन मासेन विंशतिदिनैः श्रमणो भगवान् महावीरः पर्युषणां करोति, चतुर्म्मास्यां लगत्यामेव प्रकटं गृहस्थानां पुरत एव पर्युषणां करोति तदा गृहस्थोऽयं गृहसंबन्धिनमारम्भं करोति स सर्वोऽप्यारम्भो लगति, अथवा लोका एवं जानन्ति–अस्मिन् वर्षे साधव इदानीमेव वर्षादौ झटित्यागतास्तदा एवं ज्ञायते अस्मिन् वर्षे महती वर्षा भाविनी तेन हट्टा विशेषेण संस्कार्याः । पुनः कर्षकाः क्षेत्राणि सूदयन्ति । वल्लराणि प्रज्वालयन्ति । धरित्रीं हलादिभिः स्फोटयन्ति इत्यादीन् बहूनारम्भान् विदधति । ते सर्वेऽप्यारम्भाः सपापाः साधून् लगन्ति, तदर्थं श्रमणो भगवान् महावीर आषाढचतुर्मासिकप्रतिक्रमणात् पञ्चाशद्दिनेषु व्यतीतेषु सत्सु पर्युषणां करोति ।

जहा णं समणे भगवं महावीरे वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसवेइ, तहा णं गणहरा वि वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसविंति ॥ ३ ॥ जहा णं गणहरा वासाणं सवीसइराए, जाव–पज्जोसविंति। तहा णं गणहरसीसा वि वासाणं जाव–पज्जोसविंति ॥ ४ ॥ जहा णं गणहरसीसा वासाणं जाव–पज्जोसविंति। तहा णं थेरा वि वासावासं पज्जोसविंति ॥ ५ ॥ जहा णं थेरा वासाणं जाव–पज्जोसविंति । तहा णं जे इमे अज्जत्ताए समणा निग्गंथा विहरंति, ते वि अ णं वासाणं जाव–पज्जोसविंति ॥ ६ ॥

अर्थः—येन कारणेन श्रमणो भगवान् महावीरो वर्षाकालस्य पञ्चाशद्दिनेषु व्यतीतेषु वर्षानिमित्तं पर्यूषणा-पर्व करोति, तथा गणधरदेवा अपि वर्षाकालस्य पञ्चाशद्दिनेषु गच्छत्सु पर्युषणां कुर्वन्ति पुनर्यथा गणधरास्तथा गणधराणां शिष्याः पञ्चाशद्दिनेषु गच्छत्सु पर्युषणां कुर्वन्ति । यथा गणधरशिष्यास्तथा 'थेरा' स्थविरा अपि-स्थविरकल्पाः साधवः, अथवा जातिस्थविराः, श्रुतस्थविराः, पर्यायस्थविराः साधवोऽपि पञ्चाशद्दिनेषु गच्छत्सु

पर्युषणां कुर्वन्ति। यथा पूर्वोक्ताः स्थविरास्तथा अद्यसत्काः श्रमणाः-निर्ग्रन्थाः साधवो वर्षाकालस्य पञ्चाशद् (५०) दिनेषु गच्छत्सु पर्युषणापर्व कुर्वन्ति।

जहा णं जे इमे अज्जत्ताए समणा निग्गंथा वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसविंति। तहा णं अम्हं पि आयरिया, उवज्झाया वासाणं जाव-पज्जोसविंति ॥ ७ ॥

जहा णं अम्हं पि आयरिया, उवज्झाया वासाणं जाव-पज्जोसविंति। तहा णं अम्हे वि वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसवेमो ॥ अंतरा वि य से कप्पइ, नो से कप्पइ तं रयणिं उवाइणावित्तए ॥ ८ ॥

अर्थ—यथाऽद्यसत्काः श्रमणा निर्ग्रन्थाः साधवः पञ्चाशद्दिनेषु पर्युषणां कुर्वन्ति तथाऽस्माकमाचार्याः, उपाध्यायाः सूत्रा-ऽर्थदातारस्तेऽपि वर्षाकालस्यैकस्मिन् मासे विंशतिदिनैरधिके गते सति-पञ्चाशद्दिनेषु गतेषु पर्युषणापर्व कुर्वन्ति। यथाऽस्माकमाचार्याः, उपाध्यायाश्च पञ्चाशद् (५०) दिनेषु पर्युषणां कुर्वन्ति, तथा वयमप्येकस्मिन्मासे तथा विंशतिदिनेषु व्यतितेषु पर्युषणां कुर्मः। अथ पुनर्विधिवाक्ये विशेषमाह-अन्तरा अपि च, अर्वागऽपि च महाकार्यविशेषाद् भाद्रपदशुक्लपञ्चमीत इतः कल्पते पर्युषणापर्व कर्तुम्, न कल्पते तां रजनीं

शय्यापालकस्य कर्णे तसकस्तीरकं (त्रपु) क्षिसम्। मृत्वा स नरकं गतः। ततो वासुदेवः चतुरशीतिलक्षायुः प्रपाल्य च्युतः। इति एकोनविंशो भवः। विंशतितमे भवे ससमनरकायुः पालितम्। ततो निःसृत्य एकविंशतितमे भवे सिंहो जातः। ततो मृत्वा द्वाविंशतितमे भवे चतुर्थनरके उत्पन्नः। नरकाद् निःसृत्य तिर्यग्मनुष्यसंबन्धिनो बहून् सूक्ष्मान् भवान् कृत्वा ततः पश्चिममहाविदेहे मूकानगर्यां धनंजयो राजा, तस्य धारिणी राज्ञी, तस्याः कुक्षौ त्रयोविंशतितमे भवे समुत्पन्नो मरीचिजीवः। चतुर्दश स्वप्ना जनन्या दृष्टाः। अनुक्रमेण पुत्रो जातः। प्रियमित्र इति नाम दत्तम्। यदा यौवनावस्थां प्राप्तः, तदा चक्रवर्त्तिभवे त्रुटिताङ्गमायुः पालितम्। तस्य आयुषो मानं कथ्यते–एकोनषष्टिलक्षकोटाकोटिः, ससविंशतिसहस्रकोटाकोटिश्च, चत्वारिंशत्कोटाकोटिश्च वर्षाणां यदा भवति, तदा त्रुटिताङ्गायुर्भवति–चतुरशीतिपूर्वलक्षैः एकं त्रुटिताङ्गायुर्भवति। अन्त्ये वयसि च चक्रवर्ती दीक्षां लात्वा कोटिवर्षं चारित्रं प्रपाल्य समाधिना मृत्वा ससमदेवलोके ससदशसागरायुषो देवश्चतुर्विंशतितमे भवे समुत्पन्नः। ततश्च्युत्वा अत्रैव जम्बूद्वीपे भरतक्षेत्रे छत्राग्रापुर्यां पञ्चविंशतितमे भवे नन्दननामा राजा बभूव। चतुर्विंशतिलक्षवर्षं गृहे स्थितः। ततो गुरूणां पोट्टिलाचार्याणां समीपे दीक्षां जग्राह। एकलक्षवर्षं यावद् मासक्षपणपारणकं तपश्चक्रे। ततः विंशतिं स्थानानि सेवयित्वा तीर्थंकरनामकर्म उपार्जयामास। ततश्चारित्रं प्रपाल्य कालं कृत्वा दशमदेवलोके पुष्पोत्तरप्रवरपुण्डरीकविमाने विंशतिसागरोपमायुषा षड्विंशतितमे

भाद्रपदशुक्लपञ्चमीम् अतिक्रमितुम् । पूर्वमुत्सर्गनयः प्रोक्तः, 'अंतरा वि य से' इत्यादिनाऽपवादनयः प्रोक्तः । दशसु पञ्चकेषु कुर्वत्सु आषाढपूर्णिमादिवसे प्रथमं पञ्चकम्, एवमऽग्रे पञ्चभिः पञ्चभिर्दिवसैरेकैकपर्व, एवं कुर्वतां साधूनां पंचाशद्दिनैरेकादश पर्वाणि भवन्ति, एतेषु एकादशपर्वदिनेषु पर्युषणा कर्त्तव्या । पर्वसु एकस्मिन् दिने न्यूनेऽपि कारणविशेषेण पर्युषणा कर्त्तव्या, परमेकादशभ्यः पर्वभ्यः उपर्यधिके एकस्मिन् अपि दिने गते न कर्त्तव्यं पर्युषणापर्व, उपरि दिनं नो लङ्घनीयमित्यर्थः । अधिकमासोऽपि गणनीयः, अधिकमासाभावे तु सरलमासगणनया आषाढचतुर्मासात् पंचाशद्दिनैर्भाद्रपदशुक्लपञ्चमीदिने पर्युषणापर्व भवति । श्रीकालिकाचार्याणामादेशाद् भाद्रपदशुक्लपंचमीतः चतुर्थ्यां क्रियते, भाद्रपदशुक्लपञ्चमीरात्रीमुल्लङ्घ्याऽग्रे षष्ठ्यां पर्युषणा न कल्पते, अनादिसिद्धानां तीर्थकराणामाज्ञया । इदानीमपि चतुर्थ्यां पर्युषणां कुर्वन्तः साधवो गीतार्थाः, तीर्थङ्कराऽऽज्ञाऽऽराधका ज्ञेया । इति । प्रथम साधुसमाचारी ॥ १ ॥

---

१ चन्द्रप्रज्ञप्ति—सूर्यप्रज्ञप्ति—समवायाङ्ग—जम्बूद्वीपप्रज्ञप्ति—भगवती—अनुयोगद्वार—निशीथभाष्य—चूर्णि—बृहत्कल्पभाष्य—चूर्णि—वृत्ति—पर्युषणाकल्पनिर्युक्ति—चूर्णि—वृत्ति—आवश्यकनिर्युक्ति—बृहद्वृत्ति—स्थानाङ्गसूत्रवृत्ति—दशवैकालिकनिर्युक्ति—बृहद्वृत्ति—ज्योतिष्करण्डकपयन्नप्रभृति-शास्त्रेषु दिनगणनायामधिकमासस्य दिनानामपि गणनापथं प्रतिपादितत्वात् । तथाहि चन्द्रप्रज्ञप्तिसूत्रवृत्तौ यथा—"यस्मिन् संवत्सरे अधिकमाससंभवेन त्रयोदश चन्द्रस्य मासा भवन्ति, सोऽभिवर्धितसंवत्सरः । उक्तं च "तेरस चंदमासा वासो अभिवड्ढिओ य नायव्वो"

एकस्मिन् चन्द्रमासे अहोरात्रा एकोनत्रिंशद् भवन्ति, द्वात्रिंशच्च द्वाषष्टिभागस्य अहोरात्रस्य—२९।६२।३२। एतच्च अनन्तरं चोक्तम्, तत एष राशिस्त्रयोदशभिर्गुणितो जातानि त्रीणि अहोरात्रशतानि त्र्यशीत्यधिकानि, चतुश्चत्वारिंशच्च द्वाषष्टिभागा अहोरात्रस्य—३८३।६२।४४। एतावदहोरात्रप्रमाणोऽभिवर्धितसंवत्सर उपजायते इत्यादि। तथा—प्रथमचन्द्रस्य संवत्सरस्य चतुर्विंशतिः (२४) पर्वाणि प्रज्ञप्तानि, द्वादशमासात्मको हि चान्द्रः संवत्सरः, एकैकस्मिंश्च मासे द्वे द्वे पर्वणी, ततः सर्वसंख्यया चन्द्रसंवत्सरे चतुर्विंशतिः पर्वाणि भवन्ति, द्वितीयचंद्रसंवत्सरस्य चतुर्विंशतिः (२४) पर्वाणि, तृतीयाऽभिवर्धितसंवत्सरस्य षड्विंशतिः (२६) पर्वाणि, तस्य त्रयोदशचंद्रमासात्मकत्वात्। चतुर्थस्य चन्द्रसंवत्सरस्य चतुर्विंशतिः (२४) पर्वाणि, पञ्चमस्य अभिवर्धितसंवत्सरस्य षड्विंशतिः (२६) पर्वाणि, कारणमनन्तरमेवोक्तम्। तत एवमेवोक्तेनैव प्रकारेण 'सपुव्वावरेणं' त्ति पूर्वाऽपरगणितमिलनेन पञ्चसांवत्सरिके युगे चतुर्विंशत्यधिकं पर्वशतं (१२४) भवति इति आख्यातं सर्वैरपि तीर्थकृद्भिः, मया चेति" एवं चाधिकमासस्य गणना नाभिमता स्यात् तदा सर्वमप्यैतद् निष्फलप्रायं प्रोक्तं भवेद्। प्रतिपादितं च वैशिष्ट्यं त्रयोदशचन्द्रमासात्मकत्वेनाभिवर्धितस्य। न च महात्मानो निष्फलं काकदन्तपरीक्षाप्रायं गणनाऽनर्हं च पदमपि ब्रुवते किं पुनरेतावन्तं वाक्यसमूहं कदाचिदपि ब्रवीरन् ? । ततः साधूक्तम्—'अधिकमासोऽपि गणनीय' इति। किंच। "समयावली मुहूत्ता, दीहा पक्खाय मास वरिसाय। भणिओ पलिआसागर, उस्सप्पिणी सप्पिणी कालो ॥ १ ॥" इत्यादिनवतत्त्वप्रकरणगाथादिना विवरणेऽपि 'असंख्यसमयिका एकावलिः, एककोटि-सप्तषष्टिलक्ष-सप्तसप्ततिसहस्र-षोडशाधिकद्विशत (१६७७७२१६) संख्येयावलिकं घटिकाद्वयरूपमेकं मुहूर्तम्, त्रिंशता मुहूर्तैरेकोऽहोरात्रः, पञ्चदशभिरहोरात्रैरेकः पक्षः, पक्षद्वयेन मासः, द्वादशभिश्चन्द्रमासैश्च चतुर्विंशतिपर्वात्मकश्चन्द्रसंवत्सरः, त्रयोदशभिश्चन्द्रमासैः षड्विंशतिपक्षात्मक एकोभिवर्धितसंवत्सरः, चतुर्विंशत्यधिकं शतं पञ्चवार्षिकयुगस्य पर्वाणि' इति समयादारभ्य सर्वस्याऽपि

कालस्य क्रमशः गणनपूर्वमभिहितत्वाद् अधिकमासोऽपि मध्ये गणितः। एवमनेकप्रकारेण शास्त्राक्षरैः तीर्थंकरगणधरादिभिरुक्तत्वेन अधिकमासः प्रामाण्यमापन्नः कथं केनाऽपि अगणनार्हः। स्वीकृतायां च तद्गणनायां पूर्वोक्तरीत्यैव पर्वाधिराजसमाराधनं श्रेयोवहमिति निर्विवादम्। किञ्च, सूर्योदयाऽस्तपरिवर्तनेन सरलदिनगणनायां न बाधकोऽधिको मासः, तथा पर्युषणाया वर्षाकालदिनप्रतिबद्धत्वेन पञ्चाशद्दिनगणनायामधिकस्यापि दिनानि गणनीयानि एव भवन्ति, न च वाच्यमधिकस्यात्र वर्षाकालदिनत्वं सम्प्रति नास्तीति, भवद्भिरपि तस्य मासस्य जैनटिप्पणकाऽभावे लौकिकटिप्पणकानुसारेण दिनानां वर्षाकालत्वेन स्वीकाराद्, अन्यथा तस्मिन् मासे समागते तावत्सु दिनेषु विहारापत्तिः स्याद्, न च सेष्टा शास्त्रसंमता चेति बाधकाभावेन वर्तमानकाले मासवृद्धौ श्रीकल्पसिद्धान्तादिशास्त्रपाठानुसारेण पञ्चाशद्दिनैरेव—प्रथमभाद्रपदे द्वितीयश्रावणे वा वार्षिकपर्वाराधनं वरं, नाशीतिमिर्दिनैः, "सवीसइराए मासे" इत्यादि कल्पवचनप्रामाण्यात्। अत्र केचित् "दिनगणनायां तु अधिकमासः कालचूला इति विवक्षणाद् दिनानां पञ्चाशत् एव कुतोऽशीति वार्ताऽपि" एवं वदन्ति, तद् असत्यम् यतो निशीथचूर्णि—दशवैकालिकबृहद्वृत्ति—आचारांगबृहद्वृत्ति इत्यादिशास्त्रेषु अधिकमासस्य कालचूलाकथनेऽपि तद्दिनगणनं समर्थितमबाधापूर्वम्, ततो तस्य निषेधो न भवति। पुनः—अत्र—केचद् "सत्तरिएहि राइंदिएहिं सेसेहिं" इत्यादि श्रीसमवायांगवचनानुसारेण श्रावण—भाद्रपद—आश्विनवृद्धौ अपि पर्युषणानन्तरं कार्त्तिकचतुर्मासीपर्यंतं दिनानि सप्ततिं यावत् स्थातव्यम्" एवं वदन्वि, तद् न शास्त्रसम्मतम्। यतः पूर्वप्रदर्शितः पाठो जैनटिप्पणकानुसारेण अधिकमासाऽभावे चतुर्मासीप्रमाणस्य वर्षाकालस्य संबन्धिनं चन्द्रसंवत्सरं समवलम्ब्य समुक्तः, अत एव तत्र पाठे समधिकमासचर्चालवोऽपि नाऽऽवलोक्यते, यदि तत्र पाठे मासाधिक्यसद्भावे संवत्सरेऽभिवर्धिते कथं वर्तनीयम्? इति सूचामात्रमपि स्यात् तदैव स पाठोऽत्र प्रस्तावे परिधार्येत, तथा तु तस्मिन् पाठे न समीक्ष्यते समीक्षालक्ष्यदक्षैः,

परं अभिवर्धिते संवत्सरे तु आपाढचतुर्मास्या विंशत्या दिनैः पर्युषणां समाराधयतां साधूनां कार्तिक्यन्तं यावद् दिवसानां शतं तिष्ठत्येव। एतच्च नवांगीवृत्तिकारैः खरतरगच्छाधीशैः भगवद्भिरभयदेवसूरिभिरपि स्वकीयस्थानाङ्गवृत्तौ समभ्यधायि। तथा च तत्पाठसाक्ष्यम्— "चतुर्मासप्रमाणो वर्षाकालः प्रावृट् इति विवक्षितः, तत्र सप्ततिदिनप्रमाणे प्रावृषे द्वितीये भागे तावद् न कल्पते एव गन्तुम्, प्रथमभागेऽपि पञ्चाशद्दिनप्रमाणे, विंशतिदिनप्रमाणे वा न कल्पते, जीवव्याकुलभूतत्वात्। उक्तं च—"एत्थ य अणभिग्गहियं, वीसइराइं सवीसइमासं। तेण परं अभिग्गहियं, गिहिणायं कत्तियं जाव"त्ति ॥ १ ॥ अनभिगृहीतम् अनिश्चितम्, अशिवादिभिर्निर्गमनभावात्। आह च—"असि-वादिकारणेहिं, अहवा वासं न सुट्ठु आरद्धं। अभिवड्ढियम्मि वीसा, इयरेसु सवीसइमासो" ॥ १ ॥ यत्र संवत्सरेऽधिकमासको भवति तत्र आपाढ्या विंशतिं दिनानि यावद् अनभिग्रहिक आवासः, अन्यत्र सविंशतिरात्रं मासं पञ्चाशतं दिनानि इति। अत्र चैते दोषाः— "छक्कायविराहणया, आवडणं विसमखाणुकंटेसु। वुज्झण—अभिहण रुक्खोल्लसावप्पतेण उवचरए ॥१॥ अक्खुन्नेसु पहेसु पुढवी उदगं च होइ दुविहं तु। उल्लपयावण अगणि इहरा पणओ—हरिय कुंथु"त्ति ॥२॥ इत्यादि ॥ तथा समवायांगसूत्रवृत्तौ अपि एवम् "समणे भगवं महावीरे वासाणं सवीसइराए मासे वइक्कंते सत्तरिएहिं राइंदिएहिं सेसेहिं वासावासं पज्जोसवेइ" "अथ—'समणे' इत्यादि, वर्षाणां चतुर्मासीप्रमाणस्य वर्षाकालस्य सविंशतिदिवाऽधिके मासे व्यतिक्रान्ते—पञ्चाशति दिनेषु अतीतेषु इत्यर्थः, । सप्तत्यां च रात्रिदिनेषु शेषेषु भाद्रपदशुक्लपञ्चम्याम् इत्यर्थः। वर्षासु आवासः वर्षावासः—वर्षाऽवस्थानम्, 'पज्जोसवेइ'त्ति परिवसति सर्वथा करोति। पञ्चाशति—प्राक्तनेषु दिवसेषु तथाविध-वसत्यभावादिकारणे स्थानान्तरमपि आश्रयति। अतिभाद्रपदशुक्लपञ्चम्यां तु वृक्षमूलादौ अपि निवसति इति हृदयम्"। तथा श्रीनिशीथचूर्णौ दशमोद्देशकेऽपि एवमेवाभिहितम्। तथैवम्—"अभिवड्ढियवरिसे वीसतिराते गते गिहिणा तं करेंति, तीसु चंदवरिसे सवीसतिराते मासे

गते गिहिणा तं करेंति । जत्थ अधिमासगो पडति वरिसे तं अभिवड्ढियवरिसं भण्णति । जत्थ ण पडति तं चंदवरिसं । सो य अधिमासगो जुगस्स अंते मज्झे वा भवति । जइ अंते नियमा दो आसाढा भवन्ति, अह मज्झे दो पोसा । सीसो पुच्छति—कम्हा अभिवड्ढियवरिसे वीसतिरातं, चंदवरिसे सवीसति–मासो ? उच्यते—जम्हा अभिवड्ढियवरिसे गिम्हे चेव सो मासो अतिक्कंतो, तम्हा वीसदिणा अणभिग्गहियं तं करेंति, इयरेसु तीसु चंदवरिसे सवीसतिमासो इत्यर्थः, इत्यादि । तथा—आसाढचाउमासियातो सविसतिराते मासे गते पज्जोसवेंति, तेसिं सत्तरी दिवसा जहण्णो वासकालग्गहो भवति, कहं सत्तरी ? उच्यते—चउण्हं मासाणं वीसुत्तरदिवससतं भवति, सवीसतिमासो पण्णासं दिवसा ते वीसुत्तरमज्झतो साधितो सेसा सत्तरी" इत्यादि । एवं भाष्य–चूर्णि–वृत्त्यादिषु सर्वत्र प्राचीनशास्त्रेषु स्थूलाक्षरेण 'मासवृद्धेरभावे चतुर्मासप्रमाणे वर्षाकाले विंशत्युत्तरदिवसशतं भवति, तत्र यदा पञ्चाशता दिवसैः पर्युषणा भवति तदा पश्चात् सप्ततिर्दिनानामवशिष्यते, तथैव जैनटिप्पणकानुसारेण यत्र पौषः, आषाढो वा वर्धते तत्र यदा विंशत्या दिनैः पर्युषणा भवति, तदा पश्चाद् दिवसशतं तिष्ठत्येव । एतच्च तीर्थंकर–गणधर–पूर्वधरादिभावपरंपरानुसारेण, विद्यमानाऽऽगमाद्यनुसारेण च समवसेयमिति । तथा आषाढपूर्णिमातः आरभ्य पञ्चपञ्चदिनगणनायां चतुर्षु, दशसु पञ्चके वा, विंशतिदिने, पञ्चाशद्दिने वा यत्र गृहिज्ञातनियतवासरूपा पर्युषणा कार्तिकान्तं यावद् उक्ता, तत्रैव लोचादिवार्षिककार्याण्यपि ज्ञातव्यानि, यतः–जीवाभिगमवृत्ति–समवायाङ्ग–निशीथभाष्य–चूर्णि–बृहत्कल्पभाष्य–चूर्णि–वृत्ति–स्थानाङ्गसूत्रवृत्ति–कल्पसूत्रनिर्युक्ति–चूर्णि–वृत्त्यादिपञ्चाङ्गीशास्त्रानुसारेण सूत्राऽऽगम–अर्थागम–तदुभयाऽऽगमभावपरंपरानुसारेण च पर्युषणाशब्दो हि स्ववाच्यमर्थद्वयं प्रख्यापयति, तथा च—एकस्तु वर्षास्थितिरूपः, द्वितीयश्च वार्षिककृत्यरूपः । यत्र च यावत् गृहिअज्ञात अनियतनिवासो भवति तत्र पर्युषणाशब्देन वर्षास्थितिर्ज्ञातव्या । यत्र तु गृहिज्ञातनियतवासो भवति तत्र

पर्युषणाशब्दो वार्षिककृत्यरूपः ज्ञातव्यः। ततश्च यदि विंशतौ दिनेषु, पश्चाशति वा दिवसेषु, गृहिज्ञातनियतवासरूपा पर्युषणाऽपि वार्षिककृत्यरहिता वर्षास्थितिरूपा स्वीक्रियते तदा "सवीसइराए मासे गते पज्जोसवेइ" इत्यादिभावयुक्ता, निशीथचूर्णि–समवायाङ्ग–कल्पादिशास्त्रोक्ता, सर्वत्र पर्युषणायां लोचादिवार्षिककृत्यकरणरूपा पद्धतिः निष्फला स्यात्। न हि काऽपि जैनशास्त्रे गृहिज्ञातनियतवासरूपापर्युषणाकरणाऽनन्तरदिनेऽन्यस्मिन् वार्षिककृत्यकरणं प्रख्यापितम्, तस्माद् यो दिवसो ज्ञातपर्युषणाविधानाय विहितः स एव दिवसः संवत्सरसंपूरकत्वाद् वार्षिककृत्यकरणेनाऽपि अनुमत एव, अन्यथा विधानं तु न काऽपि दृष्टं श्रुतं वा। तथा विंशत्या ज्ञातपर्युषणाविधानाऽनन्तरं पश्चाद् व्यतीते मासे लोचादिवार्षिककृतिप्रवृत्तिरपि न काऽपि शास्त्रे दृष्टा। तथा पश्चाशता दिनैर्वार्षिककृत्यविधिः, न विंशत्या दिनैः, एवमपि युक्तिरहितत्वात् न काऽपि प्राचीनशास्त्रसंलेखः। अत एव दिनानां विंशत्या, पश्चाशता वा गृहिज्ञातनियतवासरूपा पर्युषणा प्रतिष्ठातव्या तत्रैव चन्द्राऽभिवर्धितापेक्षया वार्षिककार्याणि कर्तव्यानि इति तत्त्वम्। अत्र केऽपि "विंशत्या पर्युषणा गृहिज्ञातमात्रा कथयंति" तद् असत्यम् यतः–दशाश्रुतस्कंधसूत्रवृत्ति–शतपदी–कल्पलघुटीका–कल्पावचूरि–कल्पांतर्वाच्य–संदेहविषौषधि–कल्पलतादिशास्त्रे–अभिवर्द्धित संवत्सरे विंशत्या ज्ञात पर्युषणा वार्षिककृत्यरूपा उक्ता, तथैव चंद्रसंवत्सरे पंचाशद्दिनेऽपि ज्ञातपर्युषणायां वार्षिककृत्यकरणस्य नियमोऽस्ति, अत एव आषाढचातुर्मास्याम् वर्षास्थितिरूपायाम् अनियतवासरूपायामज्ञातपर्युषणायां वार्षिककार्याणि न भवंति। तथा जैनटिप्पणकानुसारेण अभिवर्धितसंवत्सरे अपि चतुर्मासप्रमाणवर्षाकाले यदा विंशत्या दिनैः पर्युषणा भवेत् तदा पश्चाद् दिनानां शतं एव तिष्ठति, तस्माद् योऽस्ति समवायाङ्गगतः पाठः, स हि अधिकमासाऽभावापेक्षया ज्ञेयः न च अधिकमासे समागते स पाठः साफल्यं भजते, अधिकमासाऽभावरूपे वर्षे तस्य चरितार्थत्वात्। अन्यथा तु–संप्राप्तेऽपि अधिकमासे–यदि तत्पाठानुसारेणैव प्रवृत्तिप्रवाहस्तदा निशीथभाष्य–चूर्णि–बृहत्कल्पभाष्य–चूर्णि–वृत्ति–कल्पनिर्युक्ति–

पर्युषणाकल्पचूर्णि—स्थानाङ्गवृत्तिप्रभृतिगतपाठापलापप्रसङ्गः स्यात्, किमत्र बहूक्तेन ? । निशीथचूर्ण्यादिपूर्वदर्शितग्रन्थसाक्ष्यानुसारेण समागते समधिके मासके दिवसानां शतं तिष्ठत्येव । ननु—अधिकमासाऽऽगते प्राचीनशास्त्रे तु पर्युषणाविधानं विंशत्या एव दिनैः प्रोक्तं तदा संप्रति कथं न भवद्भिरनुष्ठियते ? उच्यते—यदा जैनटिप्पणकानुसारेण अभिवर्द्धितसंवत्सरो भवेत् तदा पूर्वधरादीनां समये विंशत्या पर्युषणाविधानप्रवृत्तिः अविच्छिन्ना आसीत् परं तट्टिप्पणकविच्छेदे प्राप्ते सति तत्पश्चात् विंशत्या कल्पोऽपि विच्छेदपथं प्रापितः । तथा च तीर्थोद्गारप्रकीर्णके—
"वीसदिणेहिं कप्पो, पञ्चग हाणीय कप्पट्ठवणा य । नवसय तेणउएहिं, वुच्छिन्ना संघआणाए ॥ १॥" । जैनसिद्धान्तटिप्पणकाऽभावे पञ्च—पञ्चदिनवृद्ध्या कल्पस्थापनाकरणम्, अभिवर्धिते विंशत्या दिनैः पर्युषणाविधानकल्पः, तथा निशीथचूर्ण्यादिप्रोक्तः पर्युषणायाः पश्चात् पञ्चकपरिहाणिकल्पः, एतत् कल्पत्रयं श्रीवीरनिर्वाणात् त्रिनवतिसमधिकनवशतप्रमाणे (९९३) वर्षे श्रीसंघाज्ञया गीतार्थपूर्वाचार्यैः विच्छेदं प्रापितम्, एतदेव च पूर्वदर्शितगाथारहस्यम् । ततश्च संप्रत्यपि समागते समधिके मासे 'विंशत्या दिनैः पर्युषणाकल्पः' न साधयितुं शक्यः, जिनकल्पस्येव तस्य विच्छिन्नत्वात्, । किञ्च, जैनसिद्धान्तटिप्पणाऽभावे लौकिकटिप्पणके श्रावणे भाद्रपदे वा वृद्धे कुत्र विधातव्या पर्युषणा इति पृच्छतः शिष्यस्य चित्तं समाहितुं गुरुः प्राह—"जैनसिद्धान्तटिप्पणकानुसारेण यतस्तत्र युगमध्ये पौषः, युगान्ते च आषाढ एव वर्धते, नान्ये मासाः तट्टिप्पनकं तु अधुना सम्यग् न ज्ञायते, ततः पञ्चाशतैव दिनैः पर्युषणा युक्ता, इति वृद्धाः" एवं कल्पसूत्रव्याख्यायां संदेहविषौषधि—कल्पलता—कल्पावचूरि—कल्पान्तर्वाच्य—कल्पटिप्पणक—कल्पकिरणावली—दीपिका—सुबोधिकाद्यनेकग्रन्थेषु सुस्पष्टतया प्रतिपादितं न चैतत् केनाऽपि अतिक्रमितुमुचितम्, ततः जैनटिप्पणकविच्छेदात् पञ्चाशतैव दिनैः तत्कल्पकरणं युक्तियुक्तम्, शास्त्रसंमतं च ज्ञेयम् । ततश्च जैनसिद्धान्तसम्मतटिप्पणकाऽभावे लौकिकमेव टिप्पणकमन्धेषु काण इव प्रतिष्ठापदवीं नेयम्, तदनुसारेण च शान्तियुक्तं विधेया प्रवृत्तिः । तस्मिंल्लौकिके टिप्पणके तु चैत्रादयः

अभ्युत्पर्यवसानाः सप्त एव मासाः संवर्धन्ते, यदा च तट्टिप्पणानुसारेण श्रावणे, भाद्रपदे वा वृद्धे तत्र पञ्चाशदुत्तरशतं दिनानि वर्षाकालस्य (१५०) भवन्ति, तत्राऽपि च यदा पञ्चाशता दिनैः पर्युपणाव्यवस्था तदा पर्युपणायाः पश्चाद् दिवसशतं तिष्ठत्येव, एतच्च, प्रत्यक्षेण, गणितशास्त्रेण, युक्त्या, विधिशास्त्रेण च संसिद्धमेव, नाऽत्र कश्चिद् विवदितुमर्हति युक्तियुक्तपक्षीयः, एतन्मते च न काऽपि बाधाऽपि बाधते। तथा च सर्वेष्वपि जैनविधिशास्त्रेपु पञ्चाशतो दिनानां संपूर्तौ नोल्लङ्घनीयमेकमपि दिनमिति सुप्रकटाक्षरैः प्रदर्शितम्। "अंतरा वि य से कप्पइ, नो से कप्पइ तं रयणिं उवायणावित्तए" त्ति कल्पवचनात् पञ्चाशतो दिनानां न युक्तमुल्लङ्घनम्, तथाऽकरणे च शास्त्रबाधा। ततश्च वर्तमानेऽस्मि समये पञ्चाशद्दिनप्रमाणरूप एव नियमो रक्षणीयः, तन्नियमानुसारेण च द्वितीयश्रावणे वा, प्रथमभाद्रपदे वा पर्युपणासमाराधनं शास्त्रसम्मतं, न पुनरशीत्या दिनैः सिद्धान्तविरुद्धत्वात्। अत्र च सद्भूतायामपि मासवृद्धौ न सप्ततिदिननियमावकाशः। यश्च पाठः शास्त्रे चतुर्मासप्रमाणवर्षावसरमवलम्ब्य विंशत्युत्तरशतदिवसाऽपेक्षया सप्ततिदिनविपये प्रोक्तः, तं पाठं मुखरं कृत्वा समागते समधिके मासे, पञ्चमासप्रमाणवर्षासमये पञ्चाशदुत्तरदिवसशतमानेऽपि कथं प्रवृत्तिर्विधेया विधिकाङ्क्षिभिः। तेनैव च पाठेन पञ्चाशद्दिनमर्यादां संमर्द्य पाश्चात्यां सप्ततेर्दिनानामवधि संरक्षितुं श्रावणवृद्धौ भाद्रपदे, भाद्रपदवृद्धौ द्वितीये भाद्रपदे वा दिनानामशीत्या पर्युपणाप्रतिष्ठापनं सिद्धान्तविरुद्धत्वात् न प्रतिष्ठापात्रम्। यतः यो हि पाठः यामपेक्षामवलम्ब्य शास्त्रे दर्शितः स पाठः, तामेवाऽपेक्षामालम्ब्य यथायोग्यं योजनीयोऽनुयोगयोजनचणैः। न हि यः पाठश्चतुर्मासप्रमाणवर्षाकालमुपलक्ष्य लक्षितः प्राचीनैः, स एव पाठो पञ्चमासमानवर्षाकाले अपि योजयितुमुचितः। तथा करणे मर्यादाभङ्ग—अतिप्रसङ्गादयश्चानेके दोपकोशाः संश्लिष्यन्ति तथाविधातारम्। एतच्च पूर्वमपि प्रोक्तम्, नाऽतो वारं वारं शिक्षयितुमर्हा यूयम्। यदि च भवन्तो पर्युपणानंतरं दिनानां सप्ततिमेव रक्षितुमभिलपन्ति, परं कदाचिद् आश्विनमासवृद्धिस्तदा पश्चाद् भागे दिवसशतमेव

अवशिष्यते, न तु सप्ततिर्दिनानाम्। तथा च भावत्को दिनसप्ततिरक्षणमनोरथो मनोरथ एव। किंच, यदा लौकिकटिप्पणानुसारेण व्यतीतेषु कतिपयेषु वर्षेषु कार्तिकमासः क्षयं याति, तदा तु भवतां दिनसप्ततिरक्षणप्रतिज्ञा सर्वथा प्रलयमेव प्राप्नोति, न च तदानीं तद्रक्षणसामर्थ्यं भवतां केषांचिदपि स्फूर्तिमियर्ति। अतो दिनानां पञ्चाशतैव पर्युषणासमाराधनं समागते समधिके मासे संसिद्ध्यति सत्पर्षत्सु, आगमानुमतत्वात्, युक्तियुक्तत्वाच्च। तथाविधाने पर्युषणायाः पश्चाद् यथायोग्यं दिनानां शते, सप्ततौ च अवशिष्टे न कापि दूषणकणोऽपि समुज्जृम्भते। किंच, श्रीबृहत्कल्पभाष्यवृत्तौ श्रीतपगच्छीयक्षेमकीर्तिसूरिरपि एवं प्रतिपादयति, तथा च—"सविंशतिरात्राद् मासात् परतो नाऽतिक्रमयितुं कल्पते, यद्येतावत्कालेऽपि गते वर्षायोग्यं क्षेत्रं न लभ्यते, ततो वृक्षमूलेऽपि पर्युषितव्यम्। ये किल आषाढपूर्णिमायाः सविंशतिरात्रे मासे गते पर्युषयन्ति, तेषां सप्ततिदिवसानि जघन्यो वर्षावासाऽवग्रहो भवति, भाद्रपदशुद्धपंचम्या अनन्तरं कार्तिकपूर्णिमायां सप्ततिदिनसद्भावात्" एवं प्राधान्येन पंचाशद्दिनस्यैव मर्यादा सर्वत्र शास्त्रे समनुमता, ततश्च न सा विपर्ययितुं शक्या, पाश्चात्या सप्ततिदिवामानरूपाऽवधिस्तु अधिकमासाऽभावे सामान्यतः समुक्ता, न सा आगतेऽधिके मासे रक्षितुं शक्यते, नाऽपि च तद्रक्षणनियमः शास्त्रे संस्फुरति, नातस्तद्रक्षणे एव आदरपरैर्भवितव्यम्, नैव च तदर्थम् अन्यपाठाक्षराणि प्रापणीयानि बुद्धिमद्भिः कैरपि। किंच ये केचिद् अत्रैवं विवदन्ति यत्—द्वितीयश्रावणे, प्रथमभाद्रपदे वा पर्युषणाविधानं कुत्र प्रोक्तम्? तेषां चित्तसमाधानार्थं तैरेतत् अवहितचित्तत्वेन मननीयम्। तथा च—सर्वत्र सूत्र—निर्युक्ति—भाष्य—चूर्णि—वृत्तिप्रभृतिषु शास्त्रेषु यत्र यत्र पर्युषणाविधेः प्रस्तावः, तत्र तत्र सर्वत्र पंचाशता दिनैरेव तद्विधानम्। पर्युषणा च दिनप्रतिबद्धा सर्वत्र सूत्रिता, न च काऽपि मासप्रतिबद्धा निबद्धा। अतो यत्रैव मासे संप्रति सा दिनपूर्तिः संजायेत तत्रैव मासे तद्विधानं विधेयम्, तथैव करणं च सर्वशास्त्राज्ञाऽलंकरणमिति। तथा पुनरत्र

केऽपि मासवृद्धावपि निशीथचूर्ण्यादिपूक्तासु कालिकाचार्यकथासु 'भद्दवय' इत्यनेन भाद्रपदे, एव पर्युषणा भवति नान्यथा ततो श्रावणवृद्धावपि भाद्रपदमासप्रतिबद्धा पर्युषणा इति कथयन्ति। तदसत्यम्, यतः तत्र—"सवीसइराए मासे गते पज्जोसवणा" इत्यादि तथा "सवीसइ रातमासो तो परेण अतिक्कामेउ ण वट्टति सविसतिराते मासे गते पुण जइ वासखेत्तं न लम्भति तो रुक्खस्स हेट्ठेवि पज्जोसवेयव्वम्", पुनरधिकमाससद्भावे 'अभिवड्ढियंमि वीसा' इत्यादिपाठानुसारेण मासवृद्धेरभावे चन्द्रसंवत्सरे पञ्चाशद्दिनापेक्षया भाद्रपद उक्तः, तथैव मासवृद्धिसद्भावे विंशतौ दिनेषु गतेषु पर्युषणा उक्ता नान्यथा, मासवृद्धिसद्भावेऽपि भाद्रपदे पर्युषणाकरणं कुत्रापि उक्तं नास्ति। तस्माद् निशीथचूर्णि—पर्युषणाकल्प-चूर्णि—बृहत्कल्पचूर्णि—वृत्ति—समवायांगवृत्ति—कल्पसिद्धान्तादिष्वपि सर्वत्र व्याख्यायां यत्र यत्र भाद्रपद उक्तः तत्र तत्र सर्वत्र मासवृद्ध्यभावा-पेक्षयैवेति ज्ञेयम्। किंच—सविंशतिरात्रमासे वा, दशपंचके वा, भाद्रपदशुक्लपंचम्यां चतुर्थ्यां वा, पंचाशद्दिने वा एतानि पञ्चापि पर्यायत्वेन एकार्थकानि उक्तानि, ततोऽपि ज्ञायते अधिकमासाभावे पंचाशद्दिनात् न प्रथक्भाद्रपदः, किंच निशीथचूर्ण्यादिषु अभिवर्धिते विंशत्या दिनैः पर्युषणा उक्ता तस्माद् तत्रस्थे 'अभिवड्ढियंमि वीसा इयरेसु सवीसइ मासो' इत्यादि चन्द्राभिवर्धितसंबन्धे पृथग् पृथक्पाठे विद्यमानेऽपि तत्सवि-स्तरपाठं त्यक्त्वा चूर्णिकारमहाराजस्याभिप्रायविरुद्धाचरणकरणं न युक्तं, चन्द्रसंवत्सरे कारणवशात् कालिकाचार्यमहाराजेन "अन्तरावियसे कप्पइ नो से कप्पइ तं रयणिं उवायणा वित्तए" इति कल्पसिद्धान्तानुसारेण प्रतिष्ठानपुरनगरे शालिवाहनराज्ञोऽग्रे पंचाशद्दिनादर्वाक् भाद्रपदे पर्यु-षणा उक्ता, यतः कालिकाचार्यकथाप्रसंगे यदुक्तम् तदधिकमासाभावमाश्रित्य बोध्यम्। परन्तु संप्रति—श्रावणवृद्धावपि अशीतिदिनापेक्षया भाद्रपदे, द्वितीयभाद्रपदे वा पर्युषणाराधनं प्रोक्तं नास्ति। किंच उपर्युक्तपाठानुसारेण तथा कल्पसिद्धान्तानुसारेण पंचाशतैव दिनैः द्वितीयश्रावणे पर्युषणा कर्त्तव्या। परं भाद्रपदशब्दं दृष्ट्वा अशीतिदिनैः श्रावणवृद्धौ अपि भाद्रपदे, भाद्रपदवृद्धौ द्वितीयभाद्रपदे वा पर्युषणाकरणात् शास्त्रपाठोत्थापनदो-

भवे देवो बभूव। सप्तविंशतितमे भवे महावीरोऽभूत् ॥ २ ॥ तद्यथाः—

ते णं काले णं ते णं समए णं समणे भगवं महावीरे, तिन्नाणुवगए यावि होत्था। 'चइस्सामि'त्ति जाणइ। 'चयमाणे' न जाणइ। 'चुए मि'त्ति जाणइ ॥३॥ जं रयणिं च णं समणे भगवं महावीरे देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए वक्कन्ते, तं रयणिं च णं सा देवानंदा माहणी सयणिज्जंसि सुत्तजागरा ओहीरमाणी ओहीरमाणी इमेयारूवे ओराले, कल्लाणे, सिवे, धन्ने, मंगल्ले, सस्सिरीए, चउद्दस महासुमिणे पासित्ता णं पडिबुद्धा।

श्रमणो भगवान् महावीरः, त्रिभिर्ज्ञानैः उपागतः आसीत्–मतिज्ञान–श्रुतज्ञान–अवधिज्ञानसहित आसीत्। यदा देवविमानात् च्यविष्यति, तदा एवं जानाति–'अहं इतो विमानात् च्यविष्यामि'। यदा पुनः च्यवते, तदा न जानाति–'इदानीं मम च्यवनं भवति' वर्तमानकालस्य सूक्ष्मत्वात्। यदा देवविमानात् च्युत्वा देवानन्दायाः कुक्षौ अवतीर्णः, अनन्तरे जानाति–'देवविमानात् च्युत्वा अहम् अत्राऽवतीर्णः' ॥ ३ ॥ अथ यस्यां रात्रौ श्रमणो भगवान् महावीरो देवानन्दायाः ब्राह्मण्याः जालंधरगोत्रिण्याः कुक्षौ अवततार, तस्यां रात्रौ

पप्रसंगः स्यात्, श्रीनवाङ्गीवृत्तिकारकैरभयदेवसूरिभिरपि श्रीसमवायांगसूत्रवृत्तौ अधिकमासाऽभावे पंचाशद्दिनापेक्षयैव भाद्रपदस्योक्तत्वाद्, अत एव संप्रति श्रावणवृद्धावपि भाद्रपदे पर्युषणाकथनमनुचितं शास्त्रप्रमाणरहितत्वाद्। ततोऽधिकमासस्यापि गणनीयत्वेन पंचाशतैव दिनैः द्वितीय-श्रावणे पर्युषणा कार्या इति सिद्धान्तो व्यवस्थितः। नात्र कस्यापि वाचोयुक्तेः प्रवेशः, भाद्रपदप्रतिबद्धत्वख्यापकः पाठः चन्द्रसंवत्सरापेक्षः, अस्माकं तु सर्वं कथनं समभिवर्धितसंवत्सरापेक्षम्। एतच्च सर्वत्र प्राचीनैः स्वस्वग्रन्थे प्रसङ्गेन प्ररूपितम् अतः किमधिकं चर्चया ? । पुनः केचिद् आषाढ-वृद्धौ प्रथमाषाढस्य अधिकमासत्वेन गण्यते, तदसत्—यतः—सूर्यप्रज्ञप्तिसूत्रवृत्ति—चंद्रप्रज्ञप्तिसूत्रवृत्ति—ज्योतिष्करंडकपयन्नवृत्ति—लोकप्रकाशादि-शास्त्रानुसारेण "सट्ठीए अइयाए, हवइ हु अहिमासो जुगद्धंमि। बावीसे पव्वसए, हवइ हु बीओ जुगंतंमि ॥ १ ॥" पंचवार्षिकयुगस्य षष्टौ पर्वसु (त्रिंशत्सु मासेषु) अतिक्रांतेषु एकत्रिंशत्तमोद्वितीयपौषोऽधिको भवति तथा द्वाविंशत्युत्तरपर्वशते (एकषष्ठिर्मासानां) अतिक्रांते द्वाषष्ठितमो द्वितीयो आषाढोऽधिको भवति, एवं सूर्यप्रज्ञप्तिवृत्त्यादिअनुसारेण द्वितीयाषाढस्य अधिकमासत्वं कथितं, परं न प्रथमस्य। अत एव प्रथमाषाढस्य अधिकमासत्वकथनेन शास्त्रज्ञानशून्यत्वं सूचितं, द्वितीयाषाढस्य अधिकमासत्वकथनं आगमप्रामाण्यादस्ति। तथा जिनेन्द्रप्रवचनसिद्धान्तेऽधिकमासस्य, स्वाभाविकमासस्य वा दिनगणनायां तथैव मुहूर्त्तातीतलोकोतरधार्मिककार्यकरणवेलायां वा त्रयोदशचंद्रमासात्मकस्य अभिवर्द्धितसंवत्सरस्य उक्तत्वेन कस्यापि मासस्य न्यूनाधिकत्वेन भिन्नता नास्ति। तथा प्रथमाषाढे गृष्मर्तुत्वाद् अभिवर्द्धितसंवत्सरस्य, गृष्मकालस्य च संपूर्णता न भवति किंतु द्वितीयाधिकाषाढे एव संवत्सरस्य, युगस्य, गृष्मकालस्य च संपूर्तिर्जायते। तेन स्वाभाविकं पूर्वाषाढं त्यक्त्वा द्वितीये पर आषाढे चातुर्मासिकप्रतिक्रमणं क्रियते तदा न कोपि दोषप्रसंगः। किञ्च द्वितीय आषाढे चातुर्मासिकप्रतिक्रमणवद् संप्रति द्वितीयभाद्रपदे पर्युषणाराधनं न भवति, अशीतिदिनप्राप्तिदोषप्रसंगात्। किन्तु पूर्वोक्तशास्त्रप्रमाणानुसारेण पंचाशद्दिनैः प्रथमभाद्रपदे

एव पर्युपणाराधनं युक्तियुक्तमस्तीति विद्वद्वर्यैर्वोध्यं । ननु—अधिकमासे विवाह-प्रतिष्ठादिशुभकार्याणि लोकाः न कुर्वन्ति, तदा पर्युपणा कथं भवेत् ? शृणु—मुहूर्त्तनैमित्तिककार्याणि तु—पौपचैत्रयोर्मलमासयोः, अधिकमासे, क्षयमासे, वृद्धितिथौ, क्षयतिथौ, क्षीण तिथित्रये, सूर्याचंद्रमसोर्ग्रहणे-गुरुशुक्रयोरस्तयोः हरिशयने ( चातुर्मासे ) त्रयोदशमासात्मके सिंहस्थे वर्षे, वैधृति-गंडांत-व्यतिपात भद्रादियोगेपु, तथैव कतिपयतिथि-वार-नक्षत्रादियोगेपु न भवन्ति, परं च दान-शील-तप-देवपूजन-गुरुवन्दन-सामायिक-प्रतिक्रमण-पौपध-पाक्षिक-चातुर्मासिक-वार्षिकपर्युपणादीनि धार्मिककार्याणि तु मुहूर्त्तरहितानि लोकोत्तराणि सन्ति, अत एव तेपां सिंहस्थे-चातुर्मासे-अधिकमासे—क्षयमासादिकेऽपि करणे न दोषः । जैनसिद्धान्ते मुहूर्त्तरहितानां धार्मिककार्याणां करणे सर्वत्र काले तीर्थंकराज्ञायाः समानतया उक्तत्वाद्, अधिकमासे पर्युपणाराधनस्य निषेधकरणे उत्सूत्रप्ररूपणादोपप्रसंगः स्यात्, अतो नात्मार्थिभिर्निपेधः कर्तव्यः । किंच यथा-जैनसिद्धान्ते मुहूर्त्तरहितानां धार्मिककार्याणां करणे अधिकमासस्य दिवसानि गणितानि, तथैव लौकिकधर्मशास्त्रे अपि तस्य दिवसानि गणितानि, किंच श्रावण-पौप-चैत्र-वैशाखादिअधिकमाससद्भावे कल्याणकादि तपः कथं कर्तव्यं ? तथैव तिथिक्षयवृद्धौ पंचदशदिवसात्मक पाक्षिकक्षामणा कथं कर्तव्या ? तथा अधिकमाससद्भावे दशपक्षात्मकपंचमासिकक्षामणा, पड्विंशतिपक्षात्मकत्रयोदशमासिकक्षामणा कथं कर्तव्या ? इत्यादि सर्वेपां विपयाणां निर्णयो हेतुद्वारेण आगमद्वारेण च सविस्तरमस्मत्कृत "बृहत्पर्युपणानिर्णय" नामग्रन्थेऽस्माभिरुक्तः इति स एव जिज्ञासुभिर्द्रष्टव्यः ।

इति निवेदयते श्रीमत्सुमतिसागरोपाध्यायानां लघुशिष्यो मुनि—**मणिसागरः,**

वीर निर्वाण २४४४, विक्रम संवत् १९७५ कार्त्तिक कृष्ण तृतीया, भायखला जैनउपाश्रय—मुंबई.

अथ वर्षाऽवग्रहमानरूपां द्वितीयां समाचारीं वदति—

**वासावासं पज्जोसवियाणं कप्पइ निग्गंथाण वा, निग्गंथीण वा सव्वओ समंता सक्कोसं जोयणं उग्गहं ओगिण्हित्ता णं चिट्ठिउं अहालंदमवि उग्ग ॥ ९ ॥ वासावासं पज्जोसवियाणं कप्पइ निग्गंथाण वा, निग्गंथीण वा सव्वओ समंता उक्कोसं जोयणं भिक्खायरियाए गंतुं, पडिनियत्तए ॥ १० ॥**

अर्थः—'वासावासे' अर्थाद् वर्षाकाले चतुर्मासीस्थितानां साधूनाम्, तथा साध्वीनां सर्वतो दिक्षु, विदिक्षु; समन्तात्छब्देन चतसृष्वपि दिक्षु क्षेत्राऽवग्रहम् आश्रित्य सक्रोशं योजनं मुत्कलं रक्षणीयम्, कालावग्रहेण—'अहालंदमवि उग्गहे' यथालन्दमपि अवग्रहे एव स्थेयम्, परमवग्रहाद्बहिर्न स्थेयम्। 'लन्दं' स्तोककालमुच्यते, यावता कालेन-भिन्नो हस्तः शुष्यति तावान् कालो जघन्यलन्द उच्यते, लन्दमनतिक्रम्य यथालन्दम्, अवग्रहाद्बहिर्न स्थातव्यम् अयं परमार्थः—यत्र स्तोककालमपि साधुस्तिष्ठति ततः पञ्चक्रोशीत अधिकां भूमिं न व्रजति, उत्कृष्टलन्दम् उत्कृष्टकालं पञ्चाहोरात्रप्रमाणम्, जघन्यलन्दादुत्कृष्टलन्दं यावत्सक्रोशं योजनं मुत्कलम्, कारणविशेषात् पुनः कश्चित्साधुः रोगी स्यात्, गृहीतसंस्तारकः स्यात्, तद्वैयावृत्त्यकृत्कोऽपि न स्यात्, अथवा ग्लानस्यौषधादिकं वैद्यस्य

प्रश्नार्थम्, औपधाग्यानयनाय चत्वारि पञ्च योजनानि याति, आयाति च। तत्र कार्यसिद्धेः पश्चाजघन्यलन्दं स्तोककालमपि तत्र न वसति। साधुः स्वस्थानाय चलति, न तत्रैव तिष्ठेत्। उत्कृष्टलन्दं पञ्चाहोरात्रप्रमाणमपि न तिष्ठति, अयं लन्दशब्दस्यार्थः॥ यत्र वर्षाकाले चतुर्मासीं साधुस्तिष्ठति तत्र चतुरोऽवग्रहान् द्रव्य-क्षेत्र-काल-भावरूपान् करोति। तत्र द्रव्यावग्रहस्य त्रयो भेदाः-सचित्ताऽ-चित्त-मिश्ररूपाः। सचित्ताऽवग्रहः-सामान्य-शिष्य-शिष्यिण्यादिकं न दीक्षयति, पुनः कश्चित् संस्तारकदीक्षां गृह्णाति, तथा पुनः कश्चिच्छ्रद्धावान् राजा-ऽमात्यादयो वा दीक्षां गृह्णन्ति तदा तान् दीक्षयति। अचित्तद्रव्यावग्रहं वस्त्र-पात्रादिकं न गृह्णाति, मिश्रद्र-व्यावग्रहमुपधिसहितं शिष्यं न दीक्षयति, अयं त्रिविधो द्रव्यावग्रहः १। क्षेत्रावग्रहः-भिक्षाद्यर्थं सार्धद्विक्रो-शीम् याति, आयाति; सक्रोशं योजनम्; कारणविशेषाच्चत्वारि, पञ्च योजनानि याति आयाति, अयं क्षेत्राव-ग्रहः २। कालावग्रहः-भाद्रपदशुक्लपञ्चमीतः कार्त्तिकसितपूर्णिमां यावत् सप्ततिः (७०) दिनानि प्रमाणं जघ-न्यतः करोति, उत्कृष्टतश्च वर्षावासयोग्या-ऽन्यक्षेत्राऽभावाद् आषाढमासेन सह चत्वारो मासाः, मार्गशीर्षः कदाचिद् बहुवृष्टित्वाच्च षण्मासं यावत् कालाऽवग्रहं करोति, अयं कालावग्रहः ३। अथ भावावग्रहः-शेषकालात् चतुर्मास्यां क्रोधादिकषायाणां विवेको विधेयः, अष्ट प्रवचनमातरो विशेषेण साधुभिश्चतुर्मास्यां पालनीयाः, अयं भावावग्रहः ४। एतैश्चतुर्भिरवग्रहैर्विना लन्दप्रमाणकालमपि न स्थेयम्, अलन्दप्रमाणम्-प्रचुरप्रमाणं काल-

मप्यवग्रहं विना न स्थेयम्, यत्रोपाश्रयात् सार्द्धद्विक्रोशीं भिक्षाभ्रमणं भवति तत्र गच्छताम्, आगच्छतां च पञ्चक्रोशभूमिर्भवति। चतुर्दिक्षु, ऊर्द्धा-ऽधोभागे च सार्द्धद्विक्रोशी कल्पते। यत्र खलु पर्वतस्य मध्यदेशे उपाश्रयो भवति, सार्द्धद्विक्रोश्युपरि ग्रामोऽस्ति, नीचैरपि सार्द्धद्विक्रोशीं ग्रामोऽस्ति तत्राहार-पानीयार्थं व्रजतः साधोः सक्रोशं योजनं भवति। वर्षाकाले स्थितानां साधूनाम्, साध्वीनामुपाश्रयाद् भिक्षाचर्यां गन्तुमाऽऽगन्तुं च सर्वासु दिक्षु सक्रोशं योजनं कल्पते, इति द्वितीया समाचारी ॥ २ ॥ अथ साधूनां नित्योदक-नदीलङ्घनरूपां तृतीयां समाचारीं वदति-

जत्थ नई निच्चोयगा, निच्चसंदणा, नो से कप्पइ सव्वओ समंता सक्कोसं जोयणं भिक्खायरियाए गंतुं, पडिनियत्तए ॥ ११ ॥ एरावई कुणालाए, जत्थ चक्किया सिया, एगं पायं जले किच्चा एगं पायं थले किच्चा, एवं चक्किया एवं णं कप्पइ सव्वओ समंता सक्कोसं भिक्खायरियाए गंतुं, पडिनियत्तए ॥ १२ ॥ एवं च नो चक्किया, एवं से नो कप्पइ सव्वओ समंता सक्कोसं जोयणं भिक्खायरियाए गंतुं, पडिनियत्तए ॥ १३ ॥

अर्थः—यत्र नदी नित्योदका—सर्वदा बहुजला, नित्यस्यन्दना, सदाऽविच्छिन्नप्रवाहा—निरन्तरा नदी वहति, तां नदीमुल्लङ्घ्य भिक्षार्थं गन्तुमा—ऽऽगन्तुं च सर्वतः सक्रोशं योजनं न कल्पते साधूनाम्। यथा कुणालाया नगर्याः पार्श्वे ऐरावती नदी क्रोशद्वयविस्तारेण वहति, तामुल्लङ्घ्याहारार्थं न गन्तव्यं। तदा कुत्र गन्तव्यमा—ऽऽगन्तव्यं? तदाह—यत्र नद्यामेवं कर्तुं शक्नुयाद् एकं पादं जले कृत्वा, एकं पादं आकाशे, स्थले वा एवं कृत्वा या नदी उल्लङ्घयितुं शक्यते तदा अनया रीत्या जलमुल्लङ्घ्य सर्वतः सक्रोशं योजनं भिक्षायै गन्तुं, प्रतिनिवर्त्तितुं च साधवे कल्पते। यदि नदीमेवम् उत्तरितुं न शक्नुयात् तदा सक्रोशं योजनं भिक्षार्थं गन्तुमा—ऽऽगन्तुं न कल्पते, पानीयं विलोडयन् साधुर्न गच्छेत्, जानुतः उपरिष्टाद् जलमुल्लङ्घ्य भिक्षार्थं साधुर्न गच्छेद् इत्यर्थः॥ एषा तृतीया समाचारी॥ ३॥ अथ साधूनां परस्परदानरूपां चतुर्थीं समाचारीं वदति—

वासावासं पज्जोसवियाणं अत्थेगइयाणं एवं वुत्तपुव्वं भवइ—दावे भंते! एवं से कप्पइ दावित्तए, नो से कप्पइ पडिगाहित्तए॥ १४॥ वासावासं पज्जोसवियाणं अत्थेगइयाणं एवं वुत्तपुव्वं भवइ—पडिगाहेहि भंते! एवं से कप्पइ पडिगाहित्तए, नो से कप्पइ दावित्तए॥ १५॥ वासावासं॰ दावे भंते! पडिगाहे भंते! एवं से कप्पइ दावित्तए वि, पडिगाहित्तए वि॥१६॥

वासावासं पज्जोसवियाणं निग्गंथाण वा, निग्गंथीण वा अत्थेगइयाणं एवं वुत्तपुव्वं भवइ—
नो दावे भंते !, नो पडिगाहे भंते ! एवं से कप्पइ नो दावित्तए, नो पडिगाहित्तए वि ।

अर्थः—वर्षाकाले स्थितानां साधूनाम्, साध्वीनां च मध्ये एकं प्रति गुरुभिरुक्तमस्ति अहो मुने ! त्वया अद्य अन्यस्मै ग्लानायाऽऽहारमानीय दातव्यम्, त्वया स्वयं न गृहीतव्यमित्युक्ते सति गुरुभिर्यस्मै आहारस्यादेशो दत्तोऽस्ति तस्मै एवाऽऽहारो देयः, परं गुर्वाज्ञां विना स्वयमेवाऽऽहारो न गृहीतव्यः ॥ वर्षाकाले चतुर्मासीं स्थितानां साधूनाम्, साध्वीनां च मध्ये एकं साधुं प्रति पुरा गुरुभिरित्युक्तमस्ति अहो महाभाग मुने ! अद्य त्वया एवाऽऽहारमानीय भोज्यम्, न गृहीतव्यं ग्लानाय, अन्यः कश्चित् साधुरानीय दास्यति वा, ग्लानोऽद्य वा आहारं न करिष्यति। गुरुभिरेवमुक्ते सति स्वयमेवाऽऽहारः कर्त्तव्यः, न च स्वेच्छया ग्लानाय देयः॥ वर्षावासे पर्युषितानाम्, वर्षाकाले चतुर्मासीं स्थितानां साधूनाम्, साध्वीनां मध्ये एकं साधुं प्रति गुरुभिः पूर्वमुक्तमस्ति हे साधो ! अद्य त्वया आहारमानीय ग्लानो भोजयितव्यः, त्वमपि अशक्ततया अद्योपवासं मा कुर्याः । यद्भो-ज्यं ग्लानार्थमानयेस्तन्मध्यात् त्वयाऽपि गृहीतव्यम्. । तदा तेन साधुना ग्लानायाऽपि दातव्यम्, स्वयमपि लातव्यम् । गुर्वाज्ञां विना न सरसाऽऽहारं ग्लानार्थमानयेत्, यदा च ग्लानो न गृह्णीयात्तदा सरसाहारं परि-

छापयतः साधोर्दोषो लगति, कदाचिदपि ग्लानोऽपि अद्यात्तदा अजीर्णादिरोगोत्पत्तिः स्यात्, दध्यादिना मूर्छाद्यपि स्यात्, क्षीरा–ऽऽज्यादिसरसाहारयोगात् कीटिका–मक्षिकादिविनाशः स्याद्, एवं संयमविराधना, अजीर्णादिना आत्मविराधना। अपरलोकेपृङ्गाहादिदोषबाहुल्यं स्यात्, तस्मात् सर्वं गुर्वोऽऽज्ञया कर्तव्यम् ॥ वर्षाकाले स्थितानां साधूनाम्, साध्वीनां च मध्ये एकं प्रति गुरुभिः पूर्वमुक्तमस्ति–अद्य त्वया ग्लानायाऽऽहारो न देयः, त्वयाऽपि न गृहीतव्यस्तदा तस्यापि, ग्लानस्यापि, उभयोरऽपि गुर्वाज्ञां विना न कल्पते। गुर्वाज्ञां विना आहारे कृतेऽजीर्णादिदोषैरात्मविराधना स्यात्, परिष्ठापने संयमविराधना स्यात्, उभयथा दूषणं स्यादिति परस्परमाहारस्याऽऽदानविधिरूपा चतुर्थी समाचारी ॥ ४ ॥ अथ रसविकृतित्यागरूपां पञ्चमीं समाचारीमाह–

वासावासं पज्जोसवियाणं नो कप्पइ निग्गंथाण वा, निग्गंथीण वा हट्ठाणं, तुट्ठाणं आरोगाणं, बलियसरीराणं इमाओ नव रसविगइओ अभिक्खणं, अभिक्खणं आहारित्तए, तं जहा–खीरं १, दहिं २, नवणीयं ३, सप्पिं ४, तिल्लं ५, गुडं ६, महुं ७, मज्जं ८, मंसं ९ ॥१७॥

अर्थः–वर्षाकाले स्थितानां साधूनाम्, साध्वीनां च मध्ये हृष्टानाम्, तरुणत्वेन समर्थानाम्, पुनरारोग्यानाम्, पुनर्बलिष्ठशरीराणाम् एतादृशानां साधूनाम्, साध्वीनां चेमा वक्ष्यमाणा नवरसविकृतयोऽभीक्ष्णम्–

वारंवारमाहर्त्तुं न कल्पते, अभीक्ष्णशब्दस्य ग्रहणात् कारणवशाद् नवानां ग्रहणम्। दशमी पक्वान्नविकृतिः कारणं विनाऽपि ग्राह्या। ता विकृतयश्चेमाः—मद्यम्, मांसम्, म्रक्षणम्, (मक्खन्) मधु; इमाश्चतस्रो विकृतयो बाह्यपरिभोगेन ग्रहणार्हाः। शेषाः षड् विकृतयः दुग्ध—दधि—पक्वान्नमेतास्तिस्रो विकृतयः असंचयिकाः, एतासां संचयो न भवतीत्यर्थः। अथ च घृतम्, तैलम्, गुडश्चैतास्तिस्रो विकृतयः संचयिकाः—संचययोग्याः, परं पूर्वोक्तानां साधूनां नित्यं निष्कारणं नाऽऽदेया। मद्यम्, मांसम्, मधु, म्रक्षणं चैताश्चतस्रो विकृतयः शरीरे व्रणादिनिमित्तं बन्धनाय युज्यन्ते ता अपि नित्यं न ग्राह्या इत्यर्थः। इति पञ्चमी समाचारी ॥ ५ ॥ अथ ग्लानार्थं ग्रहणविधिरूपां षष्ठीं समाचारीं वदति—

वासावासं पज्जोसवियाणं अत्थेगइआणं एवं वुत्तपुव्वं भवइ—अट्ठो भंते ! गिलाणस्स, से य पुच्छियव्वे—केवइए णं अट्ठो ? से वएज्जा—एवइए णं अट्ठो, गिलाणस्स जं से पमाणं वयइ से य पमाणओ घित्तव्वे, से य विन्नविज्जा, से य विन्नवेमाणे लभिज्जा, से य पमाणपत्ते होउ अलाहि—इय वत्तव्वं सिआ ? से किमाहु भंते !?, एवइए णं अट्ठो गिलाणस्स, सिया णं एवं

वयंतं परो वइज्जा—पडिगाहेह अज्जो !, पच्छा तुमं भोक्खसि वा, पाहिसि वा एवं से कप्पइ पडिगाहित्तए, नो से कप्पइ गिलाणनीसाए पडिगाहित्तए ॥ १८ ॥

अर्थः—वर्षाकाले चतुर्मासीस्थितानां साधूनाम्, तथा साध्वीनां मध्ये कश्चिद्वैयावृत्त्यकृत् साधुर्गुरुं प्रति पृच्छ-
ति—स्वामिन् ! अद्य ग्लानस्य विकृत्या सह कार्यमस्ति? तदा गुरुर्वदति—ग्लानो विकृत्यर्थं पृष्टव्यः। तदा भो
ग्लान! तव कियत्प्रमाणया विकृत्या दुग्धाद्यया प्रयोजनं वर्त्तते? इति पृष्ट्वा गुर्वाऽऽज्ञया स वैयावृत्त्यकृत् साधुर्गृ-
हस्थगृहे गृहस्थस्याऽग्रे विकृतिं ग्लानेन याचितां मार्गयति, तदा गृहस्थो ददाति। तस्य च ददतो यदा ग्लानो-
क्तप्रमाणा विकृतिर्भवेत्तदा पुनर्वैयावृत्त्यकृता साधुना वक्तव्यम्—'होउ अला हि' इतिशब्देन भवतु मया अलाभि,
मया प्राप्तम्, अस्माकं सृतम्। अतः परं मा दातव्यम्। इत्युक्ते सति चेद् गृहस्थो वदेत्—हे साधो ! भूयसी
विकृतिरस्माकं वर्त्तते, कथं स्तोका एव भवता गृह्यते ? तदा स साधुर्वदेत्—ग्लान एतावतीमेव विकृतिं ग्रही-
ष्यति। इति श्रुत्वा गृहस्थः स्यात् कदाचित् तं वैयावृत्त्यकृतं पुनर्वदति—हे आर्य ! त्वमपि प्रतिगृहाण। ग्लान-
स्य आहाराद् अधिका उद्धरति सा त्वया गृहीतव्या, अथवा अन्यस्मै कस्मैचित् साधवे प्रदेया, इति गृह-
स्थस्याऽऽग्रहाद् वैयावृत्त्यकृत् साधुः पृथग्गृह्णाति, परं ग्लानस्य निश्रया न विकृत्यादिकं गृह्णीयाद् एषा षष्ठी

सा देवानन्दा ब्राह्मणी शय्यायां सुप्ता सती, किञ्चिद् जाग्रती सती एतादृशान् चतुर्दश महास्वप्नान् पश्यति। कीदृशाः स्वप्नाः सन्ति? तदुच्यते—उदारान्, कल्याणकारकान्, उपद्रवहारकान्, धनकारकान्, माङ्गल्यकरान्, शोभासहितान् चतुर्दश महा स्वप्नान् दृष्ट्वा जजागार। ते स्वप्नाः कथ्यन्तेः—

तं जहाः—गय—वसह—सीह—अभिसेअ—दाम—ससि—दिणयरं। झयं, कुंभं, पउमसर—सागर—विमाण(भुवण)—रयणुच्चय—सिहिं च ॥ १ ॥४॥ तए णं सा देवाणंदा माहणी इमेआरूवे उराले, कल्लाणे, सिवे, धण्णे, मंगल्ले, सस्सिरीए—सुमिणे पासइ, पासित्ता णं पडिबुद्धा समाणी हट्ठतुट्ठ-चित्तमाणंदिआ, पीअमणा, परमसोमणसिआ, हरिसवसविसप्पमाणहिअया, धाराहयकयं-बपुप्फगं पिव समुस्ससिअरोमकूवा सुमिणुग्गहं करेइ, सुमिणुग्गहं करित्ता सयणिज्जाओ अब्भुट्ठेइ, अब्भुट्ठित्ता अतुरिअं, अचवलं, असंभंताए, अविलंबिआए, रायहंसीसरिसगईए जेणेव उसभदत्ते माहणे, तेणेव उवागच्छइ, उवागच्छित्ता उसभदत्तं माहणं जएणं, विजएणं वद्धावेइ, वद्धावित्ता भद्दासणवरगया, आसत्था, वीसत्था सुहासणवरगया करयलपरिग्गहिअं

समाचारी ॥ ६ ॥ अथ एवंविधे कुलेऽदृष्टं वस्तु न याचनीयम् इति स्वरूपां सप्तमीं समाचारीं वदति–

वासावासं पज्जोसवियाणं अत्थि णं थेराणं तहप्पगाराइं कुलाइं कडाइं, पत्तिआइं, थिज्जाइं, वेसासियाइं, संमयाइं, बहुमयाइं, अणुमयाइं भवंति, जत्थ से नो कप्पइ अदक्खु वइत्तए "अत्थि ते आउसो! इमं वा" से किमाहु?, भंते! सड्ढी गिही गिण्हइ वा, तेणियं पि कुज्जा॥१९॥

अर्थः–वर्षाकाले स्थितानां साधु–साध्वीनां तथाप्रकाराणि कुलानि वर्त्तन्ते–गृहस्थानां गृहाणि सन्ति, कीदृशानि गृहाणि कृतानि सन्ति? यानि गृहाणि स्थविरादिसाधुभिः श्रावकीकृतानि, धर्मं शिक्षितानि, पुनः कीदृशानि?–प्रत्ययवन्ति प्रीतियुक्तानि, पुनः कीदृशानि?–'थिज्जानि' स्थिराणि, पुनः कीदृशानि?–विश्वसितानि–येषां गृहाणां साधूनामाहारलाभस्य विश्वासोऽस्ति। पुनः सम्मतानि–सर्वसाधूनां येषां गृहे प्रवेशोऽस्ति, सर्वेषु साधुषु धर्मरागं कुर्वन्तीत्यर्थः। पुनर्यानि गृहाण्यनुमतानि सन्ति, गृहाधिपतिना आज्ञां दत्त्वा रक्षितानि सन्ति। तस्य साधुर्यत्किञ्चिद् मार्गयेत् तद्दातव्यमित्यनुमतानि सन्ति। अथवा अणुमतानि अणुः शिष्योऽपि येषां मान्योऽस्ति, 'न च मुखं दृष्ट्वा तिलकं कुर्वन्ति' सर्वेषां साधूनां साधारणानि कुलानि सन्ति, तेषु कुलेषु अदृष्टं वस्तु याचितुं न कल्पते, कथम् अदृष्टं वस्तु साधुर्न याचते? तत्र हेतुमाह–'सड्ढी' श्रद्धावान् श्रावको

दाता गृहेऽविद्यमानं वस्तु साधुना याचितं सन् मौल्येनाऽऽनीय ददाति, मौल्येन न प्राप्यते चेत् तर्हि चौर्यमपि कुर्यात्, परं साधवे यथा तथा ददात्येव । तस्मात् पूर्वोक्तेषु कुलेषु अदृष्टं वस्तु न मार्गणीयम् । इयं सप्तमी समाचारी ॥ ७ ॥ अथाऽष्टमी समाचारी गोचरीगमनरूपा कथ्यते–

वासावासं पज्जोसवियस्स निच्चभत्तियस्स भिक्खुस्स कप्पइ एगं गोअरकालं गाहावइकुलं भत्ताए वा, पाणाए वा निक्खमित्तए वा, पविसित्तए वा; नन्नत्थायरियवेयावच्चेण वा, एवं उवज्झायवेयावच्चेण वा, तवस्सिवेयावच्चेण वा, गिलाणवेयावच्चेण वा, खुड्डएण वा, खुड्डियाए वा, अवंजणजायएण वा ॥ २० ॥

अर्थः–वर्षाकाले स्थितानां साधु–साध्वीनां मध्ये यः कश्चिद् नित्यभोजी साधुः सर्वदा एकाशने भुङ्क्ते, तस्य सूत्रार्थपौरुषीकरणादनन्तरं द्विप्रहरादनन्तरम् एकवारमेव गोचर्याः कालः कल्पते, गृहस्थस्य गृहे भक्तपानार्थं निष्क्रामति, प्रविशति च–एकवारं साधुर्याति, आयातीत्यर्थः। परमाऽऽचार्यादीनां वैयावृत्त्यकरात् साधोरन्यत्र अपरस्मिन् साधौ अयमुपदेशः, नतु आचार्यादीनां वैयावृत्त्यकृत्साधुरेकवारं गृहस्थस्य गृहे प्रविशति। य आचार्यस्य, उपाध्यायस्य, तथा तपस्विनः साधोः, ग्लानस्य रोगिणः, वृद्धस्य वा। अथवा पुनरव्यञ्जनजातस्य–

यस्य स्मश्रु-कूर्चरोमाणि नोद्गतानि सन्ति स अव्यञ्जनजातः, तस्य लघुशिष्यस्य वैयावृत्त्यं करोति स साधुर्द्विवारमपि गृहस्थस्य गृहे भक्त-पानार्थं निस्सरति, प्रविशति च । चेत् स तपस्यति तदा आचार्यादीनां वैयावृत्त्यं कर्त्तुं न शक्नोति, तपस्यतो वैयावृत्त्यस्याऽधिकं फलं वर्त्तते । अथवा वैयावृत्यकृत् साधुराचार्यो-पाध्याय-ग्लान-लघुशिष्याद्यर्थं यदा ते आहारं मार्गयन्ति तदा तेभ्यो गृहस्थगृहाद् आनीय ददाति, तेन वैयावृत्त्यकृद् द्विवारं भुङ्क्ते तदापि दूषणं नास्तीत्यर्थः ॥

वासावासं पज्जोसवियस्स चउत्थभत्तियस्स भिक्खुस्स कप्पइ एगं गोयरकालं, अयं एवइए विसेसे-जं से पाओ निक्खम्म पुव्वामेव वियडगं भुच्चा, पिच्चा, पडिग्गहगं संलिहिय, संपमज्जिय से य संथरिज्जा, कप्पइ से तद्दिवसं तेणेव भत्तट्ठेणं पज्जोसवित्तए-से य नो संथरिज्जा, एवं से कप्पइ दुच्चं पि गाहावइकुलं भत्ताए वा, पाणाए वा निक्खमित्तए वा, पविसित्तए वा ॥ २१ ॥ वासावासं पज्जोसवियस्स छट्ठभत्तियस्स भिक्खुस्स कप्पंति दो गोअरकाला गाहावइकुलं भत्ताए वा, पाणाए वा निक्खमित्तए वा, पविसित्तए वा ॥ २२ ॥ वासावासं

पज्जोसवियस्स अट्ठमभत्तियस्स भिक्खुस्स कप्पंति तओ गोअरकाला गाहावइकुलं भत्ताए वा, पाणाए वा निक्खमित्तए वा, पविसित्तए वा ॥ २३ ॥ वासावासं पज्जोसवियस्स विगिट्ठभत्तिअस्स भिक्खुस्स कप्पंति सव्वे वि गोअरकाला गाहावइकुलं भत्तए वा, पाणए वा निक्खमित्तए वा, पविसित्तए वा ॥ २४ ॥

अर्थः-वर्षाकाले स्थितानां साधूनां मध्ये य एकान्तरभोजी साधुर्भवेत् तस्याऽपि एकवारं गोचरीकालः कल्पते, परमायं विशेषः-यो मुनिरेकान्तरोपवासं करोति स मुनिः प्रभातसमये प्रथमप्रहरमध्ये 'आवस्सही' इति कृत्वा उपाश्रयाद् निःसृत्य उद्गमादिदोषविशुद्धम् आहारमानीय भुञ्जीत, तक्रादिकं पिबेत्, पश्चात् पात्रादिकं प्रक्षाल्य, वस्त्रेण लूषयित्वा तिष्ठेत् । यदा तावन्मात्रेणाऽऽहारेण तृप्तिः स्यात् तदा तस्मिन् दिने तथैव स्थेयम्, यदा न सरति, पुनः क्षुधा लगति तदा द्वितीयवेलायामपि भक्त-पानीयार्थं गृहस्थस्य कुले निःसरति, प्रविशति च । यतः प्रातस्तस्य पुनरुपवासः करणीयोऽस्ति ॥ वर्षाकाले स्थितानां साधूनां मध्ये षष्ठभक्तकस्य-उपवासद्वयकर्तुः साधोर्द्विवारं गोचरीसमयः, भक्त-पानाद्यर्थं गाथापतिगृहे निष्क्रमितुम्, प्रवेष्टुं कल्पते ॥ वर्षाकाले स्थितानां साधूनां मध्ये अष्टमभक्तकस्य-उपवासत्रयेण पारणाकर्तुः साधोस्त्रयो गोचरकालाः ।

प्रभाते आनीतस्याऽऽहारस्य सन्ध्यायां यावद्रक्षणे दोषोत्पत्तिः स्यात् तस्माद् वारत्रयमाऽऽहारमानीय भोज्यम् ॥ वर्षाकाले स्थितानां साधूनां विकृष्टभक्तकस्य–उपवासत्रयाद् अधिकतपस्कर्त्तुः साधोर्गृहस्थस्य गृहे भक्त–पानार्थं निष्क्रमितुम्, प्रविशितुं कल्पते सर्वो गोचरकालस्तस्य पारणादिवसे, यदा यस्य कस्यचिद्वस्तुनः इच्छा भवेत् तदा गृहस्थगृहे गत्वा, आहाराद्यानीय भोक्तव्यमेषाऽष्टमी समाचारी ॥८॥ अथ नवमीं पानकसमाचारीं वदति–

वासावासं पज्जोसवियस्स निच्चभत्तियस्स भिक्खुस्स कप्पंति सव्वाइं पाणगाइं पडिगाहित्तए ।

अर्थः–वर्षाकाले स्थितानां साधूनाम्, साध्वीनां मध्ये यो नित्यभोजी साधुस्तस्य नित्यभक्तिकस्य साधोः कल्पन्ति सर्वाणि पानीयानि गृहीतव्यानि । 'आचाराङ्गे'–एकविंशतिप्रासुकपानीयानि, तानि सर्वाणि योग्यानि । तत्र नव पानीयानि सूत्रोक्तानि, तानि इमानि–उत्स्वेदिमम् १, संस्वेदिमम् २, तन्दुलोदकम् ३, तिलोदकम् ४, तुषोदकम् ५, यवोदकम् ६, आयामम् ७, सौवीरम् ८, शुद्धविकटम् ९। अपराणि द्वादशानि, तानि इमानि–आचाम्लोदकम् १, कपित्थोदकम् २, बीजपूरोदकम् ३, द्राक्षोदकम् ४, दाडिमोदकम् ५, खर्जूरोदकम् ६, नालिकेरोदकम् ७, कसेलोदकम् ८, आमलोदकम् ९, चिणोदकम् १०, बदिरोदकम् ११, अम्बाडोदकम् १२। एवं नित्यभोजिनः सर्वाण्यऽपि जलानि गृहीतुं कल्पन्ते इत्यर्थः । यानि रस–गन्ध–स्पर्शैः परिणितानि भवेयुस्तानि गृह्णीयात् ॥

वासावासं पज्जोसवियस्स चउत्थभत्तियस्स भिक्खुस्स कप्पंति तओ पाणगाइं पडिगाहित्तए, तं जहा—ओसेइमं वा, संसेइमं वा, चाउलोदगं वा। वासावासं पज्जोसवियस्स छट्ठभत्तियस्स भिक्खुस्स कप्पंति तओ पाणगाइं पडिगाहित्तए, तं जहा—तिलोदगं वा, तुसोदगं वा, जवोदगं वा। वासावासं पज्जोसवियस्स अट्ठमभत्तियस्स भिक्खुस्स कप्पंति तओ पाणगाइं पडिगाहित्तए, तं जहा—आयामे वा, सोवीरे वा, सुद्धवियडे वा ॥

अर्थः—वर्षाकाले स्थितानां साधूनां मध्ये य एकान्तरोपवासिकस्तस्य त्रीणि पानीयानि कल्पन्ते, तद्यथा—उत्स्वेदिमम्—चूर्णस्य प्रक्षालनोदकम् १, संस्वेदिमम्—यत् पर्णाद्युत्कालनं शीतलजलेन सिच्यते तज्जलं संस्वेदिममुच्यते २, चावलोदकम्—तन्दुलप्रक्षालनजलम् ३ एतानि त्रीणि जलानि कल्पन्ते ॥ वर्षाकाले स्थितानां साधूनां मध्ये यः षष्ठभक्तिकस्तस्य—उपवासद्वयकर्त्तुः साधोस्त्रीणि जलानि कल्पन्ते, तद्यथा—तिलोदकं तिलप्रक्षालनजलम् १, तुषोदकम्—व्रीहिप्रक्षालनजलम् २, यवोदकम्—यवप्रक्षालनम् ३ एतानि कल्पन्ते ॥ वर्षाकाले स्थितानां साधूनां मध्ये अष्टमभक्तिकस्य—त्रिभिरुपवासैः पारणं यः करोति तस्य साधोरेतानि त्रीणि जलानि कल्पन्ते,

तद्यथा–आयामम्–धान्यस्य उत्श्रावणम् १, सौवीरम्–काञ्जिकजलम् २, शुद्धविकटम्–उष्णजलम् ३। अथवा वर्णान्तरादिप्रासम्–वर्ण–गन्ध–रसैः परावर्तितं शुद्धं पानीयं, शुद्धं सद् विकटम्–प्रासुकं शुद्धविकटम् एतस्यार्थः। शुद्धं पानीयम्–वर्णान्तरादि प्रासं तच्छुद्धम्, विकटं–प्रासुकं जातं तच्छुद्धविकटम् उच्यते, अयमप्यर्थो वाच्यः॥

वासावासं पज्जोसवियस्स विगिट्ठभत्तियस्स भिक्खुस्स कप्पइ एगे उसिणवियडे पडिगाहित्तए, से वि य णं असित्थे नो चेव य णं ससित्थे। वासावासं पज्जोसवियस्स भत्तपडियाइक्खियस्स भिक्खुस्स कप्पइ एगे उसिणवियडे पडिगाहित्तए, से वि य णं असित्थे नो चेव णं ससित्थे, से वि य णं परिपूए नो चेव णं अपरिपूए, से वि य णं परिमिए नो चेव णं अपरिमिए, से वि अ णं बहुसंपन्ने नो चेव णं अबहुसंपन्ने॥ २५॥

अर्थः–वर्षाकाले स्थितानां साधूनाम्, तथा साध्वीनां मध्ये यः साधुर्विकृष्टभक्तिकस्तस्योपवासत्रयादधिकतपस्कर्तुर्मुनेरेकमुष्णविकटं त्रिदण्डोत्कालितमुष्णं जलं कल्पते, नाऽन्यत्। तदप्युष्णजलं धान्यसिक्थरहितम् असिक्थं ग्राह्यम्, तत्रैतत्कारणम्–प्रायेण त्रिभ्य उपवासेभ्यः योऽधिकं तपः करोति तस्य शरीरे देवाऽऽवेशो

भवति, सान्निध्यकारी भवति, तेनाऽसिक्थं शुद्धोष्णपानीयं पातव्यम् ॥ वर्षाकाले स्थितानां साधूनाम्, तथा
साध्वीनां मध्ये येन भक्त-पानं प्रत्याख्यातम्-भक्त-पानस्य प्रत्याख्यानं कृतं अर्थात्-अनशनं गृहीतं तस्य
साधोः एकम् उष्णपानीयं कल्पते, तदपि उष्णपानीयमऽसिक्थम् सिक्थरहितम्-न च ससिक्थम् । यतः
सिक्थसहितजलस्य पानाद् आहारदूषणं लगति, पुनस्तद् उष्णजलं परिपूतम्-वस्त्रगालितम्, न चाऽपरिपूतम्-
अगालितम् । पुनस्तद् उष्णजलं परिमितं स्तोकं स्तोकम्, न चैकवारमेव प्रचुरं प्रदेयम् । तस्य अजीर्णादिदो-
षसंभवात् । पुनस्तद् उष्णजलं बहुसंपन्नम्-बहुभ्यो दर्शितम् न च अबहुदर्शितम् । एषा नवमी समाचारी
॥ ९ ॥ अथ दत्तिसङ्ख्यारूपा दशमी समाचारी कथ्यते-

वासावासं पज्जोसविअस्स भिक्खुस्स संखादत्तियस्स कप्पंति पंच दत्तीओ भोअणस्स पडिगा-
हित्तए पंच पाणगस्स, अहवा चत्तारि भोअणस्स पंच पाणगस्स, अहवा पंच भोअणस्स
चत्तारि पाणगस्स । तत्थ णं एगा दत्ती लोणासायणमित्तमवि पडिगाहिआ सिया, कप्पइ से
तद्दिवसं तेणेव भत्तट्ठेणं पज्जोसवित्तए, नो से कप्पइ दुच्चंपि गाहावइकुलं भत्ताए वा, पाणाए
वा निक्खमित्तए वा, पविसित्तए वा ॥ २६ ॥

अर्थः—वर्षाकाले स्थितानां साधुनाम्, साध्वीनां च मध्ये यः कश्चित् साधुः सङ्ख्यादत्तिको वर्त्तते, सङ्ख्या वर्त्तते दत्तेः—दर्व्याः यस्य स सङ्ख्यादत्तिकः, सङ्ख्यादर्वीकः । 'एकस्मिन् गृहे एकवारं दर्व्यां कृत्वा पात्रे यश्चाऽऽहारः प्राप्यते तावानेव गृह्यते' एतादृशं यस्तपः कुरुते; तस्य साधोः पञ्च दत्तयो भोजनस्य, पञ्च लोष्टिकाः पानीयस्य मुत्कलाः सन्ति । अथवा चतस्रो भोजनस्य, पञ्च पानीयस्य मुत्कलाः सन्ति । अथवा पञ्च भोजनस्य चतस्रः पानीयस्य मुत्कलाः सन्ति । तत्र लवणाऽऽस्वादमात्रमपि दत्तिर्गृह्यते, लवणाऽऽस्वादो यथा स्तोको भवति तथा स्तोकप्रमाणाऽपि एका दत्तिर्गण्यते । पञ्च दत्तयश्चेद् मुत्कला भोजनस्य भवेयुः, पञ्च चेत् पानीयस्य मुत्कला भवेयुस्तदा अधिका न गृहीतव्याः, न्यूना गृहीतव्याः । कदाचिद् वृद्धाभिर्दत्तिभिस्तिसृभिरेव भक्तस्य पूर्त्तिः स्यात् तर्हि वर्द्धेते द्वे दत्ती, पानीयस्य पञ्चसु दत्तिषु न प्रक्षेपणीये—साङ्ख्यादत्तिकेन साधुना पानीयस्य सप्त दत्तयो न करणीयाः । एवं पानीयस्य दत्तय आहारस्य दत्तिषु न क्षेपणीयाः, तस्मिन् दिने तावत्प्रमाणाभिरेव स्वल्पाभिरपि सारणीयम्, न च दत्तीनां विनिमयं कृत्वा गृहस्थगृहे द्वित्रिर्वारं भ्रमणीयम् अयं परमार्थः ॥ एषा दशमी समाचारी ॥ १० ॥ अथ संखडिविचाररूपा एकादशमी समाचारी कथ्यते—

वासावासं पज्जोसवियाणं नो कप्पइ निग्गंथाण वा, निग्गंथीण वा जाव—उवस्सयाओ सत्त-

घरंतरं संखडिं संनियट्टचारिस्स इत्तए ॥ एगे पुण एवमाहंसु–नो कप्पइ जाव–उवस्सयाओ परेण सत्तघरंतरं संखडिं संनियट्टचारिस्स इत्तए॥ एगे पुण एवमाहंसु–नो कप्पइ जाव–उवस्सया-ओ परंपरेणं संखडिं संनियट्टचारिस्स इत्तए ॥ २७ ॥

अर्थः–वर्षाकाले पर्युषितानाम्–स्थितानां साधूनाम् , साध्वीनां च मध्ये सन्निवृत्तचारिणः–सन्निषिद्धाद् गृहा-चरति निवर्त्तते इति सन्निवृत्तचारी । तस्य सन्निवृत्तचारिणः साधोरुपाश्रयात् ( शय्यातरगृहात् ) प्रारभ्य सप्तसु गृहेषु संखडिर्भवति–जीमनवारो भवति–तत्राऽऽहारार्थं गमनं न कल्पते । यः सदा शुद्धगृहेष्वाऽऽहारं गृह्णाति, तस्यैवोपाश्रयात् सप्तगृहाणां मध्ये संखडिगृहाद् आहारो न कल्पते । संखडिगृहम् आहाराय निषिद्धमस्ति, तद्वर्जकः संनिवृत्तिचारी उच्यते । एके पुनराचार्या एवमाहुः–'उपाश्रयात् परेण–उपाश्रयं विना अग्रेतनानि यानि सप्त गृहाणि तेषां मध्ये जीमनवारगृहे भक्त–पानार्थं पूर्वोक्तस्य–संनिवृत्तिचारिणः साधोर्गमनं न कल्पते'। पुनरेके आचार्या एवमाहुः–'उपाश्रयात् परंपरया एकं गृहम् , उपाश्रयाद्वितीयं गृहं त्यक्त्वा अग्रेतनानां सप्त-गृहाणां मध्ये जीमनवारगृहे संनिवृत्तचारिणः साधोराऽऽहाराय गमनं न कल्पते' । अत्र पक्षत्रयं वर्त्तते प्रथम-पक्षे–उपाश्रयसहितेषु सप्तसु गृहेषु जीमनवारगृहे न गन्तव्यम् । द्वितीयपक्षे शय्यातरगृहं त्यक्त्वा अग्रेतनेषु

**दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी ॥ ५ ॥ एवं खलु अहं देवाणुप्पिआ ! अज्ज सयणिज्जंसि सुत्तजागरा ओहीरमाणी ओहीरमाणी इमेआरूवे उराले जाव–सस्सिरीए चउद्दस महासुमिणे पासित्ता णं पडिबुद्धा, तं जहा, गय–जाव–सिहिं च ॥ ६ ॥**

तान् स्वप्नान्, कान्? गज–वृषभ–सिंह–लक्ष्मीदेवता–पुष्पमालायुग्म–चन्द्र–सूर्य–ध्वज–पूर्णकलश–पद्मसरोवर–सागर–विमान (भुवन)–रत्नराशि–निर्धूमाग्निरूपान् ॥ ४ ॥ सा देवानन्दा ब्राह्मणी एतादृशान् स्वप्नान् पश्यति। कीदृशान्? ईदृशं येषां स्वप्नानां स्वरूपं वर्तते–उदारान्, कल्याणकारकान्, उपद्रवरहितान्, प्रधानान्, माङ्गल्यकारकान्, शोभासहितान्, चतुर्दश महास्वप्नान् दृष्ट्वा जाग्रती सती हर्षिता, संतोषं प्राप्ता, चित्ते आनन्दिता चतुर्दशस्वप्नानां दर्शनेन मनो भव्यं जातम्; यस्या देवानन्दाया हृदयं हर्षवशात् प्रफुल्लितम् आसीत्। मेघधाराभिः आहतं यत् कदम्बस्य पुष्पम्, तद्वत् अध्युष्ट ( ३॥ ) कोटिरोमराजी शरीरस्य विकसिता। पूर्व दृष्टानां स्वप्नानां हृदये अनुक्रमं धारयति, धारयित्वा शय्यातः उत्तिष्ठति, उत्थाय उत्तालतां विहाय अचपला सती, अस्खलिता सती, विचाले कुत्राऽपि विलम्बम् अकुर्वाणा राजहंसीसदृश्या गत्या कृत्वा यत्र ऋषभदत्तो ब्राह्मणः, तत्र आगता, आगत्य ऋषभदत्तं ब्राह्मणं जयेन–स्वकीयदेशे प्रतापलक्षणेन, विजयेन–परदेशे प्रताप-

सप्तसु गृहेषु न गन्तव्यम् । तृतीयपक्षे एक उपाश्रयः, एकमपरं गृहम् एव द्वे गृहे त्यक्त्वा अग्रे सप्तगृहेषु जीमनवारगृहे भक्त-पानार्थं न गन्तव्यम् ॥ पक्षत्रयमेवं ज्ञेयम्-यदा साधुर्नवीनग्रामे आयाति तदा प्रथमदिने इन्द्रः शय्यातरः, द्वितीये दिने देशाधिपः शय्यातरः, तृतीये दिने ग्रामाधिपः शय्यातरः, चतुर्थे दिने गृहाधिपस्य गृहं शय्यातरम्, पश्चात् परंपरया सप्त गृहाणि वर्जयति । तत्राऽयं हेतुः-उपाश्रयसमीपे यानि गृहाणि भवेयुस्तानि गुणरागवन्ति स्युः, तानि आधाकर्माऽऽहारदायकानि भवेयुः, तेनोपाश्रयसमीपगृहाणि साधूनां निषिद्धानि । एषैकादशमी समाचारी ॥ ११ ॥ अथ वृष्टौ सत्यां जिनकल्पिकानाम् आहारविधिरूपा द्वादशमी समाचारी कथ्यते-

वासावासं पज्जोसवियस्स नो कप्पइ पाणिपडिग्गहियस्स भिक्खुस्स कणगफुसियमित्तमवि वुट्ठिकायंसि निवयमाणंसि जाव-गाहावइकुलं भत्ताए वा, पाणाए वा निक्खमित्तए वा, पविसित्तए वा ॥ २८ ॥

अर्थः-वर्षाकाले स्थितानां साधूनाम्, साध्वीनां च मध्ये यः कश्चित् पाणिप्रतिग्रही, अर्थाद्-करपात्री जिनकल्पी साधुस्तस्य कर्णिका स्पर्शितमात्रेऽपि, अवश्याय-धूमरी-सूक्ष्मछटाभिरप्कायस्य वृष्टौ सत्यां गाथापतिगृहे

भक्त-पानीयम् आननाय निर्गमनम्, प्रविशनं च न कल्पते।

वासावासं पज्जोसवियस्स पाणिपडिग्गहियस्स भिक्खुस्स नो कप्पइ अगिहंसि पिंडवायं पडिगाहित्ता पज्जोसवित्तए, पज्जोसवेमाणस्स सहसा वुट्ठिकाए निवइज्जा देसं भुच्चा देसमादाय से पाणिणा पाणिं परिपिहित्ता उरंसि वा णं निलिज्जिज्जा, कक्खंसि वा णं समाहडिज्जा, अहाछन्नाणि वा, लेणाणि वा उवागच्छिज्जा, रुक्खमूलाणि वा उवागच्छिज्जा, जहा से पाणिंसि दए वा, दगरए वा, दगफुसिआ वा नो परिआवज्जइ ॥ २९ ॥ वासावासं पज्जोसवियस्स पाणिपडिग्गहियस्स भिक्खुस्स जं किंचि कणगफुसियमित्तंपि निवडति, नो से कप्पइ गाहावइकुलं भत्ताए वा, पाणाए वा निक्खमित्तए वा, पविसित्तए वा ॥ ३० ॥

अर्थः-वर्षाकाले स्थितानां साधूनां मध्ये यः कश्चित् पाणिपात्री-जिनकल्पी साधुस्तस्या-ऽगृहे-अनाच्छादिते स्थाने, आकाशे पिण्डपातमाहारं प्रतिगृहीत्वा पर्युषितुं न कल्पते। कदाचित् अर्द्धे आहारे भुंक्ते सति मेघवृष्टिः स्यात्तदा जिनकल्पी किं कुर्यात्? तदाह-देशं भुक्त्वा मेघवृष्टेः पूर्वमेव यद्भुक्तं तत्, शेषं देशं गृहीत्वा तत्-आहारैक-

देशं पाणिना–हस्तेन हस्तमध्यस्थमाहारमाच्छाद्य वा, 'णं' शब्देन तद्भोज्यं उरसि वा–हृदयाग्रे रक्षेत्, अथवा कक्षायां वा समाहृत्य–आनीय, आच्छाद्येषु–गृहस्थेनाच्छादितानि निलयानि–गृहाणि तत्राऽऽगन्तव्यम् ; अथवा वृक्षमूले वा आगन्तव्यम्। अन्यत् किं भण्यते, यत्र तदाऽऽहारस्य, पानीयस्य रजोभिः–बिन्दुभिरुदकस्पर्शैः सूक्ष्मप्रदेशैर्न स्पर्शो जायते तथा करणीयमित्यर्थः। अस्यैवाऽर्थस्य निश्चयं वदति–वर्षाकाले स्थितानां साधूनां मध्ये यः करपात्री साधुस्तस्य यत्किञ्चित् स्तोकमात्रमपि कणो लेशः, कस्य? पानीयस्य, स्पर्शमात्रेणापि पतति सति, अर्थात्–सूक्ष्मतराभिरपि कणिकाभिर्मेघे वर्षति सति गृहस्थस्य गृहे भक्त–पानीयार्थं निष्क्रमितुम्, प्रविशितुं न कल्पते॥ एषा द्वादशमी समाचारी॥ १२॥ अथ पतद्ग्रहधारिणः स्थविरकल्पिकस्य आहारविधिरूपा त्रयोदशमी कथ्यते—

वासावासं पज्जोसवियस्स पडिग्गहधारिस्स भिक्खुस्स नो कप्पइ वग्घारियवुट्ठिकायंसि गाहावइकुलं भत्ताए वा, पाणाए वा निक्खमित्तए वा, पविसित्तए वा, कप्पइ से अप्पवुट्ठिकायंसि संतरुत्तरंसि गाहावइकुलं भत्ताए वा, पाणाए वा निक्खमित्तए वा, पविसित्तए वा (ग्रं०११००)

अर्थः—वर्षाकाले स्थितस्य परिग्रहधारिणः—चतुर्दशोपकरणधारिणः स्थविरकल्पिकस्य साधोर्व्याघारितवृष्टिकायां सत्याम्—यथा वृष्ट्या उपरिसत्काद् वस्त्रात् पानीयं प्रवहति, तथा च उपरिसत्कं वस्त्रं निर्भिद्य शरीरं सार्द्रं भवति तादृश्यां महत्यां वृष्टौ सत्यां गाथापतिगृहे—गृहस्थस्य गृहे भक्तपानीयनिमित्तं निष्क्रमितुम्, प्रवेष्टुं न कल्पते। अथ यादृश्यां वृष्टौ सत्याम् आहार—पानीयस्य गमनं कल्पते तदाह—तस्य स्थविरकल्पिकस्य साधोरल्पायां वृष्टौ सत्यां सान्तरोत्तरस्य—येन साधुना उपरि ऊर्णामयं वस्त्रं धृत्वा मध्ये सौत्रं वस्त्रं धृतं वर्त्तते तस्य, सान्तरोत्तरस्य—सर्वथाऽऽच्छादितशरीरस्य, पटलादिना आच्छादितपात्रस्य गृहस्थस्य गृहे भक्त—पानार्थं यातुं कल्पते।

वासावासं पज्जोसविअस्स, निग्गंथस्स, निग्गंथीए वा गाहावइकुलं पिंडवायपडियाए अणुपविट्ठस्स निगिज्झिय, निगिज्झिय वुट्ठिकाए निवइज्जा, कप्पइ से अहे आरामंसि वा, अहे उवस्सयंसि वा, अहे वियडगिहंसि वा, अहे रुक्खमूलंसि वा उवागच्छित्तए ॥ ३२ ॥

अर्थः—वर्षाकाले स्थितस्य निर्ग्रन्थस्य पिण्डपाताय प्रतियातुम्—( आहाराय गन्तुं ) गाथापतिगृहे प्रविष्टस्य सतो निगृह्य वृष्टौ सत्यां आरामस्याऽधो वा, उपाश्रयस्याऽधो वा, विकटगृहस्याऽधो वा, विकटगृहम्—( हत्थाहीकादि स्थानं ) तस्याधो वा आगन्तुं कल्पते; वृष्टेरभावे स्वस्थाने वा, आहारार्थं गृहस्थगृहे वा गन्तुं कल्पते।

तत्थ से पुव्वागमणेणं पुव्वाउत्ते चाउलोदणे, पच्छाउत्ते भिलिंगसूवे; कप्पइ से चाउलोदणे पडिगाहित्तए, नो से कप्पइ भिलिंगसूवे पडिगाहित्तए ॥ ३३ ॥ तत्थ से पुव्वागमणेणं पुव्वाउत्ते भिलिंगसूवे, पच्छाउत्ते चाउलोदणे; कप्पइ से भिलिंगसूवे पडिगाहित्तए, नो से कप्पइ चाउलोदणे पडिगाहित्तए ॥ ३४ ॥ तत्थ से पुव्वागमणेणं दो वि पुव्वाउत्ताइं, कप्पंति से दो वि पडिगाहित्तए। तत्थ से पुव्वागमणेणं दो वि पच्छाउत्ताइं, एवं नो से कप्पंति दो वि पडिगाहित्तए॥ जे से तत्थ पुव्वागमणेणं पुव्वाउत्ते, से कप्पइ पडिगाहित्तए, जे से तत्थ पुव्वागमणेणं पच्छाउत्ते, नो से कप्पइ पडिगाहित्तए ॥ ३५ ॥

अर्थः—तत्र पूर्वोक्तस्थाने स्थितस्य साधोः, समीपगृहस्थगृहे साधोस्तत्राऽऽगमनात् पूर्वमेव तन्दुलोदनो राद्धोऽस्ति, साधोस्तत्राऽऽगमनात् पश्चाद्भिलिङ्गसूपो मुद्गादिदाली राद्धास्ति; तत्र तन्दुलोदनस्तस्य साधोः कल्पते, पश्चाद्राद्धा मुद्गादीनां दाली न कल्पते, आधाकर्मदोषदूषितत्वात् ॥ तत्र पुनः साधोरागमनात् पूर्वं मुद्गादिदाली राद्धा भवति, साधोरागमनात् पश्चात्तन्दुलोदनो राद्धो भवति; तदा पूर्वं राद्धा मुद्गादिदाली गृहीतुं कल्पते, न

तु तस्य साधोः पश्चाद्राद्धस्तन्दुलोदनो कल्पते ॥ तत्र विकटगृहादिस्थाने स्थितस्य साधोरागमनात् पश्चादुभे तन्दुल-दाल्ये राद्धे भवतस्तदा उभेऽपि न कल्पेते । अथ साधोरागमनात्पूर्वं राद्धे भवतस्तदा उभेऽपि गृहीतुं कल्पेते ॥

वासावासं पज्जोसवियस्स निग्गंथस्स, निग्गंथीए वा गाहावइकलं पिंडवायपडियाए अणुपविट्ठस्स निगिज्झिय २ वुट्ठिकाए निवइज्जा, कप्पइ से अहे आरामंसि वा, अहे उवस्सयंसि वा, अहे वियडगिहंसि वा, अहे रुक्खमूलंसि वा उवागच्छित्तए; नो से कप्पइ पुवगहिएणं भत्त-पाणेणं वेलं उवायणावित्तए; कप्पइ से पुवामेव वियडगं भुच्चा पिच्चा पडिग्गहगं संलिहिय २, संपमज्जिय २ एगाययं भंडगं कट्टु सावसेसे सूरे जेणेव उवस्सए तेणेव उवागच्छित्तए नो से कप्पइ तं रयणिं तत्थेव उवायणावित्तए ॥ ३६ ॥

अर्थः—वर्षाकाले स्थितानां साधूनाम्, साध्वीनां चाऽऽहार–पानीयग्रहणाय गतानां निगृह्य निगृह्य मेघस्य वर्षासु जायमानासु सतीषु आरामस्याऽधस्तले वा, उपाश्रयस्य, अन्यस्य कस्यचित् साधोरुपाश्रयाऽधोभागे वा, जनाऽऽस्थानतले वा, अथवा वृक्षस्य मूले वा स्थितानां साधूनां पूर्वगृहीतस्याऽऽहार–पानीयस्य वेलाऽतिक्रमणं न

कल्पते। तर्हि आहार-पानीयं गृहीत्वा तत्राऽऽरामादीनां तले वर्षा-वृष्टिर्न तिष्ठते तदा किं करणीयम्? पूर्वं गृहीतं तद् विकटे (स्थले) प्राऽसुकमाऽऽहार-पानीयं भुक्त्वा, पीत्वा, पात्रं संलूष्य २, संप्रमार्ज्य २, एकतो भाण्डोपकरणं बध्वा एकत्रीकृत्य झोलिकादौ ध्रियते। पश्चाद् मेघे वर्षति सति यावत् सूर्ये नाऽस्तमिते तत्रैव स्थेयम्। सूर्ये शेषे सति निजचतुर्मासस्थाने आगन्तुं कल्पते। रात्रावापतत्यां स्वस्थाने आगन्तव्यम्, न च रजन्यां मेघभीत्या निजोपाश्रयाद् बहिः स्थातव्यम्। तत्रैकाकिन आत्मविराधना, संयमविराधना चोत्पद्यते। उपाश्रये पश्चात् स्थिताः साधवश्चाऽधृतिं कुर्वन्ति। तेन एकाकी बहिर्न स्थातव्यम्॥

वासावासं पज्जोसवियस्स निग्गंथस्स, निग्गंथीए वा गाहावइकुलं पिंडवायपडियाए अणुपविट्ठस्स निगिज्झिय २ वुट्ठिकाए निवइज्जा, कप्पइ से अहे आरामंसि वा, अहे उवस्सयंसि वा जाव० उवागच्छित्तए॥३७॥ तत्थ नो से कप्पइ एगस्स निग्गंथस्स एगाए य निग्गंथीए एगयओ चिट्ठित्तए १, तत्थ नो कप्पइ एगस्स निग्गंथस्स दुण्हं निग्गंथीणं एगयओ चिट्ठित्तए २, तत्थ नो कप्पइ दुण्हं निग्गंथाणं एगाए य निग्गंथीए एगयओ चिट्ठित्तए ३, तत्थ नो

कप्पइ दुण्हं निग्गंथाणं दुण्हं निग्गंथीणं य एगयओ चिट्ठित्तए ४। अत्थि य इत्थ केइ पंचमे खुड्डए वा, खुड्डिया इ वा अन्नेसिं वा संलोए, सपडिदुवारे एवण्हं कप्पइ एगयओ चिट्ठित्तए ॥३८॥

अर्थः-वर्षाकाले स्थितस्य निर्ग्रन्थस्याऽऽहारार्थं गृहस्थस्य गृहे गन्तुं कृतारम्भस्य अन्तरा-मार्गे निगृह्य निगृह्य स्थित्वा २ वृष्टौ निपतत्यां सत्याम् आरामस्य तले वा, उपाश्रयस्य तले वा, विकटस्य गृहस्य तले वा, वृक्षस्य मूले वा, मेघवृष्टिभीत्या स्थितस्य तस्य साधोः, तत्रैव मेघवृष्टिभीत्या आगतया एकया निर्ग्रन्थ्या साध्व्या सह एकत्र स्थातुं न कल्पते ॥ १ ॥ तथा एकस्य निर्ग्रन्थस्य द्वाभ्यां निर्ग्रन्थीभ्यां सह एकत्र स्थातुं न कल्पते ॥ २ ॥ अथ द्वयोः साध्वोरेकया साध्व्या सह एकत्र स्थातुं न कल्पते ॥ ३ ॥ पुनर्द्वयोः साध्वोः द्वाभ्यामेव साध्वीभ्यां सहैकत्र स्थातुं न कल्पते ॥ ४ ॥ एवं सति च तत्रैकत्र स्थातुं कल्पते यद्यत्र कश्चित् पञ्चमः साधूनां मध्ये क्षुल्लको भवेत्, साध्वीनां मध्ये क्षुल्लिका भवेत् ॥ प्रायेणैकाकी साधुर्न तिष्ठति, न च विहर्तुं याति । एवं साध्व्यो अपि तिस्रश्चतस्रो वा विहर्तुं व्रजेयुः । कदाचित् तत्र कारणवशात् पञ्चमो न स्यात्तर्हि किं कार्यं, तदाऽऽह-सर्वेषां लोकानां दृक्प्रचारः स्यात्, अन्येषां लोकानां यत्र स प्रतिद्वारो भवेत् तत्रैकत्र स्थातुं कल्पते । एकान्ते, प्रच्छन्नप्रदेशे स्थातुं न कल्पते इत्यर्थः ॥

वासावासं पज्जोसवियस्स निग्गंथस्स गाहावइकुलं पिंडवायपडियाए अणुपविट्ठस्स निगिज्झिय २ वुट्ठिकाए निवइज्जा, कप्पइ से अहे आरामंसि वा, अहे उवस्सयंसि वा जाव० उवागच्छित्तए, तत्थ नो कप्पइ एगस्स निग्गंथस्स एगाए य अगारीए एगयओ चिट्ठित्तए, एवं चउभंगी। अत्थि णं इत्थ केइ पंचमए थेरे वा, थेरिया वा अन्नेसिं वा संलोए सपडिदुवारे, एवं कप्पइ एगयओ चिट्ठित्तए। एवं चेव निग्गंथीए अगारस्स य भाणियव्वं ॥ ३९ ॥

अर्थः—वर्षाकाले स्थितस्य निर्ग्रन्थस्य आहारार्थं गृहस्थस्य गृहे गन्तुम् अनुप्रविष्टस्याऽन्तरा—मार्गे निगृह्य २ वृष्टौ निपतन्त्याम् आरामस्य तले वा, उपाश्रये वा, विकटगृहस्याऽधोभागे वा; वृक्षस्य मूले वा स्थितस्य च तत्रैकस्य साधोरेकया गृहस्थिन्या सह एकत्र स्थातुं न कल्पते। एवं पूर्वोक्तया रीत्या चतुर्भङ्गी ज्ञेया—एकस्य साधोः एकया गृहस्थिन्या ॥ १ ॥ एकस्य साधोर्द्वाभ्यां गृहस्थिनीभ्याम् ॥ २ ॥ अथ द्वयोः साध्वोरेकया गृहस्थिन्या ॥ ३ ॥ पुनः द्वयोः साध्वोः द्वाभ्यां गृहस्थिनीभ्यामेकत्र स्थातुं न कल्पते ॥४॥ अत्राऽपि पञ्चमः कश्चिद् वृद्धः, वृद्धा वा काचिद् भवेत् तर्हि स्थातुं कल्पते; अथवा यत्र बहूनां लोकानां दृष्टिपातो भवेत्, बहुद्वारम्—

मुत्कलद्वारं स्थानं वा स्यात् तत्र स्थातुं कल्पते। एवं श्राद्धस्य साध्व्या सह चतुर्भङ्गी ज्ञेया-( एकः श्राद्धः एकया साध्व्या ॥ १ ॥ एकः श्राद्धो द्वाभ्यां साध्वीभ्याम् ॥ २ ॥ द्वौ श्राद्धौ एकया साध्व्या ॥ ३ ॥ द्वौ श्राद्धौ द्वाभ्यां साध्वीभ्याम् ॥ ४ ॥ एकत्र स्थातुं न कल्पते ) एषा त्रयोदशमी समाचारी ॥ १३ ॥ अथ अपृष्टार्थे विहरणनिषेधरूपा चतुर्दशमी कथ्यते-

वासावासं पज्जोसवियाणं नो कप्पइ निग्गंथाण वा, निग्गंथीण वा अपरिण्णए णं अपरिण्णयस्स अट्ठाए असणं वा १, पाणं वा २, खाइमं वा ३, साइमं वा ४ जाव-पडिगाहित्तए ॥ ४० ॥ से किमाहु भंते ? इच्छा परो अपरिण्णए भुंजिज्जा, इच्छा परो न भुंजिज्जा ॥४१॥

अर्थः-वर्षाकाले स्थितानां साधूनाम्, साध्वीनां च वैयावृत्त्यकरेण साधुना अपरिज्ञसेन-ग्लानादिना अदत्ताऽऽदेशेन, अपरिज्ञसस्याऽपृष्टस्य ग्लानादेर्निमित्तम् अशन-पान-खादिम-स्वादिमाद्याऽऽहारं प्रतिगृहीतुं गृहस्थगृहादाऽऽनेतुं न कल्पते, तत्र को हेतुः ? तदाह-शिष्यः पृच्छति हे स्वामिन् ! पृच्छां विना कथमाहारं नाऽऽनीयते ? गुरुराह-यदि ग्लान इच्छेत्तदा ग्लानो भुञ्जीत, यदि ग्लानो न इच्छेत्तदा न भुञ्जीत। पुनश्चेत् परोऽन्योऽरोचमानो लज्जया, दाक्षिण्येनाऽऽहारं भुञ्जीत तदा तच्छरीरे ग्लानिः, अजीर्णं वा स्यात्। यदि न भुञ्जीत

लक्षणेन वर्धापयति, वर्धापयित्वा भद्रासने तिष्ठति। तत्र आस्वस्था–आ ईषत्, स्वस्था मार्गे आगच्छन्त्या यः श्रम आसीत्, स निवारितः। विस्वस्था–प्रस्वेदादिकं शरीराद् उपशान्तम्। पश्चाद् द्वौ हस्तौ संमील्य, मस्तके आवर्त कृत्वा अञ्जलिं बद्ध्वा एवम् अवादीत्ः–हे स्वामिन्! अद्य रात्रौ किञ्चित् सुप्ता किञ्चिद् जाग्रती ईदृशान् महास्वप्नान् दृष्ट्वा प्रतिबुद्धा गजाद् आरभ्य अग्निशिखां यावत् भर्तुरग्रे उक्ताश्चतुर्दश स्वप्नाः ॥ ५ ॥ ६ ॥ अथ फलं पृच्छति–

एएसिणं देवाणुप्पिया! उरालाणं जाव–चउद्दसण्हं महासुमिणाणं के मन्ने कल्लाणे फलवित्तिविसेसे भविस्सइ ?। तए णं से उसभदत्ते माहणे देवाणंदाए माहणीए अंतिए एअमट्ठं सोच्चा, निसम्म हट्ठतुट्ठ–जाव–हयहिअये, धाराहयकयंबसमुस्सिअरोमकूवे सुमिणुग्गहं करेइ, करित्ता इहं अणुपविस्सइ, पविसित्ता अप्पणो साहाविएणं मइपुव्वएणं बुद्धिविन्नाणेणं तेसिं सुमिणाणं अत्थुग्गहं करेइ, करित्ता देवाणंदं माहणिं एवं वयासी ॥ ७ ॥

एतेषां मयोक्तानां चतुर्दशस्वप्नानाम्, हे देवानुप्रिय! स्वामिन्! त्वाम् अहं पृच्छामि–किं कल्याणकारकं फलम्–कश्चिद् वृत्तिविशेषो भविष्यति ?। तत ऋषभदत्तो ब्राह्मणो देवानन्दाया ब्राह्मण्याः मुखाद् एतदर्थं श्रुत्वा

तदा वर्षाकाले पृथ्वी जीवाकुलत्वेन प्रासुकस्थण्डिलाऽभावेन आहारपरिष्ठापनाय अनार्हा स्यात्, तस्मादाऽऽदेशं विना, प्रश्नं विना चाऽऽहारो न आनेतव्य इत्यर्थः, आनयने चाऽऽत्मविराधना, संयमविराधना च स्यात्। इति चतुर्दशमी समाचारी ॥ १४ ॥ अथ सप्त स्नेहाऽऽयतनरूपा पञ्चदशमी समाचारी कथ्यते–

वासावासं पज्जोसवियाणं नो कप्पइ निग्गंथाण वा, निग्गंथीण वा उदउल्लेण वा, ससिणिद्धेण वा काएणं असणं वा १, पाणं वा २, खाइमं वा ३, साइमं वा ४ आहारित्तए ॥ ४२ ॥ से किमाहु भंते ? सत्त सिणेहाययणा पण्णत्ता, तं जहा–पाणी १, पाणिलेहा २, नहा ३, नहसिहा ४, भमुहा ५, अहरोट्ठा ६, उत्तरोट्ठा ७। अह पुण एवं जाणिज्जा–विगओदगे मे काए छिन्नसिणेहे, एवं से कप्पइ असणं वा १, पाणं वा २, खाइमं वा ३, साइमं वा ४ आहारित्तए ॥ ४३ ॥

अर्थः–वर्षाकाले स्थितानां साधूनाम्, साध्वीनां च उदकार्द्रेण शरीरेण मेघपानीये शरीरात् क्षरति सति, अथवा ईषद् मेघच्छटाभिः शरीरे भिन्ने सति अशन–पान–खादिम–स्वादिमाद्याहारं भोक्तुं न कल्पते, तत्र किं

कारणं ? गुरुराह–अहो शिष्य ! सप्त स्नेहायतनानि उक्तानि–सप्त शरीरे पानीयस्थितिस्थानानि सन्ति, तान्याह–पाणिर्हस्तः १, पाणिरेखा २, नखाः ३, नखशिखा ४, भ्रुवौ ५, अधरोष्ठः ओष्ठाऽधोभागस्य, ओष्ठशब्देन दाढिका ६, उपर्योष्ठः उपरिभागसत्क ओष्ठः श्मश्रुसमाधाररूपः ७ एतानि सप्त पानीयस्थितिस्थानानि। यदा एतानि सप्त स्नेहस्थानानि विगतोदकानि–पानीयरहितानि जातानि–शुष्कानि–इति साधुर्जानाति तदा अशनाद्याहारं कर्तुं कल्पते। एषा पञ्चदशमी समाचारी ॥ १५ ॥ अथ अष्टसूक्ष्मस्वरूपप्रतिपादिका षोडशमी समाचारी कथ्यते–

वासावासं पज्जोसवियाणं इह खलु निग्गंथाण वा, निग्गंथीण वा इमाइं अट्ठ सुहुमाइं, जाइं छउमत्थेण निग्गंथेण वा, निग्गंथीए वा अभिक्खणं अभिक्खणं जाणियव्वाइं, पासिअव्वाइं, पडिलेहियव्वाइं भवंति, तं जहा–पाणसुहुमं १, पणगसुहुमं २, बीअसुहुमं ३, हरियसुहुमं ४, पुप्फसुहुमं ५, अंडसुहुमं ६, लेणसुहुमं ७, सिणेहसुहुमं ८ ॥ ४४ ॥

अर्थः–वर्षाकाले स्थितानां साधूनाम्, साध्वीनाम् च इमानि अष्ट सूक्ष्माणि सूक्ष्मजीवानां स्थानानि भगवद्भिः प्ररूपितानि तानि छद्मस्थसाधुभिः, साध्वीभिश्चाभीक्ष्णं २ वारं वारं ज्ञातव्यानि, प्रतिलेखितव्यानि ...

यत्र साधवस्तिष्ठेयुः, उपविशेयुः, यत्र यत्र च भाण्डाद्युपकरणं मुञ्चेयुः, गृह्णीयुस्तत्र तत्र प्रतिलेखना अवश्यं कर्त्तव्या। अष्टौ सूक्ष्माणि विलोक्य त्याज्यानि, तानि कानि सूक्ष्मस्थानानि ?–प्राणसूक्ष्मम् १, पनकसूक्ष्मम् २, बीजसूक्ष्मम्, ३, हरितसूक्ष्मम् ४, पुष्पसूक्ष्मम् ५, अण्डसूक्ष्मम् ६, लयनसूक्ष्मं जीवानां गृहसूक्ष्मं ७, स्नेह-सूक्ष्मं अप्कायसूक्ष्मम् ८ अथाऽष्टौ सूक्ष्माणि पृथक् २ विवरेण कथ्यते—

से किं तं पाणसुहुमे ? पाणसुहुमे पंचविहे पन्नत्ते, तं जहा–किण्हे १, नीले २, लोहिए ३, हालिद्दे ४, सुक्लिले ५। अत्थि कुंथू अणुद्धरी नामं, जा ठिया अचलमाणा छउमत्थाणं निग्गंथाण वा, निग्गंथीण वा नो चक्खुप्फासं हव्वमागच्छइ, जा अट्ठिया चलमाणा छउमत्थाण निग्गंथाण वा, निग्गंथीण वा चक्खुप्फासं हव्वमागच्छइ, जा छउमत्थेण निग्गंथेण वा, निग्गंथीए वा अभिक्खणं २ जाणियव्वा, पासियव्वा, पडिलेहियव्वा हवइ से तं पाणसुहुमे १॥ से किं तं पणगसुहुमे ? पणगसुहुमे पंचविहे पण्णत्ते, तं जहा–किण्हे, नीले, लोहिए, हालिद्दे, सुक्किल्ले। अत्थि पणगसुहुमे तद्दव्वसमाणवण्णए नामं पण्णत्ते, जे छउमत्थेणं निग्गं-

थेण वा, निग्गंथीए वा जाव–पडिलेहिअव्वे भवइ । से तं पणगसुहुमे २ ॥ से किं तं बीअसुहुमे ? बीयसुहुमे पंचविहे पण्णत्ते, तं जहा–किण्हे जाव–सुक्किल्ले । अत्थि बीअसुहुमे कणियासमाणवण्णए नामं पन्नत्ते, जे छउमत्थेणं निग्गंथेण वा, निग्गंथीए वा जाव–पडिलेहियव्वे भवइ । से तं बीअसुहुमे ३ ॥ से किं तं हरियसुहुमे ? हरियसुहुमे पंचविहे पण्णत्ते, तं जहा–किण्हे, जाव–सुक्किल्ले । अत्थि हरिअसुहुमे पुढवीसमाणवण्णए नामं पण्णत्ते, जे निग्गंथेण वा, निग्गंथीए वा अभिक्खणं २ जाणियव्वे, पासियव्वे, पडिलेहियव्वे भवइ । से तं हरियसुहुमे ४ ॥

अत्र शिष्यः पृच्छति–हे गुरो ! कानि तानि प्राणसूक्ष्माणि? गुरुर्वदति–प्राणसूक्ष्माणि पञ्चप्रकाराणि । तान्युच्यन्ते–कृष्णानि १, नीलानि २, लोहितानि–रक्तानि ३, हारिद्राणि–पीतानि ४, शुक्लानि ५ । तानि 'अणुद्धरी' इति जातीयानि कन्थुकानि, या कन्थुकजातिरचलमाना स्थिरा सती उद्धर्त्तुं न शक्यते तस्मादनुद्धरी कन्थुकजातिः कथ्यते। या छद्मस्थसाधुभिः, साध्वीभिश्च वारं वारं ज्ञातव्या–प्रतिलेखितव्या, हे शिष्य ! तत् प्राणसूक्ष्मं

ज्ञातव्यम् १। पुनः शिष्यः पृच्छति-हे गुरो! पनकसूक्ष्मं कीदृशं? गुरुर्वदति-हे शिष्य! पनकसूक्ष्मं पञ्चप्रकारकं कथितम्-कृष्णम् १, नीलम् २, रक्तम् ३, पीतम् ४, शुक्लं ५, च वर्णजातिविशिष्टं ज्ञेयम्। पनकसूक्ष्मं प्रायेण मेघसमये भूमेरुपरि, काष्ठस्योपरि, वस्त्रादेरुपरि, मृत्तिकाभाजनोपरि भवति, यादृशं द्रव्यं भवति तस्य द्रव्यस्योपरि तादृशेनैव वर्णेन पनकं भवति, तत् पनकसूक्ष्मं छद्मस्थसाधुभिः, साध्वीभिश्च वारं २ विलोकनीयम्-प्रतिलेखनीयम्। हे शिष्य! तत् पनकसूक्ष्मम् एतादृशं ज्ञेयम् २॥ पुनः शिष्यः पृच्छति-हे गुरो! किं तद् बीजसूक्ष्मं?-गुरुर्वक्ति-कृष्णम्, नीलम्, रक्तम्, पीतम्, शुक्लं धान्यस्य कणिकासदृशम्, या धान्यस्य मुखे भवति धान्यस्य सा कणिका उच्यते, तत्सदृशं बीजं पञ्चवर्णं सूक्ष्मं भवति। तद्बीजसूक्ष्ममपि छद्मस्थसाधुभिः, साध्वीभिश्च वारं वारं ज्ञातव्यम्, विलोकनीयम्-प्रतिलेख्यमिति बीजसूक्ष्मम् ३॥ पुनः शिष्यः पृच्छति-स्वामिन्! किं तद् हरितसूक्ष्मम्? गुरुर्वदति-हे शिष्य! हरितसूक्ष्मं पञ्चप्रकारम्-कृष्णम्, नीलम्, रक्तम्, पीतम्, शुक्लं यद् हरितसूक्ष्मम् उद्गच्छन् पृथ्वीसमानवर्णं भवति, तत् त्वरितं विनश्यति सूक्ष्माङ्कुरमात्रत्वात् तच्छद्मस्थसाधु-साध्वीभिर्वारं २ ज्ञातव्यम्, विलोकनीयं प्रतिलेखनीयम्, एतादृशं हरितसूक्ष्मं ज्ञेयम्॥ ४॥

से किं तं पुप्फसुहमे? पुप्फसुहुमे पंचविहे पण्णत्ते, तं जहा-किण्हे, जाव-सुक्किल्ले। अत्थि

पुप्फसुहुमे रुक्खसमाणवण्णे नामं पण्णत्ते, जे छउमत्थेणं निग्गंथेण वा, निग्गंथीए वा जाणियव्वे, जाव–पडिलेहियव्वे भवइ। से तं पुप्फसुहुमे ५॥ से किं तं अंडसुहुमे? अंडसुहुमे पंचविहे पण्णत्ते, तं जहा–उद्दंसंडे, उक्कलियंडे, पिपीलिअंडे, हलिअंडे, हल्लोहलिअंडे, जे निग्गंथेण वा, निग्गंथीए वा जाव–पडिलेहियव्वे भवइ। से तं अंडसुहुमे ६॥ से किं तं लेणसुहुमे? लेणसुहुमे पंचविहे पण्णत्ते, तं जहा–उत्तिंगलेणे, भिंगुलेणे, उज्जुए, तालमूलए, संबुक्कावट्टे नामं पंचमे, जे निग्गंथेण वा, निग्गंथीए वा जाणियव्वे, जाव–पडिलेहियव्वे भवइ। से तं लेणसुहुमे ७॥ से किं तं सिणेहसुहुमे? सिणेहसुहुमे पंचविहे पण्णत्ते, तं जहा–उस्सा, हिमए, महिया, करए, हरतणुए। जे छउमत्थेणं निग्गंथेण वा, निग्गंथीए वा अभिक्खणं २ जाव–पडिलेहियव्वे भवइ। से तं सिणेहसुहुमे ८॥ ४५॥

पुनः–शिष्यः पृच्छति–किं तत् पुष्पसूक्ष्मम्? गुरुर्वदति–अहो शिष्य! पुष्पसूक्ष्मं पञ्चप्रकारम्–कृष्णम्, नीलम्,

रक्तम्, पीतम्, शुक्लं वृक्षसदृशं सूक्ष्मपुष्पं भवति, उम्बर–वटप्रमुखाणां पुष्पाणि सूक्ष्माणि उक्तानि। यानि छद्मस्थसाधु–साध्वीभिरभीक्ष्णम्–वारंवारं ज्ञातव्यानि, विलोकनीयानि–प्रतिलेख्यानि, एवं पुष्पसूक्ष्मं ज्ञेयम् ॥ ५ ॥ पुनः–शिष्यः पृच्छति–स्वामिन्! किं तद् अण्डसूक्ष्मं? गुरुराह–हे शिष्य! अण्डसूक्ष्मं पञ्चप्रकारम्–'उद्दंसंडे'–मधुमक्षिकाणां अण्डम्, अथवा मत्कुणानाम् अण्डम् १। उत्कलिकाण्डं कोलिकालूतापुताण्डम् २। पिपीलिकाण्डम् ३। हलिकाण्डं–गिरोलिका–ब्राह्मणीप्रमुखाणामण्डम् ४। 'हल्लोलियंडे'–काकीडाजीवानामण्डम् ५ एतत् पञ्चाऽण्डसूक्ष्मं छद्मस्थसाधु–साध्वीभिर्वारं वारं ज्ञातव्यं दृश्यम्, प्रतिलेख्यं एतत् पञ्च सूक्ष्माऽण्डं ज्ञेयम् ॥ ६ ॥ पुनः–शिष्यः पृच्छति–हे गुरो! किं तद् लयनसूक्ष्मम्? गुरुराह–हे शिष्य! लयनं जीवानां स्थितिस्थानं गृहमित्यर्थः, तद्गृहसूक्ष्मं पञ्चप्रकारकम्, तद्यथा वर्त्तते तथा त्वं शृणु, 'उत्तिङ्गलयनम्'–भूमिमध्ये वर्तुलाकारं गृहं भवति, तस्मिन् मध्ये गर्दभाकाराः ससुण्ढाः जीवास्तिष्ठंति। यस्मिन् रन्ध्रे पतिताः कीटिका निःसरितुं न शक्नुवन्ति। तान् जीवान् लोकरूढ्या बाला हस्तिनो वदन्ति इति प्रथममुत्तिङ्गलयनम् १। द्वितीयं 'भृगुलयनं' यत्पिच्छलायां भूमौ जले शुष्के सति भूमेरुपरि पर्पटिका भवेत् तस्याऽधो जीवास्तिष्ठन्ति तद्भृगुलयनम् २। तृतीयम् 'उज्जुतं' सर्प–मूषिकादीनां गृहं विलम् ३। चतुर्थं 'तालमूलं' तालवृक्षस्य मूलसदृशम् उपरि संकीर्णम् अधः पृथुलं जीवविशेषाणां गृहं भवति तत् तालमूलम् ४। पञ्चमं 'शंबूकावर्त्त' भ्रमर–भ्रमरीणां गृहम्,

६ एतल्लयनसूक्ष्मं छद्मस्थसाधु-साध्वीभिर्वारं २ ज्ञातव्यं द्रष्टव्यम्, प्रतिलेख्यं तल्लयनसूक्ष्मम् ॥ ७ ॥ पुनः-शिष्यः-पृच्छति-हे स्वामिन् ! किं तत् स्नेहसूक्ष्मम् ? गुरुर्वदति-हे शिष्य ! स्नेहसूक्ष्मं पञ्चप्रकारकम्, तद्यथा कथ्यते 'उसं'-यो रात्रौ अवश्यम् आकाशात् पतति स च अवश्यायः प्रथमम् उसं-स्नेहसूक्ष्मं १ द्वितीयं 'हिमं' यत् 'खन्धार'-आदौ देशे 'वरफ' इति-प्रसिद्धम् २। तृतीयं महिका-धूमरी ३। चतुर्थं करकाख्यम् आकाशाज्जलस्य करकाणां वृष्टिः ४। पञ्चमं स्नेहसूक्ष्मं हरिततृणकाख्यम्, यच्छीतकाले भूमिमध्यात् तृणाङ्कुराग्रेषु आयाति तत् पञ्चमं हरिततृणकाख्यम्, एतत् सर्वं स्नेहपञ्चकं सूक्ष्मम् ५। छद्मस्थसाधु-साध्वीभिर्वारं वारं ज्ञातव्यं द्रष्टव्यम्, प्रतिलेख्यं तत् स्नेहसूक्ष्मं। एवमिमान्यष्टौऽपि सूक्ष्माणि वर्षाकाले यत्नेन पालनीयानि रक्षणीयानि ॥ ८ ॥ एषा षोडशमी समाचारी ॥१६॥ अथ गुरुं पृष्ट्वा विहरण-विकृतिग्रहण-चिकित्सा-संलेखना-धर्मजागरिकादिकर्तव्यरूपां सप्तदशमीं वदति—

वासावासं पज्जोसविए भिक्खू इच्छिज्जा गाहावइकुलं भत्ताए वा, पाणाए वा निक्खमित्तए वा, पविसित्तए वा नो से कप्पइ अणापुच्छित्ता आयरियं वा, उवज्झायं वा, थेरं वा, पवित्तिं वा, गणिं, गणहरं, गणावच्छेअयं जं वा पुरओ काउं विहरइ, कप्पइ से आपुच्छिउं आयरियं

वा, जाव–जं वा पुरओ काउं विहरइ–'इच्छामि णं भंते'! तुब्भेहिं अब्भणुण्णाए समाणे गाहावइकुलं भत्ताए वा, पाणाए वा निक्खमित्तए वा, पविसित्तए वा; ते य से वियरिज्जा-एवं से कप्पइ गाहावइकुलं भत्ताए वा, पाणाए वा, जाव–पविसित्तए, ते य से नो वियरिज्जा, एवं से नो कप्पइ गाहावइकुलं भत्ताए वा, पाणाए वा निक्खमित्तए वा, पविसित्तए वा। से किमाहु भंते ! ? आयरिया पच्चवायं जाणंति ॥ ४६ ॥ एवं विहारभूमिं वा, वियारभूमिं वा अन्नं वा जं किंचि पओअणं, एवं गामाणुगामं दूइज्जित्तए ॥ ४७ ॥

अर्थः–वर्षाकाले स्थितः यः साधुर्यदा गृहस्थस्य गृहे भक्त–पानीयार्थं निर्गन्तुम्, प्रवेष्टुं वा इच्छेत् तदा आचार्यादिकम्–आचार्यं द्वादशाङ्ग्याः सूत्रा–ऽर्थयोः पाठकम्। अथवा दिग्बन्धनकर्त्तारम्, दीक्षादायकम्, गच्छपतिर्दिगाचार्यं वा। उपाध्यायं वा सिद्धान्तसूत्रपाठकम्। स्थविरं वा ज्ञानादिविषये सीदन्तं साधुं यः स्थिरीकरोति स स्थविरस्तं स्थविरम्। ज्ञानादिविषयेऽभ्यासं कुर्वन्तं साधुं यः प्रशंसते वा स स्थविरस्तं स्थविरम्। प्रवर्त्तकं वा यो गच्छं ज्ञानादौ प्रवर्त्तयति स प्रवर्त्तकः, तत्र ज्ञाने एवं प्रेरयति–हे साधो ! त्वमिदं सूत्रं पठ,

इदं सूत्रं शृणु, उद्देशसमुद्देशादिउपधानविधिं कुरु, दर्शनविषये दर्शनस्य प्रभावकः, स्याद्वादरत्नाकर-संमतितर्कादीनामभ्यासं कारयति, चारित्रविषये प्रायश्चित्तं ग्राहयति, योगं वाहयति। भो मुनयः! अनेषणां मा कुरुध्वम्, एषणाशुद्धमाहारं गृह्णीध्वम्। पुनस्तपोविषये प्रवर्त्तयति-हे मुनयः! तपः कुरुध्वम् इत्यादि शिक्षां ददाति। पुनर्वीर्यविषये प्रवर्त्तयति-भो मुनयः! वैयावृत्त्यं कुरुध्वम् इत्यादि। ज्ञान-दर्शन-चारित्र-तपो-वीर्यादिषु प्रवर्त्तयति साधून् स प्रवर्त्तकस्तं प्रवर्त्तकम्। गणिं वा गणिः स उच्यते-यस्मादाऽऽचार्यादयः सूत्रा-ऽर्थयोरभ्यासं कुर्वन्ति तं गणिं प्रति। गणधरं वा यः तीर्थङ्कराणां शिष्यस्तम्। गणावच्छेदकम् वा स गणावच्छेदक उच्यते-यः साधून् सार्थे गृहीत्वा बहिः क्षेत्रेषु विहरति, गच्छार्थं क्षेत्रगवेषणां करोति, उपधिं मार्गयित्वा आनीय साधुभ्यो ददाति, गच्छस्थसाधूनां चिन्तां करोति, सूत्रा-ऽर्थानामुत्सर्गा-ऽपवादविधिं जानाति स गणावच्छेदकस्तं प्रति। अथवा 'जं वा पुरओ काउं' यं पुरतः कृत्वा-साधवो यं गीतार्थमग्रे कृत्वा विहारं कुर्वन्ति, तमनापृच्छ्य विहरणाय न विचरेत्-न गच्छेत्, अयमर्थः-वृद्धं साधुमनापृच्छ्य साधोर्गमनं न कल्पते इत्यर्थः। आहारादिगमनसमये किं पृच्छेद् इत्याह-हे पूज्य! इच्छामि-अभिलषामि भवतां चेदाऽऽज्ञा भवेत्तदा गाथापतिगृहेऽहं भक्त-पानीयार्थं निर्यातुम्, यातुं वाञ्छामि। एवमुक्ते सति चेदाचार्यादय आज्ञां ददीरन् तदा साधोर्भक्त-पानीयार्थं गमनं कल्पते, अन्यथा न कल्पते। कश्चित् पृच्छति-कथमनापृच्छ्य साधोर्गमनं न कल्पते? तत्रोत्तरम्-आचा

हर्षितः, तुष्टः हृतहृदयः–प्रसन्नचित्तः, यथा मेघधाराभिः सिक्तं कदम्बवृक्षस्य पुष्पम् उल्लसितं भवति, तथा सर्वशरीरस्य रोमराजयो विकसिताः। अथ तेषां स्वप्नानाम् अर्थं विचारयति, अर्थविचारं कृत्वा देवानन्दां ब्राह्मणीम् इत्यवादीत् ॥ ७ ॥

उराला णं तुमे देवाणुप्पिए ! सुमिणा दिट्ठा, कल्लाणा, सिवा, धन्ना, मंगल्ला, सस्सिरीआ, आरोग्ग–तुट्ठि–दीहाउ–कल्लाण–मंगल्लकारगा णं तुमे देवाणुप्पिए ! सुमिणा दिट्ठा तं जहा–अत्थलाहो देवाणुप्पिए ! भोगलाहो देवाणुप्पिए ! पुत्तलाहो देवाणुप्पिए ! सुक्खलाहो देवाणुप्पिए ! एवं खलु तुमं देवाणुप्पिए नवण्हं मासाणं बहुपडिपुण्णाणं अद्धट्ठमाणं राइं–दिआणं विइक्कंताणं सुकुमालपाणि–पायं, अहीणपडिपुन्नपंचिंदियसरीरं, लक्खण–वंजण–गुणोववेअं, माणु–म्माणपमाणपडिपुन्नसुजायसव्वंगसुंदरंगं ससिसोमाकारं, कंतं, पिअदंसणं, सुरूवं, देवकुमारोवमं दारयं पयाहिसि ॥ ८ ॥

उदारास्त्वया इमे चतुर्दश स्वप्ना दृष्टाः–कल्याणाः, शिवाः, धनकराः, श्रिया युक्ताः, आरोग्यतुष्टिदीर्घायुषः



द्रुम
का
युक्तं
ख्या

र्याः प्रत्युपायं जानन्ति, तत्र चेद्यदि कश्चिदुपद्रवो विघ्नं स्यात्तदा तस्य विघ्नस्य निराकरणे गुरवः समर्थाः उपायज्ञाः स्युः, तेन गुर्वादीन् पृष्ट्वा आहाराय गन्तव्यम् ॥ एवं पूर्वोक्तरीत्या गुर्वादीन् पृष्ट्वा विहारभूमिम्–जिनगृहम्, विचारभूमिम्–बहिर्भूमिं साधुर्व्रजेत् । अन्यदपि यत्किञ्चित्प्रयोजनं कार्यं भवेत्, पुनरेकस्माद्ग्रामादन्यं ग्रामं गन्तुं मनो भवेत्तदा सर्वत्र गुरवः प्रष्टव्याः ॥

वासावासं पज्जोसविए भिक्खू इच्छिज्जा अण्णयरिं विगइं आहारित्तए, नो से कप्पइ से अणापुच्छित्ता आयरियं वा, जाव–गणावच्छेययं वा जं वा पुरओ कट्टु विहरइ, कप्पइ से आपुच्छित्ता आयरियं, जाव–आहारित्तए–'इच्छामि णं भंते! तुब्भेहिं अब्भणुण्णाए समाणे अन्नयरिं विगइं आहारित्तए तं एवइयं वा, एवइखुत्तो वा, ते य से वियरिज्जा, एवं से कप्पइ अण्णयरिं विगइं आहारित्तए, ते य से नो वियरिज्जा, एवं से नो कप्पइ अण्णयरिं विगइं आहारित्तए, से किमाहु भंते ! ? आयरिया पच्चवायं जाणंति ॥ ४८ ॥ वासावासं पज्जोसविए भिक्खू इच्छिज्जा अण्णयरिं ते इच्छियं आउट्टित्तए, तं चेव सव्वं भाणियव्वं ॥ ४९ ॥

वासावासं पज्जोसविए भिक्खू इच्छिज्जा अण्णयरं ओरालं, कल्लाणं, सिवं, धण्णं, मंगल्लं, सस्सिरीयं महाणुभावं तवोकम्मं उवसंपज्जित्ता णं विहरित्तए, तं चेवं सव्वं भाणियव्वं ॥ ५० ॥ वासावासं पज्जोसविए भिक्खू इच्छिज्जा अपच्छिममरणंतियसंलेहणा–जूसणाजुसिए भत्त–पाणपडियाइक्खिए पाओवगए कालं अणवकंखमाणे विहरित्तए वा, निक्खमित्तए वा, पविसित्तए वा, असणं वा १, पाणं वा २, खाइमं वा ३, साइमं वा ४ आहारित्तए वा; उच्चारं वा, पासवणं वा परिट्ठावित्तए, सज्झायं वा करित्तए, धम्मजागरियं वा जागरित्तए। नो से कप्पइ अणापुच्छित्ता, तं चेव सव्वं ॥ ५१ ॥

अर्थः–वर्षाकाले स्थितो यः साधुः स अन्यतरः किञ्चिद्विकृतिमाहर्त्तुम्, आनेतुम्, भोक्तुं च इच्छेत्तदा आचार्यादीन् अपृष्ट्वा गृहीतुं न कल्पते। तदा साधुना आचार्यादयः एवं प्रष्टव्याः–हे स्वामिन्! यदा यूयम् आज्ञां दद्युस्तदाऽहम् अन्यतरां घृत–दुग्धादिकां विकृतिमाहरामि, इत्युक्ते सति यद्याचार्यादयस्तस्मै साधवे आज्ञां दद्युस्तदा तस्य साधोर्विकृतिमाहर्त्तुं कल्पते, यद्याज्ञां न दद्युस्तर्हि न कल्पते। तदा कश्चित् पृच्छति–

कथमपृष्ट्वा विकृतिं न भुङ्क्ते? आचार्याः प्रत्युपायं जानन्ति, लाभम्, त्रुटिं वा जानन्ति। ग्लानस्य विकृतौ दत्तायां ज्वरादिकं स्यात्, पुष्टये भुक्ता अपुष्टिकारिणी वा स्यात्, गुरवो दीर्घदर्शिनः स्युस्तस्मात् पृष्ट्वैव भोक्तव्यम् ॥ वर्षाकाले स्थितः साधुः, साध्वी वा यदि वात-पित्त-कफ-सन्निपात-रक्तकोपादिरोगादीनां व्याधीनां चिकित्साम्-व्याधिदूरीकरणसामग्रीं भेषजादिकाम् आवर्त्तयितुम्-कारयितुमिच्छेत् तदा पूर्वोक्तरीत्या आचार्यादीनामाज्ञां गृहीत्वा कारयितव्या। कश्चित् पृच्छति-तत्र को हेतुः ? तदाह-आचार्याः प्रत्युपायं जानन्ति, देश-काल-वयो-योग्या-ऽयोग्यक्षेत्रादिकानां वेत्तारो भवन्ति ॥ वर्षाकाले स्थितः साधुः, साध्वी वा यदि वा अन्यतरमुदारं प्रधानं तपः कर्तुमिच्छेत् तदाऽपि आचार्यादीन् अपृष्ट्वा न कर्त्तव्यम्, तत्रापि हेतुमाह-आचार्याः प्रत्युपायं जानन्ति, तपस्करणे कश्चिद्वैयावृत्त्यकराऽभावम्, भैषजाद्यभावं वा, शरीरस्याऽसामर्थ्यं वा सर्वमाचार्या विदन्ति तस्माद् आचार्या अत्राऽऽपृष्टव्याः ॥ वर्षाकाले स्थितः साधुः, साध्वी वा 'अपच्छिमां' अन्त्यां मरणसम्बन्धिनीं संलेखनां यया कृत्वा कर्माणि ध्वस्यन्ते, शरीरं वा ध्वस्यते; सा ध्वंसना तया कर्मध्वंसनया तपस्क्रियया शरीरं ध्वंसयितुं। भक्तम्, पानं च प्रत्याख्यातुम्-परिहर्तुम्; पुनः पादपोपगमनमनशनं कृत्वा कालं मरणम् अनिच्छन्नेवं विहर्त्तुम्। पुनर्गृहस्थगृहे कस्मैचित् कार्याय, आहाराद्यर्थं वा निष्क्रमितुम्, प्रविशितुं च पुनरशनादिचतुर्विधाहारमाहर्त्तुम्-भोक्तुम्। पुनरुच्चारम्-बृहन्नीतिम्, प्रश्रवणम्-लघुनीतिं वा परिष्ठापयितुम् ।

पुनः स्वाध्यायं कर्तुम्, रात्रौ धर्मजागरिकया वा जागर्तुम् इत्यादिसर्वमाचार्यादीन् अनापृच्छय न करोति साधोर्गुर्वाज्ञां विना किमपि कर्तुं न कल्पते। यतो गुरवः सर्वं लाभा-ऽलाभम्, गुण-दोषम्, हानिम्, वृद्धिं वा सर्वं जानन्ति। यदि योग्यतां विलोकयन्ति तदा आज्ञां ददति, यद्यऽयोग्यतां विलोकयन्ति तदा आज्ञां न ददति। एषा सप्तदशमी समाचारी ॥ १७ ॥ अथ वस्त्राऽऽतापन-भक्तग्रहण-कायोत्सर्गादौ अनुमतिग्रहणरूपा अष्टादशमी समाचारी कथ्यते-

वासावासं पज्जोसविए भिक्खू इच्छिज्जा वत्थं वा, पडिग्गहं वा, कंबलं वा, पायपुंछणं वा, अण्णयरिं वा उवहिं आयावित्तए वा, पयावित्तए वा। नो से कप्पइ एगं वा, अणेगं वा अपडिण्णवित्ता गाहावइकुलं भत्ताए वा, पाणाए वा निक्खमित्तए वा, पविसित्तए वा असणं १, पाणं २, खाइमं ३, साइमं ४ आहारित्तए, बहिया विहारभूमिं वा, वियारभूमिं वा, सज्झायं वा करित्तए, काउस्सग्गं वा, ठाणं वा ठाइत्तए। अत्थि य इत्थ केइ अभिसमण्णागए अहासण्णिहिए एगे वा, अणेगे वा; कप्पइ से एवं वइत्तए-'इमं ता अज्जो! तुमं मुहु-

त्तगं जाणेहि, जाव–ताव अहं गाहावइकुलं, जाव–काउस्सग्गं वा, ठाणं वा ठाइत्तए' से य से पडिसुणिज्जा, एवं से कप्पइ गाहावइकुलं तं चेव सव्वं भाणियव्वं। से य से नो पडिसुणिज्जा, एवं से नो कप्पइ गाहावइकुलं, जाव–काउस्सग्गं वा, ठाणं वा ठाइत्तए ॥ ५२ ॥

अर्थः–वर्षाकाले स्थितः साधुः, साध्वी च यदा वस्त्रं वा, पात्रं वा, कंबलं वा, पादप्रोञ्छनं वा, अन्यामुपधिं वा आतपे ईषत्तापयितुम्, प्रकर्षेणाऽऽतपे तापयितुमिच्छेत् तदा एकं साधुं वा, अनेकान् साधून् वा पृच्छेत्, अनापृच्छ्य न इच्छेत् पृष्ट्वा कल्पते। अथ पुनः साधुं गृहस्थस्य गृहे भक्त–पानार्थं निर्गन्तुम्, प्रविशितुं वा पुनरशनादिचतुर्विधमाहारं भोक्तुं वा इच्छेत्। पुनरुपाश्रयाद्बहिश्चैत्यादौ, अथवा स्थण्डिलादौ विषये गन्तुं वा इच्छेत्, अथवा स्वाध्यायं कर्तुम्, कायोत्सर्गं कर्त्तुं वा इच्छेत्तदा साधुः किं कुर्यात् तदाह–पुरा साधुरागत्य एकं कञ्चिज्जनं प्रति प्रार्थयेत्, अथवा अनेकान् प्रार्थयेत्–'इच्छकार' हे महानुभाव! यावदहं गृहस्थगृहाद् भक्त–पानीयमानीय आगच्छामि, यावत् कायोत्सर्गे तिष्ठामि तावद् मम वस्त्र–पात्र–कम्बल–पादप्रोञ्छनो–पध्यादीनां चिन्ता भवद्भिः कार्या, इत्युक्ते सति साधुरेको वा, अनेके वा अनुमन्वते–आज्ञां दद्ते याहि त्वम्, त्वदुपकरणमस्माभिर्विलोक्यते तदा तस्य साधोर्भक्त–पानार्थं गमनम्, आहारं कर्त्तुम्, जिनगृहे, स्थण्डिले वा गमनम्,

कायोत्सर्गं वा स्थातुम्, स्वाध्यायं वा कर्तुं कल्पते । यदि कश्चित् साधुः प्रार्थनां नाऽनुमनुते तदा किमपि कर्तुं न कल्पते ॥ इत्यऽष्टादशमी समाचारी ॥ १८ ॥ अथ शयना–ऽऽसन–पट्टिकादीनां मानरूपा एकोनविंशतितमी कथ्यते–

वासावासं पज्जोसवियाणं नो कप्पइ निग्गंथाण वा, निग्गंथीण वा अणभिग्गहियसिज्जा–ऽऽसणिएणं हुत्तए, आयाणमेयं, अणभिग्गहियासिज्जा–सणियस्स अणुच्चाकूइयस्स, अणट्ठावंधियस्स, अमियासणियस्स, अणातावियस्स, असमियस्स अभिक्खणं २ अपडिलेहणासीलस्स, अपमज्जणासीलस्स तहा तहा णं संजमे दुराराहए भवइ ॥५३॥ अणादाणमेयं, अभिग्गहियसिज्जासणियस्स उच्चाकूइयस्स अट्ठाबंधिस्स मियासणियस्स आयावियस्स समियस्स अभिक्खणं २ पडिलेहणासीलस्स पमज्जणासीलस्स तहा २ संजमे सुआराहए भवइ ॥ ५४ ॥

अर्थः–वर्षाकाले स्थिता ये साधवः, साध्व्यश्च, तैर्निग्रन्थैः, निर्ग्रन्थीभिश्च, अर्थात्–साधु–साध्वीभिरनभिगृहीतशय्या–ऽऽसनैर्न भवितव्यम् एतावता वर्षाकाले साधूनाम्, साध्वीनां शय्या–शयनपट्टिका, आसनम्–चतु-

ष्किका, पट्टिकादिकम् अवश्यं गृहीतव्यम् । यदि न गृह्णाति तदा जीवानां यत्ना न भवति । अथ यच्छय्या-ऽऽसनादिकं साधवो गृह्णन्ति तत्कीदृशं युज्यते ? तदाऽऽह-या शय्या अनुच्चा-उच्चा न भवति, अनुच्चा चाऽसौ अकुचा च अनुच्चाकुचा, या अत्युच्चा न भवति । भूमेः सकाशाद् एकहस्तोच्चप्रमाणा भवति । कीटिका-कुन्थ्वादीनां विराधना यस्यां न स्यात्, सर्प-वृश्चिक-कर्णखर्जूरादेर्भयं न स्यात् । अथ पुनर्या शय्या अकुचा भवति निश्चला भवति, न विद्यते कुचश्चलनं यस्याः सा अकुचा, लिच-पिच-शब्दमकुर्वाणा इत्यर्थः । यदि लम्पनिकादीनां कम्बा दृढा न भवेयुस्तदा अन्तर्गतानां जीवानां विनाशः स्याद् इत्यनेन एकहस्तोच्चा, दृढबन्धा, वंशकम्बानां शय्या तस्य साधोः भवति॥१॥ पुनरनर्थबन्धस्य अर्थेन प्रयोजनेन विना पक्षमध्ये वारद्वयम्, त्रयं वा लम्पनिकायाः कम्बानां बन्धनं करोति स अनर्थबन्धः, तस्य लम्पनिका पक्षमध्ये एकवारमुत्कीलनीया, अधिकं नोत्कीलनीया इत्यर्थः । उत्सर्गतः एका, द्वे वा, तिस्रो वा, चतस्रो वा, अन्तराले लकुटीर्दत्त्वा तास्वेव दृढं बन्धनीया । चतुर्भ्यो बन्धनेभ्योऽधिकं न बन्धनीया । चेदधिकबन्धना भवेत्तर्हि उत्कीलनाऽवसरे स्वाध्यायव्याघातः स्यात्, यदा च शयनाय एकफलिका पट्टिका मिलति तदा द्विफलिका पट्टिका न ग्राह्या । यथा लम्पनिकायाः पट्टिकाया वा चतुर्भ्यो न्यूना बन्धा भवेयुस्तथा कर्त्तव्यं यस्य साधोर्लम्पनिकायाम् अधिका बन्धाः स्युः स साधुरनर्थकबन्ध उच्यते॥२॥ यस्य साधोः पुनरमितानि बहूनि आसनानि भवन्ति स अमितासनः, तस्य अथवा

निश्राकृतमासनमेव वारं वारं स्थानात् स्थानान्तरं गृह्णन् अमितासन उच्यते । तस्याऽऽसनं स्थानात् स्थानान्तरं नयतो जीवहिंसा भवति अमिताऽऽसनस्य साधोः ॥ ३ ॥ पुनरनातापिनो यः स्वकीयं वस्त्र-पात्रो-पधिप्रमुखमुपकरणमातपं न ददाति स अनातापी । पात्र-वस्त्रादीनाम् आतपदानं विना पनकादीनां द्वीन्द्रियादिजीवानां संसक्तिः स्यात् तस्मादनातापिनः ॥ ४ ॥ पुनरनाभावितिकस्य यद्वस्त्रादि उपकरणं परिभोगाय रक्षते तद् अनाभावितम्, तच्चोपकरणं यस्य भवति स अनाभावितिकस्तस्य साधोः ॥ ५ ॥ पुनरसमितस्य ईर्याप्रमुखाः पञ्च (५) समितयो न भवन्ति स असमितिकस्तस्य साधोः । तत्र समितयः पञ्च-ईर्यासमितिः १, भाषासमितिः २, एषणासमितिः ३, आदानभण्डमात्रनिक्षेपणासमितिः ४, उच्चार-प्रश्रवण-खेल-जल्ल-सिंघाणपारिष्ठापनिकासमितिः ५ । एतासु पञ्चसु समितिषु यः साधुः समितो न भवति ॥ ६ ॥ पुनर्योऽभीक्ष्णं वारं वारम् अप्रतिलेखनशीलस्य-वारं वारं प्रतिलेखनामकुर्वतः ॥ ७ ॥ पुनर्वारं वारं प्रमार्जनामकुर्वतः, ॥ ८ ॥ एवं रीत्या पूर्वोक्तलक्षणस्य साधोः संयमपालनं दुर्लभं भवति । इत्यनेन शिथिलस्य साधोः कर्माऽऽदानकारणमुक्त्वा अनादानकारणमाह-एतत् कर्मणामनादानमेतादृशस्य साधोः कर्मणाम् आदानं न भवतीत्यर्थः । कीदृशस्य साधोः ?-अभिगृहीतशय्या-ऽऽसनस्य, शय्या, आसनानि येन गृहीतानि । पुनरुच्चाऽकुचस्य-यस्य साधोः शय्या उच्चा हस्तप्रमाणा भवति, अकुचा परस्परं मिलिता भवति तस्य साधोः ॥ १ ॥ पुनर्यः साधुः पक्षमध्ये एकवारं लम्प-

निकायाः बन्धाचतसृभ्योऽन्तरस्थलकुटीभ्योऽधिकासु लकुटीषु न बध्नाति तस्यांऽर्थबन्धकस्य ॥ २ ॥ पुनर्मितासनस्य–स्तोकगृहीताऽऽसनस्य ॥ ३ ॥ पुनरातापिकस्य–उपकरणानां प्रदत्तातपस्य ॥ ४ ॥ पञ्चभिः समितिभिः समितस्य, भावितस्य ॥ ५ ॥ क्रियायुक्तस्य, अशिथिलस्य ॥ ६ ॥ अत एव वारं वारं प्रतिलेखनाशीलस्य ॥ ७ ॥ वारं २ प्रमार्जनाशीलस्य ॥ ८ ॥ वारं २ संयमं पाल्यते इत्यर्थः । एवं 'तस्य साधोः संयमः सुखाराध्यो भवति' एतादृशेन साधुना सुखेन संयमः पाल्यते । अत्र पञ्चसमिति–त्रिगुप्तीनां दृष्टान्तानाऽऽह टीकाकारः, तत्र प्रथममीर्यासमितिर्गमने यतना, यत्र वरदत्तकथा, तद्यथा–एको वरदत्तनामा साधुः, मिथ्यात्विना देवेन मार्गे मण्डूक्यो व्युत्पादिताः, हस्तिरूपेण शुण्डया गृहीत्वोच्चैः उल्लालितो भूमौ पतन् मण्डूक्यो रजोहरणेन प्रमार्जयन्, जीवदयां भावयन्, स्वशरीरभङ्गमचिन्तयन् देवेन दृष्ट्वा स्तुतश्च, क्षामितश्च ॥१॥ भाषायां सङ्गतः साधुर्दृष्टान्तः, केनचिद्वैरिणा राज्ञा आगत्य सैनिकैर्बहुभिरेकं नगरं निरुद्धम्, तदा तन्नगरात् सङ्गतः साधुर्निर्गच्छन् बहिस्थैः सैनिकैर्गृहीतः, पृष्टश्च–भो मुने ! नगरप्राकारे कियद्बलं तिष्ठति ? तदा साधुराह–यौ कर्णौ शृणुतस्तौ न वदतः, न च पश्यतः; ये नेत्रे उभये पश्यतस्ते न शृणुतः, न जल्पतः; या जल्पति जिह्वा सा न पश्यति, न शृणोति। मुहुः २ एवं वदन्तं दृष्ट्वा सैनिकैः पाठग्रथिलोऽयमिति ज्ञात्वा मुक्तः संगतसाधुः ॥ २ ॥ एषणायां नंदिषेणदृष्टान्तः–वसुदेवः पूर्वभवे नन्दिषेणनामा साधुः षष्ठा–ऽष्टमादिना तपसा पारणां करोति, स्वयं ग्लानादीनां

साधूनां वैयावृत्त्यं करोति। तदा इन्द्रेण प्रशंसितः। मिथ्यात्विना देवेनाऽतीसारी साधुरूपं विधाय, एकं लघुशिष्यं सहायिनं कृत्वा वने उत्तीर्य स्थितः। ततो लघुशिष्यं नन्दिषेणं प्रति मुक्तः। स लघुशिष्यो नन्दिषेणं षष्टस्य पारणं कुर्वन्तम् उवाच–धिक् त्वां वैयावृत्त्यकरम् अतीसारी साधुर्वने तिष्ठति, त्वमत्र भुङ्क्षे। इतिश्रुत्वैव नन्दिषेणस्त्वरितमुत्थाय ग्लानस्य शौचार्थं प्रासुकं पानीयं विहरणाय गृहे २ भ्रमन्, देवेन गृहे २ पानीयमप्रासुकं चक्रे। तदाऽपि तपःप्रभावाद्, एकत्र गृहात् प्रासुकजलं गृहीत्वा, तत्र गत्वा ग्लानस्याऽतीसारिणः साधोः शरीरस्य शौचं विधाय, ग्लानं स्कन्धे समारोप्य, यावद् मार्गे ययौ तावद् देवो नन्दिषेणस्य परीक्षार्थं स्कन्धे एव विष्टां चक्रे, मुखेन गालीं ददौ। तथाऽपि नन्दिषेणो न चुकोप, मनसि तस्य चिकित्साचिन्तापरायणो बभूव। तादृशं नन्दिषेणं दृष्ट्वा देवः प्रत्यक्षीभूय नत्वा, स्तुत्वा, स्वस्थाने जगाम॥ ३॥

आदानभाण्डप्रतिलेखनायां सोमिलस्य दृष्टान्तः। यथा–केचित् साधवः प्रच्छन्नकालत्वात् प्रतिलेखनावसरात् प्रागेव प्रतिलेखनां चक्रुः। यदाऽवसरो बभूव तदा वृद्धमुनिना उक्तं भो भद्राः! पुनर्विदधुः। तदा सोमिलेनोक्तम्–इदानीमेव प्रतिलेखना कृताऽऽसीत्, किं झोलिकायाम्, छिक्यां सर्पाः समुत्पन्नाः सन्ति। तदा तद्वचः श्रुत्वा शासनदेव्या झोलिकायां सर्पा एव समुत्पादिताः। प्रातः सर्पान् दृष्ट्वा भीतः सोमिलः, शासनदेव्या प्रतिबोधितः। हे साधो! अद्य पश्चाद् उल्लण्ठवचनं मा ब्रूयाः, मुहुर्मुहुर्गुरुवचनेन प्रतिलेखनां

कारकाः, माङ्गल्यकारकाः देवानुप्रिये! त्वया स्वप्ना दृष्टाः। इदं तेषां फलं शृणु–हे देवानुप्रिये! अर्थलाभो भविष्यति, भोगलाभो भविष्यति, पुत्रलाभो भविष्यति, सौख्यलाभो भविष्यति, एवं खलु निश्चयेन नव मासाः संपूर्णाः अर्धाष्टमदिनसहिता भविष्यन्ति, तदा सुकुमालकर–चरणम्, अहीनप्रतिपूर्णपञ्चेन्द्रियशरीरम्, लक्षण–व्यञ्जन-गुणोपेतम् । "इह भवति ससरक्तः, षडुन्नतः पञ्चसूक्ष्मो दीर्घश्च । त्रिविपुल–लघु–गम्भीरो द्वात्रिंशल्लक्षणः स पुमान् ॥ १॥" स पुरुषः द्वात्रिंशल्लक्षणो भवति, यस्य नख–हस्त–पाद–जिह्वा–ओष्ठ–तालु–लोचनान्ताः सस रक्ताः । कक्षा–हिडकी–नासिका–नख–मुख–हृदयानि षड् उन्नतानि। दन्त–केश–अङ्गुलिपर्व–चर्म–नखा एते पञ्च पत्तलाः। नयन–कुचान्तर–नासिका–श्मश्रु–भुजाः पञ्च दीर्घाः। भाल–स्वर–वदनानि त्रीणि विस्तीर्णानि। जङ्घा–लिङ्ग–ग्रीवाः त्रीणि लघवः। स्वर–नाभि–धैर्याणि गम्भीराणि। इति ३२ लक्षणानि। तथा मानो–न्मान–प्रमाणप्रतिपूर्णः–जलभृतकुण्डे प्रमातव्ये पुरुषे निवेशिते २५६ पलं जलं निस्सरति, स मानोपेतः। तुलायां तोलितः अर्धभारं तुलति, स उन्मानोपेतः। यः १०८ अङ्गुलप्रमाणशरीरः स प्रमाणोपेतः। सुजातः, सर्वाङ्गसुन्दरः, भाल–नासिका–श्मश्रु–ग्रीवा–हृदय–नाभि–गुह्य–मस्तक–जानु–जङ्घा–हस्त–पाद–मसा–तिलकानां स्थानकानि व्यञ्जनानि मसा–तिलकानि उच्यन्ते। तस्मात् लक्षणयुक्तम्, व्यञ्जनयुक्तम्, गुणैः औदार्य–धैर्य–गाम्भीर्यसहितम्, चन्द्रवत् सौम्याकारम्, कान्तम्, प्रियदर्शनम्, सुरूपं देवकुमारोपमं दारकं–पुत्रं जनयसि ॥८॥

कुर्वतां साधूनां महती कर्मनिर्जरा भवति। इति श्रुत्वा सोमिलः प्रतिलेखनायां दृढमनस्को बभूव ॥ ४ ॥ उच्चार-प्रसवण-खेल-जल्ल-सिंघाणपरिष्ठापनिकासमितौ लघुशिष्यदृष्टान्तो यथा-कश्चित् साधुषु लघुशिष्यो मुनिचन्द्रनामा सन्ध्यायां गुरुभिरुक्तो भो मुनिचन्द्र! उत्थाय स्थण्डिलानि कुरु। इति श्रुत्वा लघुशिष्य आह-अद्य सन्ध्यायां स्थण्डिलानि न कृतानि, तर्हि किं रजन्यामागत्य उष्ट्राः स्थास्यन्ति। गुरवस्तूष्णीं तस्थुः। रजन्यां प्रश्रवणादिपरिष्ठापनाय गतो मुनिचन्द्रः स्थण्डिलभूमौ। शासनदेव्या उत्पादितैरुष्ट्रैर्लत्ताभिर्हतो भीतो गुरुपार्श्वे उपागत्योचे। गुरुभिरुक्तम्-त्वया स्थण्डिलकरणावसरे सोल्लण्ठवचनं प्रत्यपादि, तेन शासनदेव्या त्वं शिक्षितोऽसि। इति श्रुत्वा तत्र शासनदेव्याः समक्षं लघुशिष्यो मुनिचन्द्रो मिथ्यादुष्कृतं कृत्वा परिष्ठापनिकासमितौ स्थिरो बभूव ॥ ५ ॥ अथ गुप्तीनामुदाहरणान्याह-प्रथमं मनोगुप्तौ-कुङ्कणः साधुरीर्यापथिकीं प्रतिक्रम्य, कायोत्सर्गे कर्षणं चिन्तयामास। गुरुभिः प्रतिबोधितः सावद्यव्यापारचिन्तनस्य मिथ्यादुष्कृतं ददौ ६ ॥ वाग्गुप्तौ-गुणदत्तस्साधुः स्वसांसारिकान् मातृ-भ्रातॄन् वन्दनां कारयितुं व्रजन् मार्गे तस्करैरुक्तः-कस्यापि त्वयाऽस्माकं शुद्धिर्न देया; इत्युक्त्वा चौरैर्मुक्तः। दैवयोगादग्रे सांसारिका एव तस्मै मुनये मिलिताः। मुनिना चौराणां शुद्धिस्तेषां पुरतो नोक्ता। चौरैरुपलक्षितः, प्रशंसितो मुनिः। मुनेर्दाक्षिण्याद् मुनेरेव सांसारिकान् ज्ञात्वा चौरैरपि स सार्थो न लुण्टितः ७ ॥ कायगुप्तौ अरहन्नकदृष्टान्तः। यथा-अरहन्नकः साधुर्विहारं

कुर्वन् मार्गे लघुवाहलकं वहन्तं सर्वैर्लोकैः कूर्दनेनोल्लङ्घ्यमानं दृष्ट्वा मनसि जीवदयया चिन्तयन्, अप्कायविराधनानिवारणाय तं वाहलकं कूर्दन् शासनदेव्या टङ्ग्वान्तराले लकुटीं प्रक्षिप्य पातितः। भग्नटङ्ग्वश्च शासनदेव्या जिनाज्ञां संश्राव्य टङ्ग्वायाः समाधिं कृत्वा प्रबोधितः। सोऽपि मिथ्यादुष्कृतं दत्त्वा कायगुप्तौ स्थिरो जातः ८॥ इत्यनेन साधु–साध्वीनां वर्षाकाले पाट–पीठफलक–काष्ठाऽऽसनादिपूर्वोक्तेषु स्थितिः कल्पते, परं चतुर्मासे भूमौ शयनम्, उपवेशनं च न कल्पते। तेषां च प्रतिलेखनम्, प्रमार्जनम्, शोधनम्, भूमेः सकाशादुपकरणम् उच्चैः रक्षणीयम्, तदप्यप्रतिलेखनीयम्, अव्याप्रियमाणं न रक्षणीयम्। साधूनां चतुर्दश उपकरणानि। साध्वीनां पञ्चविंशतिरुपकरणानि। एकस्मिन् दिने वारद्वयं प्रतिलेख्यानि, त्रिशुद्ध्या यतना विधेया। मुखवस्त्रिकया मुखमाच्छाद्य जल्पनीयम्। दण्डप्रोञ्छनक–रजोहरणादिना भूमौ प्रमार्ज्य चलितव्यम्। भक्त–पानीयमानीय उद्योते संशोध्य आहर्त्तव्यम्। प्रतिदिनमहोरात्रे सप्तवारं चैत्यवन्दना विधेया। एकस्मिन् अहोरात्रे चतुर्वारं स्वाध्यायी कर्त्तव्या। विकथा न कर्त्तव्या। एवं कुर्वतां साधूनां सुखेन संयमनिर्वाहो भवति॥ इत्येकोनविंशतितमी समाचारी ॥ १९॥ अथ चतुर्विंशतिस्थण्डिलस्थानप्रतिलेखनरूपा विंशतितमी समाचारी कथ्यते–

वासावासं पज्जोसवियाणं कप्पइ निग्गंथाण वा, निग्गंथीण वा, तओ उच्चारपासवणभूमीओ

पडिलेहित्तए, न तहा हेमंत–गिम्हासु जहा णं वासासु, से किमाहु ? भंते ! वासासु णं उस्सण्णं पाणा य, तणा य, बीया य, पणगा य, हरियाणि य भवंति ॥ ५५ ॥

अर्थः–वर्षाकाले स्थितानां साधूनाम्, साध्वीनाम् उच्चार–प्रश्रवणभूमिकात्रितयम्, स्थण्डिलभूमित्रयं प्रति लेखनीयं कल्पते । यस्य दूरभूमिकात्रितयप्रतिलेखने शक्तिर्नस्यात्, तस्य भूमिकात्रितयम्–दूरम्, मध्यम्, आसन्नं चोपाश्रयमध्ये एव प्रतिलेखनीयम् । तत उपाश्रयाद्बहिर्भूमिकात्रितयम्–दूरम्, मध्यम्, आसन्नं प्रतिलेखनीयं । यदि सोढुं न शक्नोति तथाऽपि भूमिकात्रितयं प्रतिलेखनीयम् एवं द्वादश स्थण्डिलानि उपाश्रयमध्ये । द्वादश स्थण्डिलानि उपाश्रयाद्बहिरपि । सर्वमीलने चतुर्विंशतिर्भवन्ति वर्षाकाले प्रतिलेख्यानि ? तथा शीतकाले, उष्णकाले च न प्रतिलेख्यानि । वर्षाकाले हि पृथिव्यामिन्द्रगोप–कृमि–कीटिकाः, नूतनतृणानि, बीजानि, पनकादीनि जीवानां कुलानि पृथिव्यां आकुलानि स्युः तस्माद्भूमिकात्रयं प्रतिलेख्यम् ॥ एषा विंशतितमी समाचारी ॥ २० ॥ अथैकविंशतितमी मात्रकत्रितयरूपा समाचारी कथ्यते–

वासावासं पज्जोसवियाणं कप्पइ निग्गंथाण वा, निग्गंथीण वा, तओ मत्तगाइं गिण्हित्तए, तं जहा–उच्चारमत्तए, पासवणमत्तए, खेलमत्तए ॥ ५६ ॥

अर्थः—वर्षाकाले स्थितानां साधूनाम्, साध्वीनां चामत्रकत्रितयं गृहीतुं कल्पते उच्चारस्य वृहन्नीतेरमत्रकम् १, तथा प्रश्रवणामत्रकम् २, तथा श्लेष्मामत्रकम् ३ कल्पते। एषैकविंशतितमी समाचारी ॥ २१ ॥

अथ लुञ्चनविचारप्रतिपादिका द्वाविंशतितमी समाचारी कथ्यते—

वासावासं पज्जोसवियाणं नो कप्पइ निग्गंथाण वा, निग्गंथीण वा परं पज्जोसवणाओ गोलोमप्पमाणमित्ते वि केसे तं रयणिं उवायणावित्तए। अज्जेणं खुरमुंडेण वा, लुक्कसिरएण वा होइयव्वं सिया। पक्खिया आरोवणा, मासिए खुरमुंडे, अद्धमासिए कत्तरिमुंडे, छम्मासिए लोए, संवच्छरिए वा थेरकप्पे ॥ ५७ ॥

अर्थः—वर्षाकाले स्थितानां साधूनाम्,साध्वीनां च पर्युषणात् परम्—आषाढचतुर्मासात् परं, चातुर्मासं यावत् सामर्थ्यसद्भावे सदा लोचः कल्पते—ध्रुवलोचः कल्पते, गोलोमप्रमाणमात्रेष्वपि केशेषु रोमाणि रक्षितुं न कल्पते, जिनकल्पिना साधुना ध्रुवलोचिना भाव्यम्। स्थविरकल्पिना साधुना सामर्थ्यसद्भावे आषाढचतुर्मासादारभ्य मासचतुष्टयं यावद् ध्रुवलोचिना भाव्यम्। असमर्थेनाऽपि पर्युषणाप्रतिक्रमणरात्रिर्न उल्लङ्घनीया, पर्युषणापर्वतः पूर्वमेव लोचः कर्त्तव्यः, कारयितव्यः। अयमभिप्रायः—पर्युषणापर्वणि अवश्यं लोचं विना प्रतिक्रमणं न कल्पते। वर्षाकाले

केशेषु सत्सु जलार्द्रत्वेन अप्कायविराधना स्यात्। ततश्च षट्पद्यः स्युः। तासां नखैर्विनाशः स्यात्। चर्मणि नखैर्व्रणोत्पत्तिः स्यात्। तस्मात् कारणाद् गोलोमप्रमाणा अपि केशा न रक्षणीयाः। अथ च यदि सामर्थ्य सद्भावेऽपि क्षुरेण मुण्डनं कारयेत्, कर्त्तर्या वा कर्त्तनं कारयेत्तदा तीर्थङ्कराऽऽज्ञाया विराधना स्यात्। अपरेषामपि साधूनां लोचकारापणे मनो भज्यते, तेन मिथ्यात्वप्ररूपणा प्रसङ्गः स्यात् तथा संयमविराधना, आत्मविराधना वा स्यात्। षट्पद्यश्च म्रियन्ते। नापितो द्रव्यादिकं याचते। अथवा अप्रासुकपानीयव्यापृत्त्या पश्चात्कर्म लगति। क्षुरप्रम्, हस्तं च अप्रासुकजलेन प्रक्षालयति तस्माद् जिनशासनस्य हीलना भवति तेन मुख्यवृत्त्या लोच एव कारयितव्यः॥ अथ अपवादनयेन लुञ्चने ज्वरादिरुक्, बालस्यासहनत्वाद् रोदनम्, कश्चिद् मन्दश्रद्धावान् संयममपि त्यजति एतादृशस्य लोचो न कर्त्तव्यः। तदा किं कुर्याद् ? इत्याह–'अज्जेणं' आर्येण साधुना क्षुरमुण्डितेन भाव्यम्। अयमपवादनयः। लुञ्चितशिरोजेन भाव्यम् एष उत्सर्गमार्गः। यदा क्षुरप्रेण मुण्डनं कारयितुं न शक्नोति मस्तके स्फोटकादिसद्भावे, तदा कर्त्तर्या शिरोजानि कर्त्तरितव्यानि, पक्षिकायां २ संस्तारकशय्यादेर्बन्धनदवरिका उत्कीलनीया पुनः पञ्चदशे दिने आलोचनां गृह्णाति, लोचमसहन् मासे २ क्षुरेण मुण्डापयेत्, पक्षे २ प्रच्छन्नवृत्त्या कर्त्तर्या केशकर्त्तनं कारयेत्, निशीथे उक्तमस्ति–'क्षुरमुण्डे लघुमासः प्रायश्चित्तम्, कर्त्तने गुरुमासः प्रायश्चित्तं ददाति'। पुनस्तरुणसाधोश्चतुर्भिर्मासैर्लुञ्चनं कल्पते, स्थविरस्य, वृद्धस्य, जराजर्जरितस्य चक्षुस्ते-

नोऽस्माकम् पक्षिमासेऽप्यनं कल्पते सांवत्सरिके वा । तथा वर्षाकाले स्थविरकल्पिनोऽवश्यं लुञ्चनम्, जिनकल्पिनः, स्थविरकल्पिनश्च निश्चयेन ध्रुवलुञ्चनं कल्पते ॥ एषा द्वाविंशतितमी समाचारी ॥ २२ ॥
अथ पर्युषणानिषेध-मानादिपिण्डनिषेधरूपा त्रयोविंशतितमी समाचारी कथ्यते—

वासावासं पज्जोसवियाणं नो कप्पइ निग्गंथाण वा, निग्गंथीण वा परं पज्जोसवणाओ अहिगरणं वइत्तए, जे णं निग्गंथो वा, निग्गंथी वा परं पज्जोसवणाओ अहिगरणं वयइ, से णं 'अकप्पेणं अज्जो ! वयसीति' वत्तव्वं सिया, जेणं निग्गंथो वा निग्गंथी वा परं पज्जोसवणाओ अहिगरणं वयइ, से णं निज्जूहियव्वे सिया ॥ ५८ ॥

अर्थः—वर्षाकाले स्थितानां साधूनाम्, साध्वीनां च पर्युषणप्रतिक्रमणाऽनन्तरं अधिकरणं कलिः, राटीसूचकं वचनं वक्तुं न कल्पते । अथ च यः कश्चित्साधुः पर्युषणाप्रतिक्रमणानन्तरं राटीसूचकं वाक्यं जल्पति तं प्रत्यन्यः साधुरेवं वदति—हे आर्य ! तत्र न कल्पते । भवान् कलहकारिवाक्यं वक्ति, ईदृग्वचनं न वक्तव्यम् । अत्राऽयं भावः—पर्युषणापर्वप्रतिक्रमणात् पूर्वमधिकरणवचनं कदाचिद् उक्तं भवति नतु पर्युषणापर्वप्रतिक्रमणे क्षामितं भवति, पुनर्यः साधुः कदाचित् पर्युषणापर्वणः परमऽग्रे राटीकरणम् अधिकरणं वचनं वदेत् स साधुः 'निज्जूहियव्वे सिया' निर्वा-

सितव्यः स्यात्। 'ताम्बूलकस्य सटितपत्रवद् गणान्निष्काशितव्यः' एवं सम्यगित्यनेन क्रोध–मान–माया–लोभादयः कषायाः साधुभिर्न कर्त्तव्याः। अत्र क्रोधादीनां चतुरुदाहरणानि वाच्यानि तथा क्रोधपिण्डः १, मानपिण्डः २, मायापिण्डः ३, लोभपिण्डः ४ एते चत्वारः पिण्डा अकल्पनीयाः। "कोहे घेवरखग्गो। माणे सेवइयखुड्डए नायं॥ माये आसाढभूई। लोहे केसरियसाहुत्ति॥ १॥" क्रोधपिण्डविषये घृतपूरकः साधुर्यथा शापं दत्त्वा घृतपूरान् जग्राह तथा क्रोधपिण्डो न ग्राह्यः १। मानपिण्डविषये यथा सेविभोज्योपलक्षितः साधुरेको गृहस्थिन्या सार्द्धं मानं कृत्वा लोकसमक्षं तत्पतिसमीपे गत्वा "श्वेताङ्गुलिः १ वगोड्डाही, २ तीर्थस्नाता च ३ किङ्करः ४॥ हृदनो ५ रिंषणश्चैव, ६ षडेते गृहिणीवशाः॥ १॥" एतेषां कथामुखेन कथनीयम्, तद्विगोपनां कृत्वा, नक्रोपरि अङ्गुलिं घर्षयन्, कृपणगृहस्थान् तर्जयित्वा घृतखंडमिश्रितसेवभोज्येन पात्रं भृत्वा आनयामास, एवं मानपिण्डो न ग्राह्यः २। मायापिण्डे यथा आषाढभूतिः साधुर्मोदकान् नवीनं रूपं विधाय जग्राह तथा मायापिण्डो न ग्राह्यः ३। लोभपिण्डविषये यथा कश्चिद् मासक्षपणकः साधुः कुत्रचित् पारणाऽवसरे सिंहकेसरिकमोदकान् दृष्ट्वा धर्मलाभस्थाने सिंहकेसरिकाः २ इति गृहे २ वदन् एकेन श्राद्धेन गृहे आहूय मोदकस्थालं भृत्वा, दर्शयित्वा तच्चित्तं स्वस्थाने समानीतम्। एवं लोभपिण्डो अपि न ग्राह्यः ४॥ एषा त्रयोविंशतितमी समाचारी॥ २३॥ अथ चतुर्विंशतितमी समाचारी कथ्यते।

मासावासं पज्जोसवियाणं इह खलु निग्गंथाण वा, निग्गंथीण वा अज्जेव कक्खडे, कडुए, विग्गहे समुप्पज्जिज्जा, सेहे राइणियं खामिज्जा, राइणिए वि सेहं खामिज्जा, ( ग्रं० १२०० ) खमियव्वं खमावियव्वं, उवसमियव्वं उवसमावियव्वं, सुमइसंपुच्छणाबहुलेणं होयव्वं । जो उवसमइ तस्स अत्थि आराहणा, जो न उवसमइ तस्स नत्थि आराहणा, तम्हा अप्पणा चेव उवसमियव्वं, से किमाहु ? भंते ! उवसमसारं खु सामण्णं ॥ ५९ ॥

अर्थः—वर्षाकाले स्थितानां साधूनाम्, साध्वीनां च अद्यदिवसे पर्युषणापर्वदिवसे कर्कशम्—कटुकं मकार-चकारादिशब्दरूपः कलह उत्पद्यते यदा रत्नाधिको मुनिरपराधवान् अस्ति तदाऽपि शिष्यः रत्नाधिकं क्षामयेत् । अयं विधिमार्गोऽस्ति । अथ कदाचिच्छिष्योऽविधिज्ञः, अहंकारी वा स्यात्तदा रत्नाधिको मुनिः शिष्यं क्षामयेत् । तथा आत्मना क्षन्तव्यम्, अपरः क्षामयितव्यः। आत्मनोपशमितव्यम्, अन्यः उपशमयितव्यः। येन गुर्वादिना, स्थविरेण वा सार्द्धमधिकरणमुत्पन्नं भवेत् तेन सार्द्धं राग–द्वेषं त्यक्त्वा, सम्यग्मतिं कृत्वा सूत्रा–ऽर्थयोः संपृच्छनाबहुलेन साधुना भाव्यम् । य उपशाम्यति तस्याऽस्ति आराधना, यो न उपशाम्यति तस्य नास्ति आराधना । क्रोधी साधुर्जिनाज्ञाविराधक इत्यर्थः । अत्र किं कारणम् ? इत्याह–'खु' इति निश्चयेन, श्रमणस्य चारि-

त्रधर्मस्याऽयमेव सारः, उपशमप्रधानं चारित्रं पालयेत्। श्रावकेणाऽपि क्षन्तव्यम्, क्षामयितव्यं यथा–उदायीनृप–चण्डप्रद्योतनभूपेन सार्द्धं क्षामणां चकार। तद्यथा–चम्पायां पुर्याम् आजन्मलोलुपः कुमारनन्दी स्वर्णकारो द्रव्यबलेन सुरूपां स्त्रीणां पञ्चशतीं परिणीतवान्। एकदा हासाप्रहासयोः रूपं दृष्ट्वा व्यामोहितः तयोः प्रार्थनां चकार। तदा ताभ्यामुक्तः– पञ्चशैलद्वीपे चेत् त्वमागमिष्यसि तदा त्वां परिणेष्यावः, इत्युक्त्वा गते। सोऽपि तद्वचनाद् एककोटिद्रव्यं दत्त्वा एकेन वृद्धनिर्यामकेन समं पोते स्थित्वा पञ्चशैलद्वीपाय चचाल। समुद्रमध्ये एकत्र जलावर्त्ते वटस्तरोस्तले पोतो बभ्राम, तदा निर्यामकवचनात् कुमारनन्दी वटस्य शाखामारुह्य, तत्र भारण्डपक्षिणश्चरणमाश्लिष्य पञ्चशैलद्वीपे, पञ्चशैलपर्वते जगाम। तदा तत्राऽधिष्ठायिन्यौ हासा–प्रहासाख्ये व्यन्तर्यौ ऊचतुः–अस्मत्प्रेषितस्त्वं गृहे गत्वा अस्मद्ध्यानसहितम् 'इङ्गिनीमरणं' कुरु। येनाऽस्मत्पतिर्भविष्यसि। इत्युक्त्वा ताभ्यामुत्पाट्य गृहे मुक्तः। तत 'इङ्गिनीमरणं' कर्त्तुकामो गृहे आगत्य नागिलश्राद्धेण मित्रेण इङ्गिनीमरणाद् वार्यमाणोऽपि इङ्गिनीमरणं कृत्वा, मृत्वा तयोर्भर्त्ता पञ्चशैलपर्वते समुत्पन्नो विद्युन्माली नामा देवः। एकदा इन्द्रादयो देवा नन्दीश्वरद्वीपे मिलिताः। तत्र विद्युन्माल्यपि हासा–प्रहासासहितो मृदङ्गनिगरणान् मुहुर्मुहुरुत्तारयन् गृहीतदीक्षेण नागिलश्राद्धेन मृत्वा द्वादशमे देवलोके समुत्पन्नेन देवेन दृष्टः, प्रतिबोधितः। अरे मित्र! त्वया तुच्छभोगार्थं जन्म हारितम्। अथ तव निस्ताराय धर्ममार्गमुपदर्शयामि, त्वं गोशीर्षचन्दनस्य

श्रीमहावीरस्य जीवितस्वामिनः प्रतिमां कारयित्वा, पूजां कुरु। येन जन्मान्तरे बोधिबीजप्राप्तिस्तव स्यात्। तेनाऽपि महावीरप्रतिमां गोशीर्षचन्दनमयीं कारयित्वा, पूजयित्वा प्रान्ते सांयात्रिकान् दत्त्वा वीतभयपत्तने प्रेषिता प्रतिमा-पेटिका, चतुष्पथे देवाधिदेवस्य नाम्ना सर्वैर्मिथ्यात्विभिः पेट्युद्घाटनाय आग्रहः कृतः, परं पेटी नोद्घाटिता। तदा प्रभावत्या राज्ञ्या श्रीवीरस्य श्राविकया देवाधिदेवस्य महावीरस्य नामोच्चारणेनोद्घाटिता, तदा लात्वा प्रभावत्या स्वगृहचैत्यगृहे सा प्रतिमा पूजिता। एकदा प्रभावतीदेव्या स्वायुषः प्रान्तं ज्ञात्वा, उदायिनः नृपस्याऽऽज्ञां लात्वा, स्वपत्युः पार्श्वे इत्युक्तम्-यदाऽहं देवयोनौ उत्पत्स्यामि तदा तव दुष्करवेलायां साहाय्यं करिष्यामि, इति दीक्षां जगृहे। ततः पश्चात्तां प्रतिमां उदायनराजा पुपूज। तत्र कुब्जा दासी पूजोपकरणानि जलादीनि आनयति। एकदा तत्र गन्धारश्रावकेण यात्रार्थमागतेन कुब्जया कृतवैयावृत्त्येन तुष्टेन स्वयं दीक्षायाम् उद्यतेन रूपपरावर्त्तिनी गुटिका, सौभाग्यकारिणी गुटिका च; एवं गुटिकाद्वयं ददे। तेन श्राद्धेन दीक्षा जगृहे। एकदा सा कुब्जा रूपपरावर्त्तिनीं गुटिकां भुक्त्वा सुरूपा बभूव। उदायननृपोऽपि तादृशीं दिव्यरूपां तां दृष्ट्वा नोपलक्षयति स्म। जाता दासी सा राज्ञे स्वरूपम् उवाच। तदा राज्ञा सुवर्णगुलिकेति नाम तस्याश्चक्रे। द्वितीयया गुटिकया चण्डप्रद्योतनाऽपि सौभाग्यं बभूव। चण्डप्रद्योतनोऽपि तादृशीमेवापरां चन्दनमयीं प्रतिमां कारयित्वा तत्स्थाने तां स्थापयित्वा, तया प्रतिमया सह सुवर्णगुलिकाम् अनलगिरिगन्धहस्तिस्कन्धे समारोप्य उज्जयिन्याम् आजगाम।

से वि य णं दारए उम्मुक्कबालभावे, विण्णाय–परिणयमेत्ते, जोव्वणगमणुपत्ते, रिउव्वेअ–जउव्वेअ–सामवेअ–अथव्वणवेअ–इइहासपंचमाणं, निग्घंटुछट्ठाणं संगोवंगाणं, सरहस्साणं चउण्हं वेआणं सारए, पारए, धारए, सडंगवी, सट्ठितंतविसारए, संखाणे, सिक्खाणे, सिक्खाकप्पे, वागरणे, छंदे, निरुत्ते, जोइसामयणे, अण्णेसु य बहुसु बंभणयेसु, परिव्वायएसु नयेसु सुपरिनिट्ठिए, आवि भविस्सइ ॥ ९ ॥ तओ ओराला णं तुमे देवाणुप्पिए ! सुमिणा दिट्ठा जाव–आरोग्ग–तुट्ठि–दीहाउय–कल्लाण–मंगल कारका णं तुमे देवाणुप्पिए सुमिणा दिट्ठ त्ति कट्टु । भुज्जो भुज्जो अणुवूहइ ॥ १० ॥

हे देवानुप्रिये ! स च बालको यदा अष्टवार्षिको भविष्यति, बालकस्वभावं त्यक्ष्यति, तदा विज्ञानानि दर्शनमात्रेण ज्ञास्यति, यदा यौवनप्राप्तो भविष्यति, तदा ऋग्वेदम्, यजुर्वेदम्, सामवेदम्, अथर्वणवेदम्, इतिहासपुराणं पञ्चमम्, निघण्टुनाममालाशास्त्रं षष्ठम्, तेन सहितं ग्रन्थसमुदायम्–अङ्गोपाङ्गसहितं परमार्थैः ज्ञास्यति, एतेषां वेद–पुराण–स्मृति–नामकोषादीनां च स्मारको भविष्यति । वेदाः ऋग्वेदप्रमुखा एते चत्वारः ।

प्रातः पूजार्थं समागतेन उदायननृपेण सर्वं प्रतिमायाः सुवर्णगुलिकायाश्च हरणादिकं चण्डप्रद्योतनस्य चरित्रं ज्ञातम् । ततश्चोदायननृपो महासेनादीन् दश मुकुटबद्धभूपान् स्वसैन्येन संमील्य उज्जयिन्यां प्रति प्रतस्थे । मार्गे आगच्छतः उदायननृपसैन्यस्य प्रभावतीदेवेन त्रिषु स्थानेषु जलस्य साहाय्यं कृतम् । प्रथमं लोद्रपुरपत्तने ॥१॥ ततः पुष्करिण्याम्, अद्यापि तत्र 'स्त्रीवापी' इति पुष्करणनगरे प्रसिद्धाऽस्ति ॥२॥ ततः पुष्करकुण्डेऽजश्रमेरुपार्श्वे ॥३॥ एतानि त्रीण्यपि देवनिर्मितजलस्थानानि । एवमुदायननृपोऽपि अनुक्रमेण मालवदेशमध्ये आगत्य चण्डप्रद्योतनाय दूतं प्रेषयति स्म । सुवर्णगुलिका तुभ्यं दत्ता, परं जीवितस्वामिनः श्रीमहावीरस्य प्रतिमा दूतस्याऽस्य सार्थे मोक्तव्या । इति लेखं वाचयित्वा दूतो निर्भर्त्सितः, चण्डप्रद्योतनो युद्धसज्जो बभूव । तत्र संग्रामे च प्रभावतीदेवीसाहाय्याच्चण्डप्रद्योतनं युद्धे निर्जित्य, मद्दासीपति इत्यक्षरयुक्तं ललाटपट्टे स्वर्णपट्टं बन्धयित्वा, पादयोः स्वर्णनिगडं परिधाप्य, उज्जयिन्यां स्वाऽऽज्ञया भ्रामयामास, ततो यावत्तां प्रतिमामुदायननृप उत्थापयति तावत् सा प्रतिमा स्थानान्नोत्तिष्ठते । वीतभयपत्तने उपद्रवं भविता तेनेयं प्रतिमा नाऽऽयास्यतीति देववाणीं श्रुत्वा, प्रतिमां तत्रैव मुक्त्वा चण्डप्रद्योतनं बध्वा, सार्थे लात्वा स्वपुराय चचाल । मार्गे वर्षाकालवशाद् मालवदेशस्य पिच्छलपङ्कबहुलत्वाच्चलितुमशक्त उदायनो राजा स्वसैन्येन स्थितः । तत्र दशभिर्मुकुटबद्धभूपैः पृथक् २ स्थितम्, तेनाऽद्यापि मालवदेशे दशपुरनगरमस्ति । एवं तत्र सुखेन वर्षाकाले स्थितस्योदायनस्य भूपस्य पर्युष-

णापर्वदिनमागतम् । तद्दिने उदायनभूपश्चण्डप्रद्योतनस्य भोजनदानादेशं सूपकाराय दत्त्वा स्वयं पौषधं जग्राह । सूपकारश्चण्डप्रद्योतनपार्श्वे आगत्य उदायिननृपस्य पौषधमुक्त्वा भोजनस्य प्रार्थनां चकार । चण्डप्रद्योतेनेन ज्ञातम्-अद्य मां विषं दत्त्वा हनिष्यतीति विचार्य भीतेन पौषधमिषं कृत्वा स्थीयते स्म, भयादुपवासः कृतः । तच्छ्रुत्वा उदायनो नृपः पौषधशालातः समुत्थाय, 'साधर्मिके बद्धे सति कथं मम पौषधं कल्पते, भयादपि मत्साधर्मिकोऽयं जात इति विचिन्त्य' निगडं भङ्क्त्वा, क्रोधभावं क्षामयित्वा, मिथ्यादुष्कृतं परस्परं दत्त्वा, प्रतिक्रमणमेकत्र कृत्वा प्रातः पारणां कारयित्वा स्वपुरीं प्रेषयामास । एवमन्यैरपि अस्मिन् पर्वण्यागते सति मुनिभिः, श्राद्धैश्च क्षन्तव्यं क्षमयितव्यम् ॥ इति चतुर्विंशतितमी समाचारी ॥ २४ ॥

अथ उपाश्रयत्रयकल्पनविषया पञ्चविंशतितमी समाचारी कथ्यते-

वासावासं पज्जोसवियाणं कप्पइ निग्गंथाण वा, निग्गंथीण वा तओ उवस्सया गिण्हित्तए, तं जहा०-वेउव्विया, पडिलेहा, साइज्जिया पमज्जणा ॥ ६० ॥

अर्थः-वर्षाकाले स्थितानां साधूनाम्, साध्वीनां च गृहीतुं त्रय उपाश्रयाः कल्पन्ते, तं शब्देन तत्रोपाश्रये "वेउव्विया पडिलेहा" वारं २ दृष्टिप्रतिलेखना कार्या, उपाश्रयस्याऽयं विधिः पुनः 'साइज्जिया पमज्जणा' शब्देन

कल्पद्रुम
कलिका
वृत्तियुक्तं.
व्याख्या.
९

यच्चोपाश्रये नित्यं तिष्ठन्ति स उपाश्रयः प्रतिलेखितव्यः—प्रभाते, भिक्षासमये, मध्याह्ने, तृतीयप्रहरे चैवं वार-चतुष्टये वर्षाकाले प्रमार्जनीयः । शीतोष्णकाले मध्याह्नप्रमार्जनं विना वारत्रयं प्रमार्जनं कर्त्तव्यम् । अयं विधिर्निर्जीवोपाश्रये, जीवाकुलोपाश्रये तु पुनः पुनः प्रमार्जनं विधेयम् । अन्यौ द्वौ उपाश्रयौ प्रतिदिनं दृष्ट्वा प्रतिलेखनीयौ, तृतीये दिवसे दण्डपुञ्छनेन प्रमार्जनीयौ । एषा पञ्चविंशतितमी समाचारी ॥ २५ ॥

अथ भक्त—पानार्थगमनकाले दिग्—विदिग्दर्शनरूपा षड्विंशतितमी समाचारी कथ्यते—

**वासावासं पज्जोसवियाणं निग्गंथाण वा निग्गंथीण वा कप्पइ अण्णयरिं दिसिं वा, अणुदिसिं वा, अवगिज्झिय अवगिज्झिय भत्त—पाणं गवेसित्तए। से किमाहु भंते! ओसण्णं समणा भगवंतो वासासु तवसंपउत्ता भवंति, तवस्सी दुब्बले, किलंते मुच्छिज्ज वा, पवडिज्ज वा, तामेव दिसिं वा, अणुदिसं वा समणा भगवंतो पडिजागरंति ॥ ६१ ॥**

अर्थः—वर्षाकाले स्थितानां साधूनाम्, साध्वीनामन्यतमस्यां कस्यां दिशि, अथवा व्यवहारमार्गेण विदिक्षु वा अवगृह्य गुर्वादीनां तां दिशमुक्त्वा भक्त—पानाद्यर्थं गन्तुं कल्पते, यस्यां दिशि गच्छेत् तस्याः दिशो नाम मुनीनामग्रे वक्तव्यमित्यर्थः। अत्र को हेतुः ? तदाह—येन हेतुना 'ओसन्नं' प्रायेण वर्षाकालसमये श्रमणा भगव-

न्तस्तपसा उपसंतप्ता भवन्ति । पुनस्तपस्विनो दुर्बलाः कृशशरीरा भवेयुः । अनेन हेतुना क्लामनया मूर्च्छां प्राप्नुयुः । दुर्बलत्वात्स्खलित्वा पतेयुः । यदा दिग् उक्ता भवेत् तदा तस्यां दिशि तस्य तपस्विनः मुनेः शुद्धिं कुर्युः ॥ एषा षड्विंशतितमी समाचारी ॥ २६ ॥ अथ कार्यार्थं चत्वारिपञ्चयोजनानि गतस्य कार्ये जाते तत्रैव तां रजनीमपि न स्थेयमिति प्रतिपादिका सप्तविंशतितमी समाचारी कथ्यते—

वासावासं पज्जोसवियाणं कप्पइ निग्गंथाण वा, निग्गंथीण वा गिलाणहेउं जाव—चत्तारि, पंच जोयणाइं गंतुं, पडिनियत्तए; अंतरा वि य से कप्पइ वत्थए, नो से कप्पइ तं रयणिं तत्थेव उवायणावित्तए ॥ ६२ ॥

अर्थः—वर्षाकाले स्थितानां साधूनाम्, साध्वीनां च ग्लानादिसाधोर्वस्त्रौषधपथ्यवैद्यचिकित्साद्यर्थं चत्वारि पञ्च योजनानि वा गन्तुम्, प्रत्यागन्तुं वा कल्पते । तत्र यावत्कार्यं तावत्तिष्ठेत् । कार्ये कृते सति तां रजनीं तत्रैव निर्गमयितुं न कल्पते । ततश्चलित्वा क्रोशम्, क्रोशार्धं वा आगत्य रजनीं गमयेत् । अन्तरा—मार्गे रजनीं स्थातुं कल्पते, परन्तु कार्ये कृते तत्रैव रजन्यां स्थातुं न कल्पते इत्यर्थः ॥ एषा सप्तविंशतितमी समाचारी ॥२७॥ अथ अष्टाविंशतितमी साधुधर्मसमाचारी, कथ्यते—

इच्चेयं संवच्छरिअं थेरकप्पं अहासुत्तं, अहाकप्पं, अहामग्गं, अहातच्चं, सम्मं काएणं फासित्ता, पालित्ता, सोभित्ता, तीरित्ता, किट्टित्ता, आराहित्ता, आणाए अणुपालित्ता, अत्थेगइआ समणा निग्गंथा तेणेव भवग्गहणेणं सिज्झंति, बुज्झंति, मुच्चंति, परिनिव्वाइंति, सव्वदुक्खाणमंतं करेंति। अत्थेगइआ दुच्चेणं भवग्गहणेणं सिज्झंति, जाव–सव्वदुक्खाणमंतं करिंति । अत्थेगइया तच्चेणं भवग्गहणेणं, जाव–अंतं करिंति । सत्तट्ठभवग्गहणाइं पुण नाइक्कमंति ॥ ६३ ॥

अर्थः—तस्याम् उपशमः सारम्, यद्यजानतः किञ्चित्पातकं लग्नं स्यात्तदा निःशल्यीभूय मिथ्यादुष्कृतं दातव्यम् । परं यथा कुम्भकारलघुक्षुल्लकयोरिव मिथ्यादुष्कृते न काचित् सिद्धिः । पुनः–मृगावत्याः आर्यायाः चन्दनायाश्चरणयोर्नमन्त्या मिथ्यादुष्कृतं ददत्याः केवलज्ञानं प्राप्तम् एतादृशं मिथ्यादुष्कृतं दातव्यम् । लौकिकदृष्टान्तेनाऽपि श्वश्रु–जामात्रोर्विवादे घृत–क्षैरेयोर्यथा परस्परं प्रीतिरभूत् तद् दृष्टान्तो यथा कश्चिज्जामाता श्वश्रूगृहे बहुभ्यो दिवसेभ्यः कलहं भङ्क्तुमागतः, तदा श्वश्र्वा क्षैरेयी राद्धा, भोजयितुमुपवेशितो जामाता। खण्डेन मिश्रा क्षैरेयी पर्युषिता, घृतं महर्घ्यत्वाद् गृहे वर्त्तमानमपि न पर्युषितम्। घृतं च हट्टाल्लात्वा आगच्छामीत्युक्त्वा गता । पश्चाज्जामाता छिक्के घृतम् स्त्यानीभूतघृतेन भृतं घृतभाजनं दृष्ट्वा, ज्ञात्वा कृपणेयं

श्वश्रूः, घृते सत्यपि दृष्टे गता इति विचिन्त्य तद् घृतं तसीकृत्य, तद्भाजनं तत्रैव मुक्त्वा स्थितः। साऽप्याऽऽगत्य दृष्टे घृतं न लभ्यते इत्युवाच। तदा जामाता अवादीत्–हे श्वश्रु ! यदि किञ्चित् टङ्कबिन्दुमितं वा घृतभाजने घृतं भवेत्तदा पायसमध्ये भोक्तव्यम्, रूक्षस्य नाम निवार्यते। इत्युक्ते तयाऽपि हि स्त्यानीभूतघृतभ्रान्त्या तद्भाजनं घृतं मध्ये कास्तीति वदन्त्या जामातुः स्थालोपरि अधः कृतम्। घृतं सर्वं पतितं दृष्ट्वा जामाता पुत्रश्च एतौ उभौ अपि सदृशौ इति हेतोरावां एकत्र भोक्ष्यावः। अद्याऽस्माकं ईदृशी इच्छाऽस्ति। जामात्रा तदोक्तम् अतीवसम्यक्। अथ श्वश्रूः एकत्र भुंजन्ती स्वस्यां दिशि घृतमानेतुमित्यवदत्–हे जामातः! भवता अमुकदिने मत्पुत्री ताडिता, अमुकदिने तर्जिता, अमुकदिने रङ्गीनं कमखाख्यं वस्त्रं मार्गितं सन्नानीय दत्तं चीवरमपि नानीय दत्तम्। अतः परं भवता होलिकायां नागतम्, अक्षततृतीयायां नागतम्, रक्षाबन्धेऽपि नागतम् एवमुक्त्वा २ हस्ताङ्गुल्या क्षीरान्तराले रेखां कुर्वन्ती स्वस्यां दिशि घृतं जहार। तादृशीं तां दृष्ट्वा धूर्त्तेति विज्ञाय जामाताऽपि धूर्त्तीभूय हे श्वश्रूः अतः प्रथमं यत्कृतं तत्त स्मरणीयम्, अद्य पश्चाद्लीयागलीया वर्त्तते एवं कृत्वा हस्तेन क्षैरीयी घृतेनैकत्रीकृत्य, जामाता उवाच–यदि मद्वचने प्रतीतिस्तव नास्ति तर्हि तव प्रत्यक्षं कौशं पिबामीत्युक्त्वा क्षैरेयीं सर्वां पपौ। इति लौकिकदृष्टान्ते यथा श्वश्रू–जामात्रोर्विवादे घृत–क्षैरेय्योः परस्परं मेलापो जातस्तथा धर्मे मेलापो विधेयः। इति विचार्य पर्युषणापर्वणि विशेषेण कषायास्त्याज्याः॥ पुनः–"गंगाए नाविओ नंदो १, सभाए घरकोइलो २। हंसो

मयंगतीराए ३, सीहो अंजणपव्वए ४ ॥ १ ॥ वाणारसीए बडुओ ५, राया इच्छेव सो हुओ ६। एए सिंघायगो जोओ, सो इत्थेव समागओ ॥ २ ॥ पुनश्च अचंकारी भट्टादीनां दृष्टान्तं श्रुत्वा कषायशल्यादीनि न रक्षणीयानि इति पर्युषणासमाचारी उक्ता ॥ अथ तासां फलमाह-

अर्थः—इत्यऽमुना प्रकारेण स तत् सांवत्सरे भवं सांवत्सरिकं वर्षाकालसंबन्धि स्थविराणां कल्पं स्थविरकल्पिनां साधूनामयमाचारः । यद्यपि जिनकल्पिनामपि किंचिदाचारनिरूपणमस्ति तथाऽपि स्थविरकल्पिनां साधूनामाचार-बहुलत्वात् स्थविरकल्पं-यथासूत्रं सूत्रोक्तरीत्या, 'अहाकप्पं' यथाकल्पं, यथामार्गं यथामोक्षमार्गः साध्यते, यथातत्त्वं परमार्थज्ञानेन सम्यक्तीर्थंकराज्ञया कायेन, वाचा, मनसा; सम्यक्शब्देन, मनसा, वाचा स्पर्शयित्वा, पालयित्वा, शोधयित्वा, अतीचारान् क्षामयित्वा, तीरित्वा-यावज्जीवं तीरं प्रापयित्वा, पुनः कीर्तनयित्वा-अन्येषामुपदेशेन कीर्तनं कृत्वा, यथोक्तविधिना करणम् आराधनां तां कृत्वा जिनाज्ञया अनुपाल्य एके केचित् तेनैव भवग्रहणेन सिद्ध्यन्ति, पुनर्बुद्ध्यंते-केवलं प्राप्नुवन्ति, मुक्ता भवंति कर्मबंधनेभ्यः, परिनिर्वापयंति-परिसामस्त्येन कर्मतापाच्छीतलतां प्राप्नुवन्ति; किं बहुना सर्वदुःखानां-सर्वेन्द्रिय-मनःसंबंधिनां दुःखानामन्तं कुर्वन्ति। कदाचित्तस्मिन् एव भवे मुक्तिर्न स्यात् तदा द्वितीये भवे पूर्वोक्तलक्षणा भवन्ति । केचित्तृतीयभवे सिद्ध्यंति, बुद्ध्यंति अथवा सप्ताऽष्टौ मनुष्यभवान् नोल्लङ्घन्ते, इत्यष्टाविंशतितमी समाचारी ॥ २८ ॥

अथ भद्रबाहुस्वामी वदति-यन्मयाऽत्र अधिकारत्रयं प्रोक्तं तन्मया स्वेच्छया नोक्तमस्ति, किन्तु तीर्थंकराऽऽज्ञया उपदिष्टं तदेव सूत्रवाण्या वदति—

ते णं काले णं, ते णं समए णं समणे भगवं महावीरे रायगिहे नगरे, गुणसिलए चेइए, बहूणं समणाणं, बहूणं समणीणं, बहूणं सावयाणं, बहूणं सावियाणं, बहूणं देवाणं, बहूणं देवीणं मज्झगए चेव एवमाइक्खइ, एवं भासइ, एवं पण्णवेइ, एवं परूवेइ, पज्जोसवणाकप्पो नामं अज्झयणं सअट्ठं, सहेउअं, सकारणं, ससुत्तं, सअत्थं, सउभयं, सवागरणं, भुज्जो भुज्जो उवदंसेइ त्ति बेमि ॥६४॥ पज्जोसवणाकप्पो नाम दसासुअक्खंधस्स अट्ठममज्झयणं संमत्तं॥ ( ग्रं० १२१५ )

अर्थः—तस्मिन् काले चतुर्थारकप्रान्ते, तस्मिन् समये राजगृहनगर्यां समवसरणावसरे, श्रमणो भगवान् महावीरो राजगृहनगरे, गुणशिले चैत्ये यक्षायतने बहूनां साधूनाम्, बहूनां साध्वीनाम्, बहूनां श्रावकाणाम्, बहीनां श्राविकाणाम्, बहूनां देवानाम्, बहीनां देवीनां मध्ये स्थितः सन् एवमाख्याति पूर्वोक्तविधिना कथयति, एवं भाषयते वचनयोगेन वक्ति; एवं प्रकारेण प्रज्ञापयति कल्पाराधनफलानि दर्शयित्वा ज्ञापयति, एवं प्ररूपयति श्रोतॄणां हृदयादर्शे अर्थं प्रतिबिंबमिव संक्रामयतीत्यर्थः। शिष्यः पृच्छति-श्रीमहावीरः किमा-

ख्याति ? श्रीपर्युषणाकल्पनामाध्ययनं श्रीदशाश्रुतस्कन्धस्याऽष्टममध्ययनम्, 'पर्युषणाकल्प'–नामकं वर्तते तदध्ययनं सअर्थम् अर्थसहितम्, प्रयोजनसहितं सहेतुकम्, यथैकस्मिन् मासे विंशतिदिनाधिके पर्युषणाकरणे "जओ णं पाईणं आगारेहिं" इत्यादिरूपम्। सकारणं कारणसहितं अपवादयुक्तं यथा कारणे 'खुरमुंडेण, इत्यादिरूपं, ससूत्रम्–सूत्रसहितम्, सअर्थं अर्थसहितम्, सूत्रार्थाभ्यामुभाभ्यां सहितम्, सव्याकरणम्–प्रश्नोत्तरसहितम्, विस्मरणस्वभावानां शिष्याणां कृपया भूयो २ मुहुर्मुहुः उपदिशतीति। एवं श्रीभद्रबाहुस्वामी श्रीमद्वर्द्धमानस्वामिवाण्या स्वशिष्यान् वदति, अनया रीत्या गुरूणामनुक्रमो दर्शितः। यथा श्रीमहावीरेण गणधरेभ्य उपदेशो दत्तस्तथाऽहं तुभ्यमुपदेशं ददामि, इति श्रीभद्रबाहुस्वामी चतुर्विधसङ्घस्याऽग्रे श्रीकल्पसूत्रमुपदिशति स्म॥ अस्माभिरपि श्रीगुरूणां प्रसादाद्यथामति श्रीसङ्घाऽग्रे मङ्गलार्थं श्रीकल्पसूत्रमधिकारत्रयसहितं वाचितम्, श्रावितम्। अत्र वाचनां कुर्वतामस्माकं मात्राऽक्षराऽर्थैर्हीनाधिककथनाद् दूषणं यल्लग्नं भवेत् तस्य श्रीसङ्घसमक्षं मिथ्यादुष्कृतमस्ति। श्रीसङ्घेनाऽपि श्रीकल्पसूत्रं शृण्वतां निद्रा–विकथा–प्रमादैरभक्तिः कृता स्यात् तस्य त्रिधा मिथ्यादुष्कृतं दातव्यम्। अस्मिन् पर्वण्याऽऽगते, एके भाग्यवन्तः दानं ददति। एके शीलं पालयन्ति। एके तपस्तप्यंति। एके जिनपूजां कुर्वन्ति। एके साधर्मिकाणां वात्सल्यं भक्तिं कुर्वन्ति। एके प्रभावनां कुर्वन्ति एतानि मङ्गलकार्याणि प्रमाणीभवंति। तत्र देव–गुर्वोः प्रसाद इत्यग्रेतनवर्तमानयोगः॥

श्रीकल्पसूत्रवरनाममहागमस्य। गूढार्थभावसहितस्य गुणाकरस्य॥ लक्ष्मीनिधेर्विहितवल्लभकामितस्य। व्याख्यानमाप नवमं परिपूर्त्तिभावम् ९

## अथ श्रीप्रशस्तिः—

श्रीमज्जिनादिकुशलः कुशलस्य कर्त्ता । गच्छे बृहत्खरतरे गुरुराड् बभूव ॥ शिष्यश्च तस्य सकलागमतत्त्वदर्शी । श्रीपाठकः कविवरो विनयप्रभोऽऽभूत् ॥ १ ॥ विजयतिलकनामा पाठकस्तस्य शिष्यो भुवनविदितकीर्त्तिर्वाचकः क्षेमकीर्त्तिः ॥ प्रचुरविहितशिष्यः प्रसृता तस्य शाखा । सकलजगति जाता क्षेमधारी ततोऽसौ ॥ २ ॥ पाठकौ च तपोरत्न–तेजरेजौ ततो वरौ ॥ भुवनादिमकीर्तिश्च । वाचको विशदप्रभः ॥ ३ ॥ सद्वाचकौ भवदशेषगुणाम्बुराशिः । हर्षाजिकुञ्जरगणिर्गुरुतान्वितश्च ॥ श्रीलब्धिमण्डनगणिर्वरवाचकश्च । सद्बोधसान्द्रहृदयः सुहृदां वरेण्यः ॥ ४ ॥ लक्ष्मीकीर्त्तिः पाठकः पुण्यमूर्त्ति र्भास्वत्कीर्त्तिर्भूरिभाग्योदयश्रीः ॥ शिष्यो लक्ष्मीवल्लभस्तस्य रम्यां । वृत्तिं चक्रे कल्पसूत्रस्य चेमाम् ॥ ५ ॥

॥ इति श्रीलक्ष्मीवल्लभोपाध्यायविरचितायां श्रीकल्पसिद्धान्तस्य कल्पद्रुमकलिकाख्यव्याख्यायां नवमं व्याख्यानं संपूर्णम् ॥

Printed by Ramchandra Yesu Shedge, at the 'Nirnaya sagar' Press 23, Kolbhat Lane, Bombay.

Published by Velji Shivji Danabandar, Mandvi, 45 Clivo road, Bombay

उपवेदाः पुनश्चत्वारः–धनुर्वेदः, आयुर्वेदः, गान्धर्ववेदः, अध्यात्मवेदश्च । अष्टादशपुराणानां ज्ञाता भावी, तानि पुराणानि–ब्रह्मपुराणम्, अम्भोरुहपुराणम्, विष्णुपुराणम्, वायुपुराणम्, भागवतपुराणम्, नारदपुराणम्, मार्कण्डेयपुराणम्, अग्निदैवतपुराणम्, भविष्यत्पुराणम्, ब्रह्मविवर्तपुराणम्, लिङ्गपुराणम्, वराहपुराणम्, स्कन्दपुराणम्, वामनपुराणम्, मत्स्यपुराणम्, कूर्मपुराणम्, गरुडपुराणम्, ब्रह्माण्डपुराणम्, इति अष्टादश पुराणानि । अष्टादश स्मृतयः–मानवीस्मृतिः, आत्रेयी, वैष्णवी, हारीती, याज्ञवल्की, औशनसी, आङ्गिरसी, यामी, आपस्तम्बी, सांवर्ती, कात्यायनी, बार्हस्पती, पाराशरी, साङ्खी, दाक्षी, गौतमी, शान्तातपी, वासिष्ठी, एताः स्मृतयोऽष्टादश । एतेषां ग्रन्थानां धारको भविष्यति–पारगामी भविष्यति । तथा षडङ्गस्य वेत्ता भविष्यति । षष्टिः ६० तन्त्राणि यत्र सन्ति तत् षष्टितन्त्रं कापालिकयोगिनां शास्त्रं साङ्ख्यशास्त्रं वर्तते, तत्र विशारदो भविष्यति । संख्याशास्त्रस्य लीलावतीप्रमुखस्य शिक्षाशास्त्रस्य वेत्ता भविष्यति । शिक्षाकल्पस्य आचारग्रन्थस्य ज्ञाता भविष्यति । व्याकरणस्य वेत्ता–इन्द्र–चन्द्र–काशिकृत्स्न–आपिशली–शाकटायन–पाणिनि–अमर–जैनेन्द्रा इत्यष्टौ व्याकरणानि, तेषां वेत्ता भविष्यति । छन्दःशास्त्रम्, निरुक्तम्, पदभञ्जनम्, तथा ज्योतिःशास्त्रं स बालो ज्ञास्यति । अयनम्–उत्तरायनं, दक्षिणायनं ज्ञास्यति । तथा अन्येषु बहुषु ब्राह्मणानां नयेषु, परिव्राजकशास्त्रेषु सुपरिनिष्ठितः प्रवीणो भविष्यति । तेन कारणेन हे देवानुप्रिये ! त्वया सम्यक् स्वप्ना आरोग्य–

तुष्टि-दीर्घायुःकारका दृष्टाः। एवम् उक्त्वा ऋषभदत्तो ब्राह्मणो भूयो भूयो वारं वारं प्रशंसां करोति ॥ ९-१० ॥

तए णं सा देवाणंदा माहणी उसभदत्तस्स अंतिए एअमट्ठं सोच्चा हट्ठ-तुट्ठ-जाव-हयहिअया करयलपरिग्गहिअं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु उसभदत्तं माहणं एवं वयासी ॥११॥ एवमेअं देवाणुप्पिया ! तहमेअं देवाणुप्पिया ! अवितहमेअं देवाणुप्पिआ ! असंदिद्धमेअं देवाणुप्पिआ ! इच्छिअमेअं, देवाणुप्पिया ! पडिच्छिअमेअं देवाणुप्पिया ! इच्छिअपडिच्छिअमेअं देवाणुप्पिया ! सच्चे णं एसमट्ठे, से जहेअं तुब्भे वयह त्ति कट्टु ते सुमिणे सम्मं पडिच्छइ, पडिच्छित्ता उसभदत्तमाहणेणं सद्धिं उरालाइं, माणुस्सगाइं भोगभोगाइं भुंजमाणी विहरइ ॥१२॥

पश्चाद् देवानन्दा ब्राह्मणी ऋषभदत्तस्य ब्राह्मणस्य समीपे एवमर्थ श्रुत्वा, हृदये धृत्वा द्वौ हस्तौ संमील्य अञ्जलिं बद्ध्वा ऋषभदत्तं ब्राह्मणं एवमुवाच-हे देवानुप्रिय! एवमेव अयमर्थः अवितथः-असत्यो न भवति। अस्मिन् अर्थे संदेहो नास्ति। अयमर्थः सत्यः, यं हेतुं यूयं वदत इत्युक्त्वा स्थिता। अनुक्रमेण ऋषभदत्तब्राह्मणेन समं

मनुष्यसंबन्धिनः कामभोगान् भुञ्जाना तिष्ठति। इति श्रीवीरस्य सप्तविंशतिभववर्णनम्। अग्रेतने वर्तमानयोगः ॥

ते णं काले णं, ते णं समए णं सक्के, देविंदे, देवराया, वज्जपाणी, पुरंदरे, सयक्कउ, सहस्सक्खे, मघवं, पागसासणे, दाहिणड्ढलोगाहिवई, बत्तीसविमाणसयसहस्साहिवई, एरावणवाहणे, सुरिंदे, अरयंबरवत्थधरे, आलइअमालमउडे नवहेमचारुचित्तचंचलकुंडलविलिहिज्जमाणगल्ले, महिड्ढीए, महज्जुइए, महब्बले, महायसे, महाणुभावे, महासुक्खे, भासुरबोंदी, पालंबपलंबमाणघोलंतभूसणधरे, सोहम्मकप्पे, सोहम्मवडंसए विमाणे सुहम्माए सभाए सक्कंसि सीहासणंसि, से णं तत्थ बत्तीसाए विमाणवाससयसाहस्सीणं, चउरासीए सामाणिअसाहस्सीणं, तायत्तीसाए तायत्तीसगाणं, चउण्हं लोगपालाणं, अट्ठण्हं अग्गमहिसीणं, सपरिवाराणं तिण्हं परिसाणं,

---

१ नव वाचनाऽपेक्षयाऽत्र प्रथमं व्याख्यानं सम्पूर्णम् . एकादश वाचनाऽपेक्षया तु द्वितीयं व्याख्यानं संपूर्णम् इति केचिद् वदन्ति ॥

श्रीकल्पसूत्रवरनाममहागमस्य गूढार्थभावसहितस्य गुणाकरस्य ।
लक्ष्मीनिधेर्विहितवल्लभकामितस्य व्याख्यानमाद्यमगमत् परिपूर्तिभावम् ॥ १ ॥

सत्तण्हं अणीआणं सत्तण्हं अणीआहिवईणं, चउण्हं चउरासीणं आयरक्खदेवसाहस्सीणं, अन्नेसिं च बहूणं सोहम्मकप्पवासीणं वेमाणिआणं देवाणं, देवीण य आहेवच्चं, पोरेवच्चं, सामित्तं, भट्टित्तं, महत्तरगत्तं, आणाईसरसेणावच्चं, कारेमाणे, पालेमाणे, महयाहयनट्ट–गीअ–वाइअ–तंती–तल–ताल–तुडिअ–घण–मुइंग–पडुपडहवाइअरवेणं दिव्वाइं भोगभोगाइं भुंजमाणे विहरइ ॥ १३ ॥

तस्मिन् काले, तस्मिन् समये प्रथमदेवलोके शक्रनाम्नि सिंहासने तिष्ठति तेन शक्रः कथ्यते। देवानां मध्ये इन्द्रः परमैश्वर्यसहितः, देवानां राजा वर्तते। हस्ते वज्रम् आयुधम्, तेन कारणेन वज्रपाणिः कथ्यते। शत्रूणां पुराणि विदारयति तेन पुरन्दरः कथ्यते। शतक्रतुः कथं कथ्यते? तत्संबन्धः प्रोच्यतेः–हस्तिशीर्षनगरे जितशत्रुराजा राज्यं पालयति। तस्मिन् एव नगरे कार्तिकनामा श्रेष्ठी वसति, स धनवान् नगरे प्रसिद्धश्चास्ति, सम्यक्त्वधारी, परमश्रावको वर्तते। अन्यदा तत्र नगरे गैरिकनामा तापसः समागतः, स च मासक्षपणपारणकं तपः करोति। तस्य सेवार्थं सर्वे नगरलोका आयान्ति। एकः कार्तिकश्रेष्ठी नाऽऽयाति। तेन तापसेन

नगरलोकः पृष्टः–कोऽपि ममाऽन्तिके नायाति ? तदा नगरलोकैरुक्तम्–भोः तपस्विन् ! भवतां सेवायै एकः कार्तिकश्रेष्ठी नायाति । एवं श्रुत्वा स तापसः कार्तिकश्रेष्ठिन उपरि रुष्टः । अन्यदा तस्य नगरस्य नृपेण स तापसो भोजनाय निमन्त्रितः । तदा तापसो वदति स्म–तव गृहे चेत् कार्तिकश्रेष्ठी समागत्य स्वहस्तपरिवेषणेन क्षीरान्नादिकं भोजयति, तदाऽहं पारणं करोमि । तदा राज्ञा श्रेष्ठिनं समाहूय प्रोक्तम्–भोः श्रेष्ठिन् ! त्वं गैरिकं पूर्वोक्तप्रकारेण भोजयेः, तदा श्रेष्ठिना ज्ञातम्, यदा राज्ञः आज्ञां न करिष्यामि, तदा राजा मनसि दूनो भविष्यति, यस्य छत्रच्छायायां स्थीयते, यदि तस्य वचनं नाङ्गीक्रियते, तदा किं क्रियते, इति विचार्य श्रेष्ठिना राज्ञ आज्ञा स्वीकृता । अनुक्रमेण तापसो निमन्त्रितः, भोजनावसरे कार्तिकश्रेष्ठी स्वहस्तपरिवेषणेन तं भोजयति स्म तदाऽसौ–भोजनं कुर्वन् नक्रोपरि अङ्गुलिं प्रेरयति, मुखेन एवं वदति–यथा त्वं महान् धृष्टोऽभूः, तथा त्वं पराभवं सहस्व । श्रेष्ठिना ज्ञातं यदा पूर्वमेवाऽहं दीक्षाग्रहणमकरिष्यम्, तदा किमर्थमिदं मिथ्यादृष्टिकृतपराभवम् असहिष्यम्, एवं चिन्तयित्वा स्वगृहे आगत्य सहस्रपुरुषैः सह मुनिसुव्रतस्वामिपार्श्वे दीक्षां ललौ । द्वादशवर्षं यावत् चारित्रं प्रपाल्य अभिग्रहशतं गृहीत्वा प्रान्ते अनशनेन मृत्वा प्रथमदेवलोके इन्द्रो जातः । स गैरिकतापसोऽपि मृत्वा इन्द्रस्य ऐरावणनामा हस्ती जातः । हस्तिना ज्ञानं प्रयुक्तम् । स्वकीयं प्राग्भवं दृष्ट्वा मनसि चिन्तितम्–पूर्वभवे अहं तापसोऽभूवम्, अयं च कार्तिकश्रेष्ठी आसीत्, इति ज्ञात्वा नष्टः । इन्द्रेणाऽपि अवधिज्ञानात् तत्स्व-

रूपं ज्ञातम्, गृहीत्वा उपरि आरुरोह । तदा तेन रुष्टेन मस्तकद्वयं चक्रे । इन्द्रेणाऽपि रूपद्वयं कृतम् । यावन्ति मस्तकानि हस्तिना कृतानि, तावन्ति रूपाणि इन्द्रेणाऽपि कृतानि । तदा इन्द्रेणोक्तम्–रे वराक ! स्वकृतकर्मभ्यः कोऽपि न मुच्यते, किमर्थं खेदं करोषि, स्वकृतकर्मणां फलं भुङ्क्ष्व । त्वया मम हस्तपरिवेषणेन क्षीरान्नादिकं भुक्तम्, तद् न स्मरसि । यदा इन्द्रेण इति उपदेशो दत्तः, तदा स हस्ती अपि क्रोधं त्यक्त्वा इन्द्रस्य वाहनं बभूव । कार्तिकश्रेष्ठिभवे अभिग्रहशतं कृतं, तेन इन्द्रस्य 'शतक्रतुः' नाम जातम् । पुनः इन्द्रः सहस्राक्षः कथ्यते, तत्स्व-रूपं जिनशासने इति प्रोक्तम्–यथा इन्द्रस्य अमात्यानां पञ्चशती वर्तते, सर्वेषाम् अमात्यानां सहस्रलोचनानि भवन्ति, तेन सहस्राक्षः इन्द्रो भवति । अथवा लोके इति कथानकं वर्तते–गौतमऋषिपत्नी अहल्या, तया सह इन्द्र आसक्तोऽभूत् । गौतमेन ज्ञातः, तदा स शप्तः–'चेत् तव भगो वल्लभोऽस्ति, तदा भो इन्द्र ! त्वं सहस्र-भगो भव' । यदा मन्त्रिवर्गैर्गौतमस्य विज्ञप्तिः कृता, तदा पुनरपि गौतमेन कृपां कृत्वा 'सहस्रलोचनो भव' इत्युक्तम्, कृतः सहस्रलोचन इति नाम इन्द्रस्य जातम् । 'मघवा' देवविशेषः सेवको वर्तते, तेन इन्द्रोऽपि 'मघवा' उच्यते । पुनः इन्द्रः पाकशासन उच्यते । पाकनामा दैत्यः, तं शास्ति साधयति इति पाकशासनः । दक्षिणार्धभरतस्य अधिपतिः, द्वात्रिंशल्लक्षविमानानामधिपतिः । ऐरावणो यस्य वाहनं वर्तते । देवानां मध्ये इन्द्र आल्हादकः । निर्मलवस्त्रधारकः । पुष्पमालायुक्तं मुकुटं मस्तके धारयति । नवीनस्वर्णेन घटिते अतीवम-

नोहरे चित्तवत् चञ्चले कुण्डले कर्णयोर्धारयति, ताभ्यां कृत्वा गण्डस्थले स्पृष्टे वर्तेते। महर्धिकः, महाद्युतिः, महाबलः, महायशाः, महासुखः, भासुरा देदीप्यमाना बोंदी कान्तिर्यस्य विद्यते। प्रलम्बमाना पञ्चवर्णपुष्पमाला गले धृताऽस्ति। सौधर्मनाम्नि देवलोके सौधर्माख्यायां सभायां शक्रनाम्नि सिंहासने स्थितः, तत्र सौधर्मदेवलोके चतुरशीतिसहस्रदेवा इन्द्रस्य सेवां कुर्वन्ति, ते च इन्द्रस्य सामानिका देवाः सन्ति, यादृशी इन्द्रऋद्धिः, तादृशी एव तेषाम् ऋद्धिर्वर्तते, ते देवाः इन्द्रसामानिका उच्यन्ते। त्रायस्त्रिंशद्देवा। इन्द्रस्य पुरोहितस्थानीयाः सन्ति। चत्वारो लोकपालाः सन्ति। ते च लोकपाला इमे—सोमः, यमः, वरुणः, कुबेरश्च। अष्टौ अग्रमहिष्यः—पद्मा, शिवा, शची, अञ्जू, अमला, अप्सराः, नवमिका, रोहिणी, एता अष्टौ अग्रमहिष्यो वर्तन्ते। एकस्या अग्रमहिष्याः षोडशसहस्रदेवाः सेवकाः सन्ति, सर्वेऽपि एकत्र मीलिताः सन्तो देवा एकलक्षाष्टाविंशतिसहस्रप्रमाणा जाताः। तिस्रः पर्षदः—बाह्यपर्षत्, मध्यपर्षत्, अभ्यन्तरपर्षच्च। सप्त इन्द्रस्य कटकानि सन्ति, तानि इमानिः—हस्ती, अश्वः, रथः, पदातिः, वृषभः, नर्तकः, गन्धर्वश्च एतानि सप्त अनीकानि सन्ति। सप्त अनीकानां स्वामिनः सन्ति। चतुरशीतिसहस्रदेवा एकस्याम् एकस्यां दिशि सावधानाः, सायुधाः सेवां कुर्वन्ति। यदा चतुर्गुणाः क्रियन्ते तदा त्रिलक्ष-षड्त्रिंशत्सहस्रप्रमाणा भवन्ति। एतावन्तो देवा नित्यं सेवाम् इन्द्रस्य कुर्वन्ति। अन्येऽपि सौधर्मदेवलोकस्य वासिनो देवाः, देवाङ्गनाश्च वर्तन्ते। तेषां सर्वेषां रक्षां करोति,

तेषां सर्वेषाम् अग्रगामी, तेषां नायकः, तेषां देवानां पोषकः, देवानां मध्ये गुरुसमानोऽस्ति, आज्ञया कृत्वा ऐश्वर्य-पदं पालयति, पुनर्महता शब्देन वादितानि यानि तन्त्री-वीणावादित्राणि, ताल-कंसाल-तूर्य-शंख-मृदङ्गमेघ-गर्जितवद्गम्भीरशब्दानि वादित्राणि कर्णे सुखदायकानि शब्दायितानि सन्ति, नाटकानि भवन्ति, पुनर्दिव्यान् देवसम्बन्धिनो भोगान् भुञ्जानो विहरति ॥ १३ ॥

इमं च णं केवलकप्पं जंबुद्दीवं दीवं विउलेण ओहिणा आभोएमाणे आभोएमाणे विहरइ, तत्थ णं समणं भगवं महावीरं जंबुद्दीवे दीवे भारहे वासे दाहिणड्ढभरहे माहणकुंडगामे नयरे उसभदत्तस्स माहणस्स कोडालगुत्तस्स भारियाए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए वक्कंतं पासइ, पासित्ता हट्ठ-तुट्ठचित्तमाणंदिए, णंदिए, परमाणंदिए, पीइमणे, परमसोमणसिए, हरिसवसविसप्पमाणहिअए, धाराहयकयंबसुरहिकुसुमचंचुमाल-इय-ऊससिअरोमकूवे, विअसिअवरकमलाणण-णयणे, पचलिअवरकडग-तुडिअ-केउर-मउड-कुंडल-हारविरायंतवच्छे, पालंबपलंबमाणघोलंतभूसणधरे, ससंभमं, तुरियं, चवलं,

सुरिंदे सिंहासणाओ अब्भुट्ठेइ, अब्भुट्ठित्ता पायपीढाओ पच्चोरुहइ, पच्चोरुहित्ता वेरुलिअवरिट्ठ–रिट्ठअंजणनिउणोवचिअ–मिसिमिसिंतमणि–रयणमंडिआओ पाउआओ ओमुयइ, ओमुइत्ता एगसाडिअं उत्तरासंगं करेइ, करित्ता अंजलिमउलिअग्गहत्थे तित्थयराभिमुहे सत्तट्ठपयाइं अणुगच्छइ, अणुगच्छित्ता वामं जाणुं अंचेइ, अंचित्ता दाहिणं जाणुं धरणितलंसि साहट्टु तिक्खुत्तो मुद्धाणं धरणितलंसि णिवेसइ, णिवेसित्ता ईसिं पच्चुण्णमइ, पच्चुण्णमित्ता कडय–तुडिअथंभिआओ भुआओ साहरइ, साहरित्ता करयलपरिग्गहिअं दसणहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासीः ॥ १४ ॥

इमं च सकलं जम्बूद्वीपं विस्तीर्णेन ज्ञानेन विलोकयति, तत्र श्रमणं भगवन्तं श्रीमहावीरं जम्बूद्वीपनाम्नि द्वीपे दक्षिणार्धे भरते ब्राह्मणकुण्डग्रामे नगरे ऋषभदत्तस्य ब्राह्मणस्य कोडालगोत्रस्य भार्याया देवानन्दाया जालंधरगोत्रिण्याः कुक्षौ गर्भत्वेन उत्पन्नं पश्यति। तं दृष्ट्वा हर्षितः, तुष्टः, चित्ते आनन्दितः, प्रीतमनाः परमसौमनस्यो जातः, हर्षवशात् प्रफुल्लितहृदयो बभूव, मेघच्छटाहतकदम्बकुसुमवद् उल्लसितरोमकूपो बभूव।

कमलवद् नयने विकसिते, तदा सहसात्कारेण उत्थितस्य सर्वाणि शरीरस्याऽऽभरणानि प्रचलितानि । तानि कानि आभरणानि ? वराणि प्रधानानि, कटकानि कङ्कणानि, तथा बाहुरक्षाभरणानि एतानि सर्वाणि उत्तालवशात् प्रचलितानि, पुनर्मुकुट–कुण्डलेऽपि हसिते स्तः, पुनर्हाराः प्रलम्बमाना विराजन्ते उरसि, पुनर्मौक्तिकानां गुच्छकाः प्रलम्बमाना विराजन्ते, एतादृशानि आभरणानि धृतानि सन्ति । ससंभ्रमम्, सस्नेहं सिंहासनाद् उत्थितः, उत्थाय पादपीठे पादं ददाति, अवरोहति–उत्तरति, पादपीठाद् अवरुह्य वैडूर्या–ऽरिष्टाञ्जनादिरत्नैर्निर्मितां चतुरकारुकैः कृताम् इव पादुकां परिहाय, एकपटशाटकेन उत्तरासङ्गं कृत्वा, अञ्जलिं बद्धा, तीर्थंकरसम्मुखं ससा–ऽष्टपदं गत्वा, वामजानुं वक्रीकृत्य, दक्षिणजानुं धरित्रौ स्थापयित्वा, स्वमस्तकं नामयित्वा सर्वा-ऽऽभरणैः स्तम्भितं भुजद्वयम् अञ्जलिवशात् संमील्य, ऊर्ध्वीकृत्य इमां सत्यार्थां स्तुतिं मुखेन अवादीत् ॥ १४ ॥

नमोत्थु णं अरिहंताणं भगवताणं ॥ १ ॥ आइगराणं, तित्थगराणं, सयंसंबुद्धाणं ॥ २ ॥ पुरिसोत्तमाणं, पुरिससीहाणं, पुरिसवरपुंडरीयाणं, पुरिसवरगंधहत्थीणं ॥ ३ ॥ लोगुत्तमाणं, लोगनाहाणं, लोगहियाणं, लोगपईवाणं लोगपज्जोयगराणं ॥ ४ ॥ अभयदयाणं, चक्खुदयाणं, मग्गदयाणं, सरणदयाणं, जीवदयाणं, बोहिदयाणं ॥५॥ धम्मदयाणं, धम्मदेसयाणं, धम्म-

नायगाणं, धम्मसारहीणं, धम्मवरचाउरंतचक्कवट्टीणं ॥ ६ ॥ दीवोत्ताणं' सरणगईपइट्ठा अप्पडिहयवरनाण-दंसणधराणं, वियट्ट-छउमाणं ॥ ७ ॥ जिणाणं, जावयाणं, तिन्नाणं, तारयाणं, बुद्धाणं, बोहयाणं, मुत्ताणं, मोयगाणं ॥८॥ सव्वन्नूणं, सव्वदरिसीणं, सिव-मयल-मरुय-मणंत-मक्खय-मव्वाबाह-मपुणरावत्तिसिद्धिगइनामधेयं, ठाणं संपत्ताणं, नमो जिणाणं, जियभयाणं[1] ॥ ९ ॥

नमस्कारो भवतु अर्हद्भ्यः, अत्र तिस्रो वाचना-अर्हेभ्यः, अरिहन्तृभ्यः, अरुहद्भ्यः-इन्द्रादिकृतायै पूजायै अर्हा योग्यास्तेऽर्हन्तः, अष्टकर्मारीणां हन्तारस्तेऽरिहन्तारः, मुक्तिगमनात् पुनः संसारे न रोहन्ति तेऽरुहन्तस्तेभ्यो नमः। कथंभूतेभ्यः अर्हद्भ्यः ? भगवद्भ्यः-भगो विद्यते येषु ते भगवन्तस्तेभ्यः। भगशब्दो द्वादशार्थवाचकः-भगशब्देन सूर्यः, भगशब्देन योनिः, एतौ द्वौ अर्थौ भगवति न संभवतः। भगशब्देन ज्ञानम्, भगशब्देन माहात्म्यम्, भगशब्देन यशः, भगशब्देन वैराग्यम्, भगशब्देन मुक्तिः, भगशब्देन रूपम्, भगशब्देन इच्छा, भगशब्देन धर्मः, भगशब्देन श्रीः, भगशब्देन ऐश्वर्यम्, एते दशार्था भगवति वर्तन्ते तेन भगवन्त

१ अस्मिन् शक्रस्तवे नव संपत्। पदानि ३३। गुर्वक्षराणि ३३। लघ्वक्षराणि २६४। एवम् २९७ सर्वाक्षराणि।

उच्यन्ते । पुनः कथंभूतेभ्योऽर्हद्भ्यः ? आदिकरेभ्यः—स्वस्य तीर्थस्य आदिकरणात् । पुनः कथंभूतेभ्यस्तीर्थकरेभ्यः ? तीर्थशब्देन चतुर्विधसंघस्तस्य तीर्थस्य कारकेभ्यो नमः । पुनः कथंभूतेभ्यः ? स्वयम् आत्मना, एवम् उपदेशं विनैव संबुद्धेभ्यः । पुनः कथंभूतेभ्यः ? पुरुषेषु उत्तमेभ्यः । पुनः कथंभूतेभ्यः ? पुरुषसिंहेभ्यः । पुनः कथंभूतेभ्यः ? पुरुषेषु वरप्रधानपुण्डरीककमलसदृशेभ्यः—यथा कमलं कर्दमाद् उत्पन्नं, जलाद् वर्धितम् अनुक्रमेण उभाभ्यां पृथक् तिष्ठति तथा तीर्थकराः संसारपङ्के समुत्पन्नाः भोगजलैर्वर्धिता अनुक्रमेण उभयेभ्यः पृथक् तिष्ठन्ति । पुनः कथंभूतेभ्यः ? पुरुषेषु वरप्रधानगन्धहस्तिभ्यः—यथा गन्धहस्तिनो गन्धाद् अन्ये क्षुद्रगजा भयात् पलायन्ते तथा यत्र भगवान् तीर्थकरो विहारं करोति तत्र सप्त ईतयो न भवन्ति । पुनः कथंभूतेभ्यः ? लोकेषु उत्तमेभ्यः । पुनः कथंभूतेभ्यः ? लोकानां भव्यजीवानां नाथेभ्यः । पुनः कथंभूतेभ्यः ? लोकस्य हितेभ्यः, हितकारकेभ्यः—पञ्चास्तिकायस्य सत्यप्ररूपणाद् हितकारिभ्यः । लोकेषु प्रदीपकेभ्यः । पुनः लोके चतुर्दशरज्जुप्रमाणे प्रद्योतकरेभ्यः । पुनः कथंभूतेभ्यः ? अभयदायकेभ्यः—सप्तभयनिवारकेभ्यः, सप्त भयानि इमानि—इहलोकभयम्, परलोकभयम्, आदानभयम्, अकस्माद्भयम्, आजीविकाभयम्, मरणभयम्, अपकीर्तिभयम्, एतेषां सप्तभयानां निवारकेभ्यः । पुनः कथंभूतेभ्यः ? चक्षुर्दायकेभ्यः—तत्त्वरूपलोचनदायकेभ्यः । पुनः कथंभूतेभ्यः ? जीवदयेभ्यः—जीवेषु दया विद्यते येषु ते जीवादयास्तेभ्यो जीवदयेभ्यः, अथवा सम्यक्त्वरूपजीवदायकेभ्यः ।

पुनः कथंभूतेभ्यः ? बोधिदायकेभ्यः सम्यक्त्वदायकेभ्यः । पुनर्धर्मदायकेभ्यः । पुनः कथंभूतेभ्यः ? धर्मदेशकेभ्यः । पुनः कथंभूतेभ्यः ? धर्मनायकेभ्यः । पुनः कथंभूतेभ्यः ? धर्मसारथिभ्यो यथा सारथिर्मार्गभ्रष्टान् अश्वान् पुनः प्रेरयित्वा मार्गे आनयति, तथा भगवानपि धर्ममार्गभ्रष्टान् जीवान् धर्मवचनैः प्रेरयित्वा धर्ममार्गे समानयति, मेघकुमारवत्। राजगृहनगर्यां श्रेणिको राजा, तस्या धारिणी राज्ञी कदाचिद् गर्भवती जाता, तदा तस्यास्तद्गर्भप्रभावाद् अकालमेघसमये गजमारुह्य नगरे भ्रान्त्वा नगराद् बहिःप्रदेशेषु पर्वता–ऽऽराम–नदी–सरोवरेषु अहं क्रीडां करोमि। तदा मेघो गर्जति, विद्युद् गगने झात्कारं करोति, दर्दुरा जल्पन्ति, मयूराः कूजन्ति, वेगवतीभिः छटाभिर्मेघो वर्षति, नद्यः पर्वतेभ्यः कलुषं बहुलपानीयप्रवाहं वहन्ति; एतादृशं वर्षाकालसुखम् अनुभवामि। यद् ईदृशं मनोरथं धारिणी न प्राप्नोति स्म तेन दुर्बला बभूव। तां दृष्ट्वा श्रेणिकेन पृष्टो मनोरथः। अभयकुमारेण पूर्वसंगतदेवाऽऽराधनेन पूर्णीकृतः। अनुक्रमेण पूर्णमासे पुत्रो जातः। मेघकुमार इति नाम दत्तम्। यौवनाऽवस्थायां पित्रा तस्याऽष्टौकयनः परिणायिताः। कन्यानां माता–पितृभ्यां मेघकुमारस्या–ऽष्टौ सुवर्णकोटयः प्रदत्ताः, अष्टौ रजतकोटयः, अष्टौ रत्नकोटयः, अष्टौ गृहाणि समर्पितानि। अपरम् ऋद्धेः पारं नास्ति, एवं भोगसुखं भुञ्जानो मेघकुमारस्तिष्ठति। अन्यदा तत्र श्रीमहावीरः समवसृतः। तद्देशनां श्रुत्वा प्रतिबुद्धः। सर्वं त्यक्त्वा मातृ–पितॄन् आपृच्छ्य मातृ–पितृभ्यां बहुधा निवारितोऽपि दीक्षां जग्राह। लक्षं नापिताय प्रदत्तम् । तेन चतुरङ्गुलकेशान् रक्षयित्वा

केशकर्तनं कृतम्। महामहोत्सवपूर्वकं लुञ्चनं कृत्वा कुत्रिकाऽऽपणहट्टाद् लक्ष-लक्षमूल्येन रजोहरणं पात्रकं लात्वा श्रीमहावीरशिष्यो यती जातः। सन्ध्यासमये रात्रौ लघुत्वात् सर्वसाधूनां प्रान्ते संस्तारकं प्रस्तरितम्। रात्रौ साधुभि रागच्छद्भिः पठनार्थम्, तथा कायचिन्तार्थम्, प्रस्रवणार्थं गच्छद्भिः पादाभ्यां दुःखितः रजोभिरवगुण्ठितः, तदा रात्रौ मेघकुमारस्य क्षणमात्रमपि निद्रा न समाजगाम। तदा चिन्तितम्—कथं मे दिनानि दीक्षायां यास्यन्ति। अद्यैव रात्रौ साधुभिर्नोऽहं सन्मानितोऽग्रे मां को गणयिष्यति ?। 'परिणयनसमये चत्वरिकायाम् एव दम्पत्योः कलहो जातस्तदाऽग्रे का गृहसुखस्य वार्ता'। तस्मात् प्रभातसमये श्रीमहावीरम् आपृच्छय गृहे एव स्थास्यामि। अद्यापि मे किमपि गतं नास्ति। अत्रैव माता-पितरौ स्तः। मम स्त्रियोऽपि अत्रैव वसन्ति, इति विचिन्त्य प्रातःसमये श्रीमहावीरसमीपे आगतः, तदा महावीरेण उक्तम्—हे मेघकुमार! त्वया रात्रौ मनसि किं चिन्तितम्? एभिः साधुभिस्तव किं दुःखं दत्तम्, किंतु अस्माद् भवात् पूर्वस्मिन् तृतीये भवे त्वं वैताढ्यपर्वते सहस्रहस्तिनीनां परिवारसहितः, श्वेतवर्णः, सुमेरुप्रभो नाम षड्दन्तो गजोऽभूत्। दवाऽनलाद् भीतो नष्टः। कर्दमे मग्नः। वैरिणा गजेन दन्तप्रहारैस्ताडितो महावेदनां ससदिनं भुक्त्वा, शतवर्षम् आयुः प्रपाल्य, मृत्वा विन्ध्याचलपर्वते चतुर्दन्तः, रक्तवर्णः, सप्तशतहस्तिनीनां परिवारसहितो मेरुप्रभुनामा पुनर्गजो जातः। तत्र दवाऽनलं दृष्ट्वा जातिस्मरणवशाद् मण्डलं कृतम्। यदा उष्णकाले दवाऽनलो लग्नस्तदा भीतः, तत्र सुखार्थं

मण्डले त्वं समाजग्मिथ । तत्र च तन्मण्डलं भयभीतैः सर्वैः जन्तुभिः समारुद्धम् । कुत्राऽपि एतादृशं स्थानं नाऽभवद् यत्र त्वम् अतिष्ठः । एवं स्थानाय भ्रममाणस्त्वम् एकस्मिन् प्रदेशे समागतः । यत्र ऊर्ध्वैश्चतुर्भिश्चरणैरेवाऽतिष्ठः । तत्र एको भयात् संत्रस्तः, कुत्राऽपि स्थानम् अलभमानः शशकः समाजगाम । तदा एव त्वया कर्णकण्डूयनार्थम् एकश्चरण उच्चैश्चक्रे । शशकश्च तच्चरणस्थले आगत्य स्थितः । तं च तत्र स्थितं दृष्ट्वा त्वं करुणापरोऽभूः । दयावशाच्चरणम् अन्तरिक्षे एव दध्रिषे, नीचैर्न मुमोचिथ; एवं त्रिदिनं त्वं कष्टं चकर्थ । तृतीये दिने महादवाऽनले निवृत्ते सति सर्वे जन्तवः स्वस्थानं जग्मुः । तदा त्वमपि चरणं नीचैर्मुमोचिथ । तदा तत्कालं पर्वतस्य शृङ्गवत् त्रुटित्वा भूमौ अपतः । वेदनावशात् त्रिदिनात् पश्चात् कालं कृत्वा जीवदयावशात् त्वं मेघकुमारोऽभूः । हे महानुभाव ! तिर्यग्भवेऽपि त्वया तादृशी जीवदया प्रपालिता, महती वेदना सोढा । तत्र त्वया दुःखं न प्राप्तम्, इदानीं तु तव साधूनां हस्त–पादादिसंघट्टवशात् का वेदना जाता ? मनसः परिणामाच्चारित्रात् कथं चालिताः ? दुर्लभं चारित्रम् । तिर्यग्भवे तु महावेदनायां जातायामपि दयापरिणामाद् न भ्रष्टः, इदानीं नरत्वं प्राप्य अस्मद्वचसा प्रतिबुध्य, ऋद्धिं त्यक्त्वा, दीक्षां लात्वा, मनःपरिणामाच्चारित्रात् शिथिलीकुरुषे, एतत् तव युक्तं नास्ति । इति वीरवाणीं श्रुत्वा, जातिस्मरणात् प्राग्भवं ज्ञात्वा धर्मे स्थिरो बभूव । मेघकुमार इति अभिग्रहं जग्राह च अद्य पश्चाद् नेत्रपरिचर्यां विहायापरस्य शरीराङ्गो–पाङ्गस्य शुश्रूषां न

करोमि। महत् तपः प्रारब्धम्। निरतिचारं द्वादशवर्षं चारित्रं प्रपाल्य, अन्तेऽनशनं कृत्वा पश्चाऽनुत्तरदेवत्वेन उत्पन्नः। महाविदेहे उत्पद्य, दीक्षां गृहीत्वा मोक्षं गमिष्यति। तस्माद् भगवान् धर्मरथस्य सारथिसमानः। पुनः कथंभूतेभ्यः? धर्मवरचातुरन्तचक्रवर्तिभ्यः–धर्मचक्रेण चतुर्गतीनाम् अन्तं कृत्वा मोक्षं प्राप्तेभ्यः, अतो धर्मवरचातुरन्तचक्रवर्तिभ्यो नमः। पुनः कथंभूतेभ्यः? अप्रतिहतवरज्ञान–दर्शनधरेभ्यः–अप्रतिहतम्–अप्रतिपाति यज्ज्ञानम्, तथाऽप्रतिपाति यद् दर्शनम्, तयोरुभयोर्धारकेभ्यो नमः। पुनः कथंभूतेभ्यः? द्वीप इव त्रायकेभ्यः–यथा समुद्रे द्वीप आधारभूतस्तथा भगवान् संसारसमुद्रे आधारभूतः। पुनस्त्रायकेभ्यः–रक्षकेभ्यः। पुनः 'सरणगईपइट्ठा' इति कोऽर्थः? शरणागतप्रतिष्ठेभ्यः। ये वीतरागस्य शरणे आगच्छन्ति तेषां भयं न भवति इत्यर्थः, तेषां प्रतिष्ठा भवति इत्यर्थः। पुनः कथंभूतेभ्यः? 'वियट्टच्छउमाणं' व्यावृत्तछद्मस्थावस्थेभ्यः। पुनः कथंभूतेभ्यः? जिनेभ्यः–राग–द्वेषजेतृभ्यः। अन्येभ्योऽपि राग–द्वेषयोर्जयकारयितृभ्यो नमः। पुनः कथंभूतेभ्यः? तीर्णेभ्यः–संसारसमुद्रतीर्णेभ्यः। पुनः अन्यान् तारकेभ्यः। पुनः कथंभूतेभ्यः? मुक्तेभ्यः–कर्मबन्धनात्, अन्यान् मोचकेभ्यः। पुनः कथंभूतेभ्यः? 'सव्वन्नूणं' सर्वज्ञेभ्यः। पुनः सर्वदर्शिभ्यः। पुनः कथंभूतेभ्यः? 'सिवमयलमरुयमणंतमक्खयमव्वाबाहम पुणरावत्तिसिद्धिगइनामधेयं, ठाणं संपत्ताणं' शिवम् उपद्रवरहितम्। अचलं स्थिरम्। अरुजं रोगरहितम्। अनन्तम्। अक्षयम्। अव्याबाधम् आबाधारहितम्। अपुनरावृत्ति–यत्र गते

सति पुनराऽऽवृत्तिराऽऽगमनं न भवति एतादृशं सिद्धिस्थानम् । 'सिद्धि' इति नामधेयं सिद्धिनामकं स्थानं प्राप्तेभ्यो नमो जिनेभ्यः । कथंभूतेभ्यो जिनेभ्यः ? जितभयेभ्यः । इयं सर्वजिनानां स्तुतिः । अथ श्रीमहावीरस्वामिनः स्तुतिः-

नमोत्थु णं समणस्स भगवओ महावीरस्स आइगरस्स, चरमतित्थयरस्स, पुव्वतित्थयरनिद्दिट्ठस्स, जाव-संपाविउकामस्स ॥ वंदामि णं भगवंतं तत्थगयं इहगये, पासउ मे भगवं तत्थगए इहगयं ति कट्टु समणं भगवं महावीरं वंदंति, नमंसंति, वंदित्ता, नमंसित्ता सीहासणवरंसि पुरत्थाऽभिमुहे सन्निसन्ने ॥ १५ ॥

नमोऽस्तु श्रमणस्य भगवतो महावीरस्य, प्राकृतत्वात् चतुर्थीस्थाने षष्ठी । आदिकरस्य, तीर्थंकरस्य, चरमतीर्थंकरस्य, पूर्वतीर्थंकरेण श्रीआदिनाथेन निर्दिष्टस्य, सर्वसंपूर्णमनोरथस्य, मुक्तौ गन्तुकामस्य । ब्राह्मणकुण्डग्रामे नगरे देवानन्दाब्राह्मण्याः कुक्षौ स्थितस्य ते तुभ्यं नमस्कारं करोमि । अहम् इन्द्रः सौधर्मदेवलोके स्थितोऽस्मि, त्वं च देवानन्दायाः कुक्षौ स्थितः सन् माम् अत्र देवलोके स्थितं सेवकं पश्य, एवं कृत्वा वारं वारं श्रीमहावीरं वन्दते, नमस्कुरुते, सिंहासनोपरि पूर्वस्यां दिशि मुखं कृत्वा इन्द्रः स्थितः ॥ १५ ॥

तए णं तस्स सक्कस्स, देविंदस्स, देवरन्नो अयं एयारूवे अज्झत्थिए, चिंतिए, पत्थिए, मणोगए संकप्पे समुप्पजित्था ॥ नो खलु एवं भूयं, न एयं भवं, न एयं भविस्सइ, जं णं अरिहंता वा, चक्कवट्टी वा, बलदेवा वा, वासुदेवा वा अंतकुलेसु वा, पंतकुलेसु वा, तुच्छकुलेसु वा दरिद्दकुलेसु वा, किविणकुलेसु वा, भिक्खायरकुलेसु वा, माहणकुलेसु वा आयाइंसु वा, आयाइंति वा, आयाइस्संति वा ॥ १६ ॥ एवं खलु अरिहंता वा, चक्कवट्टी वा, बलदेवा वा, वासुदेवा वा, उग्गकुलेसु वा, भोगकुलेसु वा, रायन्नकुलेसु वा, इक्खागकुलेसु वा, खत्तियकुलेसु वा, हरिवंसकुलेसु वा अण्णयरेसु तहप्पगारेसु विसुद्धजाइ–कुल–वंसेसु आयाइंसु वा, आयाइंति वा, आयाइस्संति वा ॥ १७ ॥

ततो भगवद्दर्शनाऽनन्तरं तस्य शक्रस्य, देवेन्द्रस्य, देवराजस्य एतादृशः प्रार्थितः, चिन्तितः, संकल्पितो विचारो मनसि समुत्पन्नः । कीदृशो विचारः? तमाह–इदं कदापि नाऽभूत्, न भवति, न च भविष्यति यतोऽर्हन्तः, चक्रवर्तिनः, बलदेवाः, वासुदेवाश्च अन्तकुलेषु, शूद्राणां कुलेषु, प्रान्तकुलेषु, अधमेभ्योऽपि अधमकुलेषु,

दरिद्राणां, सर्वथा निर्धनानां कुलेषु; कृपणानां कुलेषु। कृपणाः के? 'धनेषु सत्सु अपि ये न भुञ्जन्ति, न च ददति, कृपणास्तेन उच्यन्ते' तेषां कुलेषु। तथा भिक्षाचराणां कुलेषु, ब्राह्मणानां कुलेषु तीर्थंकर–चक्रवर्ति–बलदेव–वासुदेवाः पूर्वं नाऽऽयाताः, इदानीं नाऽऽयान्ति, नाऽऽयास्यन्ति ॥१६॥ तीर्थंकर–चक्रवर्तिप्रमुखा एतेषु कुलेषु आगताः, आयान्ति, आयास्यन्ति। केषु कुलेषु? तान्याह–उग्रकुलेषु ये आदिनाथस्वामिना कोटपालत्वेन स्थापितास्तेषां कुलेषु। आदिनाथेन गुरुत्वेन स्थापितास्तेषां कुलेषु। राजकुलेषु आदिनाथेन मित्रत्वेन स्थापितास्तेषां कुलेषु। इक्ष्वाकुकुलेषु आदीश्वरस्य वंशेषु। क्षत्रियाणां कुलेषु। आदीश्वरेण शेषप्रकृतिलोकत्वेन स्थापितास्तेषां कुलेषु। राजन्यकुलेषु, प्रसिद्धकुलेषु अन्येष्वपि ज्ञात–प्रसिद्धऋषभदेववंशसमुत्पन्नेषु। इक्ष्वाकुवंशीया राजानः, नागवंशेषु–नागवंशे भवा राजानः, सुभटा बलवन्तो राजानस्तेषां कुलेषु समुत्पन्नाः. मल्लकिनो नृपाः, कौरव्याः कुरुवंशसमुत्पन्ना एतेषां कुलेषु। तथाप्रकारेण विशुद्धमातृ–पितृसमुत्पन्नेषु कुलेषु तीर्थंकर–चक्रवर्ति–बलदेवाद्या आयाताः, आयान्ति, आयास्यन्ति ॥ १७ ॥

अत्थि पुण एसे विभावे लोगच्छेरयभूए, अणंताहिं उसप्पिणीहिं, अवसप्पिणीहिं विइक्कंताहिं समुप्पज्जइ ॥ ग्र० १०० ॥ नाम–गोत्तस्स वा कम्मस्स अक्खीणस्स, अवेइयस्स, अणिज्जिन्नस्स

उदएणं जं णं अरिहंता वा, चक्कवट्टी वा, बलदेवा वा, वासुदेवा वा अंतकुलेसु वा, पंतकुलेसु वा, तुच्छकुलेसु वा दरिद्द–भिक्खाग–किविण–माहणकुलेसु वा आयाइंसु वा, आयाइंति वा, आयाइस्संति वा। कुच्छिंसि गब्भत्ताए वक्कमिंसु वा, वक्कमंति वा, वक्कमिस्संति वा। नो चेव णं जोणीजम्मं निक्खमणेणं निक्खमिंसु वा, निक्खमंति वा, निक्खमिस्संति वा ॥१८॥ अयं च णं समणे भगवं महावीरे जंबुद्दीवे दीवे, भारहे वासे माहणकुडग्गामे नयरे उसभदत्तस्स माहणस्स कोडालसगोत्तस्स भारियाए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए वक्कंते ॥ १९ ॥

अस्ति पुनरेतादृशो भावो भवितव्यताया योगो लोकविषये 'अच्छेरये' इति आश्चर्यकरः यद् अरिहन्तः, चक्रवर्त्याद्या अन्त–प्रान्त–तुच्छ–दरिद्र–भिक्षाचर–कृपण–ब्राह्मणादीनां कुलेषु आगताः, आयान्ति, आयास्यन्ति कुक्षौ उत्पन्नाः, उत्पद्यन्ते, उत्पत्स्यन्ति च। न च पुनर्योनिद्वारा जन्म जातम्, योनिद्वारा न च जन्म जायते, न च योनिद्वारा जन्म भविष्यति ॥१८॥ अयं च श्रमणो भगवान् महावीरः चतुर्विंशतितमस्तीर्थंकरो ब्राह्मणकुण्डग्रामे

नगरे ऋषभदत्तस्य ब्राह्मणस्य भार्याया देवानन्दाया जालंधरगोत्रिण्याः कुक्षौ गर्भत्वेन उत्पन्नः ॥ १९ ॥

तं जीयं एयं तिय-पच्चुप्पन्न-मणागयाणं सक्काणं, देविंदाणं, देवराईणं, अरिहंते भगवंते तहप्पगारेहिंतो, अंतकुलेहिंतो पंत–तुच्छ–दरिद्द–भिक्खाग-किविणकुलेहिंतो, माहणकुलेहिंतो वा, तहप्पगारेसु उग्गकुलेसु वा, भोगकुलेसु वा, रायन्न–णाय–खत्तिय–हरिवंसकुलेसु वा, अन्नयरेसु वा तहप्पगारेसु विसुद्धजाइ–कुल–वंसेसु, जाव–रज्जसिरिं कारेमाणेसु, पालेमाणेसु साहराविज्ञए; तं सेयं खलु ममवि समणं भगवं महावीरं, चरमतित्थयरं, पुव्वतित्थयरनिद्दिट्ठं माहणकुंडग्गामाओ नयराओ उसभदत्तस्स माहणस्स कोडलसगोत्तस्स भारियाए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिओ खत्तियकुंडग्गामे नयरे नायाणं खत्तियाणं सिद्धत्थस्स खत्तियस्स कासवगुत्तस्स भारियाए तिसलाए खत्तियाणीए वासिट्ठसगुत्ताए कुच्छिंसि गब्भत्ताए साहराविज्ञए। जे वि य णं से तिसलाए खत्तियाणीए गब्भे तं पि य णं देवाणंदाए माहणीए

जालंधरसगोत्ताए कुच्छिंसि गब्भत्ताए साहराविक्तए त्ति कट्टु एवं संपेहेइ, संपेहित्ता हरिणेगमेसिं पायत्ताणियाहिवइं देवं सद्दावेइ, सद्दावित्ता हरिणेगमेसिं देवं एवं वयासी ॥ २० ॥

तस्माद् जीतम्—आचारोऽयम्, अस्माकं कर्तुं योग्यः, अतीता—ऽनागत—वर्तमानकाले इन्द्राणां सर्वेषाम् अयम् आचारोऽस्ति, यद् अर्हदादीन् अन्तादिकुलेभ्यो गृहीत्वा उग्रादिषु कुलेषु संक्रमयति तस्माद् अहमपि इदं कार्यं करोमि। अर्हन्तं श्रीमहावीरं तीर्थंकरम् अन्त—प्रान्तादिकुलाद् गृहीत्वा तथाप्रकारेषु पूर्वोक्तेषु उग्रभोगादिकुलेषु संक्रमयामि, तदा मम श्रेयोऽस्ति। श्रमणं भगवन्तं श्रीमहावीरं ब्राह्मणकुण्डग्रामे नगरे ऋषभदत्तब्राह्मणस्य कोडालसगोत्रस्य भार्याया देवानन्दायाः कुक्षितो गृहीत्वा, क्षत्रियकुण्डग्रामे नगरे सिद्धार्थस्य राज्ञो भार्यायास्त्रिशलाया वासिष्ठगोत्रिण्याः कुक्षौ संक्रमयामि। पुनस्त्रिशलायाः पुत्रीगर्भं देवानन्दायाः कुक्षौ संक्रमयामि। एवं इन्द्रो मनसि विचार्य हरिणेगमेषीनामानं देवं शब्दायति, आह्वयति, आहूय हरिणेगमेषिणं देवं प्रति इन्द्र इत्यवादीत् २०

एवं खलु देवाणुप्पिया ! न एयं भूयं, न एयं भव्वं, न एयं भविस्सइ, जं णं अरिहंता वा, चक्कि- बल—वासुदेवा वा, अंत—पंत—किविण—दरिद्द-तुच्छ—भिक्खाग-माहणकुलेसु वा आयाइंसु वा, अयाइंति वा, आयाइस्संति वा॥ एवं खलु अरिहंता वा, चक्कि—बल—वासुदवा वा उग्गकुलेसु

वा, भोग–राइन्न–नाय–खत्तिय–इक्खाग–हरिवंसकुलेसु वा अन्नयरेसु वा तहप्पगारेसु विसुद्धजाइकुलवंसेसु आइंसु वा, आइंति वा, आइस्संति वा ॥ २१ ॥ अत्थि, पुण एसे वि भावे लोगच्छेरए भूए अणंताहिं उसप्पिणीहिं, अवसप्पिणीहिं वइक्कंताहिं समुपज्जइ ।

अहो !! देवानुप्रिय ! इदं नाऽभवत्, न भविष्यति, न च भवति, यदर्हत्–चक्रवर्त्यादयोऽन्त–प्रान्तकुलादिषु नाऽऽगताः, नाऽऽगमिष्यन्ति, नाऽऽयान्ति; उग्र–भोग–राजन्य–क्षत्रियकुलादिषु आगताः, आगमिष्यन्ति, आयान्ति ॥ २१ ॥ अनन्तेषु उत्सर्पिणी–अवसर्पिणीकालेषु गतेषु सत्सु आश्चर्यकरम् एतादृशं समुत्पद्यते । ते च अस्याम् अवसर्पिण्यां दश आश्चर्यकराः जाताः, ते संबद्धाः श्रोतव्याः ।

[1]उवसग्ग*–[2]गब्भहरणं [3]इत्थीए तित्थं [4]अभाविया परिसा । [5]कण्हस्स अमरकंका [6]अवहरणं चंद–सूराणं ॥ १ ॥
[7]हरिवंसकुलुप्पत्ती [8]चमरुप्पाओ य [9]अट्ठसयसिद्धा । [10]असंजयाण पूआ दस वि अणंतेण कालेण ॥ २ ॥

प्रथम आश्चर्यकरोऽयमेव संवन्धः–श्रीमहावीरभगवतः केवलज्ञानस्य उत्पत्त्यनन्तरं कुशिष्येण+ गोशालेन

---

*. उपसर्ग–गर्भहरणं स्त्रियास्तीर्थम् आभाविता पर्षत् । कृष्णस्य अमरकङ्का अतरणं चन्द्र–सूर्ययोः ॥ १ ॥ हरिवंशकुलोत्पत्तिः चमरोत्पातश्च अष्टशतसिद्धाः । असंयतानां पूजा दशाऽपि अनन्तेन कालेन ॥ २ ॥   +. एकदा श्रीवीरो विहरन् श्रावस्त्यां समवसृतः,

**तेजोलेश्या मुक्ता। भगवतोऽग्रे सुनक्षत्र-सर्वाऽनुभूतिनामकं शिष्यद्वयं समवसरणे प्रज्वालयाञ्चक्रे, भगवतः**

गोशालकोऽपि 'जिनोहम्' इति लोके ख्यापयन् तत्रागतः, ततो द्वौ जिनौ श्रावस्त्यां वर्तेते इति लोके प्रसिद्धिर्जाता, तां श्रुत्वा श्रीगौतमेन भगवान् पृष्टः, स्वामिन्! कोऽसौ द्वितीयो जिन इति स्वं ख्यापयति? श्रीभगवान् उवाच-गौतम! नाऽयं जिनः, किन्तु शरवणग्रामवासी मङ्खलि-सुभद्राभ्यां गोबहुलब्राह्मणगोशालायां जातत्वाद् 'गोशाल' नामा अस्माकम् एव शिष्यीभूतोऽस्मत्त एव किञ्चिद्बहुश्रुतीभूतो मुधा स्वं जिनं ख्यापयति। ततः सर्वतः प्रसिद्धाम् इमां वार्ताम् आकर्ण्य रुष्टो गोशालो गोचरचर्यागतम् आनन्दनामानं भगवद्शिष्यं जगाद-भो आनन्द! एकं दृष्टान्तं शृणु-यथा केचिद् वणिजो धनोपार्जनाय विविधक्रयाणकपूर्णशकटाः परदेशं गच्छन्तोऽरण्यं प्रविष्टास्तत्र जलाऽभावेन तृषाकुला जलं गवेपयन्तः चत्वारि वल्मीकशिखराणि पश्यन्ति स्म, ततस्तैरेकं शिखरं स्फोटितम्, तस्माद् विपुलं जलं निर्गतम्, तेन जलेन गतपिपासाः पयःपात्राणि पूरितवन्तः, तत एकेन वृद्धेनोक्तम्-सिद्धम् अस्माकं समीहितम्, अथ मा स्फोटयन्तु द्वितीयं शिखरम्, इति निवारिता अपि द्वितीयं स्फोटयामासुः, तस्माच्च सुवर्णं प्राप्तवन्तः। तथैव वृद्धेन वारिता अपि तृतीयं स्फोटितवन्तः, तस्माद् रत्नानि प्राप्य तथैव बहुवारिता अपि लोभान्धाश्चतुर्थम् अपि स्फोटयन्ति स्म, तस्माच्च प्रादुर्भूतेन दृष्टिविषसर्पेण सर्वेऽपि स्वदृष्टिपातेन पञ्चत्वं प्रापिताः। स हितोपदेशको वणिक् तु न्यायित्वाद् आसन्नदेवतया स्वस्थाने मुक्तः। एवं तव धर्माऽऽचार्योऽपि एतावत्या स्वसंपदा असंतुष्टो यथातथाभाषणेन मां रोपयति तेनाऽहं स्वतपस्तेजसा तं धक्ष्यामि, ततस्त्वं शीघ्रं तत्र गत्वा एनम् अर्थं तस्मै निवेदय! त्वां च वृद्धवणिजम् इव हितोपदेशकत्वाज्जीवितं रक्षिष्यामि, इति श्रुत्वा भीतोऽसौ मुनिर्भगवदग्रे

शरीरेऽपि तद्ज्वालावशाद् रक्तातीसारः समजनि, एतत् प्रथमम् आश्चर्यकम् ॥ १ ॥ द्वितीयं गर्भापहार-लक्षणम् आश्चर्यकं वाच्यते एव ॥ २ ॥ तृतीयं स्त्रीतीर्थकरः। तदाश्चर्यकं श्रूयताम्—अस्मिन्नेव जम्बूद्वीपे पूर्व-महाविदेहे सलिलावतीविजये वीतशोकायां नगर्यां महाबलो नाम राजा राज्यं करोति। अन्यदा प्रस्तावे महा-

सर्वं व्यतिकरं कथितवान्। ततो भगवता उक्तम्—भो आनन्द! शीघ्रं त्वं गौतमादीन् मुनीन् कथय—यद् एष गोशाल आगच्छति, न केनाऽपि अस्य संभाषणं कर्तव्यम्; इतस्ततः सर्वेऽपसरन्तु, ततस्तैः तथाकृते गोशालक आगत्य भगवन्तम् अवादीत्—भोः काश्यप! किम् एवं वदसि—यदयं 'गोशालो मङ्खलिपुत्रः' इत्यादि। स तव शिष्यस्तु मृतः, अहं तु अन्य एव परिषहसहनसमर्थं तच्छरीरं ज्ञात्वा अधिष्ठाय स्थितोऽस्मि। एवं च भगवत्तिरस्कारम् असह्यमानौ सुनक्षत्र—सर्वानुभूती अनगारौ मध्ये उत्तरं कुर्वाणौ तेन तेजोलेश्यया दग्धौ स्वर्गं गतौ। ततो भगवता उक्तम्—भो गोशाल! स एव त्वम्, नाऽन्यः। मुधा किम् आत्मानं गोपयसि। नह्येवम् आत्मा गोपयितुं शक्यः। यथा कश्चिच्चौर आरक्षकैर्दृष्ट अङ्गुल्या, तृणेन वा आत्मानम् आच्छादयति, स किम् आच्छादितो भवति? एवं च प्रभुणा यथास्थिते अभिहिते, स दुरात्मा भगवदुपरि तेजोलेश्यां मुमोच। सा च भगवन्तं त्रिप्रदक्षिणीकृत्य गोशालकशरीरं प्रविष्टा, तया च दग्धशरीरो विविधां वेदनाम् अनुभूय सप्तमरात्रौ मृतः। भगवान् अपि तस्यास्तापेन षण्मासीं यावल्लोहितवर्चोबाधाम् अनुभूतवान्, स तु रक्ताऽतिसारः कर्मण उदयेन भगवति जातः, परं च लोके गोशालकमुक्तया तेजोलेश्यया जात इति वार्ता बभूव, अयम् अधिकारः 'श्रीभगवतीसूत्रे' १५ शतके ॥

१. अत्र मान्धाताराज्ञः, तथा बलदेवस्य दृष्टान्तौ स्तः। स गर्भाऽपहारव्याख्यानाऽवसरे दर्शयिष्यामि.

घलेन षड्भिर्बालमित्रैः सह दीक्षा गृहीता । सप्तभिः साधुभिः परस्परम् इति वचननियमो विहितः-सर्वैरपि अस्माभिः सदृशं तपः करणीयम्, इति निश्चयं कृत्वा सुखेन सप्ताऽपि साधवस्तपः कुर्वन्ति । एकदा महाबलेन चिन्तितम्-एभ्यः किञ्चिद् अहमधिकं तपः करोमि, येनाऽहम् एभ्योऽधिको भवामि इति विचिन्त्य पारणादिने महाबलो वक्ति, अद्य मम शिरो दुःखयते, अहं पारणं न करिष्यामि, भवद्भिः पारणाः कर्तव्याः, एवं मायां विधाय तेभ्यः पारणं कारयित्वा स्वयम् उपवासं कृत्वा, एवं विंशतिस्थानानि मायया एव सेवित्वा तीर्थंकरनामकर्म बद्धम् । ततः सप्तापि साधवः कालं कृत्वा वैजयन्तविमाने देवत्वेन उत्पन्नाः । पुनस्ततश्च्युत्वा महाबलजीवो मिथिलानगर्यां कुम्भस्य राज्ञः प्रभावती राज्ञी, तस्याः कुक्षौ प्राचीनमायाप्रभावात् स्त्रीत्वेनोत्पन्नः । तदा प्रभावत्या चतुर्दशस्वप्ना दृष्टाः । पूर्णेषु मासेषु पुत्री जाता मल्ली इति नाम्ना । यदा मल्ली यौवनं प्राप्ता तदाऽनुक्रमेण

---

१. तदा अवधिज्ञानेन षडपि पूर्वभवमित्रनृपान् अन्यान्यस्थानेषु उत्पन्नान् जानाति स्म । ततस्तेषां प्रतिबोधनाय रत्नमयं मोहनगृहम् अशोकवाटिकामध्ये कृतम् । तस्मिन् मोहनगृहे षडपवरिकासहिते जालमण्डपे रत्नमयीं शिरच्छिद्रां स्वमूर्ति चक्रे । ततो मल्ली प्रतिदिनम् एकैकाम् अन्नपिण्डीं स्वहस्तेन मूर्तिच्छिद्रे क्षिप्त्वा रत्नोत्पलपिधानं ददाति ॥ इतश्चाऽयोध्यायां सुप्रतिबुद्धराजा पद्मावत्याः स्वदेव्याः नागयक्षमन्दिरे पूजार्थं रचितम् अत्यन्तम् अद्भूतं श्रीदाम दृष्ट्वा दूतान् पृच्छति स्म-भो दूताः ! ईदृशं क्वापि श्रीदाम दृष्टम् ? तदा दूतैः प्रोक्तम्-हे राजन् ! मल्लीकन्याया इतोऽपि अधिकतरं दृष्टम् । तस्याग्रे इदं लक्षांशेऽपि नाऽऽयाति । का मल्ली ?

कीदृशी च ? तैः सर्वं स्वरूपं कथितम्। ततः पूर्वभवप्रेमवशाद् मल्लीयाचनार्थं राज्ञा कुम्भराजानं प्रति दूतो मुक्तः ॥ १ ॥ इतश्च चम्पानगर्याम् अरहन्नकप्रमुखा व्यवहारिणः सन्ति। प्रवहणे चटिताः गम्भीरपत्तनं गत्वा, पुनर्द्वीपान्तरं चलिताः। तस्मिन् अवसरे इन्द्रेण अरहन्नकश्रावकस्य सभासमक्षं प्रशंसा कृता—अद्य भरतक्षेत्रे अरहन्नकसदृशो दृढसम्यक्त्वस्य धारकोऽन्यः कोऽपि नास्ति, तद्वचनं श्रुत्वा कोऽपि मिथ्यात्वी देवोऽसहमानस्तत्र आगत्य महदुत्पातान् कृतवान्। मिथ्यात्विलोकाः स्वकीयस्वकीयदेवान् हरि–हरादीन् स्मरन्ति स्म। अरहन्नकस्तु सुश्रावकः सागारम् अनशनं प्रत्याख्याय, वीतरागदेवं स्मरन्, अक्षोभ्यः स्थितः, देवेन बहुप्रकारं क्षोभितोऽपि न क्षुब्धः, ततो देवेन प्रोक्तम्—वीतरागदेवं मुक्त्वा हरि–हरादीन् देवान् स्मर, यथा उत्पातं निवारयामि। नो चेत्तवाऽधर्मेण सर्वान् समुद्रे बोलयिष्यामि, पापं च तव। लोकैरपि सर्वैः प्रोक्तम्—अरहन्नक एवं कुरु। परम् अरहन्नको निजसम्यक्त्वधर्मे दृढः स्थितः ततस्तुष्टश्चलत्कुण्डलाऽऽभरणो भूत्वा, प्रदक्षिणां दत्त्वा, करकमलं योजयित्वा स्तौति स—अहो !! अरहन्नकस्त्वं धन्यः, त्वं कृतपुण्यः, तव जन्म, जीवितं सफलम्; इन्द्रस्त्वां व्याख्यानयति स न्याय्यम् एव। तुष्टोऽस्मि, याचस्व, यत् कथयसि तद् ददामि। अरहन्नकः प्राह—उभयलोकसाधको जिनधर्मो मया प्राप्तोऽस्ति, अन्यत्तु मम किमपि नाऽपेक्षणीयम्। ततोऽमोघं देवदर्शनम् इत्युक्त्वा, अनिच्छतोऽपि कुण्डलचतुष्टयं देवो दत्त्वा स्वस्थानं गतः। अथ ते व्यवहारिणः कुशलेन गम्भीरपत्तनं प्राप्य क्रमाद् मिथिलायाम् आगताः। तत्र कुम्भराज्ञः कुण्डलद्वयं प्राभृतीकृतम्, राज्ञा च मल्लीकुमार्यै दत्तम्। ततश्चम्पायाम् आगताः, तत्र चन्द्रच्छायराज्ञे स्वकीयस्वामिने अन्यत् कुण्डलद्वयं प्राभृतीकृतम्। तस्मिन् अवसरे राज्ञा पृष्टम्—भो व्यवहारिणः ! परदेशे किमपि आश्चर्यं दृष्टम् ? तदा तैर्मल्लीकुमार्याः रूपवर्णनं

कृतम्; न एतादृशं क्वापि रूपमस्ति । ततश्चन्द्रच्छायराजेनाऽपि कुम्भं प्रति दूतो मुक्तः यद् मल्ली मम देया इति ॥ २ ॥ पुनरितश्च अन्यदा मल्लीकुण्डलं भग्नम्, कुम्भेन राज्ञा कुण्डलसन्धानार्थं स्वर्णकारः समादिष्टः; स प्राह–हे देव ! इदं देवसंबन्धि कुण्डलं न मया सन्धातुं शक्यते । ततो रुष्टेन राज्ञा स स्वर्णकारो देशाद् निष्कासितो गतो वाणारस्यां शङ्खराज्ञः समीपे निजावासार्थम् । राज्ञा पृष्टम्–कथं स्वदेशं त्यक्त्वा अत्रागतः ? तेन कुण्डलसंबन्धं कथयता मल्लीरूपवर्णनं कृतम् । तेनाऽपि शङ्खराज्ञा कुम्भं प्रति दूतो मुक्तः ॥ ३ ॥ इतश्च रुक्मी राज्ञाऽपि सुबाहुनाम्न्या निजपुत्र्याः चातुर्मासिकमज्जनं विधाप्य शृङ्गारं कारयित्वा, दृष्टं क्वापि मम पुत्र्याः सदृशं रूपम् ? इति दूताः पृष्टाः; तेऽपि प्राहुः–मल्लीरूपस्याग्रे इदं लक्षांशेऽपि नाऽऽयाति । तेनाऽपि रुक्मिराज्ञा कुम्भं प्रति मल्लीनिमित्तं दूतो मुक्तः ॥ ४ ॥ इतश्च कुम्भपुत्रेण मल्लीलघुभ्रात्रा मल्लदिन्नेन चित्रकरैश्चित्रसभा चित्रयिता चित्रकरेण लब्धिमता यवनिकान्तरितमल्लीपादाङ्गुष्टं दृष्ट्वा मल्लीरूपं तत्स्वरूपं चित्रितमासीत् ॥ तत्र एकदा मल्लदिन्नः स्वभार्याभिः सह क्रीडन् मल्लीरूपं दृष्ट्वा लज्जितः, रोषाद् हस्तौ छित्त्वा चित्रकरो देशाद् निष्कासितः । स हस्तिपुरं गत्वा अदीनशत्रो राज्ञो मिलितः, तेन मल्लीरूपवर्णने कृते, अदीनशत्रुराज्ञाऽपि मल्लीनिमित्तं कुम्भं प्रति दूतो मुक्तः ॥ ५ ॥ एकदा पितुरग्रे राजसभायां धर्मचर्चायाम् एका परिव्राजिका मल्लीकुमार्या जिता, मानभ्रष्टा कृता । सा रुष्टा सती काम्पिल्यनगर्यां गत्वा जितशत्रो राज्ञोऽग्रे मल्लीरूपं पटे लिखित्वा दर्शयति स्म, तेनाऽपि राज्ञा रूपमोहितेन मल्लीकृते कुम्भं प्रति दूतो मुक्तः ॥ ६ ॥ एवं षण्णामपि राज्ञां षडपि दूताः समकालं कुम्भसमीपे आगताः, मल्ली याचिता । राज्ञा सर्वेऽपि दूताऽपमानिताः, न कस्यापि राज्ञो मम पुत्रीमहं दास्यामि । ततः षडपि राजानोऽभिमानेन निजं निजं सैन्यं लात्वा समकालम्

प्रागभवमजानानां षण्णामपि राजकुले समुत्पन्नानां नृपाणां पूर्वस्नेहात् परिणयनार्थं समकालं समागतानां स्वर्णपुत्तलिकादृष्टान्तदर्शनेन प्रतिबोध्य, वर्षदानं दत्त्वा, दीक्षां जग्राह। मार्गशिरः शुक्लएकादशीदिने त्रिंशद्राजपुत्रीभिः सार्धं दीक्षां गृहीत्वा मौनमाधाय, तद्दिने एव केवलं प्राप्य तीर्थं प्रवर्तितम्। एकोनविंशतितमस्तीर्थकरः। मल्लितीर्थकरस्य स्त्रीपर्षदग्रे तिष्ठति, पश्चात् पुरुषाणां पर्षत् तिष्ठति, इति तृतीयम् आश्चर्यकम्। अथ चतुर्थम् आश्चर्यमाह—श्रीमहावीरस्य केवलज्ञानोत्पत्त्यनन्तरं पर्षद् मिलिता, देशनां श्रुत्वा केनाऽपि व्रत-प्रत्याख्यानं न गृहीतम्। तीर्थकरस्य

---

आगत्य मिथिलानगरीं रोधयामासुः। कुम्भराजा बहिःनिस्सृत्य युद्धं कुर्वन् भग्नो मिथिलां प्रविष्टः। ततो मल्लीप्रपञ्चवचनेन राज्ञा सर्वेऽपि आकारिताः। ते राजानो रत्नगृहं प्राप्ताः। षट्सु अपवारिकासु पृथक् पृथक् तस्थुः, तथा मल्लीप्रतिमां साक्षाद् मल्लीमिव दृष्ट्वा मोहिता विलोकयन्ति, तावदेव मल्लीकुमार्या आगत्य पुत्तलिकायाः पिधानं दूरीकृतम्, तेन प्रभूतो दुर्गन्धस्ततः प्रचलितः। तम् असहमानास्ते राजानो वस्त्रेण नासिकां निपीड्य थू-थूकुर्वन्तो नष्टाः। तेषां प्रतिबोधाय मल्ली आगत्य कथयति स्म—हंहो राजानः! यदि रत्नमय्यामपि पुत्तलिकायाम् आहारसंसर्गाद् ईदृशो दुर्गन्धो जातो भवतां घ्रातुं न शक्यः, दुःखावहश्च, तदा स्वाभाविकदुर्गन्धासु स्त्रीषु किम् एतावान् रागः, प्रतिबन्धश्च क्रियते। कथं रागान्धा जाताः। इत्यादिप्रतिबोधवचनपूर्वं पूर्वभवमित्रता कथिता, तदा तेषां जातिस्मरणं जातम्। ततः प्रतिबुद्धैः तैः प्रोक्तम्—अधुना किं कर्तव्यम्? तदा मल्लीकुमार्या प्रोक्तम्—साम्प्रतं यूयं स्वस्वस्थाने गच्छन्तु, मम केवलज्ञाने उत्पन्ने शीघ्रम् आगन्तव्यम्। तेऽपि सर्वे स्वस्वस्थानं गताः॥ पश्चादागत्य दीक्षां ग्रहीत्वा यावद् मुक्तिं प्राप्ताः॥

श्रीःमहावीरस्य देशना निष्फला जाता, इति चतुर्थम् आश्चर्यकम्। अथ पञ्चमम् आश्चर्यम्–कृष्णस्य अमरकङ्कागमनम्, तदुच्यते–काम्पिल्यनगरे द्रुपदो नाम राजा, तस्य चुलनी प्रिया, तस्य द्रुपदी नाम पुत्री वर्तते। प्राप्तयौवना सती तस्याः स्वयंवरमण्डपः समारब्धः। देशेभ्य आहूता राजानो भूरिशः समेयुः। हस्तिनागपुराद् युधिष्ठिरादिपञ्चपुत्रयुतः पाण्डुराजाऽपि आयातः। अर्जुनेन राधावेधः साधितः। तदाऽर्जुनस्य कण्ठे वरमाला क्षिप्ता। परं पूर्वभवे ब्राह्मणस्य भार्या नागश्रीः द्रुपदीजीव आसीत्। साधोः कटुकतुम्बकशाकाऽऽहारदानाद् बहुवारं नरकायुर्भुक्त्वा, अनेकासु तिर्यग्योनिषु भ्रान्त्वा पश्चाद् एकस्य गृहस्थस्य कुले सुकुमालिका नाम्ना पुत्री जाता। यदा यौवनं प्राप्ता तदा पित्रा एकस्य इभ्यपुत्रस्य परिणायिता। ततस्तस्य शरीरे सुकुमालिकायाः शरीरस्य संयोगाद् महादाघः समुत्पन्नः। तदा स त्यक्त्वा गतः। पश्चाद् एको रङ्कस्तस्याः पतित्वेन स्थापितः। तादृशं स्वरूपं ज्ञात्वा तां त्यक्त्वा सोऽपि गतः। पश्चात् सा दुःखाद् वैराग्यं प्राप्य साध्वीनां पार्श्वे दीक्षां जग्राह। तस्मिन् भवे –सुकुमालिकाया जन्मनि–साध्व्या वनमध्ये पञ्चभिः पुरुषैः सह क्रीडन्तीं गणिकां दृष्ट्वा, निजदौर्भाग्यं निन्दन्त्या निदानं कृतम् आसीत्। तेन वरमालाऽवसरे पञ्चानामपि पाण्डवानां कण्ठे वरमाला दृष्टा। गगने देवैः इति उक्तम्–द्रौपदी पञ्चभर्तृकाऽपि सती वर्तते। तदा पञ्चभिः पाण्डवैः परिणीय हस्तिनागपुरे आनीता। सुखेन गृहे तिष्ठति। अन्यदा तत्र नारदर्षिः समागच्छत्। पाण्डवैरासनदानादिना सन्मानितः। क्षणं स्थित्वा,

पुनरन्तःपुरे द्रुपदीं द्रष्टुम् आगतः। द्रौपद्या आगच्छन् दृष्टः, परम् अविरतिनम–प्रत्याख्यानिनं मिथ्यात्विनं ज्ञात्वा न चाऽऽदरो दत्तः, न वन्दितः, नाऽभिलापितः; यथा पूर्वं स्थिता तथैव तूष्णीं स्थिता, तदा रुष्टो नारदर्षिः मनसि इति चिन्तयति–यद् इयं द्रौपदी पञ्चानां भर्तॄणां गर्वं करोति। तदाऽहं नारदो यदा एनां महासंकटे पातयामि। इति विचिन्त्य धातकीखण्डे पूर्वदिग्भरतक्षेत्रेऽमरकङ्काराजधान्यां कपिलवासुदेवस्य सेवकः पद्मनाभराजाऽस्ति। स पद्मनाभः स्ववाटिकायां स्वस्त्रीभिः समं क्रीडां करोति। तत्र नारदर्षिरगमत्। तदा पद्मनाभेन वन्दित्वा, सन्मानं दत्त्वा पृष्टः–भो ऋषे! भवद्भिः सर्वत्र भ्रमणं क्रियते, यादृश्यो मदीया रूपवत्यो नार्यस्तादृश्योऽन्यस्याऽपि कस्यचिद्? इति पृष्टः। नारदोऽवसरं दृष्ट्वाऽवादीत्–भो पद्मनाभ! त्वं कूपदर्दुरवद् दृश्यसे, यथा कश्चित् समुद्रदर्दुरः कूपदर्दुराऽभ्यर्णे आजगाम। तदा कूपदर्दुरोऽवादीत्–भोः! त्वं क्व तिष्ठसि? कुत आगतः? इति पृष्टः समुद्रदर्दुरस्तं प्रत्याह–भोः! समुद्रेऽहं तिष्ठामि, समुद्राद् आगतोऽहम्। पुनः कूपदर्दुरः प्राह–कियान् समुद्रो महान् अस्ति? इति पृष्ट्वा स्वचरणौ प्रसार्य अदर्शयद् इयत्प्रमाणः किम्? नहि, वृद्धः। तदा कूपदर्दुरः कूपस्यैककोणाद् उत्प्लुत्याऽन्यस्मिन् कोणे गत्वा वदति–इयत्प्रमाणोऽस्ति? पुनः समुद्रदर्दुरोऽवदत्–अतस्तु महाप्रमाणोस्ति। पुनः कूपदर्दुरः कूपस्याऽन्तः प्रदक्षिणां भ्रान्त्वा कथयामास इयत्प्रमाणः समुद्रः? तदा समुद्रदर्दुरः प्राह–महत्प्रमाणः समुद्रः। तदा कूपदर्दुरः श्रुत्वा रुष्टः, भो असत्प्रलापिन्! याहि दूरे।

नास्ति समुद्रः । चेद् अस्मादपि अधिकस्तदा नास्त्येव । तादृशस्त्वम् असि । त्वया एतावन्त्य एव स्त्रियो दृष्टाः, तेन त्वम् एतासु एव प्राधान्यं मनुषे, परन्तु मया यादृशी हस्तिनागपुरे द्रौपदी पाण्डवानां स्त्री रूपवती दृष्टा तादृशी त्रिभुवनेऽपि न वरीवर्तते । तस्या वामाङ्गुष्ठनखोपरि सर्वास्त्वदीया नार्यः परिभ्राम्याऽपाक्रियन्ते, एवमुक्त्वा नारदोऽन्यत्राऽगमत् । तदा पद्मनाभो मनसि इत्यचिन्तयत्–अहो !! मे जन्म तदैव सफलं यदा तादृशी मम स्त्री स्यात् । परं सा स्त्री कथम् आनीयते ? अत्र तस्या आनयने कश्चिद् उपायः कर्तव्यः । इति चिन्तयित्वा पौषधशालायां समागत्य उपवासत्रयं कृत्वा, पूर्वसङ्गतिकदेवताऽऽराधनं चक्रे । तृतीये दिवसे देवः प्रकटीभूय बभाषे । किमर्थम् अहं त्वयाऽऽराधितः ? कार्यं वद । इत्युक्ते पद्मनाभो वदति स्म–द्रुपदीम् आनीय देहि । तदा देवेन उक्तम्–सा सती वर्तते, शीलं न खण्डयिष्यति । राज्ञा कामान्धेन उक्तम्–भवतु, परं त्वं तु अत्राऽऽनय । वरम्, इत्युक्त्वा द्रौपदीं स्वकीयभुवनप्रसुप्तां देवमायया उत्पाट्य पद्मनाभाय समर्पिता । पद्मनाभेन अशोकवाटिकायां मोचिता । मुक्त्वा देवोऽभाणीत्–त्वया मम पार्श्वे सतीनार्या अपहारः कारितस्तद् अनिष्टं विहितम् । तस्माद् अतःपरं न स्मरणीयः । अहं नागमिष्यामि इत्युक्त्वा स्वस्थाने जगाम । अथ प्रभाते द्रौपदी जागृता सती विस्मिता इतस्ततश्चकितमृगी इव विलोकयामास । का इयं वाटिका ? किमिदं मन्दिरम् ? कुत्राऽऽगता ? किमहं स्वप्नं पश्यामि ? क्व मे मन्दिरम् ? क्व मे भर्तारः ? यावद् एवं विचारयति तावद्

आगत्य पद्मनाभो वदति स्म हे द्रौपदि ! चिन्तां मा कुरु, पद्मनाभो नृपोऽस्मि अहम् । मया देवशक्त्या त्वमपहारिता भोगार्थम्, मया सह भोगान् भुङ्क्ष्व, अहं तवाऽऽज्ञाकारी वर्तेयम् । तदा स्वशीलपालनाय द्रौपदी जजल्प–अहो !! देवानुप्रिय ! षण्मासं यावद् मम नामाऽपि न ग्राह्यम् । षण्मासमध्ये मत्पृष्ठे पाण्डवाः, तथा तेषां भ्राता श्रीकृष्णदेव एते मम शुद्ध्यर्थम् अवश्यं समेष्यन्ति । चेत् षण्मासे नाऽऽयास्यन्ति तदा त्वं वक्ष्यसि तत् करिष्यामि । द्रौपद्या इत्युक्तं श्रुत्वा पद्मनाभोऽपि वरम्, इत्युक्त्वा तस्थौ । मनसि ज्ञातं कोऽत्र समेष्यति । अन्तराले महान् लवणसमुद्रः पतितोऽस्ति । द्रौपदी अपि आचाम्लतपः कुर्वाणा तिष्ठति । अथ प्रभाते द्रौपदी यदा पाण्डवैर्मन्दिरे न दृष्टा, तदा सर्वत्र शुद्धिः कृता । कुत्राऽपि न लब्धा । तदा द्वारिकायां गत्वा कुन्त्या कृष्णाय उक्तम्–पुत्र ! द्रौपदी केनाऽपि देवेन वा, दानवेन वा, राक्षसेन वा, विद्याधरेण स्वमन्दिराद् रात्रौ अपहृता । सर्वत्र दृष्टा परं कुत्राऽपि शुद्धिर्न लब्धा । त्वत्तः शुद्धिर्भविष्यति । कृष्ण ईषद् हास्यपूर्वकं प्राह–पञ्च पाण्डवा भर्तार एकस्यापि कामिन्या रक्षणे न समर्थाः । अहं तु एकः सन् द्वात्रिंशत्सहस्रप्रमितानां स्त्रीणां रक्षां करोमि । तदा पुनः कुन्ती प्राह–पुत्र ! नाऽयं हास्याऽवसरः । त्वरितं द्रौपद्याः शुद्धिः कार्या, आशु इति वचः श्रुत्वा यावद् द्रौपद्याः शुद्धिकरणे कृष्ण उपायं चिन्तयति, तावत् तत्र नारदः समाजगाम । कृष्णं चिन्ताऽऽतुरं दृष्ट्वा नारदः प्राह–कथमद्य यादवाश्चिन्तातुराः ? कथमत्र कुन्ती आयाता ? तदा कृष्णेन उक्तम्–यूयं देव-

पय:, श्रमद्भिर्भवद्भि: कुत्राऽपि द्रौपदी दृष्टा न वा? तस्या: केनाऽपि अपहार: कृतोऽस्ति न ज्ञायते। तदा नारदोऽवादीत्–सा तादृशी एव दुष्टा आसीत्। कमपि तापसम्, श्रमणम्, योगिनं न मानयति स्म। दुष्टानां यद् दु:खं पतति तत् स्तोकम्। मया तु सा सम्यग् नोपलक्ष्यते, परं तादृशी एव एकदा धातकीखण्डेऽमरकङ्काऽधिपस्य पद्मनाभस्याऽशोकवाटिकायां मया दृष्टाऽभूत्, परं सम्यग् न जानामि इत्युक्त्वा नारदोऽगात्। अथ श्रीकृष्णदेवोऽपि नारदविलसितं जानाति स्म, तद् ज्ञात्वा पाण्डवै: ससैन्यकृष्णदेवोऽमरकङ्कां प्रति चचाल। अनुक्रमेणाऽखण्डप्रयाणै: संचरन् समुद्रं यावत् समाजगाम। तत्रोपवासत्रयं कृत्वा कृष्णेन लवणसमुद्राधिप: समाराधित: सन् प्रकटीभूयेत्थं बभाण–किमर्थं स्मृत:? भवतां यत् प्रयोजनं भवति तद् वक्तव्यम्। तदा कृष्णोऽवादीत्–अस्माकं धातकीखण्डेऽमरकङ्कायां गन्तव्यमस्ति, अस्मत्सैन्यस्य मार्गो दातव्य:, अस्माकं द्रौपदी आनेतव्या। तदा देवो वदति स्म–इन्द्राऽऽज्ञां विना मार्गो दातुं न शक्यते भवतां चेदाज्ञा भवेत् तदाऽत्रैव द्रौपदी मयाऽऽनीय दीयते। पद्मनाभमपि अमरकङ्कासहितमेवाऽस्मिन् समुद्रे पातयामि। तदा कृष्णोऽवादीत्–हे देवाऽनुप्रिय! त्वम् एतादृश एव शक्तिमान् वर्तसे, परमस्माकं षड्रथानां मार्गं देहि। अहं यास्यामि, तं पद्मनाभमनिष्टं साधयिष्यामि। तदा देवेन समुद्रे षण्णां रथानां मार्गो दत्त:। कृष्ण: पाण्डवै: सह समुद्रम् उल्लङ्घ्याऽमरकङ्काया अग्रोद्याने उत्तीर्य एको दूत: प्रेषित:। दूतो

गत्वा पद्मनाभं प्राह–अहो पद्मनाभ ! श्रीकृष्णदेवः समागतोऽस्ति, द्रौपदीं मत्सार्थे प्रेषय। त्वया सम्यग् न कृतं यत् पाण्डवानां स्त्री अपहृता, तथाऽपि किमपि विनष्टं नास्ति, देहि द्रौपदीम्। इति श्रुत्वा पद्मनाभ आह–रे दूत ! मया द्रुपदी दानार्थं नाऽऽनीताऽस्ति। याहि, तव स्वामिनं प्रति वक्तव्यम्–मया द्रौपदी मम बलोपरि समानीताऽस्ति। चेद् यूयं समागताः स्थ तदा भवद्भिर्युद्धसज्जैर्भाव्यम्, विलम्बो न विधेयः, अहमपि क्षत्रियोऽस्मि, एवम् उक्त्वा दूतो निर्भर्त्स्य निष्काषितः। स दूत आगत्य सर्वं स्वरूपं कृष्णाय निवेदयामास। कृष्णेन चिन्तितम्, असाध्यरोग औषधैर्विना न याति इति चिन्तयित्वा सन्नद्धबद्धीभूय कृष्णो यावद् रणोद्यतो जातस्तदा पश्चापि पाण्डवाः शस्त्राणि धृत्वा रथेष्वारुह्य कृष्णं प्रत्यूचुः भो स्वामिन् ! अस्माकं कार्यमेतत्, वयं युद्धं करिष्यामः। चेद् वयं भङ्गं प्राप्नुमस्तदाऽस्माकं भवद्भिः पृष्ठतः सहायो विधेयः। इति श्रुत्वा कृष्णेन उक्तम्, भवन्तोऽतीव योद्धारो वर्तन्ते, परन्तु अस्मिन् अवसरे भवद्वाणीप्रसादाद् भवतां भङ्गो भावी। इति श्रुत्वाऽपि पाण्डवाः कृष्णाऽऽज्ञया युद्धाय चेलुः। पद्मनाभोऽपि महतीं सेनां लात्वा पाण्डवैः सह युयुधे । भवितव्यतावशात् पद्मनाभाऽग्रे पाण्डवा भङ्गं प्रापुः। नश्यद्भिः सिंहनादश्चक्रे, सिंहनादं श्रुत्वा, पाण्डवानां भङ्गं ज्ञात्वा, रथे स्थित्वा, करे धनुर्धृत्वा पद्मनाभस्य सेनाम् एकाकिना रथेनैव मथयामास । धनुषष्टङ्कारशब्देनैव भग्नाः सर्वेऽपि पद्मनाभस्य भटाः । कृष्णस्याऽग्रे पद्मनाभो नष्ट्वा, पुरीं प्रविश्य वप्रस्य प्रतोलीं दत्त्वा स्थितः। तदा

कृष्णो रुष्टश्चिन्तयामास । मां दुर्गस्य बलं दर्शयति एष वराकः, तदाऽहं हरिर्यदा हरिवद् एनं पद्मनाभं गज इव मारयामि, इत्युक्त्वा नृसिंहरूपं विधाय, हस्ततलास्फालनेन सर्वमपि दुर्गं पातयामास । सर्वमपि नगरं चकम्पे । मन्दिराणि सर्वाणि पतन्ति स्म । कृष्णपराक्रमम् ईदृशं दृष्ट्वा भीतः पद्मनाभो द्रौपद्याः शरणं गत्वा जगाद रक्ष रक्ष महासति ! मां कृष्णात् । तदा द्रौपद्याऽभाणि हे वराक ! मया पूर्वमेव उक्तं मम पृष्ठे समेष्यन्ति कृष्णादयो बलिष्ठाः सन्ति । अथ श्रीकृष्णदेवः सत्पुरुषोऽस्ति, यदा जीवितव्याऽऽशां कुरुषे तदा मदुक्तं वचनं मानय । स्त्रीवेषं कुरु, मुखे तृणं गृहाण, मामग्रे कृत्वा श्रीकृष्णस्याऽभ्यर्णे समागच्छ । अहं त्वां तत्पादयोः पातयिष्यामि । स तु नम्राणाम् उपरि कोपं न करोति । एवं कृते सति तव जीवितव्यं भविष्यति, नाऽन्यथा जीवितव्योपायः । तेनाऽपि एवं कृतम् । यदा कृष्णचरणे लग्नः । तदा कृष्णेन उक्तम्–रे पद्मनाभ ! त्वम् एवं नाऽज्ञासीद् इयं कृष्णस्य भ्रातृजाया वर्तते । अस्याः पृष्ठे कृष्णो नाऽऽयास्यति ? परन्तु अन्धः पुमान् मस्तके भग्ने सत्येव बुध्यति । याहि जीवन्, त्वत्कृतस्य कर्मणः फलं तवैव भवतु । द्रौपद्या त्वं जीवन् मोचितः, इत्युक्त्वा तं पादयोः पातयित्वा द्रौपदीं लात्वा पाण्डवैः सह कृष्णदेवश्चचाल । मुदितः पाञ्चजन्यं पूरयामास । तच्छब्दो श्रीमुनिसुव्रतस्वामिनामा तीर्थकरस्याऽग्रे स्थितेन तत्रत्यवासुदेवेन कपिलनाम्ना श्रुतः । तीर्थंकरः पृष्टः–स्वामिन् ! मदीयः शङ्खः केन पूरितः ? किं कश्चिद् नवीनो वासुदेवः समुत्पन्नः ? तदा मुनिसुव्रतस्वामिना तत्र कृष्णा-

ॐ अर्हम् , श्रीपञ्चपरमेष्ठिभ्यो नमः ।

चतुर्दशपूर्वधर-श्रुतकेवलि-आर्यश्रीभद्रबाहुस्वामिसमुद्धृतम्—

# श्रीकल्पसूत्रम् ।

श्रीलक्ष्मीवल्लभोपाध्यायविरचितकल्पद्रुमकलिकाख्यव्याख्यया विभूषितम् ।

श्रीमत्सुमतिसागरोपाध्यायशिष्याणुमुनिश्रीमणिसागरस्य सदुपदेशेन, कच्छदेशस्थ-वराडीयाग्रामवास्तव्येन श्राद्धवर शिवजी करमशी तथा कुंवरजी शिवजी इत्यस्य स्मरणार्थम् गंगाबाई-मातुरादेशेन वेलजी शिवजी इत्यनेन मुम्बय्यां निर्णयसागरमुद्रालये मुद्रापयित्वा प्रकाशितम् ।

वीरनिर्वाण २४४४, विक्रमसंवत् १९७५, सन १९१८.

साधु-साध्वी-यति-श्रीपूज्य-ज्ञानभंडार-लायब्रेरी अने संघने भेट मळवानुं ठेकाणुं—वेलजी शिवजी कुंपनी दाणाबन्दर, मुंबई.

कृष्णो रुष्टश्चिन्तयामास । मां दुर्गस्य बलं दर्शयति एष वराकः, तदाऽहं हरिर्यदा हरिवद् एनं पद्मनाभं गज इव मारयामि, इत्युक्त्वा नृसिंहरूपं विधाय, हस्ततलास्फालनेन सर्वमपि दुर्गं पातयामास । सर्वमपि नगरं चकम्पे । मन्दिराणि सर्वाणि पतन्ति स्म । कृष्णपराक्रमम् ईदृशं दृष्ट्वा भीतः पद्मनाभो द्रौपद्याः शरणं गत्वा जगाद रक्ष रक्ष महासति ! मां कृष्णात् । तदा द्रौपद्याऽभाणि हे वराक ! मया पूर्वमेव उक्तं मम पृष्ठे समेष्यन्ति कृष्णादयो बलिष्ठाः सन्ति । अथ श्रीकृष्णदेवः सत्पुरुषोऽस्ति, यदा जीवितव्याऽऽशां कुरुषे तदा मदुक्तं वचनं मानय । स्त्रीवेषं कुरु, मुखे तृणं गृहाण, मामग्रे कृत्वा श्रीकृष्णस्याऽभ्यर्णे समागच्छ । अहं त्वां तत्पादयोः पातयिष्यामि । स तु नम्राणाम् उपरि कोपं न करोति । एवं कृते सति तव जीवितव्यं भविष्यति, नाऽन्यथा जीवितव्योपायः । तेनाऽपि एवं कृतम् । यदा कृष्णचरणे लग्नः । तदा कृष्णेन उक्तम्–रे पद्मनाभ ! त्वम् एवं नाऽज्ञासीद् इयं कृष्णस्य भ्रातृजाया वर्तते । अस्याः पृष्ठे कृष्णो नाऽऽयास्यति ? परन्तु अन्धः पुमान् मस्तके भग्ने सत्येव बुध्यति । याहि जीवन्, त्वत्कृतस्य कर्मणः फलं तवैव भवतु । द्रौपद्या त्वं जीवन् मोचितः, इत्युक्त्वा तं पादयोः पातयित्वा द्रौपदीं लात्वा पाण्डवैः सह कृष्णदेवश्चचाल । मुदितः पाञ्चजन्यं पूरयामास । तच्छब्दो श्रीमुनिसुव्रतस्वामिनामा तीर्थंकरस्याऽग्रे स्थितेन तत्रत्यवासुदेवेन कपिलनाम्ना श्रुतः । तीर्थंकरः पृष्टः–स्वामिन् ! मदीयः शङ्खः केन पूरितः ? किं कश्चिद् नवीनो वासुदेवः समुत्पन्नः ? तदा मुनिसुव्रतस्वामिना तत्र कृष्णा-

ॐ अर्हम् , श्रीपञ्चपरमेष्ठिभ्यो नमः ।

चतुर्दशपूर्वधर-श्रुतकेवलि-आर्यश्रीभद्रबाहुस्वामिसमुद्धृतम्—

# श्रीकल्पसूत्रम् ।

श्रीलक्ष्मीवल्लभोपाध्यायविरचितकल्पद्रुमकलिकाख्यव्याख्यया विभूषितम् ।

श्रीमत्सुमतिसागरोपाध्यायशिष्याणुमुनिश्रीमणिसागरस्य सदुपदेशेन, कच्छदेशस्थ-वराडीयाग्रामवास्तव्येन श्राद्धवर शिवजी करमशी तथा कुंवरजी शिवजी इत्यस्य स्मरणार्थम् गंगाबाई-मातुरादेशेन वेलजी शिवजी इत्यनेन मुम्बय्यां निर्णयसागरमुद्रालये मुद्रापयित्वा प्रकाशितम् ।

वीरनिर्वाण २४४४, विक्रमसंवत् १९७५, सन १९१८.

साधु-साध्वी-यति-श्रीपूज्य-ज्ञानभंडार-लायब्रेरी अने संघने भेट मळवानुं ठेकाणुं—वेलजी शिवजी कुंपनी दाणाबन्दर, मुंबई.

# उद्घोषणा।

भोः! भोः! भव्याः! श्रूयताम् श्रूयताम् अशेषकर्मनिकन्दिनि, सकलमङ्गलकारिणि श्रीपर्युषणापर्वणि समागते सति परनिन्दा–द्वेष–मात्सर्य–विषय–कषाय–प्रमादादित्यागेन सर्वैः सह मैत्रीप्रमोदादिभावयुक्तेन, संवरनिर्जरासहितेन च अर्हत्प्रभृतिविंशतिस्थानकानि द्रव्यभावाभ्यां यथाशक्ति आराधनीयानि, परं च देवगुरुधर्मस्याऽवर्णवादादिकथनेन कलह–कषाय–वैर–विरोधाऽऽदिपश्चाऽऽश्रवकर्मबन्धकारणानि संसारवर्द्धन–दुर्लभबोधि–हेत्वादीनि विशेषेण निराकरणीयानि, पुनरपि अस्मिन् पर्वणि समागते सर्वकर्मक्षयकारकम्, मङ्गलनिधानम्, स्वर्गाऽपवर्गहेतुः, शासननायक–श्रीवर्धमानस्वामिनः चरित्रं विधि–उपयोगादियुक्तेन शुभभावेन श्रवणीयम्; तच्च अनन्तकर्मह्रासकम्, अनन्तपुण्यवृद्धिकर न भवति, तत्र केचित् साधवः–तस्मिन् व्याख्याने द्रव्यगच्छपरंपराऽऽग्रहेन "निघगोत्रविपाकरूपस्य, अतिनिन्द्यस्य, आश्चर्यरूपस्य, गर्भापहारस्याऽपि कल्याणकथनं अनुचितम्" इत्यादि–वाक्यैः श्रीवर्धमानस्वामिनः षट्कल्याणकादिनिषेधकथनं मङ्गलिके पर्वणि अमङ्गलरूपम्, कषायोत्पादकम्, तीर्थंकरस्यावर्णवादरूपं भववृद्धिकरम् च कुर्वंति, तद् असत्यं यतः–कल्पा–ऽऽचाराङ्ग–स्थानाङ्गादिषु आगमेषु, तथा आवश्यकनिर्युक्ति–चूर्णि–महापुरुषचरित्र–श्रीवीरचरित्रादिप्राचीनसिद्धान्ते तीर्थंकर–गणधर–पूर्वधर–पूर्वाचार्यैः श्रीवीरस्य षट् कल्याणकानां प्रतिपादितत्वात्। तथा श्रीखरतरगच्छाधीश्वर नवाङ्गीवृत्तिकारेण श्रीमद्अभयदेवसूरिणाऽपि श्रीस्थानाङ्गसूत्रवृत्तौ श्रीपद्मप्रभ–सुविधि–शीतलादिपार्श्वनाथपर्यन्तानां त्रयोदशतीर्थंकराणा पञ्चमे कल्याणके निर्वाणम् उक्तं तथैव श्रीवीरस्य पञ्चमे कल्याणके केवलज्ञानोत्पत्तिर्दर्शिता, तथा

षष्ठे–"निर्वृतस्तु स्वातिनक्षत्रे कार्तिकाऽमावास्यायाम्" इति षष्ठं कल्याणकं प्रकटतया दर्शितम्, किञ्च समवायाङ्गसूत्रवृत्तौ अपि देवानन्दागर्भात् त्रिशलागर्भसंक्रमणे भवद्वयं विवक्षितम्, अत एव श्रीवीरस्य च्यवनद्वयसंसिद्धम्, एवं लोकप्रकाशे द्वात्रिंशत्तमे सर्गेऽपि द्रष्टव्यम्, तथा चतुर्दशपूर्वधरश्रीभद्रबाहुस्वामिनाऽपि कल्पसूत्रे, त्रिशलागर्भाऽऽगमनस्य तीर्थंकरस्य च्यवनकल्याणकतया प्रतिपादितम्—"इमे एयारिसे सुभे सोमे पियदंसणे सुरूवे सुमिणे दट्ठूण सयणमज्झे पडिवुद्धा अरविंदलोयणा हरिसपुलइअंगी 'एए चउदस सुमिणे, सव्वा पासेइ तित्थयर माया। जं रयणिं वक्कमइ, कुच्छिसि महायसो अरिहा ॥१॥' तए णं सा तिसला खत्तियाणी इमे एयारूवे उराले कल्लाणे चउदस महासुमिणे पासित्ता णं पडिवुद्धा समाणी हट्ठ तुट्ठ जाव० हियया इत्यादि ॥" एवं कलिकालसर्वज्ञश्रीहेमचन्द्रसूरिणाऽपि—त्रिषष्टिशलाकापुरुषचरित्रे दशमपर्वणि द्वितीयसर्गे—आश्विनकृष्णत्रयोदश्याम् एव त्रिशलागर्भाऽवतरणसमये तीर्थंकरस्य च्यवनसूचकचतुर्दशस्वप्रदर्शनम्, इन्द्रासनप्रकम्पनम्, अवधिनाऽवलोकनम् सिंहासनाद् उत्थानम्, शक्रस्तवनेन स्तुतिकरणं स्वप्नफलं तीर्थंकरजन्म, धन–धान्यादिवृद्धिकरणं च कल्याणकयोग्यं योग्यतया वर्णितम्, तथा श्रीपार्श्वनाथस्वामिपरंपरायाः उकेशगच्छीयश्रीदेवगुप्तसूरिकृतकल्पटीकायाम्, श्रीवडगच्छीयविनयचन्द्रोपाध्यायकृतकल्पनिरुक्तौ, चन्द्रगच्छीयपृथिवीचन्द्रसूरिकृतकल्पटिप्पणके, तपगच्छीयकुलमण्डनसूरिकृतकल्पावचूरौ, अन्याचार्यकृतकल्पान्तरवाच्ये, अञ्चलगच्छीयोदयसागरमुनिकृतकल्पलघुटीकायाम्, पार्श्वचन्द्रगच्छीयब्रह्मर्षिकृतदशाश्रुतस्कन्धवृत्तौ इत्यादि सर्वत्र सर्वैः श्रीवीरस्य षट् कल्याणकानि प्रकटतया प्रतिपादितानि, विशेषार्थिना अस्य प्रथमव्याख्यानात्, तथा अस्मत्कृतबृहत्पर्युषणानिर्णयाद् ज्ञेयः

तथा चन्द्रप्रज्ञप्ति, सूर्यप्रज्ञप्ति–समवायाङ्ग–जम्बूद्वीपप्रज्ञप्ति–भगवती–अनुयोगद्वारादिषु आगमेषु, निशीथ–बृहत्कल्प–भाष्य–चूर्णि–वृत्ति–

कल्पाऽऽ—राक—दशवैकालिकनिर्युक्ति—चूर्णि—वृहद्वृत्ति—स्थानाङ्गसूत्रवृत्ति—ज्योतिष्करण्डक—प्रवचनसारोद्धारादिषु च, समयावलिकामुहूर्त्त-दिनपक्षमासवर्षयुगादिकालगणनायाम् अधिकमासस्य दिवसा गणिता एव तथा निशीथचूर्ण्यादौ अधिकमासस्य कालचूलाकथनेऽपि दिनगणनं कृतम्, अत एव तस्य निषेधकरणे शास्त्रपाठोत्थापकतादोषः तथा लौकिकशास्त्रेऽपि—धर्मसिन्धु—निर्णयसिन्धु—निर्णयदीपिकादौ अपि अधिकमासस्य—अगमासस्यापि दिनानि गणितानि, इति-जैन-लौकिकशास्त्रे संगतत्वाद्, अधिकमासस्य दिवसा गणनीया एव भवन्ति, तथा निशीथ—बृहत्कल्पभाष्य—चूर्णि—वृत्ति—पर्युषणाकल्पनिर्युक्ति—चूर्णि—समवायाङ्ग—स्थानाङ्गसूत्रवृत्त्यादौ जैनसिद्धान्ते पर्युषणाराधनं वर्षाकाले पञ्चाशतैव दिनैः उक्तत्वात् संप्रति मासवृद्धौ अपि द्वितीयश्रावणे, प्रथमभाद्रपदे वा अधुना जैनटिप्पनकाऽभावे लौकिकट्टिप्पनकानुसारेणाऽपि कर्तव्यम्, अत्र केचिद् मासवृद्धौ अपि समवायाङ्गपाठानुसारेण पर्युषणापश्चात्, सप्ततिर्दिनानि स्थापयन्ति तन्न सत्यम्, तत्र मासवृद्ध्यऽभावाऽपेक्षया लिखितं ज्ञेयम्, तस्माद् अधिकमासस्य समागमने पश्चाद् दिवसशतं तदा न कोऽपि दोषः अस्य विशेषः निर्णयो नवमव्याख्यानात्, तथा अस्मत्कृत वृहत्पर्युषणा-निर्णयग्रन्थाद् अवगन्तव्यः॥ तथा व्यवहारचूर्णि—धर्मरत्नप्रकरणवृत्त्युक्तनियमात्—आगमेऽनिषिद्धा, निरवद्या, गीतार्थैः सम्मता, देशकालानुसार विशेषलाभकारिका परम्पराऽऽयाता आचरणाप्रवृत्तिर्माननीया एव भवति, तस्माद् व्याख्यानसमये मुखाग्रे मुखवस्त्रिकाबन्धनम्, तथा संयमि-साधोरभावे साध्व्याः परिषदग्रे धर्मशास्त्रस्य व्याख्यानकरणं विशेषलाभहेतुकम्, निर्जराकारणम् च, अतो शास्त्रश्रवणस्य अन्तरायभूतं न युक्तं निषेधकरणम्, पूर्वाचार्यस्य शास्त्रस्य वा अवगणनाप्रसंगः स्यात्, तेन भवभीरुभिः जनैः न निषेधनीयम्, इति, शुभम्॥

परमेष्ठिपिण्डगणतत्त्वेन्दुवर्षे आपाढशुक्लतृतीयागुरुवासरेऽलेखि श्रीमत्सुमतिसागरोपाध्यायशिष्याणुमुनिना **मणिसागरेण, मुंबई.**

ऽऽगमनकारणं प्रोक्तम्। श्रुत्वा, तीर्थकराऽऽज्ञां गृहीत्वा मिलनाय उत्थितः, त्वरितं समुद्रोपकण्ठे समागतः, तदा ते षडपि रथाः समुद्रमध्ये व्रजन्तो दृष्टाः, शङ्खमध्ये प्रोक्तम्—स्थीयतां स्थीयताम्, हे सखे! पश्चाद् एकवारम् आगन्तव्यम्, अहमत्र भवद्दर्शनार्थं समागतोऽस्ति। कृष्णेनाऽपि शङ्खमध्ये उक्तम्, हे भ्रातः! वयं बहुतरं समुद्रमार्गम् उल्लङ्घ्याऽऽगताः, अथ पश्चाद् आगन्तुं न शक्यते, भवद्भिः कृपा रक्षणीया, स्नेह एधमानः कर्तव्यः, इत्युक्त्वा श्रीकृष्णदेवश्चचाल। कपिलोऽपि पद्मनाभं निर्भर्त्स्य स्वराजधानीं गतः। अथ च कृष्णदेवः सर्वसमुद्राऽध्वानम् उल्लङ्घ्य गङ्गायास्तटे स्थितः। तदा लवणाऽधिपेन सह वार्तां चकार। पाण्डवान् प्रत्युवाच, भो पाण्डवाः! यावद् अहं लवणाधिपेन सह वार्तां करोमि तावद् भवद्भिर्नावा कृत्वा गङ्गां समुत्तीर्य नौः पश्चात् प्रेष्या। पाण्डवा द्रौपदीसहिता नावमारुह्य गङ्गां समुत्तीर्य, पारे समागत्य नावं च एकत्र गोपयित्वा स्थिता विलोकयन्ति। श्रीकृष्णो भुजाभ्यां बलेन गङ्गाम् उत्तीर्याऽऽयाति नाऽऽयाति वा, इति विचार्य नौर्न मुक्ता। श्रीकृष्णो बहुवारं स्थित्वा यदा नौर्नाऽऽगता तदा चिन्तितम्, पाण्डवाः किं क्काऽपि त्रुडिता ज्ञायन्ते? नौर्भग्ना, इति चिन्तयित्वा चत्वारो भुजाः प्रकल्पिताः। एकभुजेन सारथिना सहितो रथमुत्पाटितः। द्वितीयभुजेन शस्त्राणि गृहीतानि। तृतीयभुजेन हयौ गृहीतौ। चतुर्थभुजेन गङ्गानदीं तरितुं प्रारेभे। सा सार्धद्विषष्टियोजनविस्तीर्णा वर्तते। एवं कृष्णो चतुर्भुजेन गङ्गां तरन् अतीव खिन्नो मध्ये हारितः। तदा गङ्गादेव्या प्रगटीभूय साहाय्यं कृतम्, मध्ये स्थलं विकुर्वितम्। तत्र विश्रामं

गृहीत्वा पुनः स्वस्थीभूय गङ्गाम् उत्तीर्य तटे आगतः । तदा पाण्डवान् सहासान् नौसहितान् दृष्ट्वा श्रीकृष्णदेवो भृशं चुकोप । भो पाण्डवाः ! भवद्भिर्नौः कथं न मुक्ता ? पाण्डवैरुक्तम्-स्वामिन् ! अस्माभिर्भवद्बलदर्शनार्थं न मुक्ता । श्रुत्वा कृष्णो रुष्टः कथयामास-भोः! यदा पद्मनाभाग्रे यूयं पञ्चाऽपि नष्टाः, मया एकेनैव जितः, जित्वा द्रौपदी भवतां समर्पिता तदा मद्बलं न दृष्टम्, यदधुना गङ्गातरणे मद्बलं विलोकयितुं यूयं स्थिताः । यान्तु पापिष्ठा मम लोचनाद् दूरे, मम देशे मा तिष्ठन्तु भवन्त इत्युक्त्वा गदया तेषां पञ्चानां रथान् चूर्णीचकार । स्वयं द्वारिकायाम् आयातः । तदा कुन्त्या श्रुतं श्रीकृष्णदेवेन रुष्टेन पाण्डवा देशाद् निष्कापिताः । कुन्ती कृष्णसमीपे आगत्य विज्ञप्तिं कृत्वा कृष्णाज्ञया पाण्डवान् आहूय पादयोः पातिताः । तदा कृष्णाज्ञया तत्रैव 'रथमर्दनम्' पुरं नवीनं पाण्डवाः वासयामासुः । केचित् 'पाण्डुमथुरा' इति वदन्ति स्म । कृष्णसेवां कुर्वन्ति । कृष्णवासुदेवो धातकिखण्डे गतः, कपिलवासुदेवसार्धं शङ्खशब्दैः कृत्वा वार्ता चकार । इदमपि पञ्चमम् आश्चर्यकं जातम् ॥ अथ षष्ठं कथ्यते-कौशाम्बीनगर्यां श्रीमहावीरः समवसृतः, तत्र सूर्याचन्द्रमसौ स्वकीयमूलविमाने स्थित्वा समागतौ । एतद् अपि आश्चर्यकं षष्ठम् ॥ अथ सप्तमं कथ्यते-कौशाम्ब्यां नगर्यां वीरो नामा कोलिको वसति, वनमाला तस्य प्रिया । अन्यदा तां वनमालाम् अतीव रूपवतीं दृष्ट्वा नगरराजा रागवान् जातः । वनमालाऽपि राजानं दृष्ट्वा रागवती जाता । अमात्येन दूतीसंचारं कृत्वा नृपस्याऽन्तःपुरे समानीता । राजा

तया सह सुखं भुञ्जानस्तिष्ठति । अथ च वीराऽऽख्यः कौलिकस्तद्विरहाद् ग्रहिलीभूय हा ! ! ! वनमाला इति जल्पन् नगरगलिकासु परिभ्रमति । एकदा वर्षाकाले राज्ञा, वनमालया च प्रासादगवाक्षेण दृष्ट्वा चिन्तितम्, द्वाभ्यां विचारितम्–मया पापिष्ठेन परस्त्री अपहृता । वनमालया विचारितम्–मया पापिष्ठया एतादृशः स्नेहवान् यो मद्विरहेण ग्रहिलो जातः स पतिस्त्यक्तः । आवयोः कागतिर्भविष्यति । इति विचारं कुर्वतोस्तयोः उपरि दैवयोगाद् विद्युत् पपात । ततो द्वौ अपि मृत्वा शुभध्यानाद् हरिवर्षक्षेत्रे युगलत्वेन समुत्पन्नौ । वीराख्योऽपि तौ मृतौ श्रुत्वा समीचीनो भूत्वा तापसीभूय मृत्वा किल्बिषदेवत्वेन उत्पन्नः । तदा ज्ञानेन दृष्टौ तौ युगलत्वेन समुत्पन्नौ । मनसि चिन्तितम्, एतौ युगलभवात् च्युत्वा देवौ भविष्यतः । मम वैरिणौ एतौ कथं देवौ भवतः ? इति विचिन्त्य ततस्तौ उत्पाट्य चम्पानगर्याम् इक्ष्वाकुवंशीयो राजा चण्डकीर्तिरपुत्रो मृतस्तदा तन्नगरलोकाश्चिन्तां कुर्वन्ति, कोऽत्र राजा विधीयते ? तदा तेन किल्बिषदेवेन नगरलोकेभ्यस्तौ समर्पितौ । तेन ज्ञातम् अत्र राज्यं कृत्वा, मृत्वा नरकं यास्यतः । मम शत्रू कथं देवौ भवेताम् ? लोकानां पुनरिति शिक्षा-दत्ता–भो लोकाः ! यदा एतयोः क्षुधा लगति तदा मया भवतां कल्पवृक्षाः दत्ताः सन्ति । एषां फलमिश्रितं मांसभक्षणं कारयितव्यम् । आक्षेटकं कारयितव्यम् । मनसा ज्ञातं मांसाहारेण तयोर्नरकगतिर्भविष्यति तदा मद्वैरं वलिष्यति । हरि–हरिणी इति तयोर्नाम प्रकटीकृत्य गतो देवः । ततो लोकैस्तथैव कृतम् । ततो हरिवं-

शकुलस्य उत्पत्तिर्जाता। ततस्तौ मृत्वा नरकं जग्मतुः। इति सप्तमकम् आश्चर्यकम्॥ अथ अष्टमम् आश्चर्यकम् उच्यते—अत्र भरते विभेलसंनिवेशे पूरणनामा श्रेष्ठी वसति। तेन तापसी दीक्षा गृहीता। उपवासद्वयं पारणं च तपः करोति। परं पारणादिने चतुष्कोणपात्रके भिक्षां गृहीत्वा, प्रथमे कोणे पतितां भिक्षां जलचरमीनेभ्यो ददाति। द्वितीये कोणे काकादिविहङ्गेभ्यो ददाति। तृतीये कोणेऽभ्यागत–तापसेभ्यो ददाति। चतुर्थे कोणे पतितां भिक्षाम् एकविंशतिवारम् उदकेन प्रक्षाल्य भुङ्क्ते। द्वादशवर्ष यावत् तपः करोति स्म। ततो मृत्वा चमरचञ्चायां चमरेन्द्रत्वेन उत्पन्नः। अवधिज्ञानं प्रयुक्तम्, तदा सौधर्मेन्द्रस्य चरणौ स्वकीयमस्तकोपरि दृष्टौ। तदा क्रोधः समुत्पन्नः। सर्वेऽपि अमात्यस्थानीया देवाः समाहूताः। तानाऽऽहूयाऽवादीद् भो देवाः! एष दुष्टोऽप्रार्थ्यवस्तुप्रार्थको ममोपरि चरणौ कृत्वा कः स्थितोऽस्ति? तथा ते देवा ऊचुः, भो स्वामिन्! अनादिकालस्यैषा स्थितिर्वर्तते, अत्र क्रोधो न कार्यः। भवादृशा इन्द्राः पूर्वं बहवो बभूवुः, तेषाम् उपरि एवमेव उपरिस्थस्येन्द्रस्य चरणौ आस्ताम्, ईर्षा मा कुरुध्वम्। तथाऽपि चमरेन्द्रः क्रोधकम्पिताङ्गः स्वकीयाऽऽयुधशालायां समागत्य, पर्शुशस्त्रं हस्ते गृहीत्वा सौधर्म देवलोकं प्रति गन्तुं मनः कृतम्। असुरकुमारदेवैः निषिद्धोऽपि महद्रूपं विकुर्वितम्। तदा श्रीमहावीरं सुसमारपुरे कायोत्सर्गस्थितं दृष्ट्वा वन्दनां कृत्वा शरणं चिन्तयित्वा उच्चैर्जगाम। तत्र सौधर्माऽवतंसकविमाने गत्वा एकलक्षयोजनप्रमाणरूपेण एकपादेन सौधर्मविमानस्य पद्मवर-

वेदिकां समाक्रम्य, द्वितीयेन पादेन सौधर्मसभां समाक्रम्य सर्वं देवलोकं क्षोभयन् उच्चैर्जजल्प–अरे देवाः ! कुत्रास्ति भवताम् इन्द्रो दुष्टो यो ममोपरि चरणौ कृत्वा तिष्ठति । स नीचोऽप्राथ्यर्यवस्तुपार्थकः, कृष्णचतुर्दश्यां रजन्याम्, अमावस्यायां वा संजातः, मारयामि अनेन पर्शुना तं दुष्टम् इति देवान् निर्घाटयामास। मुखाद् अग्नि-ज्वालां निष्कासयन् प्रलम्बौष्ठौ विकुर्वितौ, कूपसदृशौ गल्लौ, रन्ध्रसदृशे नासिके, अग्निसदृशे नेत्रे, सूर्पतुल्यौ द्वावपि कर्णौ, कुशीशदृशा दन्ताः, गले सर्पाः परिधृताः, हस्ते वृश्चिकानाम् आभरणानि परिधृतानि। कुत्रचित् शरीरे मूषकाः, कुत्रचिद् नकुलाः, कुत्रचिद् गोधा लम्बायमानास्तिष्ठन्ति। वर्णेन कृष्णः। एतादृशं विरूपं दृष्ट्वा भीताः सर्व-देवाङ्गनाः, देवाश्च। सौधर्मेन्द्रेण कोलाहलं श्रुत्वा आगतेन ज्ञातोऽयं चमरेन्द्रः, मम सिंहसनाद् मां पातनाय समा-गतोऽस्ति। तदा क्रोधं कृत्वा, हस्ते वज्रमायुधं धृत्वा तर्जितः। वज्रं मुक्तम्। अग्निज्वालां मुञ्चन्तं वज्रमाऽऽयुधम् आयान्तं दृष्ट्वा भीतश्चमरेन्द्रो नष्टः। नश्यतो मस्तकं नीचैर्जातम्, पादौ ऊर्ध्वीबभूवतुः। पश्चाद् वज्रं जातम्। स्थाने स्थाने आभरणानि पतन्ति। स्थाने स्थाने स्वयं स्खलति। चमरेन्द्रस्य नीचैर्गमनेऽधिकशक्तिः, वज्रस्य उच्चै-र्गमने प्रचुरा शक्तिः, तेन हेतुना चमरेन्द्रस्य वज्रं न लग्नम्। चमरेन्द्रो दुःखेन स्वयं शरीरं संकोचयन् यत्र श्रीमहावीरः कायोत्सर्गे स्थितोऽस्ति तत्र श्रीमहावीरस्य पादयोरन्तराले वज्राद् भीतः सन् शरणं प्राप्तः। वज्रं च वीरपार्श्वे बभ्राम। सौधर्मेन्द्रेण चिन्तितम्, अयं चमरेन्द्रः किञ्चित् शरणं हृदि निधाय समागतो भवि-

ष्यति । मद्वज्रं तत्पृष्ठे गमिष्यति । कश्चित्साधुम्, तीर्थंकरबिम्बं वा वज्रं मा विनाशयेत्, इति विचिन्त्य पृष्ठतः सौधर्मेन्द्रः समाऽऽगत्य वीरशरणाऽऽगतं दृष्ट्वा, साधर्मी इति ज्ञात्वा मुक्तः । तथा श्रीवीरं स्तुत्वा, नत्वा, क्षामयित्वा, वज्रं लात्वा, चमरेन्द्रेण सह मैत्रीं कृत्वा स्वस्थाने गतः । चमरेन्द्रोऽपि स्वस्थानं प्राप्तः । इति चमरेन्द्रोत्पातम् । इति अष्टमम् आश्चर्यकम् ॥ अथ नवमम् आश्चर्यकं कथ्यते–'रिसहो रिसहस्स सुया, भरहेण विवज्जिया नवनवई ॥ अट्ठेव भरहस्स सुया, सिद्धिगया एगसमयम्मि' ॥ १ ॥ अस्यार्थः–ऋषभदेवः, ऋषभदेवस्य पुत्रा भरतविना नवनवतिः ( ९९ ), अष्टौ भरतपुत्रा एतेऽष्टोत्तरशतप्रमिताः साधवः पञ्चशतधनुःप्रमाणदेहाः, उत्कृष्टाऽवगाहनया एकस्मिन् समये एव मोक्षं गताः । इति नवमम् आश्चर्यकम् ॥ अथ दशमम् आश्चर्यकं कथ्यते–श्रीसुविधिना थस्य मुक्तिगमनाद् अनन्तरं कियान् कालो गतस्तदा साधूनां विच्छेदो जातः, लोकैर्यतीनां स्थानेऽसंयमिनः पूजिताः, वन्दिताः, मानिताश्च । इति दशमम् आश्चर्यकम् ॥ अनन्ता उत्सर्पिण्योऽवसर्पिण्यश्च यदा यान्ति तदा दशाऽऽश्चर्याणि जायन्ते । गाथा—

रिसहे अट्ठहियसयसिद्धं सीयलजिणम्मि हरिवंसो । नेमिजिणे अमरकंकागमणं कण्हस्स संपन्नं ॥ १ ॥
इत्थीतित्थं मल्ली पूआ अस्संजयाण नवमजिणे । अवसेसा अच्छेरा वीरजिणंदस्स तित्थम्मि ॥ २ ॥
सिरिरिसह–सीयलेसु एक्केकं मल्लि–नमिनाहेयं । वीरजिणंदे पंचओ एगं सव्वेसु पाएणं ॥ ३ ॥

अथ कस्य कस्य तीर्थंकरस्य वारके किं किम् आश्चर्यकं जातं तत् कथ्यते–शीतलनाथस्य समये हरिवंशकुलोत्पत्तिः ।१। नेमिनाथस्य समये कृष्णस्याऽमरकङ्कायां गमनम् ।२। मल्लिनाथस्त्रीत्वेन तीर्थंकरः ।३। नवमतीर्थंकर–दशमतीर्थंकराऽन्तरालेऽसंयमिनां पूजा ।४। आदीश्वरस्य मोक्षसमयेऽष्टोत्तरशतसाधूनाम् एकसमये मोक्षप्राप्तिः तथा ।५। तथा गर्भहरणम् ।६। चमरेन्द्रोत्पातः ।७। प्रथमदेशनाया निष्फलत्वम् ।८। सूर्याचन्द्रमसौ मूलविमानेन आगतौ ।९। गोशालकेन समवसरणे कृत उत्पातः ।१०। एतानि पञ्चाश्चर्याणि श्रीमहावीरतीर्थे जातानि ।

नाम–गुत्तस्स वा कम्मस्स अक्खीणस्स, अवेइअस्स, अणिज्जिण्णस्स उदएणं जं णं अरिहंता वा, चक्क–बल–वासुदेवा वा अंतकुलेसु वा, पंत–तुच्छ–किविण-दरिद्द–भिक्खागकुलेसु वा आयाइंसु वा ३, नो चेव णं जोणीजम्मणनिक्खमणेणं निक्खमिंसु वा ३ ॥२२॥ अयं च णं समणे भगवं महावीरे इहेव जंबूद्दीवे दीवे भारहे वासे माहणकुंडग्गामे नयरे उसभदत्तस्स माहणस्स को-डलसगुत्तस्स भारियाए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए वक्कंते ॥ २३ ॥ तं जीयमेयं तीय–पच्चुपन्न–मणागयाणं सक्काणं, देविंदाणं, देवराईणं अरिहंते भगवंते

तहप्पगारेहिंतो, अंतकुलेहिंतो, पंत–तुच्छ–किविण–दरिद्द–भिक्खाग–जाव–माहणकुलेहिंतो; तहप्पगारेसु उग्गकुलेसु वा, भोगकुलेसु वा, रायन्न–नाय–खत्तिय–इक्खाग–हरिवंसकुलेसु वा, अन्नयरेसु वा तहप्पगारेसु विसुद्धजाइ–कुल–वंसेसु साहराविंत्तए ॥ २४ ॥ तं गच्छ णं तुमं देवाणुप्पिया ! समणं भगवं महावीरं माहणकुंडग्गामाओ नयराओ उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारियाए देवानंदाए माहणीए जालंधरसगुत्ताए कुच्छिओ, खत्तियकुंडग्गामे नयरे नायाणं खत्तियाणं सिद्धत्थस्स खत्तियस्स कासवगुत्तस्स भारियाए तिसलाए खत्तियाणीए वासिट्ठसगुत्ताए कुच्छिंसि गब्भत्ताए साहराहि; जे वि य णं से तिसलाए खत्तियाणीए गब्भे तं पि य णं देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए साहराहि, साहरित्ता मम एयं आणत्तियं खिप्पामेव पच्चप्पिणाहि ॥२५॥ तए णं से हरिणेगमेसी पायत्ताणियाहिवई देवे सक्केणं, देविंदेणं, देवरन्ना एवं वुत्ते समाणे हट्ठे, जाव–हयहियए करयल–

**जाव—त्ति कट्टु एवं जं देवो आणावेइत्ति । आणाए विणएणं वयणं पडिसुणेइ, पडिसुणित्ता सक्कस्स देविंदस्स देवरण्णो अंतियाओ पडिनिक्खमइ, पडिनिक्खमइत्ता ॥**

अथ देवेन्द्रो हरिणेगमेषिदेवस्याऽग्रे वदति—भो देवाऽनुप्रिय! नाम—गोत्रे कर्मणि अक्षीणे सति, अजीर्णे सति, अपूर्णीभूते सति, तस्योदये जाते सति अर्हन्तः, चक्रवर्तिनः, बलदेव—वासुदेवा अन्तादिकुलेषु आगत्योत्पद्यन्ते ३; न च तेषां योनिद्वारा जन्म जायते ३ ॥ २२॥ तस्मात् कारणाद् भो हरिणेगमेषिदेव ! अयं श्रमणो भगवान् श्रीमहावीरोऽस्मिन् जम्बूद्वीपे भरतक्षेत्रे ब्राह्मणकुण्डग्रामे नगरे ऋषभदत्तस्य ब्राह्मणस्य कोडलगोत्रस्य भार्याया देवानन्दाया ब्राह्मण्या जालन्धरगोत्रिण्याः कुक्षौ नाम—गोत्रकर्मवशाद् आगत्य उत्पन्नोऽस्ति ॥२३॥ भो हरिणेगमेषिन् ! पूर्वमपि ये केचिद् इन्द्राः बभूवुः, अग्रे भविष्यन्ति तैः सर्वैरिन्द्रैर्भक्तिः कर्तव्या । तीर्थंकर—चक्रवर्ति—बलदेव—वासुदेवा अन्तकुलादिभ्यो गृहीत्वा उग्रकुलादिषु इन्द्राः समानयन्ति ॥ २४ ॥ तस्मात् कारणाद् भो देवानुप्रिय ! त्वं याहि, श्रीमहावीरं देवानन्दायाः कुक्षितो गृहीत्वा क्षत्रियकुण्डग्रामे नगरे सिद्धार्थक्षत्रियस्य काश्यपगोत्रस्य भार्यायाः त्रिशलायाः कुक्षौ संक्रामय । अथ च त्रिशलाया गर्भः पुत्रिकारूपः स देवानन्दायाः कुक्षौ संक्रामय । इमाम् अस्मदाज्ञां कृत्वा पश्चात् समर्पय ॥ २५ ॥ ततो हरिणेगमेषी देव इन्द्रस्याऽऽज्ञां श्रुत्वा

हर्षितः, तुष्टः सन् हस्तौ संमील्य इन्द्रवचनं तथास्तु इति कृत्वा इन्द्रसमीपाद् निर्गत्य ।

उत्तरपुरत्थिमं दिसीभागं अवक्कमइ, अवक्कमइत्ता वेउव्वियं समुघाएणं समोहणइ, वेउव्विअ-समुग्घाएणं समोहणित्ता संखिज्जाइं जोयणाइं दंडं निसिरइ । तं जहा–रयणाणं, वइराणं, वेरुलिआणं, लोहियक्खाणं, मसारगल्लाणं, हंसगब्भाणं, पुलयाणं, सोगंधियाणं, जोइरसाणं, अंजणाणं, अंजणपुलयाणं रयणाणं, जायरूवाणं, सुभगाणं, अंकाणं, फलिहाणं, रिट्ठाणं अहा-बायरे पुग्गले परिसाडेइ, परिसाडित्ता; अहासुहमे पुग्गले परिआदियइ ॥ २६ ॥ परियादित्ता; दुच्चं पि, वेउव्वियसमुग्घाएणं समोहणइ, समोहिणित्ता; उत्तरवेउव्वियं रूवं विउव्वइ, विउवित्ता उक्किट्ठाए, तुरियाए, चवलाए, चंडाए, जयणाए, उद्धूयाए, सिग्घाए, दिव्वाए, देइगइए वीईवयमाणे, वीईवयमाणे; तिरियं असंखिज्जाणं दीव–समुद्दाणं मज्झंमज्झेण जेणेव जंबुद्दीवे दीवे, भारहे वासे, जेणेव माहणकुंडग्गामे नयरे, जेणेव उसभदत्तस्स माहणस्स गेहे, जेणेव देवाणंदा माहणी तेणेव उवागच्छइ, उवागच्छइत्ता ॥

हरिणेगमेषी देव उत्तर–पूर्वदिशान्तरालम् अर्थाद् ईशानकूणे आगत्य वैक्रियसमुद्घातं करोति, जीवप्रदेशान् निष्काशयति समुद्घातं करोति। संख्यातयोजनस्य दण्डो निःसरति, उच्चैः प्रमाणं जीवप्रदेशकर्मपुद्गलसमूहो दण्डरूपेण प्रकटयति। तद् दण्डरत्नमयम्। तानि कानि रत्नानि? कर्केतनरत्न–वज्ररत्न–वैडुर्यरत्न–लोहिताक्षरत्न–मसारगल्लरत्न–हंसगर्भ–पुलक–सौगन्धिक–ज्योतिरस–अञ्जन–अञ्जनपुलक–जातरूप–अङ्करत्न–स्फटिक–अरिष्टरत्नानि। एतेषां रत्नानाम् असारपुद्गलान् अपहाय, सारपुद्गलान् गृहीत्वा उत्तरवैक्रियरूपं करोति। मूलरूपं भवधारणीयं तत्रैव रक्षति, नवीनं रूपं कृत्वा मनुष्यलोके आयाति ॥२६॥ अथ कया गत्या मनुष्यलोके आयाति? तां गतिं वर्णयति–चण्डागत्या, चपलागत्या, यतनागत्या, वेगवत्या गत्या कृत्वा एताभिश्चतसृभिर्गतिभिः कृत्वा प्रचलति। अथ तासां गतीनां मानं वदति। प्रथमं चण्डागतेर्मानम्–द्विलक्षयोजनम्, त्र्यशीतिसहस्रयोजनम्, पञ्चशतयोजनम्, पुनरशीतिर्योजनम्, पुनः षट् कलाः; एतावन्ति योजनानि एकस्मिन् पादाऽन्तराले मुञ्चति। द्वितीया चपलागतिः, तस्या मानम्–चत्वारिलक्षयोजनानि, द्वासप्ततिसहस्रयोजनानि, षट् शतानि, त्रयस्त्रिंशद्योजनानि; एतावन्ति योजनानि एकस्मिन् पादाऽन्तराले मुञ्चति। अथ तृतीया यतनागतेर्मानम्–षट्लक्षयोजनानि, एकषष्टिः सहस्राणि, षट् शतानि, षडशीतिर्योजनानि, चतुःपञ्चाशत् कलाः; एतावन्ति योजनानि एकस्मिन् पादाऽन्तराले मुञ्चति। अथ वेगवतीगतेर्मानम्–अष्टौ लक्षाणि, पञ्चाशत् सहस्रयोजनानि, सप्तशतयोजनानि,

चत्वारिंशद्योजनानि, अष्टादश कलाः, एकस्मिन् पादाऽन्तराले मुञ्चति। एतादृशीभिः शीघ्रादिभिर्देवगतीभिः कृत्वा यदि चण्डादिभिरेव गतिभिः प्रचलति तदा तु षड्भिर्मासैरपि मनुष्यलोकम् आयातुं न शक्नुवन्ति। परं दीव्याभिर्गतिभिरेव असंख्यातान् द्वीपसमुद्रान् उल्लङ्घयन् यत्र जम्बूद्वीपे भरतक्षेत्रे ब्राह्मणकुण्डग्रामे नगरे यत्र ऋषभदत्तस्य ब्राह्मणस्य गृहे देवनन्दा ब्राह्मणी सुप्ताऽस्ति तत्राऽऽगत्य दृष्ट्वा।

आलोए समणस्स भगवओ महावीरस्स पणामं करेइ, करित्ता देवाणंदामाहणीए सपरिजणाए ओसोवणिं दलइ, ओसोवणिं दलइत्ता; असुहे पुग्गले अवहरइ, अवहरइत्ता; सुहे पुग्गले पक्खिवेइ, पक्खिवित्ता; अणुजाणउ मे भयवं ति कट्टु समणं भगवं महावीरं अव्वाबाहं अव्वाबाहेणं दिव्वेणं पहावेणं करयलसंपुडेणं गिण्हइ, समणं भगवं महावीरं जाव—करयलसंपुडेणं गिहिणत्ता; जेणेव खत्तियकुंडग्गामे नयरे, जेणेव सिद्धत्थस्स खत्तिअस्स गेहे, जेणेव तिसला खत्तीयाणी तेणेव उवागच्छइ, उवागच्छित्ता तिसलाए खत्तीयाणीए सपरिजणाए ओसोअणिं दलइ, ओसोअणिं दलइत्ता, असुहे पुग्गले अवहरइ, अवहरित्ता; सुहे पुग्गले पक्खिवइ, पक्खिविइत्ता; समणं

भगवं महावीरं अव्वाबाहं, अव्वाबाहेणं तिसलाए खत्तियाणीए कुच्छिंसि गब्भत्ताए साहरइ, साहरित्ता जे वि य णं से तिसलाए खत्तियाणीए गब्भे तं पि अ णं देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए साहरइ, साहरित्ता; जामेव दिसिं पाउब्भूए तामेव दिसिं पडिगए ॥ २७ ॥ ताए उक्किट्ठाए तुरियाए, चवलाए, चंडाए, जयणाए, उद्धुयाए, सिग्घाए दिव्वाए देवगइए तिरियं असंखिज्जाणं दीवसमुद्दाणं मज्झंमज्झेणं जोयणसाहस्सिएहिं, विग्गहेहिं उप्पयमाणे, उप्पयमाणे जेणामेव सोहम्मे कप्पे, सोहम्मवडिंसिगे विमाणे, सक्कंसि सीहासणंसि, सक्के, देविंदे, देवराजा तेणामेव उवागच्छइ उवागच्छित्ता; सक्कस्स, देविंदस्स, देवरण्णो एयं आणत्तियं खिप्पामेव पच्चप्पिणत्ति ॥ २८ ॥

आलोकयित्वा भगवन्तं दृष्ट्वा प्रणामं करोति, प्रणामं कृत्वा देवानन्दायाः ब्राह्मण्याः परिवारसहिताया अपस्वापिनीं निद्रां ददाति, अवस्वापिनीं निद्रां दत्त्वा हरिणेगमेषी देवो भगवतो मातुः शरीराद् अशुभपुद्गलान् दूरीकृत्वा, शुभपुद्गलान् प्रक्षिप्य एवं वदति–हे भगवन् ! अनुजानीत । इत्युक्त्वा देवशक्त्या कृत्वा भगवन्तं

**श्रीमहावीरं हस्तसंपुटे गृहीत्वा, क्षत्रियकुण्डग्रामे नगरे, सिद्धार्थक्षत्रियस्य गृहे यत्र त्रिशला क्षत्रियाणी सुप्ताऽस्ति तत्राऽऽयाति, आगत्य त्रिशलायाः सपरिवाराया अवस्वापिनीं निद्रां दत्त्वा, अशुभपुद्गलान् दूरं कृत्वा, शुभपुद्गलान् प्रक्षिप्य श्रमणं भगवन्तं महावीरं निराबाधं त्रिशलायाः क्षत्रियाण्याः कुक्षौ गर्भत्वेन संचारयति ।**

१. अत्राऽऽह कोऽपि शिवशासनी—अहो !! एवं गर्भपरावर्तन कदापि भवति ? तत्रोच्यते—शिवशासनेऽपि 'श्रीभागवतदशमस्कन्धे, द्वितीयाऽध्ययने' बलदेवस्य गर्भपरावर्तनं श्रूयते । तत्रत्य श्लोकचतुष्टयं यथा—"भगवानपि विश्वात्मा विदित्वा कंसजं भयम् ॥ यदूना निजनाथानां योगमायां समादिशत् ॥ १ ॥ गच्छ देवि ! व्रजं भद्रे गोपं गोभिरलंकृतम् ॥ रोहिणी वसुदेवस्य भार्याऽऽस्ते नन्दगोकुले ॥२॥ देवक्या जठरे गर्भं शेषाख्यं धाम मामकम् ॥ तत्सन्निकृष्य रोहिण्या उदरे संनिवेशय ॥ ३ ॥ गर्भसकर्पणात्तं वै आहुः संकर्षणं भुवि ॥ रामेति लोकरमणाद् बलभद्रं बलाश्रयात्" ॥ ४ ॥

पुनरपि पुराणे मान्धाताराज्ञ उत्पत्तिकथा यथा—विशाला नाम नगरी, तत्र यवनाश्वो राजा महासाम्राज्यधरः, परम् अपुत्रः, तेन पुत्रार्थं षोडशशतकन्यानां पाणिग्रहणं कृतं पर तथाऽपि पुत्रो न जायते, तेन मनसि अतीव चिन्तातुरो जातः, यतः—"अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च ॥ तस्मात्पुत्रमुखं दृष्ट्वा स्वर्गे यान्ति स्म मानवाः" ॥ १ ॥ "पुनः गेहं पि तं मसाणं जत्थ न दीसति धूलिधूसरमुहाइ उट्ठत-पडंत-रडवडंति दो तिन्नि डिभाइं" ॥ २ ॥ इत्यादि ॥ ततः कस्याऽपि उपदेशाद् अष्टाऽशीतिसहस्रऋषीणां भोजनं दातुं प्रवृत्तः, त्रयस्त्रिंशत्कोटिदेवताऽऽराधनमपि कृतं तथाऽपि पुत्रो न भवति । एकदा अष्टाऽशीतिसहस्रऋषिभिर्विमृष्टम्—अयं राजा आत्मना प्रत्यहं मिष्टा-

**त्रिशलायाः क्षत्रियाण्या गर्भः पुत्रिकालक्षणः, तं गर्भं देवानन्दायाः कुक्षौ संचार्य यस्याः दिशः समागतोऽभूत्**

न्न–पानैर्भक्तिं करोति, परं कस्यापि पुत्रकरणे शक्तिर्नास्ति, सर्वेऽपि उदरंभराः पोषणाय मिलिताः सः तदा तेषां मध्याद् एकेन ऋषिणा प्रोक्तम्–अहं जानामि उपायम्, इत्युक्त्वा सुवर्णकच्चोलके नीरमभिमन्त्र्य राज्ञे दत्तम्, प्रोक्तं च–या तवाऽभीष्टा राज्ञी भवति तस्याः पाय्यम्, पुत्रो भावी । राजा नीरं लात्वा स्वावासे गतः, सर्वाभिः राज्ञीभिः सुतव्यतिकरो ज्ञातः, तदा सर्वाभिर्दासीद्वारा कथापितं मम देयम्। राज्ञा विचारितम्–राज्यो बह्व्यः, कस्यै दीयते ? एकस्या दानेऽन्याः सर्वा अपि क्लेशं करिष्यन्ति, मरिष्यन्ति, मामपि मारयिष्यन्ति । पुनस्ताभिः प्रोक्तम्– यस्यै दास्यसि पानीयं तां वयं मारयिष्यामः, राज्ञा चिन्तितम्–"प्रतापो गौरवं पूजा श्रीर्यशस्सुप्रतिष्ठिता ॥ तावत्कालं प्रवर्तन्ते यावन्नोत्पद्यते कलिः" ॥१॥ इति विचिन्त्य न कस्याऽपि दत्तम् । नीरभृत कच्चोलकं वस्त्रेणाऽऽच्छाद्य पानीयस्थाने घटोपरि मुक्तम्, राजा स्वस्याऽऽवासे सुप्तः, रात्रौ राज्ञस्तृषा लग्ना, पानीयं मार्गितम्, राज्यः कथयन्ति–या तवाऽभीष्टा भविष्यति सा पानीयं पाययिष्यति, तदाऽन्यः कोऽपि पार्श्वेनाऽभूत्, एका शय्यापालिकाऽभूत् तयाऽजानन्त्या तत्कच्चोलकनीरम् आनीय दत्तम्, राज्ञा च पीतम्, मन्त्रप्रभावाद् गर्भो जातः, प्रतिदिनम् उदरं वर्धते, राजा लज्जया सभायां नाऽऽयाति, प्रत्युत असमाधानं जातम्, राज्ञाऽष्टाऽशीतिसहस्रमुनीनाम् उपालम्भो दत्तः, लाभमिच्छतो मम मूलक्षतिरायाता, ततस्त्रिशत्कोटिदेवा–ऽष्टाऽशीतिसहस्रमुनिमेलापकेनाऽऽराधित इन्द्रः समागतः, तेन स्वसेवकदेवपार्श्वाद् राज्ञो नाभिं विदार्य संपूर्णो गर्भो निष्कासितः, सर्वैः प्रोक्तम्–स्तन्यपानं कस्याः करिष्यति, इन्द्रेण प्रोक्तम्–मां धास्यति, तत इन्द्रेण स्त्रीरूपं कृत्वा स्तन्यपानं कारितम् । क्रमेण वर्धमानो मान्धाता नाम राजा जातः ॥ इत्यादयोऽनेके एवंविधा व्यतिकरास्सन्ति ॥

ताम् एव दिशं प्रति गतः ॥ २७ ॥ तिर्यक्-पार्श्वे स्थितान् असंख्यातद्वीपसमुद्रान् उल्लङ्घयन् यत्र सौधर्मदेवलोके, सौधर्माऽवतंसके विमाने, शक्रसिंहासने यत्र इन्द्रः स्थितोऽस्ति तत्र हरिणेगमेषी देवः समागच्छति, आगत्य या सौधर्मेन्द्रेण आज्ञा दत्ता ताम् आज्ञां प्रत्यर्पयति ॥ २८ ॥ इन्द्रेण सन्मानितः ।

ते णं काले णं, ते णं समए णं समणे भगवं महावीरे तिन्नाणोवगए आवि हुत्था तं जहा—साहरिज्जिस्सामि त्ति जाणइ, साहरिज्जमाणे न जाणइ, साहरिएमि त्ति जाणइ ॥ २९ ॥

ते णं काले णं, ते णं समए णं समणे भगवं महावीरे जे से वासाणं तच्चे मासे, पंचमे पक्खे, आसोयबहुले, तस्स णं आसोयबहुलस्स तेरसीपक्खेणं, बायासीइ राइं-दियेहिं विइक्कंतेहिं, तेयासीइमस्स राइं-दियस्स अंतरा वट्टमाणस्स हिया-ऽणुकंपएणं देवेणं हरिणेगमेसिणा सक्कवयणसंदिट्ठेणं, माहणकुंडग्गामाओ नयराओ उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारिआए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिओ खत्तियकुंडग्गामे नयरे नायाणं खत्तिआणं सिद्धत्थस्स खत्तिअस्स कासवगुत्तस्स भारियाए, तिसलाए खत्तिआणीए

वासिट्ठसगुत्ताए, पुव्वरत्ता–वरत्तकालसमयंसि हत्थुत्तराहिं नक्खत्तेणं जोगं उवागएणं अव्वाबाहं, अव्वाबाहेणं कुच्छिंसि गब्भत्ताए साहरिए ॥३०॥ जं रयणिं च णं समणे भगवं महावीरे देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिओ तिसलाए खत्तिआणीए वासिट्ठसगुत्ताए कुच्छिंसि गब्भत्ताए साहरिए, तं रयणिं च णं सा देवाणंदा माहणी सयणिज्जंसि सुत्तजागरा ओहीरमाणी, ओहीरमाणी इमे एयारूवे ओराले, कल्लाणे, सिवे, धन्ने, मंगल्ले, सस्सिरीए चउद्दसमहासुमिणे तिसलाए खत्तियाणीए हडेत्ति पासित्ता णं पडिबुद्धा, तं जहा—

गय० गाहा ॥१॥ ३१ ॥

तस्मिन् काले चतुर्थे आरके, तस्मिन् समये गर्भाऽपहारलक्षणे, श्रमणो भगवान् श्रीमहावीरः, यदा देवानन्दाया ब्राह्मण्याः कुक्षौ आसीत् तदा त्रिज्ञानेन एवं जानाति स्म–इदानीं शक्राऽऽज्ञया हरिणेगमेषी देवः समेष्यति । मां गृहीत्वा त्रिशलाक्षत्रियाण्याः कुक्षौ संचारयिष्यति । यदा च संहरति तत् कालं न जानाति । तस्य कालस्याऽत्यन्तसूक्ष्मत्वात् । पुनः त्रिशलायाः कुक्षौ आनयनाऽनन्तरं जानाति–अहं देवानन्दायाः कुक्षितो

वासिट्ठसगुत्ताए, पुव्वरत्ता–वरत्तकालसमयंसि हत्थुत्तराहिं नक्खत्तेणं जोगं उवागएणं अव्वाबाहं, अव्वाबाहेणं कुच्छिंसि गब्भत्ताए साहरिए ॥३०॥ जं रयणिं च णं समणे भगवं महावीरे देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिओ तिसलाए खत्तिआणीए वासिट्ठसगुत्ताए कुच्छिंसि गब्भत्ताए साहरिए, तं रयणिं च णं सा देवाणंदा माहणी सयणिज्जंसि सुत्तजागरा ओहीरमाणी, ओहीरमाणी इमे एयारूवे ओराले, कल्लाणे, सिवे, धन्ने, मंगल्ले, सस्सिरीए चउद्दसमहासुमिणे तिसलाए खत्तियाणीए हडेत्ति पासित्ता णं पडिबुद्धा, तं जहा—
गय० गाहा ॥१॥ ३१ ॥

तस्मिन् काले चतुर्थे आरके, तस्मिन् समये गर्भाऽपहारलक्षणे, श्रमणो भगवान् श्रीमहावीरः, यदा देवानन्दाया ब्राह्मण्याः कुक्षौ आसीत् तदा त्रिज्ञानेन एवं जानाति स–इदानीं शक्राऽऽज्ञया हरिणेगमेषी देवः समेष्यति। मां गृहीत्वा त्रिशलाक्षत्रियाण्याः कुक्षौ संचारयिष्यति। यदा च संहरति तत् कालं न जानाति। तस्य कालस्याऽत्यन्तसूक्ष्मत्वात्। पुनः त्रिशलायाः कुक्षौ आनयनाऽनन्तरं जानाति–अहं देवानन्दायाः कुक्षितो

## अथ तृतीयं व्याख्यानम् ।

अर्हद्भगवतः श्रीमन्महावीरदेवस्य शासने, अतुलमङ्गलमालाप्रकाशने, श्रीपर्युषणापर्वराजाधिराजसमागमने, श्रीकल्पसूत्रसिद्धान्तवाचनाः क्रियन्ते । तत्र त्रयोऽधिकाराः प्रवर्तन्ते । प्रथमेऽधिकारे श्रीजिनचरित्रम्, तदऽनन्तरं स्थविरकल्पः, तदऽनन्तरं साधुसमाचारीकल्पः । तत्र श्रीजिनचरित्राऽधिकारे पश्चाऽनुपूर्व्या श्रीमहावीरदेवस्य कल्याणकषट्कं संव्याख्यातम् । द्वितीयवाचनायां श्रीमहावीरदेवस्यैव च्यवनकल्याणकम्, गर्भाऽपहारकल्याणकम् उक्तम् । अथ गर्भाऽपहारकृताऽनन्तरं यथा त्रिशल्याः क्षत्रियाण्या चतुर्दशस्वप्ना दृष्टास्तथा श्रीभद्रबाहुस्वामी सूत्रं ब्रूते—

जं रयणिं च णं समणे भगवं महावीरे देवाणंदाए माहणीए, जालंधरसगुत्ताए कुच्छिओ, तिसलाए खत्तिआणीए वासिट्ठसगुत्ताए कुच्छिंसि गब्भत्ताए साहरिए, तं रयणिं च णं सा तिसला खत्तिआणी तंसि तारिसगंसि वासघरंसि अब्भिंतराओ सचित्तकम्मे, बाहिराओ

दूमियघट्ठमट्ठे, विचित्तउल्लोयचित्तिअतले, मणि-रयणपणासअंधयारे, बहुसम-सुविभत्तभूमिभागे, पंचवन्न-सुरस-सुरभिमुक्कपुप्फपुंजोवयारकलिए, कालागुरु-पवरकुंदुरुक्क-तुरुक्क-डज्झंतधूवमघमघंतगंधुद्धुयाभिरामे, सुगंधवरगंधिए, गंधवट्टिभूए ॥

यस्यां रजन्यां श्रमणो भगवान् श्रीमहावीरो हरिणेगमेषिणा देवेन देवानन्दायाः कुक्षितः, त्रिशलाक्षत्रियाण्याः कुक्षौ अवतारितः, तस्यां रात्रौ सा त्रिशला क्षत्रियाणी यस्मिन् वासभुवने सुप्ता सति चतुर्दश महास्वप्नान् पश्यति, तद् वासभवनं श्रीभद्रबाहुस्वामी वर्णयति-यस्य वासभवनस्य वर्णनं कर्तुं न शक्यते, दृष्टम् एव यस्य रूपं ज्ञायते, पुण्यवतां पुरुषाणां वसनाय योग्यम्। पुनरपि तद् गृहं किदृशम्? अभ्यन्तरे-मध्यप्रदेशे सर्वासु भित्तिषु नानाप्रकाराणि चित्राणि चित्रितानि सन्ति। बहिःप्रदेशेऽपि सुधया धवलयित्वा, कोमलपाषाणैर्घुटयित्वा, अतीव चाकचिक्यम् उत्पाद्य चन्द्रमण्डलवद् देदीप्यमानं कृतं वर्तते। पुनरपि यस्य गृहस्य मध्ये, उपरिभागे रम्याणि चित्रयुक्तानि चन्द्रोपकानि बद्धानि सन्ति। यस्य गृहस्य मध्ये मणिभिश्चन्द्रकान्ताभिः, तथा रत्नैर्वैडूर्यप्रमुखैरन्धकारं दूरीकृतम् अस्ति। पुनरपि यस्य गृहस्याऽङ्गणं नाऽत्युच्चम्, नाऽतिनीचम्, अतीवसमीकृतम्, सुवर्णस्य स्थालवत् समानं शोभते। पुनरपि यत्र गृहे कालागुरु-कृष्णागरु-चीडसेलहारस-चन्दन-लोवानप्रमुख-

दशाङ्गधूपादीनां धूपेन धूपितम्, मघमघायमानमस्ति। सुगन्धद्रव्याणां कस्तूरी–कर्पूरादीनां गुटिका इव तद्-गृहम् अतीव सुगन्धं वर्तते, इति अनेन वासभवनं वर्णितम् अस्ति॥ अथ यस्यां शय्यायां सुप्ता त्रिशला स्वप्नान् पश्यति तां शय्यां श्रीभद्रबाहुस्वामी वर्णयति–

तंसि तारिसगंसि सयणिज्जंसि सालिंगणवट्टिए उभओ विब्बोअणे, उभओ उन्नए, मज्झेण य गंभीरे, गंगापुलिणवालुअउद्दालसालिसए, ओअविय–खोमिअ–दुगुल्लपट्टपडिच्छन्ने, सुविर-इअरयत्ताणे, रत्तंसुयसंवुए, सुरम्मे, आईणगरूअबूरणवणीअतूलतुल्लफासे, सुगंधवरकुसुम-चुन्नसयणोवयारकलिए, पुव्वरत्ता–वरत्तकालसमयंसि सुत्त–जागरा ओहीरमाणी, ओहीरमाणी इमे एयारूवे, ओराले, कल्लाणे जाव–चउद्दस महासुमिणे पासित्ता णं पडिबुद्धा, तं जहा–गय–वसह–सीह–अभिसेय–दाम–ससि–दिणयरं झयं कुंभं। पउमसर–सागर–विमाण (भवण)–रयणुच्चय–सिहिं च॥ १॥ ३२॥

यस्यां शय्यायां त्रिशला सुप्ताऽस्ति सा शय्या कीदृशी अस्ति? यस्याः स्वरूपं दृष्टमेव ज्ञायते, न वर्णयितुं शक्यते,

तथा पुण्याऽऽत्मनां योग्या इत्यर्थः। पुनरपि कीदृशी अस्ति ? यस्याः शय्याया उभयपार्श्वे स्वर्णमयी ईपा वर्तते, उत्पलेऽपि स्वर्णमये स्तः, प्रवाल-रत्नमयाश्चत्वारः पादाः सन्ति, पट्टसूत्रमयीडोरिकया विचित्रभक्त्या गुन्थिताऽस्ति। हंसपक्षिणः पक्ष्मभिः, तथाऽर्कतूलैर्वा भृता उपरि शयनीया प्रस्तारिताऽस्ति। पुनरपि यस्यां शय्यायाम् उभयपार्श्वे शरीरप्रमाणे गिन्दुपके वर्तेते, शीर्षस्थितौ पदस्थितौ च गिन्दुपके वर्तेते, अत एव कारणाद् उभयपार्श्वाभ्यां शय्या उन्नताऽस्ति । मध्ये निम्नाऽस्ति । गङ्गानद्यास्तटस्य वालुकायां चरणे दत्ते सति यादृशं नम्रत्वं जायते तादृशम् एव तस्यां शय्यायां सुकुमालत्वं वर्तते । पुनरपि या शय्या सम्यग् दुकूलपट्टेन ( क्षौम-उज्वलवस्त्रेण ) आच्छादिताऽस्ति । यदा तस्यां शय्यायाम् आसनम्, शयनं च क्रियते तदा दूरीक्रियते । अन्यथा सा सम्यग् रजस्त्राणेन-रजादिरक्षणार्थवस्त्रेण-आच्छादिता वर्तते । पुनः सा खट्वा रक्तवस्त्रेण शय्याप्रमाणेन पटेनाऽऽच्छादिताऽस्ति । पुनरपि सा शय्या कीदृशी अस्ति ? सुरम्या-अत्यन्तरमणीया, यादृशं बुलगारचर्म भवति । अथवा रूतं यादृशं भवति । बूरो वनस्पतिविशेषः, तादृशम् । नवनीतसदृशम्। अर्कतुलसदृशं यस्याः शय्यायाः स्पर्शो वर्तते। तथा सुगन्धानि पुष्पाणि, चूर्णानि उपरि धृतानि सन्ति । पुष्पैः, चूर्णैः पूजिताऽस्ति । तस्यां शय्यायां त्रिशला क्षत्रियाणी मध्यरात्रौ नाऽत्यन्तं सुप्ता, नाऽत्यन्तं जाग्रती, किञ्चित् सुप्ता, किञ्चिद् जाग्रती सती चतुर्दश महास्वप्नान् पश्यति तदुच्यते-'गय-वसह-सीहं' इत्यादि ॥ ३२ ॥ अत्र आदिनाथस्य जनन्या प्रथमं वृषभो दृष्टः ।

श्रीमहावीरस्य जनन्या पूर्वं सिंहो दृष्टः। द्वाविंशतितीर्थंकराणां जननीभिः प्रथमं गजो दृष्टः। तेन कारणेन बहुपाठरक्षणार्थं पूर्वं गज एव वर्णितः—

तए णं सा तिसला खत्तिआणी तप्पढमआए तओयं चउद्दंतमूसियगलिअविपुलजलहर–हारनिकर–खीरसागर–ससंककिरण–दगरय–रययमहासेलपंडुरतरं, समागयमहुयरसुगंधदाणवासियकपोलमूलं, देवरायकुंजरवरप्पमाणं पिच्छइ । सजलघणविपुलजलहरगज्जियगंभीरचारुघोसं, इभं सुभं, सव्वलक्खणकयंबियं, वरोरूं ॥ १ ॥ ३३ ॥

तत्र चतुर्दशस्वप्नेषु आदौ गजो दृष्टः। स गज ईदृशोऽस्ति–ततो विस्तीर्णम् ओजो यस्य स ततोजाः। पुनश्चतुर्दन्तोऽस्ति। पुनरपि यादृशो वर्षित्वा महामेघो धवलवर्णो भवति तादृशो धवलोऽस्ति। पुनरपि स गजः कीदृशोऽस्ति? मुक्ताहारनिकरवत्, क्षीरवत्, क्षीरसमुद्रवत्, चन्द्रकिरणवत्, जलानां कणवत्, रूप्यपर्वतवैताढ्यवद् धवलवर्णोऽस्ति। पुनरपि स गजः कीदृशोऽस्ति? यस्य कपोलमूले सुगन्धमदेनाऽऽकर्षिता भ्रमरा आगत्य गुञ्जन्ति। साक्षाद् इन्द्रमहाराजस्य हस्ती इव वर्तते । पुनरपि यो गज एतादृशं शब्दं करोति यादृशं

सजलस्य महामेघस्य गर्जारवं भवति, एतादृशं गर्जारवं कुर्वन्तं गजम् अतीव शान्तम्, एकसहस्राऽष्टोत्तरलक्षणसहितम्, पीनकुक्षिं त्रिशला गजं पश्यति ॥ १ ॥ ३३ ॥ अथ द्वितीयस्वप्ने वृषभं पश्यति—

तओ पुणो धवलकमलपत्तपयराइरेगरूवप्पभं, पहासमुदओवहारेहिं सव्वओ चेव दीवयंतं, अइसिरिभरपिल्लणाविसप्पंत-कंत-सोहंतचारुककुहं, तणु—सुद्ध—सुकुमाललोमनिद्धच्छविं, थिर-सुबद्धमंसलो—वचिअ—लट्ठ—सुविभत्तसुंदरंगं पिच्छइ, घण—वट्ट—लट्ठ—उक्किट्ठ—विसिट्ठ—तुप्पग्ग—तिक्खसिंगं, दंतं सिवं समाणसोभंतसुद्धदंतं वसहं, अमियगुणमंगलमुहं ॥ २ ॥ ३४ ॥

ततः पुनः सा त्रिशला वृषभं पश्यति। कीदृशं वृषभम्? धवलकमलपत्राणां प्रकरादपि अधिकश्वेतवर्णम्। पुनरपि यो वृषभः स्वकीयप्रभासमूहेन दश अपि दिशान्तरालान् दीपयति। पुनरपि यस्य वृषभस्य अधिक-शोभाभरेण स्फुरन्ती स्कन्धप्रदेशे स्कूम्भिका विराजते। पुनरपि यस्य शरीरे सूक्ष्माणि निर्मलानि रोमाणि वर्तन्ते। तेषां रोमणाम् अपि प्रभा ईदृशी शोभते यथा तैलादीना ओपिता इव। तथा तस्य वृषभस्य स्थिरं शरीरम् अतीव सुन्दरम्। यत्र चाऽङ्गे उपाङ्गे कृशत्वम्, पुष्टत्वं वा युज्यते तदङ्गो—पाङ्गं तादृशम् एव विभाति। पुनरपि यस्य वृषभस्य उभेऽपि शृङ्गेऽतीवदृढे, वर्तुले, महाशोभायुक्ते, उत्कृष्टे, मलादिरहिते, तैलादिना

ओपिते इव तीक्ष्णे शृङ्गे श्यामे राजेते । पुनरपि यो वृषभो दुर्दान्तो नास्ति । यस्य वृषभस्य मुखे सुमनाः, शोभमानाः, उज्वलाः, मुक्ताफलमाला इव दन्ता विराजन्ते । एतादृशं वृषभम् अनेकगुणानाम्, मङ्गलानां च मुखम् इव द्वितीयस्वप्ने त्रिशला पश्यति ॥ २ ॥ ३४ ॥

तओ पुणो हारनिकर–खीरसागर-ससंककिरण-दगरय-रययमहासेलपंडुरंगं (ग्रं० २००॥ )रमणिज्जं पिच्छणिज्जं, थिर–लट्ठ–पउट्ठं वट्ट–पीवर–सुसिलिट्ठ-विसिट्ठ-तिक्ख–दाढाविडंविअमुहं, परिकम्मिअजच्चकमलकोमलप्पमाणसोभंत–लट्ठ–उट्ठं, रत्तुप्पलमउअ–सुकुमालतालु–निल्लालिअग्गजीहं, मूसागयपवरकणगताविय आवत्तायंत–वट्ट–तडिय–विमलसरिसनयणं, विसाल–पीवरवरोरूं, पडिपुन्न–विमलखंधं, मिउ–विसय–सुहम–लक्खणपसत्थ–विच्छिन्नकेसराडोवसोहियं, ऊसिय–सुनिम्मिअ–सुजात–अप्फोडियलांगुलं, सोमं, सोमागारं, लीलायंतं, जंभायंते नहयलाओ ओवयमाणं, नियगवयणं उवयंतं पिच्छइ, सा गाढ–तिक्खग्गनहं सीहं वयणसिरीपल्लवपत्तचारुजीहं ॥ ३ ॥ ३५ ॥

ततस्त्रिशला क्षत्रियाणी सिंहं पश्यति । कीदृशः सिंहः? मुक्ताहारप्रकर–क्षीरसमुद्र–चन्द्रकिरण–जलकण–रजतपर्वतवद् धवलवर्णं यस्य शरीरमस्ति । पुनर्यः सिंहो रमणीयः, प्रेक्षणीयः । तथा यस्य सिंहस्य स्थिरा, दृढा, प्रधाना च प्रकोष्ठिकाऽस्ति । पुनर्यस्य सिंहस्य मुखं वृत्ताभिः, उज्ज्वलाभिः, तीक्ष्णाभिर्दाढाभिरलंकृतं वर्तते । पुनर्यस्य सिंहस्य ओष्ठ एतादृशो दृश्यते यथा केनचित् चित्रकारेण सम्यक् कमलस्य पत्रं चित्रितम् इव । रक्तकमलपत्रवद् मुखाद् निर्लालिता जिह्वा शोभते । पुनरपि यस्य सिंहस्य पिङ्गले, विद्युत्सदृशे नयने स्तः, यथा मूषायां कनकं गालितं सन् आवर्तायमानं वर्तुलं भवति तथा उभेऽपि नयने चञ्चले वर्तेते । तथा यस्य सिंहस्य विस्तीर्णा, पुष्टा च जङ्घाऽस्ति । पुनरपि यः सिंहो दृढस्कन्धोऽस्ति । पुनरपि यः सिंहः केसरसटाभिर्विराजते । ताः केसरसटाः कीदृश्यः सन्ति–विशदाः, सुकुमालाः, लक्षणैः प्रशस्ताः, विस्तीर्णाश्च । पुनर्येन सिंहेन भूमौ लाङ्गुलम् आस्फाल्य पश्चाद् उत्पाट्य सम्यग्रीत्या कुण्डलाकारं कृतम् अस्ति । पूच्छाऽग्रं द्वयोः कर्णयोरन्तराले आनीतमस्ति । पुनरपि यः सिंहः सौम्यः, दुर्दान्तो नास्ति, सौम्याकारो लीलां कुर्वन् आकाशाद् उत्तरन्, निजमुखे प्रविशन् एतादृशः सिंहस्तीक्ष्णनखस्त्रिशलया तृतीये स्वप्ने एतादृशः सिंहो दृष्टः ॥ ३ ॥ ३९ ॥ ततश्चतुर्थे स्वप्ने लक्ष्मीर्देवतां पश्यति–

तओ पुणो पुन्नचंदवयणा, उच्चागयट्ठाण–लट्ठ–संठियं, पसत्थरूवं, सुपइट्ठिअकणगकुम्मसरिसोवमाणचलणं, अच्चुन्नय–पीण–रइअ–मंसल–उन्नय–तणु–तंबनिद्धनहं, कमल–पलाससुकुमालकर–चरणकोमलवरंगुलिं, कुरुविंदावत्तवट्टाणुपुव्वजंघं, निगूढजाणुं, गयवरकरसरिसपीवरोरूं, चामीकररइयमेहलाजुत्तकंत–विच्छिन्न–सोणिचक्कं, जच्चंजण-भमर-जलपयर-उज्जुयसम–सहिय–तणुय–आइज्ज–लडह–सुकुमाल–मउअ–रमणिज्जरोमरायं, नाभीमंडलसुंदर–विसाल–पसत्थजघणं, करयलमाइयपसत्थतिवलियमज्झं, नाणामणि-कणग–रयण-विमल–महातवणिज्जाऽऽहरण–भूसणविराइयअंगोवंगं, हारविरायंतकुंदमालपरिणद्धजलजलंतथणजुअल–विमलकलसं, आइयपत्तिअविभूसिएणं, सुभगजालुज्जलेणं, मुत्ताकलावएणं, उरत्थदीणारमालियविरइएणं, कंठमणिसुत्तएणं य कुंडलजुअलुल्लसंतअंसोवसत्तसोभंतसप्पभेणं, सोभागुणसमुदयेणं, आणणकुडुंबिएणं, कमलामलविसालरमणिज्जलोअणं, कमलपज्जलंतकरगहियमुक्कतोयं,

लिलावायकयपवखएणं, सुविसद्–घण–कसिण–सण्ह–लंबंतकेसहत्थं, पउमद्दहकमलवासिणं सिरिभगवइं पिच्छइ, हिमवंतसेलसिहरे दिसागइंदोरूपीवरकराभिसिच्चमाणिं ॥ ४ ॥ ३६ ॥

ततः पश्चात् पूर्णचन्द्रवदना त्रिशला श्रीलक्ष्मीदेवतां पश्यति । परं सा लक्ष्मीदेवता कुत्र तिष्ठति तदुच्यते– उच्चैर्हिमाचलपर्वतस्य मस्तके पद्मद्रहोऽस्ति, तस्य मध्ये कमलं वर्तते तत्र संस्थिताऽस्ति । यस्याः प्रशस्तं रूपं वर्तते । अत्र श्रीभद्रबाहुस्वामी तस्याः रूपं चरणयोर्नखेभ्य आरभ्य वर्णयति । प्रायेण देवतानां यदा वर्णनं क्रियते तदा चरणादेव क्रियते, यदा मनुष्याणां वर्णनं क्रियते तदा मस्तकाद् आरभ्य क्रियते, ततः कारणाद् यस्याः श्रीलक्ष्मीदेवतायाः चरणौ सम्यक्प्रकारेण स्थापितौ स्वर्णस्य कच्छपौ इव दृश्येते, मध्ये उन्नतौ, पार्श्वतो निम्नौ । पुनर्यस्या लक्ष्मीदेवताया अत्युन्नताः, सुकुमालाः, स्निग्धाः, रक्ता नखाः सन्ति । तथा कर–चरणयोरङ्गुलयः कमलपत्रवत् सुकुमालाः सन्ति । पुनर्यस्या लक्ष्मीदेवतायाः पिण्डिका कुरुविन्दवत्–कदलीस्थम्भवद् वृत्ता, आनुपूर्व्या पूर्वं पत्तला वर्तते, उपरि उपरि स्थूला । पुनर्यस्या लक्ष्मीदेवताया जानुनी गुप्ते स्तः । तथा ऐरावणशुण्डावद् जङ्घा विराजते । तथा सुवर्णस्य कटीमेखलया विराजमानं श्रोणिचक्रम्–कटिप्रदेशं वर्तते । पुनरपि लक्ष्मीदेवताया नाभीप्रदेशात् स्तनसीमां यावद् रोमराजी विराजते । प्रायेण स्त्रीणां रोमाण्येव न भवन्ति, देवतानां तु विशे-

षेण न भवन्ति; तथापि कवीनां शृङ्गारस्वभावत्वाद् रोमराज्या वर्णनं कृतम्। रोमराजी कीदृशी वर्तते? जात्यञ्जनवत्, कज्जलवत् श्यामवर्णा, भ्रमरश्रेणीवत्, सजलमेघघटावत् कृष्णा। पुनर्या रोमराजी ऋजुः—सरला, समा, मिलिता, सुकुमाला, रमणीया, सुविलासा, शिरीषपुष्पवद् मृदुरस्ति। पुनर्नाभीमण्डलेन सुन्दरम्, विस्तीर्णम्, प्रशस्तं जघनं यस्या लक्ष्मीदेवताया अस्ति। पुनर्यस्या लक्ष्मीदेवतायाः कटीप्रदेशो मुष्टिग्राह्योऽस्ति। मध्यप्रदेशस्त्रिवलीभिर्विराजमानोऽस्ति। पुनर्यस्या अङ्गो-पाङ्गानि सर्वाणि आभरणैश्च भूषितानि सन्ति। परंतु तानि आभरणानि—भूषणानि कीदृशानि सन्ति? नानाप्रकारैर्मणीभिश्चन्द्रकान्तादिभिः, माणिक्यादिभिः, रत्नादिभिर्निर्मितानि स्वर्णमयानि सन्ति। पुनर्यस्या लक्ष्मीदेवताया हृदये द्वावपि स्तनौ स्वर्णकलशौ इव विराजेते। परं स्तनौ कीदृशौ स्तः? हारैर्विराजमानौ, कुन्दमालया व्याप्तौ, तथा देदीप्यमानौ। पुनर्यस्या लक्ष्म्याः शरीरे आदरेण चतुराभिः स्त्रीभिर्भूषणानि परिधापितानि सन्ति। सुभगानि मुक्ताजालकानि विराजन्ते। हृदयं दिनारमालया शोभते। कण्ठस्तु मणिसूत्रेण। कुण्डलयुगलेन अंशौ शोभायमानौ स्तः। एवं भूषणानां शोभागुणसमुदायेन लक्ष्मीदेवताया मुखं विराजते, यथा राजा कुटुम्बेन विराजते। मुखस्य सर्वतो भूषणानां शोभासमुदायोऽस्ति, स मुखकुटुम्बम् इव मिलितोऽस्ति। निर्मलकमलपत्रे इव दीर्घे, तीक्ष्णे, विशाले लोचने स्तः। पुनर्यस्याः श्रीलक्ष्मीदेवतायाः करे कमलस्य लीलार्थं तालवृन्तं कृतमस्ति। यदा तत् कमलं लीलार्थं दोलयति

तदा तस्मात् कमलाद् मकरन्दः क्षरति । पुनर्यस्या लक्ष्मीदेवताया एतादृशः केशपाशोऽस्ति । स केशपाशः कीदृशोऽस्ति? सुविशदो-ऽतिनिर्मलः, घनो-निचितः, कृष्णः-श्यामवर्णः, लम्बायमानः कटीं यावत् श्यामवर्णो राजते । एवं चरणयोर्नखेभ्य आरभ्य वेणीं यावद् रूपस्य वर्णनं कृतम् । एतादृशीं लक्ष्मीं पद्मद्रहकमले वसन्तीम्, हिमाचलपर्वतस्य मस्तकोपरिस्थिताम् । दशभ्यो दिग्भ्यो गजा आगत्य यां लक्ष्मीं प्रति शुण्डादण्डं पद्मद्रहजले-भृत्वा स्नानं कारयन्ति। एतादृशीं लक्ष्मीदेवतां पश्यति। इति चतुर्थस्वप्नम् ॥ ४ ॥ ३६ ॥ अथ पञ्चमस्वप्नं व्याख्यायते-

१. तद्यथाः-अस्मिन् जम्बूद्वीपे, भरतक्षेत्रे, हिमवान् नाम पर्वतोऽस्ति। स शाश्वतः, स्वर्णमयो राजते। स एकसहस्र-द्विपञ्चाशद्योजनानि, द्वादश कलाश्च पृथुलः, शतयोजनानि उच्चोऽस्ति । तस्योपरि पद्मद्रहोऽस्ति, स दश योजनानि उण्डः, पञ्चशतयोजनानि पृथुलः, एकं योजनसहस्रं च लम्बः; निर्मलजलेन संपूर्णः । तस्य पद्मद्रहस्य तलम्, पार्श्वद्वयं च वज्ररत्नमयं वर्तते । तस्मिन् एकं श्रीदेवीवासयोग्यं कमलं वर्तते। तद् योजनैकं पृथुलम्, योजनैकं च लम्बम् अस्ति । तद् दश योजनानि पानीयमध्ये, क्रोशद्वयं च पानीयोपरि, सविशेषत्रीणि योजनानि तस्य परिधिः । वज्ररत्नमयं तस्य तलम्, अरिष्टरत्नमयं मूलम्, रक्तरत्नमयः स्कन्दः, वैडुर्यरत्नमयं नालम्; रत्न-सुवर्णमयानि तस्य पत्राणि, किञ्चिद् जाम्बूनदनामसुवर्णमयानि तस्य वाह्यपत्राणि । तस्य कमलस्य मध्ये वीजकोपरूपा एका सुवर्णमयी कर्णिका राजते । सा कीदृशी? रत्न-सुवर्णमयास्तस्याः केशराः, क्रोशद्वयं लम्बाः, पृथु लाश्च । एकक्रोशम् उच्चा पिण्डरूपा, सविशेषं क्रोशत्रयं तस्याः

परिधिः । तस्याः कर्णिकाया मध्ये श्रीदेवीवासयोग्यम् एकं महालयं वर्तते । तत् कीदृशम् ? एकक्रोशं लम्बम्, अर्धक्रोशं पृथुलम्, किञ्चिद्‌न्यूनत्रिकोशं उच्चम् । तस्य प्रासादस्य त्रीणि द्वाराणि–एकं पूर्वदिशि, द्वितियं दक्षिणदिशि, तृतीयम् उत्तरदिशि; पञ्चधनुश्शतानि उच्चानि, सार्धद्विशतधनूंषि पृथुलानि सन्ति । तस्य गृहस्य मध्ये एका सार्धद्विशतधनुष्प्रमाणा मणीमयी वेदिका वर्तते । तस्या उपरि एका श्रीदेवतायोग्या शय्या वर्तते ॥ अथ यद् मौलं कमलं कथितं तद् अष्टोत्तर-शतकमलैः वलयाकारेण परिवेष्टितं वर्तते । एतानि कमलानि मुख्यकमलाद् अर्धप्रमाणानि सन्ति । तेषु–अष्टोत्तरशतकमलेषु –श्रीदेव्या आभरणानि सन्ति । इति प्रथमो वलयः ॥१॥ पुनः प्रथमवलयपरितो वलयाऽऽकारेण कमलानां द्वितीयवलयो वर्तते । तत्र पूर्वदिशि श्रीदेव्याश्चतस्रो महत्तरा देव्यो वर्तन्ते । तासां चत्वारि कमलानि सन्ति ॥ पुनः आग्नेयकोणे श्रीदेव्या आभ्यन्तरपर्षदि स्थातारो गुरुस्थानीया अष्टौ सहस्रा देवा वर्तन्ते । तेषां च अष्टौ सहस्राणि कमलानि सन्ति । दक्षिणदिशि श्रीदेव्याः मध्यमपर्षदि स्थातारो दशसहस्रदेवा मित्रस्थानीया वर्तन्ते । तेषां दशसहस्रकमलानि सन्ति ॥ पुनर्नैऋतीकोणे श्रीदेव्या द्वादशसहस्रप्रमाणाः किंकरस्थानीया देवा सन्ति । तेषां द्वादशसहस्रप्रमाणानि कमलानि वर्तन्ते ॥ पुनः पश्चिमदिशि श्रीदेव्याः (हस्ति–तुरंगम–रथ–पदाति–महिष–गान्धर्व–नाट्यरूपाणि) सप्त अनीकानि, तेपाम् अधिपतयः सन्ति । तेषां सप्त कमलानि सन्ति ॥ वायव्यकोणे, उत्तरदिशि, ईशानकोणे एतेषु त्रिषु दिक्षु श्रीदेव्याश्चतुःसहस्रप्रमाणाः सामानिका देवा वर्तन्ते । तेषां चतुःसहस्रकमलानि सन्ति ॥ एवं दिशाम् अष्टकेन द्वितीयो वलयः॥२॥ पुनर्द्वितीयवलयस्य परितो वलयाऽऽकारेण तृतीयो

तओ पुणो सरसकुसुममंदारदामरमणिज्जभूयं, चंपग–असोग–पुन्नाग–नाग–पियंगु–सिरीस–

वलयो वर्तते । तस्मिन् वलये श्रीदेव्याः षोडशसहस्रप्रमाणा अङ्गरक्षका देवा वर्तन्ते । तेषां षोडशसहस्रकमलानि सन्ति ॥ इति तृतीयो वलयः ॥ ३ ॥ पुनस्तस्मात् तृतीयवलयाद् परितो वलयाऽऽकारेण चतुर्थो वलयो वर्तते । तस्मिन् आभ्यन्तरवलये श्रीदेव्या द्वात्रिंशल्लक्षा आभ्यन्तरा आभियोगिकदेवाः सन्ति । तेषां द्वात्रिंशल्लक्षकमलानि सन्ति । इति चतुर्थो वलयः ॥ ४ ॥ पुनस्तस्मात् चतुर्थाऽऽभ्यन्तरवलयात् परितो वलयाऽऽकारेण पञ्चमो मध्यमवलयो वर्तते । तस्मिन् वलये श्रीदेव्याश्चत्वारिंशल्लक्षा माध्यमा आभियोगिकदेवा वर्तन्ते । तेषां चत्वारिंशल्लक्षकमलानि सन्ति । इति पञ्चमो वलयः ॥ ५ ॥ पुनस्तस्मात् पञ्चमवलयात्परितो वलयाऽऽकारेण षष्ठो बाह्यवलयो वर्तते । तस्मिन् वलये श्रीदेव्या अष्टचत्वारिंशल्लक्षा बाह्या आभियोगिका देवा वर्तन्ते । तेषां देवानां अष्टचत्वारिंशल्लक्षकमलानि सन्ति । इति षष्ठो वलयः ॥ ६ ॥ अथ कियन्ति सर्वाणि कमलानि जातानि? तत्राऽऽह–एकाकोटिः, विंशतिलक्षाः पञ्चाशतसहस्राः, एकं शतं विंशतिश्च (१२०५०१२०) एतानि कमलानि शाश्वतानि पृथिवीमयानि, वनस्पतिकायकमलसदृशाऽऽकारतया दृश्यमाणानि । एतत्सर्वं कमलाऽऽवासवासिनो देवाः, देव्यश्च श्रीदेवीसेवां कुर्वाणाः वसन्ति । अत्र केचित् श्रीदेवीस्थाने तुल्यनामतया पर्यायत्वेन लक्ष्मीदेवतां नामग्रहणेन वर्णयन्ति ॥

मुग्गरग–मल्लिया–जाइ–जूहिअं, कोल्ल–कोज्ज–कोरंट–पत्तदमणय–नवमालिअ–बउल–तिलय–वासंतिअ–पउमप्पल–पाटल–कुंद–अइमुत्त–सहकारसुरभिगंधिं अणुवम–मणोहरेणं गंधेणं दस दिसाओ विवासयंतं, सव्वोउअसुरभिकुसुममल्लधवल–विलसंत–कंत–बहुवन्नभत्तचित्तं, छप्पय–महुअरि–भमरगणगुमुगुमायंत–निलंत–गुंजंतदेसभागं दामं पिच्छइ ॥ तओ नहंगणतलाओ ओवयंतं ॥ ५ ॥ ३७ ॥

ततः पुनः पुष्पाणां दामद्वयं त्रिशला पञ्चमे स्वप्ने पश्यति । तत्र पुष्पमालाद्वये कानि कानि पुष्पाणि सन्ति ? तेषां नामान्याह–कल्पवृक्षाणां पुष्पाणि विराजन्ते । चम्पकानां पुष्पाणि, अशोकवृक्षस्य पुष्पाणि, पुन्नागस्य पुष्पाणि, नागवृक्षस्य पुष्पाणि, पियङ्गुवृक्षस्य पुष्पाणि, शिरीषवृक्षस्य पुष्पाणि, मुद्गरस्य पुष्पाणि, मल्लिकापुष्पाणि, युथिकापुष्पाणि, कोलवृक्षस्य पुष्पाणि, कोजवृक्षस्य पुष्पाणि, कोरण्टवृक्षस्य पुष्पाणि, दमनकस्य पुष्पाणि, नवमल्लिकायाः पुष्पाणि, बकुलवृक्षस्य पुष्पाणि, वासन्तिकापुष्पाणि; पद्म–कमलो–त्पल–पुण्डरीकाणि कुन्दवृक्षस्य पुष्पाणि, अतिमुक्तकस्य पुष्पाणि, आम्रवृक्षस्य मञ्जरी अन्तराले प्रक्षिप्ताऽस्ति । एतेषां पुष्पाणाम् अतीव सौगन्ध्यं वर्तते । यस्य पुष्पमालाद्वयस्य मनोहरेण गन्धेन आकर्षिता भ्रमरा भ्रमर्यश्च आगत्य गञ्जन्ति । पुनरपि यस्मिन्

मालाद्वये पुष्पाणि वर्तन्ते । तानि कीदृशानि सन्ति ? तानि सर्वेषाम् ऋतूनाम् उत्पन्नानि सन्ति । पुनः सरसानि सुरभाणि सन्ति । एतादृशं दामद्वयं पञ्चवर्णपुष्पैर्गुम्फितं वर्तते । परन्तु धवलवर्णो विशेषोऽस्ति । रक्त–पीत–नील–श्यामपुष्पाणि तु यत्र यत्र शोभन्ते तथा तथा तत्र गुम्फितानि सन्ति । एतादृशं दामद्वयं पञ्चमे स्वप्ने त्रिशला पश्यति ॥ ५ ॥ ३७ ॥ अथ षष्ठे स्वप्ने चन्द्रं पश्यति–

ससिं च गोखीरफेन–दगरय–रययकलसपुंडरतरं, सुभं, हियय–नयणकंतं, पडिपुन्नं, तिमिर-निकरघणगुहिरवितिमिरकरं, पमाणपक्खंतरायलेहं, कुमुअवणविबोहगं, निसासोहगं सुपरिम-ट्ठदप्पणतलोवमं, हंसपडिपुन्नं, जोइसमुहमंडगं, तमरिपुं, मयणसरापूरगं, समुद्ददगपूरगं, दुम्मणं जणं दयइवज्जिअं पायएहिं सोसयंतं, पुणो सोम–चारुरूवं पिच्छइ सा गगणमंडल-विसालसोमचंकम्ममाणतिलयं, रोहिणीमण–हिअयवल्लहं देवी पुन्नचंदं समुल्लसंतं ॥ ६ ॥ ३८॥

ततः सा त्रिशला चन्द्रं पश्यति । स चन्द्रः कीदृशोऽस्ति ? यश्चन्द्रो गोदुग्धस्य फेनवत्, जलानां कणवत्, रूप्यस्य कलशवद् अतीव धवलोऽस्ति । पुनर्यश्चन्द्रो हृदयस्य, नयनस्य च कान्तः । पुनर्यश्चन्द्रः प्रतिपूर्णोऽस्ति ।

अन्धकारस्य निवारकः । पुनरपि यस्य चन्द्रस्य रेखा शुक्लपक्षे विराजते । पुनरपि यश्चन्द्रः कुमुदवनानि विबोधयति । निशायाः शोभाकारी । सम्यक्प्रकारेण उज्ज्वलीकृतदर्पणवद् विराजते । आकाशरूपतडागस्य हंसवद् उभाभ्यां पक्षाभ्यां पूर्णः । तथा सर्वेषां ज्योतिषाम्, नक्षत्राणां मुखस्य मण्डनम् । अन्धकारस्य रिपुः । पुनर्यश्चन्द्रः कन्दर्पस्य शराणां पूरको वर्तते । पुनर्यश्चन्द्रः समुद्राणां जलानि वर्धयति, यदा शुक्लपक्षे चन्द्रोदयो भवति तदा समुद्रस्य वेला वर्धते । विरहिपुरुषाणाम्, विरहिणीनां स्त्रीणां च यस्योदयाद् अधिको विरहो भवति, अतः कारणाद् विरहीणां निजकिरणैः शोषयन् । अपरेषां सर्वेषां यस्य रूपं सौम्यं लगति । पुनरपि यश्चन्द्र आकाशमण्डलस्य चलमाणं तिलकमिव विराजते । रोहिण्या हृदयस्य वल्लभोऽस्ति, चन्द्रस्य रोहिणीनक्षत्रं कलत्रम् अस्ति इति लोकरूढिर्वर्तते । एवंविधं पूर्णमासीचन्द्रं देवी श्रीत्रिशला क्षत्रियाणी पश्यति ॥ ६ ॥ ३८ ॥ अथ सप्तमस्वप्ने सूर्यं पश्यति । तस्य च वर्णनम्—

तओ पुणो तमपडलपरिप्फुडं चेव तेअसा पज्जलंतरूवं, रत्तासोगप्पकास–किंसुअ–सुअमुह–गुंजद्धरागसरिसं, कमलवणालंकरणं, अंकणं जोइसस्स, अंबरतलप्पईवं, हिमपडलग्गहं, गहगणोरुनायगं, रत्तिविणासं, उदय–त्थमणेसु मुहुत्तसुहदंसणं, दुन्निरिक्खरूवं, रत्तिसुद्धंतेउरदु-

प्पयारप्पमद्दणं, सीयवेगमहणं पिच्छइ मेरुगिरिसययपरियट्टअं विसालं सूरं रस्सीसहस्सपयलियादित्तसोहं ॥ ७ ॥ ३९ ॥

ततश्चन्द्रस्य निरीक्षणाद् अनन्तरं सूर्यं पश्यति । परं स सूर्यः कीदृशोऽस्ति ? अन्धकारस्य पटलं परिस्फोटयन् तेजसा जाज्वल्यमानो वर्तते । पुनर्यस्य रूपं कीदृशं रक्तं वर्तते ? यादृशः पुष्पितो रक्तोऽशोकवृक्षो भवति तस्य प्रकाशसदृशो रक्तवर्णोऽस्ति । पुनर्यादृशं किंशुकं पुष्पितं भवति, यादृशं शुकस्य मुखं भवति, यादृशं गुञ्जाया अर्धं भवति तादृशम् आरक्तं रूपम् अस्ति । पुनर्यः सूर्यः कमलवनानि प्रबोधयति, अतः कारणात् कमलवनानाम् अलंकरणं शोभाकारकोऽस्ति । ज्योतिःशास्त्रस्य ज्ञानम्, अथवा ज्योतिषाम्–ज्योतिश्चक्राणां ग्रहाणां चिह्नं वर्तते । पुनरपि यः सूर्य आकाशस्य साक्षात् प्रदीप इव भाति । पुनर्यः सूर्य उद्यमानः सन् हिमपटलस्य गले हस्तं दत्त्वा निष्काशयति । पुनर्यः सूर्यो ग्रहाणां महाराजा वर्तते । रात्रेर्विनाशकः । पुनर्यस्य रूपम् उदयवेलायाम्, अस्तवेलायां च मुहूर्तं यावत् सुखेन विलोकयितुं शक्यते पश्चाद् निरीक्षितुं न शक्यते । पुनर्यः सूर्यः कीदृशोऽस्ति ? रात्रिरूपं यद् अन्तःपुरं तत्र यो दुष्प्रचारः पुरुषाणां गमनस्याऽसामर्थ्यं तस्य निवारकः । यथा नृपाणाम् अन्तःपुरे गच्छतः पुरुषस्य भयं जायते तथा रात्रौ अन्धकारे प्रचलतः पुरुषस्य मनसि भयं भवति, सूर्योदये तु

सर्वेऽपि पथिकाः प्रमुदिताः सन्तः प्रचलन्ति । पुनर्यः सूर्यः शीतवेगान् मश्नाति, यस्योदयात् शीतं पलायते । पुनर्यः सूर्यो मेरुपर्वतस्य पार्श्वे निरन्तरं प्रदक्षिणया भ्रमति विस्तीर्णमण्डलयुक्तः । पुनर्येन सूर्येण स्वकीयसहस्र-किरणैः कृत्वा चन्द्रादिग्रहाणाम्, ताराणाम्, नक्षत्राणां प्रभा दूरीकृताऽस्ति । अत्र यत् श्रीसूर्यस्य सहस्रकिरणा उक्ताः तद् लोकरूढ्या ज्ञेयम् । तथा लोके सूर्यस्य 'सहस्रकिरणः' इति नाम प्रसिद्धं वर्तते । सूर्यस्य किरणा ऋतुभेदाद् अधिका अपि भवन्ति, अल्पा अपि भवन्ति । सहस्रेभ्योऽल्पाः कदाचिद् न भवन्ति, तद्यथा—

शतानि द्वादश मधौ, त्रयोदशैव माधवे । चतुर्दश पुनर्ज्येष्ठे, नभो–नभस्ययोस्तथा ॥ १ ॥
पञ्चदशैव त्वाषाढे, षोडशैव तथाऽश्विने । कार्तिके त्वेकादशकः, शतान्येवं तपस्यपि ॥ २ ॥
मार्गे तु दशसार्धानि, शतान्येवं च फाल्गुने । पौषे एव परं मासि, सहस्रकिरणा रवेः ॥ ३ ॥

चैत्रमासे १२०० किरणाः सूर्यस्य भवन्ति । वैशाखमासे १३०० किरणा भवन्ति । ज्येष्ठमासे १४०० किरणा भवन्ति । श्रावणे मासे, भाद्रपदे मासे च १४०० किरणा भवन्ति । आषाढे १५०० किरणा भवन्ति । आश्विनमासे १६०० किरणा भवन्ति । कार्तिकमासे ११०० किरणा भवन्ति । माघमासे एकादशशतकिरणा भवन्ति । मार्गशीर्षमासे सार्धदशशतानि भवन्ति । फाल्गुनमासेऽपि सार्धदशशतानि भवन्ति । पौषमासे सहस्रकिरणा भवन्ति—इति ग्रन्थादौ सूर्यस्य किरणसंख्या कथिताऽस्ति, एतादृशं सूर्यदेवं जगच्चक्षुषं सप्तमे स्वप्ने पश्यति ॥७॥३९॥

अथाऽष्टमे स्वप्ने ध्वजस्य वर्णनम् । अष्टमे स्वप्ने ध्वजं पश्यति—

तओ पुणो जच्चकणग–लट्ठिपइट्ठिअं, समूहनील–रत्त–पीय–सुक्किल्ल–सुकुमालु–ल्लसियमोरपिच्छकयमुद्धयं धयं अहियसस्सिरीयं, फलिअ–संख–कुंद–दगरय–रययकलसपंडुरेणं, मत्थयत्थेण सीहेण रायमाणेण रायमाणं भित्तुं गगणतलमंडलं चेव ववसिएणं पिच्छइ सिव–मउय-मारुयलयाहयकंपमाणं अइप्पमाणं जणपिच्छणिज्जरूवं ॥ ८ ॥ ४० ॥

ततः सा त्रिशला क्षत्रियाणी ध्वजं स्वप्ने पश्यति । स ध्वजः कीदृशोऽस्ति ? यस्य ध्वजस्य दण्डः स्वर्णमयोऽस्ति–स्वर्णमयदण्डे स्थापितोऽस्ति इत्यर्थः । पुनर्यस्य ध्वजस्य वस्त्रे पञ्चानाम् अपि वर्णानां समूहोऽस्ति–क्वचिद् नीलो वर्णः, क्वचित् पीतो वर्णः, क्वचिद् रक्तो वर्णः, क्वचित् शुक्लो वर्णः, क्वचित् श्यामो वर्णोऽस्ति । पुनर्यस्य ध्वजस्य मस्तके सुकुमालः, अनेकवर्णैर्विराजमान उल्लसन् मयूरपिच्छः स्थापितोऽस्ति, स मयूरपिच्छस्तस्य ध्वजस्य मस्तके शिखा इव विराजते । पुनर्यो ध्वजोऽधिकश्रीकोऽस्ति । पुनर्यस्मिन् ध्वजे सिंहस्य रूपं लिखितं वर्तते, तेन सिंहस्य रूपेण स ध्वजोऽधिकं विराजते, परन्तु स सिंहो वर्णेन कीदृशोऽस्ति, तत् कथ्यते–यादृशं स्फटिकं भवति, यादृशः शङ्खः श्वेतो भवति, यादृशं कुन्दवृक्षस्य पुष्पं श्वेतं भवति, यादृशा जलस्य कणाः

श्वेता भवन्ति, यादृशो रूप्यस्य कलशः श्वेतो भवति तादृशेन पाण्डुरेण श्वेतवर्णेन विराजते । यं सिंहं दृष्ट्वा लोका इति विचारयन्ति–किम् असौ सिंहो गगनमण्डलभेदनाय उद्यतः ? पुनर्यस्य ध्वजस्य वस्त्रं निरुपद्रवया वायुलहर्या ईषत् कम्पायमानं वर्तते । पुनर्यो ध्वजोऽतीव उच्चोऽस्ति । जनानां यस्यरूपं प्रेक्षणीयं वर्तते इति अष्टमः स्वप्नः ॥ ८ ॥ ४० ॥ अथ नवमस्वप्नस्य पूर्णकलशस्य वर्णनम् आह–

तओ पुणो जच्चकंचणुज्जलंतरूवं, निम्मलजलपुन्नमुत्तमं, दिप्पमाणसोहं, कमलकलावपरिरायमाणं, पडिपुण्णसव्वमंगलभेयसमागमं, पवररयणपरायंतकमलट्ठियं, नयणभूसणकरं, पभासमाणं, सव्वओ चेव दीवयंतं, सोमलच्छीनिभेलणं, सव्वपावपरिवज्जियं, सुभं, भासुरं, सिरिवरं, सव्वओ य सुरभिकुसुमआसत्तमल्लदामं पिच्छइ सा रययपुण्णकलसं ॥ ९ ॥ ४१ ॥

ततः पुनः सा त्रिशला क्षत्रियाणी पूर्णकलशं पश्यति । कीदृशः संपूर्णकलशः ? उत्तमस्वर्णवद् देदीप्यमानं यस्य रूपं वर्तते । निर्मलजलेन पूर्णोऽस्ति । अतीव सुन्दरा सूर्यमण्डलवद् जाज्वल्यमाना शोभा वर्तते । यस्य पूर्णकलशस्य पार्श्वे कमलानां वाटिका वर्तते, कमलैर्वेष्टितो राजते । पुनर्यः पूर्णकुम्भः सर्वेषां मङ्गलानां समागमं सूचयति । पुनर्यः पूर्णकलशः प्रधानरत्नानां कमलस्य उपरि स्थापितो वर्तते । नयनयो आनन्ददाता, प्रभा-

युक्तः, सर्वदिग्भागान् प्रदीपयत् सम्यक् लक्ष्म्या गृहमिव । पुनः सर्वपापैर्वर्जितः । पुनः शुभः, भासुरः, श्रियो निवासः । पुनर्यस्य पूर्णकुम्भस्य कण्ठे सर्वऋतूनाम् उत्पन्नानि सरसानि, सुगन्धानि पुष्पाणि तेषां माला कृत्वा परिधापिताऽस्ति एतादृशं पूर्णकुम्भं सम्यग् रूप्यमयं नवमे स्वप्ने विलोकयति ॥ ९ ॥४१॥ इति नवमस्वप्नम् उक्त्वा दशमं स्वप्नं कथयति–

तओ पुणो पुणरवि रविकिरणतरुणबोहियसहस्सपत्तसुरभितरपिंजरजलं, जलचर–पहकरपरिहत्थगमच्छपरिभुज्जमाणजलसंचयं, महंतं, जलंतं इव कमल–कुवलय–उप्पल–तामारस–पुंडरियउरुसप्पमाणसिरिसमुदएणं रमणिज्जरूवसोहं, पमुइयंतभमरगण–मत्तमहुयरिगणुक्करोलिज्जमाणकमलं, कायंवक–बलाहक–चक्क–कलहंस–सारसगव्विअसउणगणमिहुणसेविज्जमाणकमलं, पउमिणीपत्तोवलग्गजलविंदुनिचयचित्तं पिच्छइ सा हियय–नयणकंतं पउमसरं नामसरं, सररूहाभिरामं ॥ १० ॥ ४२ ॥

पुनरपि सा त्रिशला पद्मसरो नाम सरोवरं पश्यति। कीदृशं तत् पद्मसरोवरं वर्तते ? यस्य मध्ये तरुण-

सूर्यस्य किरणैः कृत्वा सहस्रदलकमलानि विकसितानि सन्ति, विकसितानां च कमलानां मकरन्देन कृत्वा यस्य पानीयं सुगन्धं वर्तते; कमलानां पुष्पैः, पत्रैश्च यस्य जलस्य प्रभा पिञ्जरवर्णा दृश्यते। पुनर्यस्य सरोवरस्य जलं जलचरजन्तूनां समूहैः सेव्यमानं वर्तते। पुनर्यस्य सरोवरस्य मध्ये पद्मिनीपत्रे जलबिन्दवः पतिताः सन्त ईदृशा विराजन्ते यथा मणिजटिताङ्गने मुक्ताफलानां चित्राणि लिखितानि भवन्ति। पुनर्यत् सरोवरं महद् वर्तते। पुनर्यस्मिन् सरोवरे कमलानि सूर्यविकासीनि, कुवलयानि रात्रिविकासीनि पद्मानि, उत्पलानि–नीलकमलानि, तामरसानि–महाकमलानि, पुण्डरीकाणि–श्वेतकमलानि, रक्तकमलानि, पीतकमलानि वर्तन्ते, विराजन्ते, शोभासमुदायेन अतीव रमणीकं वर्तते। पुनस्तेषु कमलेषु प्रसन्ना भ्रमराः, भ्रमर्यश्च आगत्य गुञ्जन्ति। पुनरपि यस्मिन् सरोवरे एते पक्षिणो वसन्ति। ते के के पक्षिणः? कादम्बकाः, कलहंसाः, पुनश्चक्रवाकाः, हंसानां बालकाः, तथा सारसा एते सर्वेऽपि गर्वेण वसन्ति। एतादृशं सरोवरं पद्मैः अभिरामं दशमे स्वप्ने पश्यति इति दशमः स्वप्नः ॥ १० ॥ ४२ ॥ अथ एकादशे स्वप्ने क्षीरसमुद्रं पश्यति–

तओ पुणो चंदकिरणरासिसरिससिरिवच्छसोहं, चउग्गुणपवड्ढमाणजलसंचयं, चवल–चंचलुच्चायप्पमाणकल्लोललोलंततोयं, पडुपवणाहयचलिअचवलपागडतरंगरंगभंगखोखुब्भमाण-

**सोभंतनिम्मलं, उक्कडउम्मीसहसंबंधधावमाणोनियत्तभासुरतराभिरामं, महामगरमच्छ–तिमि–तिमिंगिलनिरुद्धतिलतिलयाभिघायकप्पूरफेणपसरं, महानईतुरियवेगसमागयभममगंगावत्तगुप्पमाणुच्छलंतपच्चोनियत्तभममाणलोलसलिलं पिच्छइ खीरोयसायरं, सा रयणिकरसोमवयणा ॥ ११ ॥ ४३ ॥**

ततः पुनः सा त्रिशला चन्द्रवदना क्षीरसमुद्रं पश्यति। कीदृशः स क्षीरसमुद्रः? चन्द्रस्य किरणानां समूहस्य यादृशी शोभा भवति तादृशी शोभा यस्मिन् समुद्रमध्येऽस्ति। पुनर्यस्य समुद्रस्य जलसमूहः चतसृषु दिक्षु वर्धमानो वर्तते। पुनर्यस्मात् समुद्रात् चपलाः, चपलेभ्योऽपि चपलाः; उच्चाः, अतीवोच्चाः; कल्लोला उत्तिष्ठन्ति। तैरेव कल्लोलैर्यस्य पानीयं चपलं वर्तते। पुनर्यस्य समुद्रस्य कल्लोलमाला मन्दपवनेन आहता सती तटप्रदेशे आगत्य तटस्य क्षोभं करोति–तटे शब्दं करोति, तेन कारणेनाऽतीव सुन्दरो दृश्यते समुद्रः। पुनर्यस्य समुद्रस्य कल्लोलाः कीदृशा वर्तन्ते? निर्मलाः, उत्कटाः, ससंबन्धेन धावमानाः–एकस्य कल्लोलस्य पृष्ठेऽपरः कल्लोलः, पूर्वं लघिष्ठाः कल्लोलाश्चलन्ति, तेषां पृष्ठे महाकल्लोला एवं क्रमेण कल्लोलानां शोभा दृश्यते। पुनर्यस्मिन् समुद्रे एते जलचारिणो जीवाः क्रीडन्ति। ते के जलजन्तवः? महामकरमत्स्याः, तिमयो मत्स्यविशेषाः, तिमिङ्गिला येऽपरान् मत्स्यान्

गिलन्ति, तिमिङ्गलगिलैः निरुद्धाः येऽपरान् मत्स्यान् निरुन्धन्ति महाशरीरत्वात्, तथा लघुमत्स्याः, तिलतिलका मत्स्यविशेषाः, एते सर्वेऽपि यदा परस्परं मिलन्ति, क्रीडन्ति तदा तेषां पुच्छस्याऽऽस्फालनात् पानीयस्य फेनानि प्रादुर्भवन्ति, तानि कल्लोलैः कृत्वा तटे आगत्य पतन्ति, पुनस्तेषां फेनानां पुञ्जो जातोऽस्तिः स पुञ्जः कर्पूरपुञ्ज-सदृशो दृश्यते । पुनर्यस्मिन् समुद्रे महानद्यो गङ्गा–सिन्धु–सीता–सीतोदादयो महावेगेन आगत्य पतन्ति[1] एतादृशं क्षीरसमुद्रं पश्यति ॥ ११ ॥ ४१ ॥ इति एकादशः स्वप्नः । अथ द्वादशविमानस्वप्नवर्णनम् आह–

तओ पुणो तरुणसूरमण्डलसमप्पभं दिप्पमाणसोहं उत्तमकंचणमहामणिसमूहपवरतेयं अट्ठ-सहस्सदिप्पंतनहप्पईवं, कणगपयरलंबमाणमुत्तासमुज्जलं, जलंतदिव्वदामं, इहामिग–उसभ–तुरग–नर–मगर–विहग–वालग–किन्नर–रुरु–सरभ–चमर–संसत्तकुंजर–वणलय–पउमलय-भित्तिचित्तं, गंधव्वोपवज्जमाणसंपुण्णघोसं, निच्चं सजलघणविउलजलहरगज्जियसद्दाणुणाइणा

---

१. यद्यपि गङ्गाद्या नद्यः क्षीरसागरे न पतन्ति, तथापि शास्त्रकारेण समुद्रवर्णने लवणसमुद्रवत् समुद्रत्वेन समानत्वाद् नद्या अवपातनादेर्वर्णनं कृतं तद् युक्तमेव.

देवदुंदुहिमहारवेणं सयलमवि जीवलोयं । पूरयंतं, कालागुरुपवर–कुंदुरुक्क–तुरुक्क–डज्झंतधूव-वाससंगउत्तममघमघंतगंधुद्धुयाभिरामं निच्चालोयं सेयं सेयप्पभं सुरवराभिरामं पिच्छइ सा साओवभोगं वरविमाणपुंडरियं ॥ १२ ॥ ४४ ॥

ततः सा त्रिशला विमानवरपुण्डरीकं निरीक्षति । यथा कमलेषु पुण्डरीकम् उत्कृष्टम्, तथा विमानेषु पुण्डरीकम् इव विराजते । कीदृशं तद्विमानम्? यस्य उद्यत्सूर्यमण्डलवद् देदीप्यमाना शोभा वर्तते । पुनर्यस्मिन् विमानेऽष्टोत्तरसहस्रं स्वर्ण–रत्नमयाः स्तम्भा विद्यन्ते । पुनर्यद् विमानम् आकाशस्य प्रदीपमिव विराजते । पुनर्यस्मिन् विमानमध्ये स्वर्णमयप्रतरेषु नागफणाऽऽकारकीलकेषु स्थाने स्थाने दिव्यपुष्पाणां मालाः, मुक्ताफलादीनां च मालाः स्थापिताः सन्ति । पुनर्यस्मिन् विमाने भित्तिकायाम्–ईहामृगाणाम्, वृकाणां रूपाणि, वृषभाणां रूपाणि, तुरङ्गमाणां रूपाणि, नरमगरमत्स्यानां रूपाणि; पक्षिणां भारण्ड–गरुड–मयूरकादीनां रूपाणि, सर्पाणां रूपाणि, किन्नराणां रूपाणि, कस्तूरिकामृगाणां रूपाणि, अष्टापदानाम्, शार्दूल–सिंहानां रूपाणि, कुञ्जराणां रूपाणि, वनलतानां रूपाणि, पद्मलतानां रूपाणि चित्रितानि सन्ति । पुनर्यस्मिन् विमाने नाटकं भवति, तस्मिन् नाटके जायमाने विविधानां वादित्राणां संपूर्णः शब्दो नित्यं भवति । पुनर्यस्मिन् विमाने सजलस्य महामेघस्य शब्दवद्

गम्भीरो देवदुन्दुभीनां रवः-शब्दो वर्तते । ज्ञायते तद् विमानं देवदुन्दुभीशब्देन सकलं जीवलोकं संसारं पूरयति इव । पुनर्यद् विमानं कृष्णागरुः, प्रवरः कुन्दुरुक्कशब्देन, चीडः, तुरुक्कशब्देन सेल्हारस एतेषां धूपस्य धूपेन मघमघायमानं वर्तते । पुनर्यस्मिन् विमाने सदैव उद्योतो वर्तते । देवानां योग्यम् । सदैव शान्तियुक्तम्, एतादृशं विमानं त्रिशला क्षत्रियाणी पश्यति ॥ १२ ॥ ४४ ॥ अथ रत्नराशिस्वप्नं वर्णयति-

तओ पुणो पुलग-वेरिंद-नील-सासग-कक्केयण-लोहियक्ख-मरगय-मसारगल्ल-पवाल-फलिह-सोगंधिय-हंसगब्भ-अंजण-चंदप्पहवररयणेहिं महियलपइट्ठियं, गगनमंडलं तं पभासयंतं, तुंगं, मेरुगिरिसन्निकासं पिच्छइ सा रयणनिकररासिं ॥ १३ ॥ ४५ ॥

ततः पुनः सा त्रिशला क्षत्रियाणी त्रयोदश स्वप्ने रत्नानां राशिं पश्यति । तानि कानि कानि रत्नानि सन्ति ? तेषां नामानि कथ्यन्ते-पुलकरत्न-वज्ररत्न-नीलरत्न-सासकरत्न-कर्केतनरत्न-लोहितरत्न-मरकतरत्न-प्रवालरत्न-स्फटिकरत्न-सौगन्धिकरत्न-हंसगर्भरत्न-अञ्जनरत्न-चन्द्रप्रभरत्नानि अन्यान्यपि प्रधानानि रत्नानि विशाले सुवर्णस्य स्थाले स्थापितानि । तेषां रत्नानां पुञ्जो मेरुपर्वतवद् उच्चैस्तरो गगनमण्डलं देदीप्यमानं कुर्वन्तं ( रत्नराशिं ) त्रिशला पश्यति ॥ १३ ॥ ४५ ॥ इति त्रयोदशस्वप्नम् उक्तम् । अथ चतुर्दशं स्वप्नं वर्णयति-

**सिहिं च सा विउल्ल–ज्जल–पिंगलमहु–घयपरिसिच्चमाणनिद्धूमधगधगायंतजालुज्जलाभिरामं, तरतमजोगजुत्तेहिं जालपयरेहिं अन्नुन्नं इव अणुपइन्नं पिच्छइ सा जालुज्जलणगअंवरं व कत्थइ पयंतं, अइवेगचंचलं सिहिं ॥ १४ ॥ ४६ ॥**

चतुर्दशस्वप्नेऽग्निशिखां पश्यति । कीदृशीम् अग्निशिखाम् ? विपुला विस्तीर्णा, उज्वला निर्मला । तथा पिङ्गला, पीत–रक्तवर्णा । पुनर्यथा मधु–घृताभ्यां सिक्ता सती निर्धूमा, धगधगशब्दं कुर्वाणा, तथा याऽग्निशिखा जाज्वल्यमाना । पुनर्यस्याम् अग्निशिखायाम् अनेका लघिष्ठाः, अतिवृद्धाः, वृद्धतराः, अतिलघिष्ठतरा ज्वाला वर्तन्ते एतादृशीभिः अनेकाभिर्ज्वालाभिः याऽग्निशिखा संकुलाऽस्ति । पुनर्यस्यां चाऽग्निशिखायाम् अनेका ज्वाला अन्योन्यं प्रविशन्ति एतादृशीम् अग्निशिखां धूमरहितां, जाज्वल्यमानां कुत्रचित् प्रदेशे आकाशं पचन्तीमीव अतीव चपलाम् अग्निशिखां त्रिशला पश्यति ॥ अत्राऽयं विशेषः–यस्तु तीर्थकरजीवः स्वर्गात् च्युत्त्वा यस्या गर्भे उत्पद्यते सा देवविमानं पश्यति । यस्तु पाताल–भूमेश्च्युत्त्वा यस्या गर्भे उत्पद्यते सा भुवनं पश्यति । इति चतुर्दशस्वप्नवर्णनम् । अथ चतुर्दशान् स्वप्नान् दृष्ट्वा त्रिशला यत् करोति तदाह–

**इमे एयारिसे सुभे, सोमे, पियदंसणे, सुरूवे सुविणे दट्ठूण सयणमज्झे पडिबुद्धा अरविंदलो-**

यणा, हरिसपुलइअंगी एए चउद्दस सुमिणे, सव्वा पासेइ तित्थयरमाया। जं रयणिं वक्कमई, कुच्छिंसि महायसो अरहा ॥ ४७ ॥

एतान् चतुर्दश महास्वप्नान् यथा पूर्ववर्णितान्, सुभगान्, सौम्यान्, प्रियदर्शनान्, सुरूपान् दृष्ट्वा; सा त्रिशला क्षत्रियाणी शयनीयमध्ये प्रतिबुद्धा जागरूका आसीत्–विनिद्रा जाता, कमलवल्लोचने विकसिते। हर्षवशात् त्रिशलायाः सर्वम् अङ्गं पुलकितम् आसीत्। सर्वा अपि रोमराजय उल्लसिताः। एतान् चतुर्दश स्वप्नान् सर्वास्तीर्थंकरजनन्यो यदा तीर्थंकरस्य जीवः कुक्षौ गर्भत्वेन उत्पद्यते तदाऽवश्यं पश्यन्ति। तस्मात् कारणात् त्रिशलाऽपि श्रीमहावीरस्वामिनो गर्भाऽवतरणात् चतुर्दश महास्वप्नान् दृष्ट्वा शय्यायां जजागार ॥ ४७ ॥

तए णं सा तिसला खत्तियाणी इमे एयारूवे उराले चउद्दस महासुमिणे पासित्ता णं पडिबुद्धा समाणी हट्ठ–तुट्ठ–जाव–हियया, धाराहयकयंबपुप्फगं पिव समूस्ससिअरोमकूवा सुविणुग्गहं करेइ, करित्ता सयणिज्जाओ अब्भुट्ठेइ, अब्भुट्ठित्ता पायपीढाओ पच्चोरुहइ, पच्चोरुहित्ता अतुरिअ–मचवल–मसंभंताए अविलंबियाए रायहंससरिसीए गइए जेणेव सयणिज्जे, जेणेव

सिद्धत्थे खत्तिए तेणेव उवागच्छइ, उवागच्छित्ता सिद्धत्थं खत्तिअं ताहिं इट्ठाहिं, कंताहिं, पियाहिं, मणुन्नाहिं, मणोरमाहिं, उरालाहिं, कल्लाणाहिं, सिवाहिं, धन्नाहिं, मंगल्लाहिं, ससिरीयाहिं, हिययगमणिज्जाहिं, हिययपल्हायणिज्जाहिं, मिउ–महुर–मंजुलाहिं गिराहिं संलवमाणी २ पडिबोहेइ ॥ ४८ ॥

ततश्चतुर्दश स्वप्नावलोकानाऽनन्तरं सा त्रिशला क्षत्रियाणी एतादृशान् पूर्वोक्तान् चतुर्दश महास्वप्नान् दृष्ट्वा प्रतिबुद्धा सती, हृष्ट–तुष्टहृदया मेघधाराहतकदम्बपुष्पम् इव समुच्छ्वसितरोमकूपा सती च स्वप्नचिन्तनं करोति। यथानुक्रमं स्वप्नान् स्मरन्ती स्वप्नग्रहं कृत्वा च शयनीयाद् अभ्युत्तिष्ठते, अभ्युत्थाय च पादपीठे प्रत्यवरोहते, पादपीठात् प्रत्यवरुह्य चाऽत्वरितम्–मानसिकोत्तालरहितम्। अचपलम्–कायचापल्यरहितम्। असंभ्रान्तम्–स्खलनादिरहितम्। अविलम्बितया, भित्ताद्यवष्टम्भरहिततया। राजहंसी सदृश्या गत्या यत्रैव शयनीये सिद्धार्थः क्षत्रियः सुप्तोऽस्ति, तत्रैवोपागच्छति, उपागत्य च सिद्धार्थं क्षत्रियं यादृशीभिर्गीर्भिः–वाणिभिर्जागरयति, ता वाणीः वर्णयन्ति। कथंभूताभिर्गीर्भिः ? 'इट्ठाहिं' इति इष्टाभिः, सिद्धार्थस्य वल्लभाभिः कान्ताभिः, सिद्धार्थेन सदा वाञ्छिताभिः। पुनः प्रियाभिः–द्वेषरहिताभिः। पुनर्मनोज्ञाभिः–सर्वेषां भर्तुर्वा मनोज्ञाभिः। पुनर्मनोरमाभिः–

मनः प्रियचिन्तकाभिः, पुनरुदाराभिः–वर्ण–स्वरोच्चारेण स्फुटाभिः । पुनः कल्याणाभिः–समृद्धिकराभिः । पुनः शिवाभिः–निरुपद्रवाभिः । धन्याभिः–धनलाभकराभिः । माङ्गल्याभिः–माङ्गल्यवादिनीभिः । पुनः सश्रीकाभिः–अलङ्कारादिशोभायुक्ताभिः । हृदयगमनीयाभिः–हृदये या गच्छन्ति कोमलत्वात्, सुबोधकत्वाच्च हृदयगामिनीभिः । पुनः हृदयप्रह्लादिकाभिः–यासां वाणीनां श्रवणाद् भर्तुर्हृदयमानन्दं धत्ते । पुनर्मृदु–मधुर–मञ्जुलाभिः–मृदूः–कोमलाः, मधुराः–रसवत्यः, मञ्जुलाः–संपूर्णोच्चाराः । अथवा मित–मधुर–मञ्जुलाभिः, मिताः पद–वर्णादितः स्तोकाः । बह्वार्थाः–ताभिर्वाणीभिस्त्रिशलास्वभर्तारं जागरयति इत्यर्थः ॥ ४८ ॥

तए णं सा तिसला खत्तिआणी सिद्धत्थेणं रण्णा अब्भणुण्णाया समाणी नानामणि–कणग–रयणभत्तिचित्तंसि भद्दासणंसि निसीयइ, निसीइत्ता आसत्था, वीसत्था; सुहासणवरगया सिद्धत्थं खत्तिअं ताहिं इट्ठाहिं, जाव–संलवमाणी, संलवमाणी एवं वयासी–॥ ४९ ॥

ततः सा त्रिशला क्षत्रियाणी सिद्धार्थेन राज्ञा अभ्यनुज्ञा–दत्ताऽऽज्ञा सती नानामणि–कनक–रत्नभक्तिचित्रे–मणि–कनक–रत्नजटिते, भद्रासने–सुखासने निषीदति, निषद्य च 'आसत्था'–दूरीकृतमार्गाऽऽगमनखेदा ।

'विसत्था'–विशेषेण स्वस्था । गृहीतविश्रामा, सुखासनवरगता स्थिता सती सिद्धार्थं क्षत्रियं ताभिः पूर्वोक्ताभिर्वाग्भिः जल्पन्ती, एवम् अवादीत्– ॥ ४९ ॥

एवं खलु अहं सामी ! अज्ज तंसि तारिसगंसि सयणिज्जंसि, वण्णओ० जाव–पडिबुद्धा, तं जहा–गय–उसभ० गाहा । तं एएसिं सामी ! उरालाणं चउद्दसण्हं महासुमिणाणं के मन्ने कल्लाणे, फलवित्तिविसेसे भविस्सइ ? ॥ ५० ॥

भो स्वामिन् ! एवम्–अमुना प्रकारेण, खलु निश्चयेनाहं स्वामी अद्य तस्मिन् तादृशके पूर्वोक्ते शयनीये सुप्ता–जाग्रती च सती चतुर्दशमहास्वप्नान् दृष्ट्वा प्रतिबुद्धा । ते चतुर्दश गजादयः, इमे स्वप्ना मया दृष्टाः, तेषां महास्वप्नानां मन्ये–संभावयामि–कः फल–वृत्तिविशेषो भविष्यति ? त्रिशला स्वभर्तारंप्रति इति पप्रच्छ–॥ ४९ ॥

तए णं से सिद्धत्थे राया तिसलाए खत्तिआणीए अंतिए एयमट्ठं सुच्चा, निसम्म हट्ठ–तुट्ठ–चित्ते, आणंदिए, पीइमणे, परमसोमणस्सिए हरिसवसविसप्पमाणहियए, धाराहयनीवसुरभिकुसुमचंचुमालइयरोमकूवे ते सुमिणे ओगिण्हेइ, ते सुमिणे ओगिण्हित्ता ईहं अणुपवि-

सइ, इहं अणुपविसित्ता अप्पणो साहाविएणं, मइपुव्वएणं, बुद्धि-विण्णाणेणं तेसिं सुमिणाणं अत्थुग्गहं करेइ, करित्ता तिसलां खत्तिआणिं ताहिं इट्ठाहिं, जाव-मंगल्लाहिं, मिय-महुर-ससिरीयाहिं, वग्गूहिं संलवमाणे, संलवमाणे एवं वयासी- ॥ ५१ ॥

ततः स सिद्धार्थो राजा, त्रिशला क्षत्रियाण्या अन्तिकाद् इमम् अर्थं श्रुत्वा, निशम्य हृष्ट-तुष्टचित्तः सन् आनन्दितः, प्रीतमनाः, परमसौमनसिकः, हर्षवशविसर्पमाणहृदयः, मेघधाराहतकदम्बकुसुमवदुल्लसितरूपस्तान् उद्गृह्णाति, शृणोति इहाम् अनुप्रविशति । आत्मनः स्वभावेण, मतिपूर्वकेन, बुद्धि-विज्ञानेन तेषां स्वप्नानाम् अर्थग्रहणं करोति, अर्थग्रहणं कृत्वा त्रिशलां क्षत्रियाणीं ताभिर्विशिष्टाभिः पूर्वोक्तवर्णनायुक्ताभिर्वाणीभिरेवम् अवादीत्- ॥ ५१ ॥

उराला णं तुमे देवाणुप्पिए ! सुमिणा दिट्ठा, कल्लाणा णं तुमे देवाणुप्पिए सुमिणा दिट्ठा, एवं सिवा, धन्ना, मंगल्ला, ससिरीया, आरुग्ग-तुट्ठि-दीहाउ-कल्लाण-( ग्रं० ३०० ) मंगल्लकारगा णं तुमे देवाणुप्पिए ! सुमिणा दिट्ठा, तं जहा-अत्थलाहो देवाणुप्पिए ! भोग-

लाभो० पुत्तलाभो० सुक्खलाभो० रज्जलाभो० एवं खलु तुमे देवाणुप्पिए । नवण्हं मासाणं बहुपडिपुण्णाणं अद्धट्ठमाणं राइंदियाणं विइक्कंताणं अम्हं कुलकेउं, अम्हं कुलदीवं, कुलपव्वयं, कुलवडिंसयं, कुलतिलयं, कुलकित्तिकरं, कुलवित्तिकरं, कुलदिणयरं, कुलाधारं, कुलनंदिकरं, कुलजसकरं, कुलपायवं, कुलविवद्धणकरं, सुकुमालपाणिपायं, अहीण–संपुण्णपंचिंदियसरीरं, लक्खण–वंजण–गुणोववेअं, माणु–म्माणप्पमाणपडिपुण्णसुजायसव्वंगसुंदरंगं, ससिसोमाकारं, कंतं, पियदंसणं दारयं पयाहिसि ॥ ५२ ॥

अतः सिद्धार्थो राजा वदति–हे देवाऽनुप्रिये ! उदारास्त्वया स्वप्ना दृष्टाः, कल्याणास्त्वया स्वप्ना दृष्टाः; एवं शिवाः, धन्याः, माङ्गल्याः, सश्रीकाः, आरोग्य–तुष्टि–दीर्घाऽऽयुष्यकारकाः, कल्याण–माङ्गल्यकारकास्त्वया स्वप्ना दृष्टाः । हे देवानुप्रिये ! अर्थलाभो भविष्यति, भोगलाभो भविष्यति, पुत्रलाभो भविष्यति, सौख्यलाभो भविष्यति, राज्यलाभो भविष्यति । एवं खलु निश्चयेन नवसु मासेषु, सार्धसप्तदिवसेषु व्यतिक्रान्तेषु सत्सु अस्मत्कुले केतुम्–ध्वजसदृशम् । अस्मत्कुले द्वीपम्–द्वीपसदृशम्, अस्मत्कुले दीपम्–दीपसमानं वा । अस्मत्कुले

पर्वतसमानं स्थिरत्वात् । अस्मत्कुलेऽवतंसकसमानं शेखरसमानम् । कुले तिलकसदृशं भूषणत्वात्। कुले दिनकरसदृशम्, कुलस्याऽऽधारम्, कुलनन्दिकरम्, कुलवृद्धिकरम्, कुलस्य कीर्तिकरम्, कुलस्य वृत्तिकरम्-निर्वाहकरम्, कुलस्य यशस्करम्, कुले पादपम्-वृक्षसदृशम्, बहूनाम् आश्रयणीयत्वात्। कुलस्य विशिष्टवृद्धिकरम्, सुकुमालपाणि-पादम्, अहीन-संपूर्णपञ्चेन्द्रियशरीरम्, लक्षण-व्यञ्जन-गुणोपेतम्, मानो-न्मानप्रमाणप्रतिपूर्ण-सुजात सर्वाङ्गसुन्दरम्; शशिवत्सौम्याकारम्, कान्तम्, प्रियदर्शनं दारकम्-पुत्रं जनयसि ॥ ५२ ॥

से वि अ णं दारए उम्मुक्कबालभावे, विन्नायपरिणयमेत्ते, जुव्वणगमणुपत्ते, सूरे, वीरे, विक्कंते, विच्छिन्न-विउलबलवाहणे रज्जवई राया भविस्सइ ॥ ५३ ॥

स पुत्रः कीदृशो भविष्यति-स दारको यदा उन्मुक्तबालभावो भविष्यति तदा विज्ञानानि सर्वाणि दर्शनमात्रेण, श्रवणमात्रेण वा ज्ञास्यति । स पुनर्यदा युवा भविष्यति तदा-शूरः, महादानी, स्वप्रतिज्ञानिर्वाहको वा; वीरः-सङ्ग्रामेऽभङ्गः, विक्रान्तः- भूमण्डलाक्रमणे, विस्तीर्ण-विपुलबलवाहनो राज्यपती राजा भविष्यति ॥५३॥

तं उराला णं तुमे देवाणुप्पिया ! जाव-दुच्चं पि, तच्चं पि अणुवूहइ । तए णं सा तिसला खत्तियाणी सिद्धत्थस्स रण्णो अंतिए एयं अट्ठं सुच्चा, निसम्म हट्ठ-तुट्ठा-जाव-हियया, जाव-

करयलपरिग्गहिअं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी– ॥ ५४ ॥

'तं' इति तस्माद् हे त्रिशले ! त्वया उदाराः स्वप्ना दृष्टा इति द्विवारं, त्रिवारम् अपि सिद्धार्थो राजाऽनुबृंहति–अनुवदति, ततः सा त्रिशला सिद्धार्थस्य राज्ञोऽन्तिके इमम् अर्थं श्रुत्वा, निशम्य, हृदि अवधार्य, हृष्टतुष्टहृदया, यावत्–करतलपरिगृहीतनखदशकं शिरसाऽऽवर्तम्–मस्तकेऽञ्जलिं कृत्वा एवम् अवादीत्–॥ ५४ ॥

एवं एयं सामी! तहमेयं सामी ! अवितहमेयं सामी ! असदिद्धमेयं सामी ! इच्छिअमेअं सामी ! पडिच्छिअमेयं सामी ! इच्छियपडिच्छियमेयं सामी ! सच्चे णं एसमट्ठे–से जहेयं तुब्भे वयह त्ति कट्टु ते सुमिणे सम्मं पडिच्छइ, पडिच्छित्ता सिद्धत्थेणं रण्णा अब्भणुण्णाया समाणी नाना-मणि–रयणभत्तिचित्ताओ भद्दासणाओ अब्भुट्ठेइ, अब्भुट्ठित्ता अतुरिय–मचवल–मसंभंताए, अविलंबिआए रायहंसीसरिसीए गइए जेणेव सए सयणिज्जे तेणेव उवागच्छइ, उवागच्छित्ता सयणिज्जं ओरुहइ ओरुहइत्ता एवं वयासी–॥ ५५ ॥

त्रिशला किमवादीत्–हे स्वामिन् ! एवमेव भवद्भिर्यदुक्तं तत्तथैव, अवितथमेतत्–सत्यमेतत्, असंदिग्धमे-

तत्–संदेहरहितमेतत्, एतद् ममाऽपि ईप्सितम्, भवतामपि एतदेव ईप्सितम्, भवताम् ईप्सितं मम ईप्सितम् एकमेव जातम् । हे स्वामिन् ! सत्योऽयमर्थः यं हेतुं यूयं वदथ इति कृत्वा तान् स्वप्नान् सम्यक् प्रतीच्छति, सम्यग् गृह्णाति, गृहीत्वा च सिद्धार्थेन राज्ञाऽभ्यनुज्ञाता सती नानामणि–रत्न–कनकभक्तिचित्रिताद् भद्रासनाद् अभ्युत्तिष्ठते, अभ्युत्थाय चाऽत्वरितम्, अचपलम्, असंभ्रान्तं यथा स्यात्तथाऽविलम्बिततया राजहंसीसदृशया गत्या यत्र च स्वकीयं शयनीयं तत्र उपागच्छति, उपागत्य एवम् अवादीत्– ॥ ५५ ॥

मा एते उत्तमा, पहाणा, मंगल्ला सुमिणा दिट्ठा अन्नेहिं पावसुमिणेहिं दिट्ठेहिं पडिहणिस्संति ति कट्टु देव–गुरुजणसंबद्धाहिं पसत्थाहिं, मंगल्लाहिं, धम्मियाहिं, लट्ठाहिं कहाहिं सुमिणजागरिअं जागरमाणी, पडिजागरमाणी विहरइ ॥ ५६ ॥

त्रिशला किम् अवादीत्–मे मम उत्तमाः, सर्वोत्कृष्टाः, प्रधानाः, माङ्गल्याश्चतुर्दशमहास्वप्ना दृष्टाः; अन्यैः कैश्चित् पापस्वप्नैः प्रतिहनिष्यन्ते इति कृत्वा देव–गुरुजनसंबद्धाभिः प्रशस्ताभिः, माङ्गल्याभिः, धर्म्याभिः, लष्टाभिः, सुन्दराभिः कथाभिः स्वप्नजागरिकां करोति–स्वयं जागर्ति, अन्यान् सेवकसखीजनान् प्रतिजागरयन्ती विहरति ॥५६॥ पुनः प्रभाते सिद्धार्थो राजा कौटुम्बिकपुरुषान् आदिश्य यत् कार्यं कारयिष्यति । पश्चात् स्वप्नपा-

ठकान् आहूय तेभ्योऽपि च चतुर्दशस्वप्नानां फलं स्वयं श्रोष्यति, त्रिशलां प्रतिश्रावयिष्यति तथाऽग्रेतनव्याख्याने व्याख्यास्यामः ॥ एवं शासनाऽधीश्वरश्रीवर्धमानस्वामितो गौतमाद्यः सर्वे यावद् गुरुक्रमेण श्रीसङ्घस्य श्रेयसे सन्तु ॥

श्रीकल्पसूत्रवरनाममहागमस्य गूढार्थभावसहितस्य गुणाकरस्य ।
लक्ष्मीनिधेर्विहितवल्लभकामितस्य व्याख्यानमाप परिपूर्तिमिह तृतीयम् ॥ १ ॥

इति श्रीकल्पसूत्रकल्पद्रुमकलिकायां श्रीलक्ष्मीवल्लभगणिविरचितायां तृतीयं व्याख्यानं समाप्तम् ॥



# अथ चतुर्थं व्याख्यानम् ।

वंदामि भद्दबाहुं पाईणं चरमसकलसुयनाणिं । सुत्तस्स कारगमिसं दसाणुकप्पे य ववहारे ॥ १ ॥

अर्हद्भगवदुत्पन्नविमलकेवलज्ञानत उपदिष्टं विशिष्टं श्रीकल्पसिद्धान्तम् । तस्य वाचना भणने त्रयोऽधिकाराः—तत्र प्रथमं श्रीजिनवरचरित्रम् । तदनन्तरं द्वितीयेऽधिकारे स्थविरावली । तृतीयेऽधिकारे साधुसमाचारी वाच्यते । तत्र श्रीजिनचरित्राऽधिकारे चतुर्थव्याख्याने श्रीमहावीरस्य जन्मकल्याणकं व्याख्यायते—

तए णं सिद्धत्थे खत्तिए पच्चूसकालसमयंसि कोडुंबिअपुरिसे सद्दावेइ, सद्दाविता एवं वयासी—॥ ५७ ॥ खिप्पामेव भो देवाणुप्पिआ ! अज्ज सविसेसं बाहिरिअं उवट्ठाणसालं गंधोदयसित्तं सुइअसंमज्जिओवलित्तं सुगंधवरपंचवण्णपुप्फोवयारकलिअं, कालागुरु—पवरकुंदुरुक्क—तुरुक्कडज्झंतधूवमघमघंतगंधुद्धुयाभिरामं सुगंधवरगंधियं गंधवट्टिभूअं करेह, कारवेह, करित्ता, कारवित्ता य सीहासणं रयावेह, रयावित्ता ममेयमाणत्तियं खिप्पामेव पच्चप्पिणह ॥ ५८ ॥

तए णं ते कोडुंविअपुरिसा सिद्धत्थेणं रण्णा एवं वुत्ता समाणा हट्ठा, तुट्ठा, जाव-हियया करयल जाव-कट्टु एवं सामि त्ति आणाए विणएणं वयणं पडिसुणंति, पडिसुणित्ता सिद्धत्थस्स खत्तिअस्स अंतिआओ पडिनिक्खमंति, पडिनिक्खमित्ता जेणेव वाहिरिआ उवट्ठाणसाला तेणेव उवागच्छंति, तेणेव उवागच्छित्ता खिप्पामेव सविसेसं वाहिरियं उवट्ठाणसालं गंधोदगसित्तं जाव-सीहासणं रयाविंति, रयावित्ता जेणेव सिद्धत्थे खत्तिए तेणेव उवागच्छंति, उवागच्छित्ता करयलपरिग्गहियं दसनहं सिरसावत्तं, मत्थए अंजलिं कट्टु सिद्धत्थस्स खत्तिअस्स तमाणत्तिअं पच्चप्पिणंति ॥ ५९ ॥

अथाऽस्य सूत्रस्य अर्थः कथ्यते-ततः सिद्धार्थो राजा प्रभातकाले कौटुम्बिकपुरुषान् आदेशकारिपुरुषान् शब्दायते, शब्दयित्वा च एवम् अवादीत्-शीघ्रमेव भो देवानुप्रियाः! अद्य विशेषेण वाह्यसभागृहं सभामण्डपं सम्मार्जयित्वा सुरभिजलेन सिक्त्वा, गोमयेन लिप्त्वा, सुगन्धपञ्चवर्णैः सरसकुसुमैः, तथा सुगन्धचूर्णैर्विराजमानम्, कृष्णागरु-चीड-सेल्हारस-दशाङ्गधूपैः सुगन्धैर्मघमघायमानं यूयं गत्वा ममाऽऽज्ञां कुरुत,

अन्येभ्योऽपि यूयं कारयत । पश्चात् तत्र सभामण्डपे सिंहासनं स्थापयत एवं ममाज्ञां कृत्वा पश्चाद् ममाऽऽज्ञां ददत—पश्चात् प्रत्यर्पयत ॥ ५८ ॥ ततस्ते कौटुम्बिकपुरुषाः सिद्धार्थेन राज्ञा एवम् उक्ताः सन्तो हर्षिताः, तुष्टाः, हृतहृदयाः, प्रफुल्लितहृदया संजाताः । द्वावपि हस्तौ संयोज्य वन्दनां कृत्वा एवम् अवादिषुः—हे स्वामिन् ! युष्माभिः अस्माकं य आदेशो दत्तः स चाऽस्माभिः प्रमाणीकृतः । एवं कृत्वा ते आदेशकारिपुरुषाः सिद्धार्थस्य राज्ञः सकाशात् प्रतिनिस्सरन्ति, प्रतिनिष्क्रामन्ति, प्रतिनिष्क्रम्य राज्ञः सर्वाम् आज्ञां कृत्वा राज्ञः समीपम् आगत्य एवं वदन्ति—हे महाराज ! अस्माकं या आज्ञा दत्ता आसीत्, तां सर्वां कृत्वा समागताः स्म ॥ ५९ ॥

तए णं सिद्धत्थे खत्तिए कल्लं पाउप्पभायाए रयणीए फुल्लुप्पलकमलकोमलुम्मीलियंमि अहापंडुरे पभाए, रत्तासोगप्पगास—किंसुअ—सुअमुह—गुंजद्धराग—बंधुजीवग—पारावयचलण—नयणपरहुअसुरत्तलोअण—जासुअणकुसुमरासि—हिंगुलनिअरातिरेगसीहंतसरिसे कमलायरखंडबोहए उट्ठिअम्मि सूरे सहस्सरस्सिम्मि दिणयरे तेअसा जलंते, तस्स य करपहरापरद्धम्मि अंधयारे बालायवकुंकुमेणं खचिअँ व्व जीवलोए, सयणिज्जाओ अब्भुट्ठेइ ॥ ६० ॥ अब्भुट्ठित्ता पायपीढाओ पच्चोरुहइ, पच्चोरुहित्ता ।

ततः सिद्धार्थो राजा कल्यप्रादुर्प्रभाते जाते सति, रजन्यां गतायां सत्यां प्रकाशे जाते सूर्य उद्गतः। स सूर्यो यदा उद्गतस्तदा किं किं जातं तत् कथ्यते–सरोवरेषु प्रफुल्लितानि कमलानि। तथा रजन्यां यानि कृष्णमृगाणां नेत्राणि निद्रया मीलितानि तानि अपि प्रभातसमये विकस्वराणि जातानि। यथा पाण्डुरे श्वेतवर्णे प्रभाते जाते सूर्य उद्गच्छन् ईदृशो रक्तवर्णो राजते। स रक्तवर्णः कीदृशः? रक्ताशोकवृक्षस्य यादृशः प्रकाशो भवति, प्रफुल्लितस्य किंशुकवृक्षस्य यादृशी शोभा भवति, शुकमुखवत्, गुञ्जाया अर्धवद् एतेषां पदार्थानां यद्रक्तत्वं ततोऽपि अधिकं रक्तत्वं राजते। पुनरपि कीदृशोऽस्ति वन्धुजीवक–रक्तपुष्पविशेषवत्, तथा पारावतपक्षिणश्चरण–नयनवद् आरक्तः, तथा परभृता–कोकिला तस्या नेत्रवत्, तथा जासूकुसुमवत्, तथा सुजात्यहिङ्गुलकपुञ्जवत्, तथा एभ्योऽपि अधिकरक्तवर्णस्तेन विराजमानः श्रीसूर्य उद्गतः। पुनरपि सूर्यः कीदृशोऽस्ति? कमलाऽऽकरेषु, ह्रदेषु यानि कमलानि सन्ति तेषां प्रवोधकोऽस्ति। तस्य सूर्यस्य किरणैरन्धकारे प्रहते सति यालेन आतपेन कृत्वा ज्ञायते, कुङ्कुमेन सकलं जीवलोकं पूरितमिव जातम्। पुनः स सूर्यः कीदृशोऽस्ति? यस्य सूर्यस्य सहस्र-किरणानि सन्ति। पुनर्यः सूर्यो दिनस्य कारकोऽस्ति। तेजसा जाज्वल्यमानो जातस्तदा स सिद्धार्थो राजा शय्यात उत्थाय पादपीठोपरि पदं ददाति, ततः पादपीठाद् उत्तरति, उत्तीर्य– ॥ ६० ॥

जेणेव अट्टणसाला तेणेव उवागच्छइ, उवागच्छित्ता अट्टणसालं अणुपविसइ, अणुपवि-

सित्ता अणेगवायाम—जोग—वग्गण—वामद्दण—मल्लजुद्धकरणेहिं संते परिस्संते, सयपाग—सहस्सपागेहिं सुगंधवरतिल्लमाइएहिं पीणणिज्जेहिं, दीवणिज्जेहिं, मयणिज्जेहिं, विंहणिज्जेहिं, दप्पणिज्जेहिं, सव्विंदिय—गाय—पल्हायणिज्जेहिं अब्भंगिए समाणे तिल्लचम्मंसि निउणेहिं, पडिपुण्णपाणि—पायसुकुमालकोमलतलेहिं पुरिसेहिं अब्भंगण—परिमद्दणुव्वलणकरण—गुणनिम्माएहिं, छेएहिं, दक्खेहिं, पट्ठेहिं, कुसलेहिं, मेहावीहिं, जिअपरिस्समेहिं अट्ठिसुहाए, मंससुहाए, तयासुहाए, रोमसुहाए, चउव्विहाए सुहपरिकम्मणाए संवाहणाए समाणे अवगयपरिस्समे अट्टणसालाओ पडिनिक्खमइ ॥ ६१ ॥ पडिनिक्खमित्ता जेणेव मज्जणघरे तेणेव उवागच्छइ, उवागच्छित्ता मज्जणघरं अणुपविसइ, अणुपविसित्ता ।

ततः सिद्धार्थो राजा अट्टनशालायां मल्लयुद्धशालायाम् आगच्छति, आगत्य प्रविश्य च अनेकैर्व्यायामैर्दण्डानां भरणैः, पुनरुत्थानैः, निषीदनैः, इत्यादिपरिश्रमैर्योगः । गुणात्रिकादीनाम् उत्पाटनम् । वल्गनम् उच्चैः, अधः, तिर्यक् कूर्दनम् । व्यामर्दनं बाहोर्मोटनम्, श्रमं करोति । ततो मल्लयुद्धं करोति । ततो मल्लयुद्धादिकं

कृत्वा श्रान्तः, विशेषेण श्रान्तः । ततः पश्चात् शतपकं तैलम्—यत्र तैले शतसंख्या औषधयः प्रक्षिप्ताः सन्ति, अथवा यत् तैलं शतप्रमाणेन द्रव्येण निष्पन्नं वर्तते । तथा सहस्रपकं तैलम्—यत्र तैले सहस्रम् औषधयः प्रक्षिप्ताः सन्ति, अथवा यत्तैलं सहस्रद्रव्येण निष्पन्नम्, तेन तैलेन सिद्धार्थो राजा मर्दनां कारयति सा मर्दना कीदृशी गुणकरा वर्तते, प्रीणनकरा रस–रुधिर–धातूनां प्रीतिकारिका । पुनः कीदृशी मर्दना ? दीपनकरा यस्यां मर्दनायां कृतायां क्षुधाऽग्निर्दीप्यते तस्माद् दीपनकरा । पुनः कथंभूता सा मर्दना ? दर्पनकरा, बलवृद्धिरुन्मादकरा, कामोद्दीपका । पुनः कीदृशी ? बृंहणकरा मांसवृद्धिकरा, पुष्टिकरा । पुनः कीदृशी ? सर्वेन्द्रिय–गात्रप्रह्लादकरा एतादृशी मर्दना । अथ ये मर्दनां कुर्वन्ति ते पुरुषाः कीदृशा वर्तन्ते ? संपूर्णहस्त–पादसहिताः, सुकुमालकर–चरणाऽङ्गुलिसहिताः । पुनस्ते पुरुषाः कीदृशाः सन्ति ? छेकाः, प्रवीणाः, दक्षाः, शीघ्रं कार्यकर्तारः । पुनस्ते मर्दनकारकाः पुरुषाः कीदृशाः सन्ति ? प्रष्ठाः, अन्यैः पृष्टव्याः । पुनः कीदृशाः ? कुशलाः, अन्येभ्यो मर्दनकरेभ्यो विशेषज्ञाः । पुनः कीदृशाः ? मेधाविनो बुद्धिमन्तः । पुनः जितपरिश्रमाः । मर्दनकारकैः पुरुषैर्मर्दना कीदृशी कृता ? अस्थिसुखा, मांससुखा, त्वक्सुखा, रोमसुखा चतुर्विधा सुखकारिणी अङ्गशुश्रूषा कृता । तदनन्तरं राजा सिद्धार्थः स्वस्थो जातः । ततः पश्चात् सिद्धार्थो राजा श्रमशालातो निस्सरति ॥ ६१ ॥ निस्सृत्य यत्र मज्जनस्य गृहं तत्र आगत्य, मज्जनगृहं प्रविशति,—

समुत्ताजालाकुलाभिरामे, विचित्तमणि–रयणकुट्टिमतले रमणिज्जे ण्हाणमंडवंसि, नाणामणि–रयणभत्तिचित्तंसि ण्हाणपीढंसि सुहनिसण्णे पुप्फोदएहि अ, गंधोदएहि अ, उण्होदएहि अ, सुहोदएहि अ, सुद्धोदएहि अ कल्लाणकरणपवरमज्जणविहीए मज्जिए, तत्थ कोउअसएहिं बहुविहेहिं कल्लाणगपवरमज्जणावसाणे पम्हलसुकुमालगंधकासाइअलूहिअंगे, अह य सुमहग्घदूसरयणसुसंवुडे सरससुरभिगोसीसचंदणाणुलित्तगत्ते, सुइमालावण्णगविलेवणे, आविद्धमणिसुवण्णे, कप्पियहार–द्धहार–तिसरयपालंबपलंबमाणकडिसुत्तसुकयसोभे, पिणद्धगेविज्जे, अंगुलिज्जगललियकयाभरणे, नानामणि–कणग–रयणवरकडग–तुडिअथंभिअभुए, अहिअरूवसस्सिरीए कुंडलउज्जोइआणणे, मउडदित्तसिरिए, हारोत्थयसुकयरइअवच्छे, मुद्दिआपिंगलंगुलीए पालंबपलंबमाणसुकयपडउत्तरिज्जे, नाणामणिकणगरयणविमलमहरिहनिउणोचिअमिसिमिसिंतविरइअसुसिलिट्ठ-विसिट्ठ-लट्ठ-आविद्धवीरवलए, किं बहुणा? कप्परुक्खए चेव अलंकिअविभूसिए नरिंदे,

**सकोरिंटमल्लदामेणं छत्तेणं धरिज्जमाणेणं,सेअवरचामराहिं उद्धुवमाणीहिं मंगलजयसद्दकयालोए ।**

तद् मज्जनगृहं कीदृशं वर्तते ? मौक्तिकजालकसहितम् अस्ति । विचित्रैर्नानाप्रकारैर्मणिभिश्चन्द्रकान्ताभिः, तथा रत्नैर्वैडूर्यादिभिर्जटिताऽङ्गनप्रदेशे रमणीके स्नानमण्डपे नानाविधमणिरत्नानां रचनया विचित्रे स्नानपीठे तिष्ठति, स्थित्वा एतादृशैः पानीयैः स्नानं करोति–कीदृशानि पानीयानि ? पुष्परससहितानि, गन्धोदकैश्चन्दन–कस्तूरिकायुक्तानि, शुद्धोदकानि–पवित्र–निर्मलजलानि, गङ्गादीनां जलानि एतैः पानीयैः कल्याणकारकं प्रधानं स्नानं कृत्वा, तस्य स्नानस्य अवसाने पक्ष्मयुक्तेन, सुकुमालेन, कुङ्कुम–चन्दन–कर्पूर–कस्तूरिकादिगन्धद्रव्यैः, कषायेन वस्त्रेण शरीरं लूषयित्वा, अथ तम् अस्फाटितं मूषकादिना न क्षतम्, न ज्वलितम्, कूटादिनाऽकलङ्कितं दूष्यरत्नं वस्त्ररत्नं परिदधाति । पुनः सरससुगन्धयुक्तगोशीर्षचन्दनं तेन शरीरं लिप्तम्, पवित्रपुष्पमाला गले धृता, कुङ्कुमादिना तिलकं कृतम्, चौवादिना विलेपश्च कृतः, मणि–स्वर्णादिना रचितानि आभरणानि अङ्गे धृतानि । पुनः अष्टादशशरा हाराः, नवशराः, त्रिशराः, एकशराश्च हारा हृदये कल्पिताः । पुनः प्रालम्बम-लम्बो लम्बायमानो बहुभिर्हीरकैर्मणिभी रत्नैर्जटितं यत् फुन्दकं तेन विराजितं यत् कटीसूत्रं कटीदवरकं तदपि सिद्धार्थेन राज्ञा कट्यां धृतं तेन शोभायुक्तः । पश्चाद् ग्रीवाया आभरणं ग्रीवायां धृतम्, अङ्गुलीषु अङ्गुल्या-

आभरणानि मुद्रिकादीनि परिधृतानि। नानाविधमणि–रत्नरचितबहुमूल्यकटकादिबाह्वाऽऽभरणैः, त्रुटितैः, केयूरै-स्ताम्भितभूजो जातः। सिद्धार्थो भूपोऽधिकरूपश्रिया युक्तः। अथ श्रीसिद्धार्थभूपस्य आभरणानि उच्यन्ते–कुण्डलाभ्यां मुखं विराजते, पुनः मुकुटेन मस्तकं दीप्यते, हारेणाऽऽच्छादितहृदयः, मुद्रिकाभिः पिशङ्गवर्णाकृताऽङ्गुलिकः, महर्घ बहुमूल्यम्, पत्तने निष्पन्नम् अतीव उत्तमं वस्त्रं तस्य उत्तरासङ्गं कृतम्, नानाविधमणि–रत्न–स्वर्णैर्जटितः, तथा चतुरकारूकेण रचितो यो वीरवलयः स च बाहौ धृतोऽस्ति। वीरवलयस्तु स उच्यते–यो वीरपुरुषैः सुभटैः अजेयैर्धार्यते। किं बहुना। श्रीभद्रबाहुस्वामी वदति–का बहुवर्णना क्रियते सिद्धार्थो राजा आभूषणैर्विभूषितः साक्षात् कल्पवृक्ष इव विराजते स्म, यथा कल्पवृक्षः पुष्पैः पत्रैर्विराजते। तथा सिद्धार्थो राजाऽऽभूषणैः, वस्त्रैश्च शोभते इत्यर्थः। तथा कोरण्टकवृक्षपुष्पाणां मालाभिर्विराजमानं छत्रं मस्तके सिद्धार्थभूपस्य विराजते। पुनः अत्युज्ज्वलैः श्वेतचामरैर्विराजमानः। पुनर्लोकैर्जयजयशब्देन उच्चार्यमाणो यं यं राजा विलोकयति स स पुरुषः सिद्धार्थ राजानं जयजयशब्दं वदति इत्यर्थः। अथ यदा राजा सिद्धार्थो महाडम्बरेण पुरुषसंबन्धिषोडशश्रृङ्गाराणि धृत्वा सभामण्डपे आयाति तदा के के सार्थे समागताः सन्ति ते उच्यन्ते–

अणेगगणनायग–दंडनायग–रायईसर–तलवर–माडंबिअ–कोडुंबिअ–मंति-महामंति–गणग-

**दोवारिय-अमच्च-चेड-पीढमद्द-नगर-निगम-सिट्ठि-सेणावइ-सत्थवाह-दूअ-संधिवालसद्धिं संपरिवुडे धवलमहामेहनिग्गए इव गहगणदिप्पंतरिक्खतारागणाण मज्झे ससिव्व पिअदंसणे, नरवई, नरिंदे, नरवसहे, नरसीहे अब्भहिअरायतेअलच्छीए दिप्पमाणे मज्जणघराओ पडिनिक्खमइ ॥ ६२ ॥ मज्जणघराओ पडिनिक्खमित्ता ।**

अनेकगणानां क्षत्रियसमूहानां नायकाः, दण्डनायकाः, राज्येश्वराः, कोटपालाः, मडम्बस्य अधिपाः, कुटुम्बस्य अधिपाः, कुटुम्बस्य श्रीगरण-देवगरण-यमगरण-सामन्त-महासामन्त-मण्डलीक-महामण्डलीक-चउराशीय-चउहटीय-मुकुटबद्ध-सन्धिपाल-दूतपाल-सन्धिविग्रहि-राजविग्रहि-अमात्य-महामात्य-श्रेष्ठि-सार्थवाह-व्यवहारिक-अङ्गरक्षक-पुरोहित-वृत्तिनायक-वहीवाहक-थईयायत-पट्टपडियायत-टाटकमालि-इन्द्रजालि-फूलमालि-धनुर्वादी-मन्त्रवादि-ज्योतिर्वादि-तन्त्रवादि-अनेकदण्डधर-धनुर्धर-खड्गधर-छत्रधर-चामरधर-पताकाधर-नेजाधर-दीपधर-पुस्तकधर-झारीधर-ताम्बूलधर-प्रतिहार-शय्यापालक-गजपालक-अश्वपालक-अङ्गमर्दक-आरक्षक-मितवोला-कथावोला-सत्यवोला-गुणवोला-समस्यावोला-फारसीवोला-व्याकरणवोला-तर्कवोला-साहित्यवन्धक-लक्षणवन्धक-छन्दवन्धक-अलंकारवन्धक-नाटकवन्धकेत्यादिपरिवारेण परिवृतो राजा सिद्धार्थो

राजसभां समागच्छति, मज्जनगृहाद् निर्गच्छति तदा कीदृशः शोभते? धवलमहामेघाद् निस्सरन् सूर्य इव। गृहगण-नक्षत्र-तारागणानां मध्ये शशी चन्द्र इव लोकानां प्रियदर्शनो नरपतिर्मज्जनगृहाद् निस्सरति-निस्सृत्य

जेणेव बाहिरिआ उवट्ठाणसाला तेणेव उवागच्छइ, उवागच्छित्ता सीहासणंसि पुरत्थाभिमुहे निसीअइ, निसीइत्ता अप्पणो उत्तरपुरच्छिमे दिसीभाए अट्ठ भद्दासणाइं सेअवत्थपच्चुत्थयाइं सिद्धत्थयकयमंगलोवयाराइं रयावेइ, रयावित्ता अप्पणो अदूरसामंते नाणामणिरयणमंडिअं अहिअपिच्छणिज्जं महग्घवरपट्टणुग्गयं सण्हपट्टभत्तिसयचित्तताणं ईहामिअ-उसभ-तुरग-नर-मगर-विहग-वालग-किन्नर-रुरु-सरभ-चमर-कुंजर-वणलय-पउमलय-भत्तिचित्तं अब्भिंतरिअं जवणिअं अंछावेइ, अंछावेत्ता नाणामणिरयणभत्तिचित्तं अत्थरयमिउमसूरगुत्थयं सेअवत्थपच्चुत्थअं सुमउअं अंगसुहफरिसं विसिट्ठं तिसलाए खत्तिआणीए भद्दासणं रयावेइ, रयावित्ता ॥ ६३ ॥

अथ राजा सिद्धार्थो यत्र बाह्यं सभागृहं तत्र आगच्छति, आगत्य च सिंहासने पूर्वाऽभिमुखस्तिष्ठति, आ-

त्मन उत्तरपूर्वस्यां दिशि ईशानकोणे अष्टौ भद्रासनानि स्थापयति, वस्त्रेण समाच्छादयति, दूर्वा-सर्षपैः कृतमङ्गलानि तानि भद्राऽऽसनानि सन्ति। ततः पुनः आत्मनः सकाशाद् न दूरवर्तिनी, न च निकटवर्तिनी प्रतिच्छदां रचयति। सा च परिच्छदा कीदृशी अस्ति? या नानाविधमणिरत्नैर्मण्डिता, अधिकप्रेक्षणीययोग्या, बहुमूल्या, वरं प्रधानं यत् पत्तनं सम्यग् वस्त्रोत्पत्तिस्थानं तत्र उत्पादिता। अत्यन्तं स्निग्धा रचना, शतचित्रैश्चित्रिता। तानि कानि चित्राणि सन्ति? ईहामृगाः मृगविशेषाः, वृका वा गवयाः, वृषभाः, गावः, तुरगाः, नराःमनुष्याः, मकरा जलजन्तुविशेषाः, विहगाः पक्षिणः, व्यालाः सर्पाः, किन्नरा देवविशेषाः, रुरवः कस्तूरिकामृगाः, शरभा अष्टापदाः, चमरी गौर्विशेषो मृगविशेषो वा, कुञ्जराः हस्तिनः, वनलता पद्मलता इत्यादीनि अनेकचित्राणि यस्यां परिच्छदायां विराजन्ते। जवनिका शब्देन परीचिः अन्तराले विस्तारयति, परीचिं विस्तार्य तन्मध्ये नानाविधमणि-रत्नानां भक्त्या चित्रितम् आस्तरेण युक्तम्। तद् अस्तरणं कीदृशं मृदु मसूरनामवस्त्रविशेषं तेनाऽऽच्छादितम्, श्वेतवस्त्रेण उपरि आच्छादितं सुकोमलम् अङ्गस्य सुखस्पर्शं विशिष्टं त्रिशला क्षत्रियाण्या उपवेशनाय भद्रासनं प्रस्थापयति, भद्रासनं प्रस्थापयित्वा- ॥ ६३ ॥

कोडुंबिअपुरिसे सद्दावेइ, सद्दावेत्ता एवं वयासी-॥ ६४ ॥ खिप्पामेव भो देवाणुप्पिआ !

अट्ठंगमहानिमित्तसुत्तत्थधारए विविहसत्थकुसले सुविणलक्खणपाढए सद्दावेह ॥ तए णं ते कोडुंबिअपुरिसा सिद्धत्थेणं रण्णा एवं वुत्ता समाणा हट्ठतुट्ठ–जाव–हियया, करयल–जाव–पडिसुणंति ॥ ६५ ॥ पडिसुणित्ता सिद्धत्थस्स खत्तियस्स अंतिआओ पडिनिक्खमंति, पडिनिक्खमित्ता कुंडपुरं नगरं मज्झंमज्झेणं जेणेव सुविणलक्खणपाढगाणं गेहाइं, तेणेव उवागच्छंति, उवागच्छित्ता सुविणलक्खणपाढए सद्दाविंति ॥ ६६ ॥ तए णं ते सुविणलक्खणपाढया सिद्धत्थस्स खत्तिअस्स कोडुंबिअपुरिसेहिं सद्दाविआ समाणा हट्ठतुट्ठ–जाव–हियया ण्हाया, कयबलिकम्मा कयकोउअ–मंगलपायच्छित्ता सुद्धप्पावेसाइं मंगल्लाइं वत्थाइं पवराइं परिहिआ अप्प–महग्घाभरणालंकियसरीरा सिद्धत्थय–हरिआलिआकयमंगलमुद्धाणा सएहिं २ गेहेहिंतो निग्गच्छंति, निग्गच्छित्ता ।

अथ सिद्धार्थो राजा कौटुम्बिकपुरुषान् शब्दयति, शब्दयित्वा एवम्–अवादीत् भो देवाऽनुप्रियाः ! शीघ्रम् एव अष्टाङ्गमहानिमित्तार्थपारगान् अन्यान् अपि विविधशास्त्रकुशलान्, स्वप्नलक्षणपाठकान्, शब्दयत अष्टाङ्गनि-

मित्तं यथा-दिव्य-उत्पात-अन्तरिक्ष-भौम-अङ्ग-स्वर-लक्षण-व्यञ्जनएतदष्टाङ्गनिमित्तम् । ततस्ते कौटुम्बिकपुरुषाः सिद्धार्थेन राज्ञा एवम्-उक्ताः सन्तो हर्षिताः, तुष्टाः, हृतहृदयाः संजाताः । सिद्धार्थस्य राज्ञ आदेशं विनयेन प्रतिशृण्वन्ति, प्रतिश्रुत्य सिद्धार्थस्य राज्ञः सकाशात् प्रतिनिस्सरन्ति, निःसृत्य क्षत्रियकुण्डग्राममध्ये २ भूत्वा यत्रैव स्वप्नलक्षणपाठकानां गृहाणि तत्रैव आगच्छन्ति, आगत्य स्वप्नलक्षणपाठकान् शब्दयन्ति, भो भोः स्वप्नलक्षणपाठकाः ! युष्मान् सिद्धार्थो राजा आह्वयति । ततस्ते स्वप्नलक्षणपाठकाः तेषां वचः श्रुत्वा हर्षिताः, संतुष्टाः संजाताः । स्नाताः, कृतवलिकर्माणः स्वकीय २ गृहेषु स्वकीय २ देवान् पूजयन्ति, निर्मलानि वस्त्राणि परिदधति, कौतुकानि, मषीतिलकादिमङ्गलानि कुर्वन्ति, सर्षप-दूर्वाऽक्षतादीनि मस्तके धारयन्ति, दुःस्वप्नादिनिवारणार्थं स्वकीयमङ्गलानि कुर्वन्ति, राज्यसभायां प्रवेशयोग्यानि माङ्गलिक्यकराणि अल्पमौल्यानि, बहुमौल्यानि आभरणानि धृतानि-अल्पमौल्यानि लोहमुद्रिकादीनि, बहुमौल्यानि स्वर्णरत्नमयानि आभरणानि तैः कृत्वा शरीराणि यैः अलंकृतानि सन्ति, एतादृशास्ते स्वप्नलक्षणपाठकाः स्वकीय २ गृहेभ्यो निर्गच्छन्ति, निर्गत्य-

खत्तियकुंडग्गामं नगरं मज्झंमज्झेणं जेणेव सिद्धत्थस्स रण्णो भवणवरवडिंसगपडिदुवारे, तेणेव उवागच्छंति, उवगच्छित्ता भवणवरवडिंसगपडिदुवारे एगओ मिलंति, गओ मिलित्ता

जेणेव बाहिरिआ उवट्ठाणसाला, जेणेव सिद्धत्थे खत्तिए, तेणेव उवागच्छंति, उवागच्छित्ता करयलपरिग्गहिअं जाव—कट्टु, सिद्धत्थं खत्तिअं जएणं, विजएणं वद्धाविंति ॥ ६७॥ तए णं ते सुविणलक्खणपाढगा सिद्धत्थेणं रण्णा वंदिय—पूइअ—सक्कारिअ—सम्माणिआ समाणा पत्तेअं २ पुव्वन्नत्थेसु भद्दासणेसु निसीयंति ॥ ६८ ॥ तए णं सिद्धत्थे खत्तिए तिसलं खत्तियाणिं जवणिअंतरियं ठावेइ, ठावित्ता पुप्फफलपडिपुण्णहत्थे परेणं विणएणं ते सुविणलक्खणपाढए एवं वयासी—॥ ६९ ॥ एवं खलु देवाणुप्पिया ! अज्ज तिसला खत्तियाणी तंसि तारिसगंसि जाव—सुत्तजागरा ओहीरमाणी २ इमे एयारूवे उराले चउद्दस महासुमिणे पासित्ता णं पडिबुद्धा ॥ ७० ॥ तं जहा, गय० गाहा—

ते स्वप्नलक्षणपाठकाः क्षत्रियकुण्डग्रामनगरस्य मध्ये २ भूत्वा यत्र सिद्धार्थस्य राज्ञो भवनाऽवतंसकप्रतिद्वारं यत्र गृहप्रतोलीद्वारं तत्र आगत्य सर्वेऽपि एकत्र मिलन्ति, एकीभूय यत्र सभायां बाह्यं सभामण्डपम्, यत्र

१. काचित्सुभटानां पञ्चशती परस्परम् असंबद्धा सेवानिमित्तं कस्यचिद्राज्ञः पुरो ययौ, राज्ञा च मन्त्रिवचसा परीक्षार्थम् एकैव शय्या

राजा सिद्धार्थः तत्र आगच्छन्ति, तत्र आगत्य करयुगलं संयोज्य सिद्धार्थराजानं जयेन, विजयेन वर्धापयन्ति। जयः स्वकीयदेशे, विजयः परदेशे। एवं जयेन, विजयेन वर्धापयन्ति, पश्चात् पुन आशीर्वादं प्रयच्छन्ति–दीर्घायुर्भव वृत्तिमान् भव सदा श्रीमान् यशस्वी भव। प्रज्ञावान् भव भूरिसत्त्व–करुणादानैकशौण्डो भव ॥ भोगाढ्यो भव भाग्यवान् भव महासौभाग्यशाली भव। प्रौढश्रीर्भव कीर्तिमान् भव सदा विश्वोपजीवी भव ॥ १ ॥ पुनः श्रीसिद्धार्थभूपं श्रीपार्श्वनाथस्य श्रावकं ज्ञात्वा, श्रीपार्श्वनाथस्य स्तुत्या आशीर्वादं ददति–

दशावतारो वः पायात् कमनीयाऽञ्जनद्युतिः। किं दीपो नहि श्रीपः किन्तु वामाङ्गजो जिनः ॥ १ ॥

दशायां वृत्तिकायां अवतारो यस्य स दशावतारः। कमनीया मनोज्ञा अञ्जनेन कज्जलेन सदृशा द्युतिर्यस्य स कमनीयाऽञ्जनद्युतिः। एतादृशो यः कश्चिद् वर्तते स वो युष्मान् पायात्–रक्षतु, एतादृशः किं दीपः? तदा उच्यते–दीपो नहि, किन्तु श्रीपः–श्रियं पाति इति श्रीपः–कृष्णः? तदा उच्यते–श्रीपोऽपि नहि, किन्तु वामाङ्गजो जिनः–वामाया अङ्गजः पुत्रो वामाङ्गजः–श्रीपार्श्वनाथो जिनः। श्रीपार्श्वनाथस्तु दशाऽवतारो दश अवतारा

---

प्रेपिता, ते च सर्वेऽपि अहमिन्द्रा लघु–वृद्धव्यवहाररहिताः परस्पर विवदमानाः सर्वैरपि एषा शय्या व्यापार्या इति बुद्ध्या शय्या मध्ये मुक्त्वा तदभिमुखपादाः शयितवन्तः, प्रातश्च प्रच्छन्नमुक्तपुरुषैर्यथावद्व्यतिकरे निवेदिते कथम् एते स्थितिरहिताः परस्परम् असंबद्धा युद्धादि करिष्यन्ति ? इति राज्ञा निर्भर्त्स्य निष्काशिताः इति हेतोः ते स्वप्नपाठका एकतो मिलित्वाऽऽगताः ॥

अमरभूतिप्रमुखाः यस्य स दशावतारः, पुनः कमनीया मनोज्ञा, अञ्जनवत् कज्जलवद् द्युतिर्यस्य, सः कमनीयाऽञ्जनद्युतिः, एतादृशः श्रीपार्श्वनाथो वो युष्मान् पातु। एवम् आशीर्वादं श्रुत्वा सिद्धार्थो राजा तान् स्वप्नलक्षणपाठकान् वन्दते, पूजते वस्त्राऽलंकारैः, सत्कारयति सद्गुणकथनेन, स्तौति पुनः सन्मानयति आसन–अभ्युत्थानादिना, संतोषयति, पश्चाद् यानि पूर्वं भद्रासनानि रचितानि सन्ति तेषु स्थापयति, यदा ते स्वप्नलक्षणपाठकाः सिंहासनेषु तिष्ठन्ति, तदा श्रीसिद्धार्थो राजा, त्रिशलां क्षत्रियाणीं शब्दयति, शब्दयित्वा परिच्छदान्तरे भद्रासने स्थापयति। सा त्रिशलाऽपि पुष्प–फलैः परिपूर्णहस्ता सती स्वर्णभद्रासने तिष्ठति। ततः सिद्धार्थो राजा तान् स्वप्नलक्षणपाठकान् वदति–भो देवाऽनुप्रियाः ? अद्य त्रिशला शयनीयगृहे शय्यायां सुप्ता, ईषद् निद्रां गच्छन्ती चतुर्दशस्वप्नान् गज–वृषभ–सिंहादीन् दृष्ट्वा जजागार–

तं एएसिं णं चउद्दसण्हं महासुमिणाणं देवाणुप्पिया! उरालाणं के मन्ने कल्लाणे फलवित्तिविसेसे भविस्सइ ? ॥ ७१ ॥ तए णं ते सुमिणलक्खणपाढगा सिद्धत्थस्स खत्तियस्स अंतिए एयमट्ठं सोच्चा, निसम्म हट्ठतुट्ठ–जाव–हयहियया, ते सुमिणे ओगिण्हंति, ओगिण्हित्ता ईहं अणुपविसंति, अणुपविसित्ता अन्नमन्नेणं सद्धिं संचालेंति, संचालित्ता तेसिं सुमिणाणं लद्धट्ठा,

गहिअट्ठा, पुच्छिअट्ठा, विणिच्छियट्ठा, अभिगयट्ठा सिद्धत्थस्स रण्णो पुरओ सुमिणसत्थाइं उच्चारेमाणा २ सिद्धत्थं खत्तियं एवं वयासी–॥ ७२ ॥ एवं खलु देवाणुप्पिया ! अम्हं सुमिणसत्थे बायालीसं सुमिणा, तीसं महासुमिणा, बावत्तरि सवसुमिणा दिट्ठा, तत्थ णं देवाणुप्पिया ! अरहंतमायरो वा, चक्कवट्टिमायरो वा अरहंतंसि वा, चक्कहरंसि वा ( ग्रं० ४०० ) गब्भं वक्कममाणंसि एएसिं तीसाए महासुमिणाणं इमे चउद्दस महासुमिणे पासित्ता णं पडिबुज्झंति ॥ ७३ ॥ तं जहा, गय० गाहा–॥ ७४ ॥ वासुदेवमायरो वा वासुदेवंसि गब्भं वक्कममाणंसि एएसिं चउद्दसण्हं महासुमिणाणं अन्नयरे सत्त महासुमिणे पासित्ता णं पडिबुज्झंति ॥ ७५ ॥ बलदेवमायरो वा बलदेवंसि गब्भं वक्कममाणंसि एएसिं चउद्दसण्हं महासुमिणाणं अन्नयरे चत्तारि महासुमिणे पासित्ता णं पडिबुज्झंति ॥ ७६ ॥ मंडलियमायरो वा मंडलियंसि गब्भं वक्कममाणंसि एएसिं चउद्दसण्हं महासुमिणाणं अन्नयरं एगं महासुमिणं

पासित्ता णं पडिबुज्झंति ॥ ७७ ॥ इमे य णं देवाणुप्पिया! तिसलाए खत्तिआणीए चोद्दस महासुमिणा दिट्ठा, तं उराला णं देवाणुप्पिया! तिसलाए खत्तियाणीए सुमिणा दिट्ठा, जाव–मंगल्लकारगा णं देवाणुप्पिआ! तिसलाए खत्तिआणीए सुमिणा दिट्ठा, तं जहा–

ततो हे देवाऽनुप्रियाः! एतेषां चतुर्दशस्वप्नानां किं मन्ये? अहं विचारयामि किं कल्याणकारिफलं भविष्यति। यदा राज्ञा इति प्रश्नः कृतः तदा ते स्वप्नलक्षणपाठकाः सिद्धार्थस्य राज्ञः सकाशाद् अर्थं श्रुत्वा हर्षिताः, संतुष्टाः, प्रसन्नहृदयाः संजाताः। तेषां स्वप्नानां हृदये ग्रहणं कुर्वन्ति, ग्रहणं कृत्वा ईहां कुर्वन्ति, तेषां स्वप्नानाम्–अर्थग्रहणं कुर्वन्ति, अर्थग्रहणं कृत्वा परस्परं विचारयन्ति, परस्परं विचार्य अर्थं लब्ध्वा, परस्परं दृष्ट्वा, अर्थस्य निश्चयं कृत्वा लब्धार्थाः, पृष्टार्थाः, गृहीतार्थाः, निश्चितार्थाः सन्तस्ते स्वप्नलक्षणपाठकाः सिद्धार्थस्य राज्ञोऽग्रे स्वप्नशास्त्रोच्चारणं कुर्वन्ति। अहो देवानुप्रिय! खलु निश्चयेन हे राजन्! अस्मत्स्वप्नशास्त्रे द्विचत्वारिंशत्स्वप्नाः सामान्यफलदाः। त्रिंशद्महास्वप्ना महाफलदाः। यदा सर्वेऽपि एकत्र क्रियन्ते तदा द्वासप्ततिस्वप्ना भवन्ति। तत्र हे राजन्! अर्हन्माता, तथा चक्रवर्तिमाता अर्हद्जीवे, तथा चक्रवर्तिजीवे गर्भे समुत्पन्ने सति त्रिंशन्महास्वप्नानां मध्ये चतुर्दशमहास्वप्नान् दृष्ट्वा जागर्ति, ते के गजाद् आरभ्य अग्निशिखां यावद् दृष्ट्वा जागर्ति। वासुदे-

वस्य माता वासुदेवस्य जीवे गर्भे समुत्पन्ने सति चतुर्दशमहास्वप्नानां मध्ये सप्त महास्वप्नान् दृष्ट्वा जागर्ति। वलदेवस्य माता वलदेवस्य जीवे गर्भे समुत्पन्ने सति तेषां चतुर्दशस्वप्नानां मध्ये चत्वारः स्वप्नान् पश्यति। मण्डलीकस्य देशाऽधिपस्य माता मण्डलीकस्य जीवे गर्भे समुत्पन्ने तेषां चतुर्दशस्वप्नानां मध्ये एकं स्वप्नं दृष्ट्वा जागर्ति। ततोऽहो! राजन्! एते चतुर्दशमहास्वप्नाः त्रिशलया दृष्टा, एते उदाराः स्वप्नाः, एतेषां स्वप्नानां प्रभावाद् भवताम्–एतानि फलानि भविष्यन्ति–

अत्थलाभो देवाणुप्पिया !, भोगलाभो० पुत्तलाभो० सुक्खलाभो देवाणुप्पिया !, रज्जलाभो देवाणु० एवं खलु देवाणुप्पिया ! तिसला खत्तियाणी नवण्हं मासाणं वहुपडिपुण्णाणं अद्धट्ठमाणं राइंदिआणं वइक्कंताणं, तुम्हं कुलकेउं, कुलदीवं, कुलपव्वयं, कुलवडिंसगं, कुलतिलयं, कुलकित्तिकरं, कुलवित्तिकरं, कुलदिणयरं, कुलाहारं, कुलनंदिकरं, कुलजसकरं, कुलपायवं, कुलतंतुसंताणविवद्धणकरं, सुकुमालपाणिपायं, अहीणपडिपुण्णपंचिंदियसरीरं, लक्खण–वंजण–गुणोववेअं माणु–म्माणपमाणपडिपुण्णसुजायसव्वंगसुंदरंगं ससिसोमाकारं, कंतं, पियदंसणं,

सुरूवं दारयं पयाहिसि ॥ ७८ ॥ से वि य णं दारए उम्मुक्कबालभावे विन्नायपरिणयमित्ते, जुव्वणगमणुप्पत्ते सूरे, वीरे, विक्कंते, विच्छिन्नविपुलबलवाहणे, चाउरंतचक्कवट्टी रज्जवई राया भविस्सइ, जिणे वा, तिलोगनायगे धम्मवरचाउरंतचक्कवट्टी ॥७९॥ तं उराला णं देवाणुप्पिया! तिसलाए खत्तियाणीए सुमिणा दिट्ठा, जाव–आरुग्ग–तुट्ठि–दीहाउ–कल्लाण–मंगल्लकारगा णं देवाणुप्पिआ ! तिसलाए खत्तियाणीए सुमिणा दिट्ठा ॥ ८० ॥

एतेषां स्वप्नानां प्रभावाद् अर्थस्य द्रव्यस्य लाभो भविष्यति। भोगस्य पञ्चेद्रियसुखस्य लाभो भविष्यति। पुत्रस्य लाभो भविष्यति। सौख्य० राज्यलाभो भविष्यति। एवं खलु निश्चयेन त्रिशला नवभिर्मासैः, सार्धाष्टमदिवसैः पूर्णैर्भवतां कुलध्वजसदृशः अद्भूतत्वात्, कुले प्रदीपवत् प्रकाशकत्वात्, मङ्गलत्वाच्च कुलविषये पर्वतसदृशः अजय्यत्वात्, कुले मुकुटसदृशः सर्वेषां वन्दनीयत्वात्, कुले तिलकसदृशः कुटुम्बस्य शोभाकरत्वात्, कुले कीर्तिकरः, कुले वृत्तिकरो जीवनोपायकारी, कुले वृद्धिकारी, कुले समृद्धिकरः, कुले यशस्करः, कुलस्य आधारः, कुले वृक्षसदृशः सर्वकुटुम्बस्याऽऽश्रयत्वात्, कुलस्य सन्ततेः वृद्धिकरत्वात् पुत्र–पौत्र–प्रपौत्रादिसन्ततिवृद्धि-

कर:, एतादृशः पुत्रो भविष्यति। पुनः स पुत्रः कीदृशो भविष्यति? सुकुमालपाणि-पादः, अहीनप्रतिपूर्णपञ्चेन्द्रियशरीरः, लक्षण-व्यञ्जन-गुणोपेतः, मानो-न्मानप्रमाणप्रतिपूर्णसर्वाङ्गसुन्दरः, चन्द्रवत् सौम्याकारः, कान्तः, प्रियदर्शनः, सुरूपो दारकः पुत्रो भविष्यति। स च पुनर्दारकः पुत्रः उन्मुक्तबाल्यभावो यदा भविष्यति पठनयोग्यो भविष्यति तदा विज्ञानानि दर्शनमात्रेण ग्रहीष्यति। यदा यौवनवयोयुक्तो भविष्यति तदा शूरः सङ्ग्रामविषये तथा दानविषये शूरो भविष्यति। वीरोऽभङ्गः संग्रामे अरीणाम्-अजेयो भविष्यति। विक्रान्तो विक्रमी परकीयाम् अपि भूमिकां जित्वा स्ववशीकरिष्यति। विस्तीर्ण-विपुलबल-वाहनो राज्यपतिश्चक्रवर्तिराजा भविष्यति, अथवा राग-द्वेषादिशत्रूणां जेता त्रैलोक्यनाथस्तीर्थंकरो भविष्यति। तस्मात् कारणाद् हे राजन्! त्रिशलया क्षत्रियाण्या समीचीनाः, प्रधानाः स्वप्नाः दृष्टाः, आरोग्य-तुष्टि-दीर्घायुषां कर्तारः। ये रोगिणः, अल्पायुषः, दरिद्राः, भाग्य-पुण्यहीना भवेयुस्ते एतादृशान् स्वप्नान् न पश्यन्ति इत्यर्थः। अथ तेषां स्वप्नानां पृथक् पृथक् फलं वदन्ति-हे राजन्! चतुर्दन्तगजावलोकनात् चतुर्धा धर्मोपदेष्टा भविष्यति। वृषभदर्शनाद् भरतक्षेत्रे सम्यक्त्वबीजस्य वप्ता भविष्यति। सिंहदर्शनाद् अष्टकर्मगजान् विद्रावयिष्यति। लक्ष्मीदर्शनात् संवत्सरदानं दत्त्वा पृथ्वीं प्रमुदितां करिष्यति, तीर्थंकरलक्ष्मीभोक्ता च भविष्यति। पुष्पमालादर्शनात् त्रिभुवनजना अस्य आज्ञां शिरसि धारयिष्यन्ति। चन्द्रदर्शनात् पृथिवीमण्डले सकलभव्यलोकानां नेत्र-हृदयाऽऽह्लादकारी च भविष्यति। सूर्य-

स्य दर्शनात् पृष्ठे भामण्डलदीप्तियुक्तो भविष्यति । ध्वजदर्शनाद् अग्रे धर्मध्वजः चलिष्यति । कलशदर्शनाद् ज्ञान-धर्मादिसंपूर्णो भविष्यति, भक्तानां मनोरथपूरकश्च । पद्मसरोदर्शनाद् देवा अस्य विहारकाले चरणयोरधः स्वर्णानां पद्मानि रचयिष्यन्ति । क्षीरसमुद्रदर्शनाद् ज्ञान-दर्शन-चारित्रादिगुणरत्नानाम् आधारः, धर्ममर्यादाया धर्ता च भविष्यति । देवविमानदर्शनात् स्वर्गवासिनां देवानां मान्यः, आराध्यश्च भविष्यति । रत्नराशिदर्शनात् समवसरणस्य वप्रत्रये स्थास्यति । निर्धूमाऽग्निदर्शनाद् भव्यजीवानां कल्याणकारी, मिथ्यात्वशीतहारी च भविष्यति। अथ सर्वेषां स्वप्नानां फलं वदन्ति-हे राजन्! एतेषां चतुर्दशस्वप्नानाम्-अवलोकनात् चतुर्दशरज्ज्वात्मलोकस्य मस्तके स्थास्यति । यत्र अयम् एव विशेषः-चक्रवर्तिजननी चतुर्दश स्वप्नान् पश्यति, परं तीर्थकरजननी अतीव निर्मलतरान् पश्यति। अथ ते स्वप्नलक्षणपाठकाः सिद्धार्थस्य राज्ञोऽग्रे स्वप्नानां निदानं वदन्ति—

अतिहास-शोक-कोपो-त्साह-जुगुप्साभयाद्भुतोत्पन्नः। वितथः क्षुधा-पिपासा-मूत्र-पुरीषोद्भवः स्वप्नः॥१॥
स्वप्नः प्रथमप्रहरे दृष्टः संवत्सरेण फलदः स्यात् । संवत्सरार्धं फलदो द्वितीययामे तु यामिन्याः ॥ २ ॥
मासत्रयेण रात्रेस्तृतीययामे नृणां स्फुटं फलदः । मासैकफलो दृष्टः चतुर्थयामे भवेत्स्वप्नः ॥ ३ ॥
चरमनिशाघटिकाद्वयसमये फलति ध्रुवं दशाहेन । सूर्योदये तु दृष्टः सद्यः फलदायकः स्वप्नः ॥ ४ ॥

अतिहास्यं कृत्वा सुप्तो भवति, अतिशोकं कृत्वा, अतिकोपं कृत्वा सुप्तो भवति, अधिकोत्साहे प्रसुप्तो भ-

वति, सूग-घृणां कृत्वा सुप्तो भवति, भयं कृत्वा सुप्तो भवति तदा यः स्वप्नो दृष्टो भवति स सर्वोऽपि विफलः स्यात्। पुनर्यो मनुष्यः क्षुधितो भूत्वा, तृषितो वा, मूत्रस्य आबाधया, तथा पुरिपस्य आबाधया सुप्तः स्वप्नं पश्यति सोऽपि निष्फलः। अथ रात्रेः प्रथमप्रहरे दृष्टः स्वप्नो वर्षेण फलदो भवति। द्वितीये प्रहरे दृष्टः षष्ठे मासे फलदः। तृतीये प्रहरे दृष्टः तृतीये मासे फलदः। चतुर्थप्रहरे दृष्ट एकमासे फलदः। पाश्चात्यरजन्याम्—अन्त्ये घटिकाद्वये दृष्टः स्वप्नः दशदिवसे फलदः। सूर्योदयवेलायां दृष्टः स्वप्नः तत्कालफलदायको भावी। अथ पुनः स्वप्नानां नव प्रकाराः सन्ति, ते उच्यन्ते—

अनुभूतः श्रुतो दृष्टः प्रकृतेश्च विकारतः। स्वभावाच्च चिन्तासंततिसंभवः तथा च देवोपदेशोत्थः ॥ १ ॥
धर्मकर्मप्रभावोत्थः पापोद्रेकसमुद्भवः। एवं स्वप्नविचारो हि कथितो नवधा नृणाम् ॥ २ ॥

मनुष्याणां नवभिः प्रकारैः स्वप्नदर्शनं जायते, तद्यथा—अनुभूताम्—सम्यगभ्यस्तां वार्तां पश्यति, श्रुतां वार्तां पश्यति, दृष्टं वस्तु पश्यति; प्रकृतिविकारात्, वायुप्रकोपात् पश्यति, सहजस्वभावात् पश्यति, चिन्तायां पश्यति एतैः कारणैर्यत् शुभा-ऽशुभं पश्यति तन्निष्फलम्। देवानां सांनिध्यात्, धर्मप्रभावात् पापप्रभावात् यत् पश्यति तत् शुभा-ऽशुभं फलं स्यात्। एवं तैः स्वप्नलक्षणपाठकैः सिद्धार्थस्य राज्ञोऽग्रे स्वप्न विचारो निर्वर्तितः।

तए णं सिद्धत्थे राया तेसिं सुमिणलक्खणपाढगाणं अंतिए एयमट्ठं सोच्चा, निसम्म हट्ठे, तुट्ठे, चित्तमाणंदित्ते, पीयमणे, परमसोमणासिए, हरिसवसविसप्पमाणहिअए करयल–जाव–ते सुमिणलक्खणपाढगे एवं वयासी–॥ ८१ ॥ एवमेयं देवाणुप्पिया ! तहमेयं देवाणुप्पिया ! अवितहमेयं देवाणुप्पिया ! इच्छियमेयं० पडिच्छियमेयं० इच्छियपडिच्छियमेयं देवाणुप्पिया ! सच्चे णं एसमट्ठे से जहेयं तुब्भे वयह त्ति कट्टु ते सुमिणे सम्मं पडिच्छइ, पडिच्छित्ता ते सुविणलक्खणपाढए विउलेणं असणेणं, पुप्फ–वत्थ–गंध–मल्ला–ऽलंकारेणं सक्कारेइ, सम्माणेइ, सक्कारित्ता, सम्माणित्ता विउलं जीवियारिहं पीइदाणं दलइ, दलइत्ता पडिविसज्जेइ ॥ ८२ ॥

ततः सिद्धार्थो राजा तेभ्यः स्वप्नलक्षणपाठकेभ्यः चतुर्दशस्वप्नानाम् अर्थं श्रुत्वा हर्षितः, संतुष्टः, चित्ते आनन्दितः सन् तेभ्यः एवम् अवादीत्–अहो देवाऽनुप्रियाः ! यद् भवद्भिरुक्तं तत् तथैव, पुनः अवितथम्–असत्यं नास्ति । अस्माभिरपि अयम् एव अर्थोऽभिलषितः, भवद्भिरपि स एव उक्तः तस्माद् आवयोर्विचार एक एव संजातः । योऽर्थो भवद्भिः कथितः, यो हेतुर्भवद्भिरुक्तः स सर्वोऽपि सत्य एव । सिद्धार्थो राजा एवम् उक्त्वा

स्वप्नलक्षणपाठकान् विस्तीर्णाऽसन–पानादिना, पुष्प–फल–गन्ध–माल्याऽलंकारैः कृत्वा संतोष्य, पुनः आजीविकायोग्यं सम्यक् क्षेत्र–ग्राम–ग्रासादिकं प्रीतिकरं दानं दत्त्वा विसर्जयति।

तए णं से सिद्धत्थे खत्तिए सीहासणाओ अब्भुट्ठेइ, अब्भुट्ठित्ता जेणेव तिसला खत्तियाणी जवणिअंतरिया तेणेव उवागच्छइ, उवाच्छित्ता तिसलं खत्तियाणीं एवं वयासी–॥८३॥ एवं खलु देवाणुप्पिया ! सुमिणसत्थंसि वायालीसं सुमिणा, तीसं महासुमिणा, जाव–एगं महासुमिणं पासित्ता णं पडिबुज्झंति ॥ ८४ ॥ इमे अ णं तुमे देवाणुप्पिए ! चउद्दस महासुमिणा दिट्ठा, तं उराला णं तुमे जाव–जिणे वा, तेलुक्कनायगे, धम्मवरचाउरंतचक्कवट्टी ॥८५॥ तए णं सा तिसला खत्तिआणी एअमट्ठं सुच्चा, निसम्म हट्ठ–तुट्ठ–जाव–हयहिअया, करयल–जाव–ते सुमिणे सम्मं पडिच्छइ ॥ ८६ ॥ पडिच्छित्ता सिद्धत्थेणं रण्णा अब्भणुन्नाया समाणी नाणामणि–रयणभत्तिचित्ताओ भद्दासणाओ अब्भुट्ठेइ, अब्भुट्ठित्ता अतुरिअं, अचवलं, असंभंताए, अविलं-

बिआए रायहंसीसरिसीए गईए जेणेव सए भवणे तेणेव उवागच्छइ, उवागच्छित्ता सयं भवणं अणुपविट्ठा ॥ ८७ ॥

ततः सिद्धार्थः क्षत्रियो राजा स्वप्नलक्षणपाठकान् विसर्ज्य, सिंहासनाद् उत्तिष्ठति, उत्थाय च यत्र त्रिशला क्षत्रियाणी प्रतिच्छदान्तरे स्थिताऽस्ति तत्रागच्छति, आगत्य त्रिशलाक्षत्रियाणीं प्रति इति वदति-हे देवाऽनुप्रिये! त्वया प्रधानाः स्वप्ना दृष्टाः। एतेषां स्वप्नानां प्रभावात् तव चक्रवर्ती, तीर्थंकरो वा पुत्रो भविष्यति। यत् स्वप्न-लक्षणपाठकैरुक्तं तत् त्वया श्रुतम् इति पृष्ट्वा पुनरपि प्रीतिवशात् तेषां स्वप्नलक्षणपाठकनां सर्वं वाक्यं राज्ञा त्रि-शलायै श्रावितम्, तदा सा त्रिशलाऽपि एतद् वाक्यं श्रुत्वा हर्षिता, संतुष्टा हर्षेण प्रफुल्लितहृदया सती, उभौ हस्तौ संयोज्य, मस्तके आवर्तं कृत्वा उवाच-हे स्वामिन्! एवं एव यद्भवद्भिरुक्तं तत्तथैव, अत्राऽर्थे संदेहो नास्ति इति कृत्वा यावत्-त्रिशला क्षत्रियाणी सिद्धार्थेन राज्ञा उत्थातुमनस्का ज्ञाता तदा सिद्धार्थेन विसर्जिता सती नानाविधैर्मणि-रत्न-स्वर्णैर्घटितात् सिंहासनाद् उत्थाय यादृश्या गत्या स्वकीये आवासे समागच्छति सा गतिरुच्यते-कीदृश्या गत्या त्रिशला गृहम् आगता? अत्वरितया उत्सुकत्वेन रहितया, अचपलया काय-चापल्येन रहितया, असंभ्रान्तया अस्खलितया, अविलम्बतया मार्गे गच्छन्ती विलम्बादिकम् अगृह्णती तस्माद्

अविलम्बतया राजहंसीसदृशगत्या चलन्ती, यत्र आत्मीयं भवनं तत्राऽऽयाति, आगत्य सुखेन तिष्ठति ।

जप्पभिइं च णं समणे भगवं महावीरे तंसि रायकुलंसि साहरिए तप्पभिइं च णं बहवे वेसमणकुंडधारिणो तिरियजंभगा देवा सक्कवयणेणं से जाइं इमाइं पुरापोराणाइं महानिहाणाइं भवंति, तं जहा—पहीणसामिआइं, पहीणसेउआइं, पहीणगुत्तागाराइं, उच्छिन्नसामिआइं, उच्छिन्नसेउआइं, उच्छिन्नगुत्तागाराइं, गामा—गर—नगर—खेड—कव्वड—मडंब—दोणमुह—पट्टणा—सम—संवाह—सन्निवेसेसु सिंघाडएसु वा, तिएसु वा, चउक्केसु वा, चच्चरेसु वा, चउम्मुहेसु वा, महापहेसु वा, गामट्ठाणेसु वा, नगरट्ठाणेसु वा, गामणिद्धमणेसु वा, नगरनिद्धमणेसु वा, आवणेसु वा, देवकुलेसु वा, सभासु वा, पवासु वा, आरामेसु वा, उज्जाणेसु वा, वणेसु वा, वणसंडेसु वा; सुसाण-सुन्नागार—गिरिकंदर—संतिसेलोवट्ठाण—भवण—गिहेसु वा, सन्निक्खित्ताइं चिट्ठंति ताइं सिद्धत्थरायभवणंसि साहरंति ॥ ८८ ॥

यस्मिन् दिने भगवान् श्रीमहावीरः त्रिशलायाः कुक्षौ हरिणेगमेषिणा संचारितः तद्दिनाद् बहवो वेसमणकुण्डधारिणो धनदाऽऽज्ञाकारिणस्तिर्यग्जृम्भकाः, सुराः शक्रस्य वचनेन एतेषु स्थानेषु यानि पूर्व पुरातनानि निधानानि तिष्ठन्ति तानि सर्वाणि सिद्धार्थस्य राज्ञो गृहे समाहरन्ति आनयन्ति। तानि केषु स्थानेषु कीदृशानि निधानानि सन्ति, तानि उच्यन्ते-यानि कानि पूर्व धरित्र्यां क्षिप्तानि, बहुकालीनानि तेन पुरातनानि संजातानि, येषां निधानानां स्वामिनः प्रकर्षेण हीनाः संजाताः सन्ति, क्षयं गताः सन्ति इत्यर्थः। पुनस्तानि निधानानि कीदृशानि सन्ति ? यैः पुरुषैर्निधानानि क्षिप्तानि तेषां पुरुषाणां गोत्राणि, तथा गृहाणि अपि प्रकर्षेण हीनानि संजातानि। पुनर्येषां निधानानां सिञ्चकाः प्रतिवर्ष शुद्धिकर्तारः, प्रतिवर्ष नवीनद्रव्यसिञ्चकाः हीनाः-पतिताः सन्ति।पुनर्येषां निधानानां स्वामिनः, सेवकाश्च उच्छिन्नाः-छेदं प्राप्ताः, निःसन्तानत्वं गताः, तेषां गोत्रीय-गृहाण्यपि उच्छिन्नानि छेदं प्राप्तानि तेषां स्थानानि दर्शयन्ति-ग्रामेषु कण्टकवाटिकायुक्तेषु, आकरेषु-लोह-ताम्राद्युत्पत्तिस्थानेषु, नगरेषु प्रतोली-वप्रादिवेष्टितेषु, खेटेषु धूलीकोट्टयुतेषु, कर्बटेषु कुनगरेषु, मडम्बेषु येषां चतुर्षु दिक्षु अर्धाऽर्धयोजनं ग्रामाः सन्ति ते मडम्बा उच्यन्ते तेषु यानि निधानानि स्थितानि आसन्। तथा द्रोणमुखेषु जल-स्थलमार्गेषु, तथा पत्तनेषु उत्कृष्टवस्तूनाम् उत्पत्तिस्थानेषु। तथा आश्रमेषु तापसानां निवासस्थानेषु, तथा संवाहेषु समभूमिषु क्षेत्राणां मध्ये समतलपृथ्वीषु, सन्निवेशेषु यत्राऽऽगत्य सार्थ उत्तरति तत्र भूमिषु। तथा शृङ्गाटकस्य आकारेण यत्र मार्गत्रयं मिलति

तत्र यानि निधानानि, त्रिकेषु त्रिमार्गेषु, चतुर्मुखेषु चतुर्द्वारदेवगृहेषु, महापथेषु राजमार्गेषु यानि निधानानि निखातानि। तथा पूर्वं ग्रामा वसन्तः पश्चाद् उद्वासत्वं प्राप्ताः, तत्र यानि निधानानि। तथैव-नगरस्थानेषु, तथा ग्रामाणां जलनिस्सरणस्थानेषु, तथा आपणेषु—हट्टेषु, देवकुलेषु देवगृहेषु, सभासु जनोपविशनस्थानेषु, भोजनकरणस्थानेषु वा यत्र पान्थजना आगत्य रसवतीपाकं कुर्वन्ति तत्र यानि निधानानि सन्ति; तथा प्रपासु पानीयशालासु, तथा आरामेषु कदलीवनेषु यत्र नगरलोकाः स्त्रीपुरुषाः क्रीडां कुर्वन्ति, तत्र यानि निधानानि। उद्यानेषु वा यत्र पुष्पवृक्षाः प्रचुरा भवन्ति, पुष्पलतानि गृहाणि भवन्ति, उष्णकाले समागत्य च्छायायां रमन्ते तानि नगरसमीपे उद्यानानि उच्यन्ते, तत्र यानि निधानानि तिष्ठन्ति। तथा घनेषु एकजातीयवृक्षेषु, तथा वनखण्डेषु अनेकजातीयवृक्षेषु, श्मशानेषु, शून्यगृहेषु, गृहाणां तथा पर्वतानां सन्धिषु, पर्वतानां गुहासु, पर्वतानां विस्तीर्णशिलातलेषु, उपस्थानेषु, आस्थानमण्डपेषु राजसभास्थानेषु, तथा पर्वतम् उत्कीर्य मध्ये यानि द्रव्याणि क्षिप्तानि; तथा यत्र कुटम्बिनो जना वसन्ति तत्र यानि निधानानि खातानि एतेषु स्थानेषु प्रायेण कृपणा निर्भयं स्थानं ज्ञात्वा द्रव्यं प्रक्षिप्यन्ति। तथा अपरेष्वपि स्थानेषु यानि कानिचिद् निधनानि आसन् तानि निधनानि ते इन्द्रस्य आज्ञया, धनदस्य सेवकाः सिद्धार्थस्य राज्ञो गृहे आनयन्ति।

जं रयणिं च णं समणे भगवं महावीरे नायकुलंसि साहरिए तं रयणिं च णं नायकुलं हिरण्णेणं वड्ढित्था, सुवण्णेणं वड्ढित्था, धणेणं धन्नेणं रज्जेणं रट्ठेणं बलेणं वाहणेणं कोसेणं कोट्ठागारेणं पुरेणं अंतेउरेणं जणवएणं जसवाएणं वड्ढित्था, विपुलधण–कणग–रयण–मणि–मोत्तिय–संख-सिल–प्पवाल–रत्तरयणमाइएणं संतसारसावइज्जेणं पीइसक्कारसमुदएणं अईव २ अभिवड्ढित्था, तए णं समणस्स भगवओ महावीरस्स अम्मा–पिऊणं अयमेयारूवे अब्भत्थिए, चिंतिए, पत्थिए, मणोगए संकप्पे समुप्पज्जित्था ॥ ८९ ॥ जप्पभिइं च णं अम्हं एस दारए कुच्छिंसि गब्भत्ताए वक्कंते तप्पभिइं च णं अम्हे हिरण्णेणं वड्ढामो, सुवण्णेणं धणेणं धन्नेणं रज्जेणं रट्ठेणं बलेणं वाहणेणं कोसेणं कुट्ठागारेणं पुरेणं अंतेउरेणं जणवएणं जसवाएणं वड्ढामो, विपुलधण–कणग-रयण–मणि–मुत्तिय–संख–सिल–प्पवाल–रत्तरयणमाइएणं संतसारसावइज्जेणं पीइसक्कारेणं अईव २ अभिवड्ढामो, तं जया णं अम्हं एस दारए जाए भविस्सइ, तया णं अम्हे एयस्स

दारगस्स एयाणुरूवं गुण्णं, गुणनिप्फन्नं नामधिज्जं करिस्सामो वद्धमाणु त्ति ॥ ९० ॥

यस्यां रात्रौ श्रमणो भगवान् महावीरो ज्ञातराजन्यकुले हरिणेगमेषिणा देवेन संक्रामितः, तद्दिनाद् आरभ्य एव सिद्धार्थस्य राज्ञो गृहं हिरण्येन अघटितसुवर्णेन वर्धितम्, रूप्येण वर्धितम्, धनेन गणितद्रव्येण वर्धितम्, धान्येन चतुर्विंशति जातिविशिष्टेन, तानि चतुर्विंशतिधान्यनामानि इमानि–जव–गोधूम–शाठी–व्रीहि–साली–कोद्रव–अणुआ–कङ्गु–राल–तिल–मूंग–उडद्–अलसी–चणक–तिउडा–निष्पाव–सिलिंद–राजमास–उच्छू–मसूर–तुअर–कुलत्थ–धाणा–कलाय–रउइत्यादिभिः अत्रैर्वृद्धिं प्राप्तम्, राज्येन वर्धितम्, राष्ट्रेन देशेन वर्धितम्, बलेन कटकेन, चतुरङ्गेन हस्ति–अश्व–रथ—पत्तिभिर्वर्धितम्, वाहनेन वेसरादिना, कोशेन द्रव्यभाण्डागारेण, कोष्ठागारेण धान्यभाण्डागारेण, पुरेण–नगरेण, अन्तःपुरेण, जनपदेन विस्तीर्ण धन–कनक–रत्न–मणि–मौक्तिक–शङ्ख–दक्षिणावर्तादिः शिला–विषहारिणी, हीरकादिपेषणसाधनं वा; प्रवालं मुद्गिकम्, रक्तरत्नम्, रत्नचूर्णचूर्णादिकं सद् विद्यमानम्, स्वापतेयं प्रधानद्रव्यं तेन वर्धितम्, प्रीति–सत्कारेण अतीव वर्धितम्, ततः श्रमणत्वेन संक्रान्तस्य भगवतो महावीरस्य मातृ–पित्रोर्मनसि एतादृशः संकल्पो विचारः समुत्पन्नः, यद्दिनात् प्रभृति अस्माकम् एष बालः कुक्षौ गर्भत्वेन संक्रान्तः तद्दिनाद् एव वयं हिरण्येन, सुवर्णेन, धनेन, धान्येन, राज्ये-

न, राष्ट्रेन, बलेन, वाहनेन, कोषेन, कोष्ठागारेण, पुरेण, अन्तःपुरेण, जनपदेन, विपुलधन–कनक–रत्न–मणि–मौक्तिक–शङ्ख–शिला–प्रवाल–रक्तरत्नादिभिः, सत्सार–प्रधान–स्वापतेयेन द्रव्येण प्रीति–सत्कारेण अतीव, अतीव वर्धामहे, तेन कारणेन यदाऽस्माकम् एष दारकः कुशलेन भविष्यति, तदा वयम् अस्य बालस्य एतादृशं गुण-निष्पन्नं नामधेयं करिष्यामो वर्धमान इति

तए णं समणे भगवं महावीरे माउअणुकंपणट्ठाए निच्चले निप्फंदे निरेयणे अल्लीणपल्लीणगुत्ते आवि होत्था ॥ ९१ ॥ तए णं तीसे तिसलाए खत्तियाणीए अयमेयारूवे जाव–संकप्पे समुप्पज्जित्था–हडे मे से गब्भे, मडे मे से गब्भे, चुए मे से गब्भे, गलिए मे से गब्भे, एस मे गब्भे पुव्विं एयइ, इयाणिं नो एयइ त्ति कट्टु ओहयमणसंकप्पा चिंतासोगसागरसंपविट्ठा करयलपल्हत्थमुही अट्टज्झाणोवगया भूमीगयदिट्ठिया झियायइ, तं पि य सिद्धत्थरायवरभवणं उवरयमुइंगतंतीतलतालनाडइज्जजणमणुज्जं दीणविमणं विहरइ ॥ ९२ ॥

ततः स श्रमणो भगवान् महावीरो मातुः उपरि अनुकम्पया भक्त्या, निश्चलः निष्पन्दः स्थितः । स्वामि-

ना श्रीमहावीरेण चिन्तितम्-अन्येषां जननी गर्भवती तदा कुक्षौ गर्भः स्फुरति, तदा जनन्याः उदरे व्यथा भवति, तेनाऽहं निश्चलः, निष्पन्दः तिष्ठामि, येन मे जननी सुखीभवति । ततो मातुर्गर्भे निश्चलः श्रीमहावीरोऽतिष्ठत्, एकस्मिन् प्रदेशे आलीनः प्रलीनोऽभवत्, ततः तस्याः त्रिशलाक्षत्रियाण्याः एतादृशो मनसि संकल्पः समुत्पन्नः-स मम गर्भः केनाऽपि दुष्टदेवेन हृतः, अथवा स मम गर्भो मृतः, अथवा स मे गर्भः च्युतः-गर्भस्थानाद् भ्रष्टः, अथवा स मे गर्भो गलितः-क्षरित्वा गतः, एष मे गर्भः पूर्वं स्फुरन् इदानीं नो स्फुरति, तस्माद् मम गर्भस्य कुशलं नास्ति । मनसि कालुष्यम् उत्पन्नम्, त्रिशला उपहतमनःसंकल्पा जाता, चिन्ताशोकसमुद्रे प्रविष्टा, करतले स्थापितमुखी, भूमौ स्थापितमुखी-भूमौ स्थापितदृष्टिः सती एवं ध्यायति स-

यदि सत्यमिदं जज्ञे गर्भस्याऽस्य कथंचन । तदा नूनमभाग्याऽहं भूमौ निष्पुण्यकाऽवधिः ॥ १ ॥

त्रिशला मनसि एवं चिन्तयति-यदि मम गर्भस्य कुशलं नास्ति-गर्भो हृतः, मृतः, च्युतः, गलितो वा इदं सत्यं जातं तदा निश्चयेनाऽहं महाऽभाग्या-पृथिव्याम् अहम् एव एका पापा, अधर्मा । यत उक्तं पण्डितैः-अभाग्यानां गृहे चिन्तामणिर्न तिष्ठति, दरिद्राणां गृहे निधानं न प्रकटीभवति, कल्पवृक्षो मरुस्थले न उद्गच्छति, अल्पपुण्यानां मनुष्याणाम् अमृतपानस्य इच्छा न पूर्णा संजायते । हा धिग् दैवम्, एतत् त्वया किं कृतम्? मम मनोरथवृक्षः समूलम् उन्मूलितः, पूर्वं नेत्रं दत्त्वा पश्चाद् उद्दाल्य गृहीतम्, निधानं दर्शयित्वा पश्चाद्

आकृष्य गृहीतम्, अनेन दैवेन मेरौ अहम् आरोप्य भूमौ पातिता, रे दैव ! ! मया तव किम् अपराद्धम्? अहं किं करोमि ? कुत्र गच्छामि ? कस्याऽग्रे गत्वा पूत्कारं करोमि ? अनेन पापिष्ठेन दैवेन यत्कृतं तत् कोऽपि शत्रुरपि न करोति, अनेन राज्येनाऽपि सृतम्, पूर्वोक्तैश्चतुर्दशमहास्वप्नैः सूचितम्, त्रैलोक्यपूजितम्, अनन्तगुणैः सहितम्, दूषणै रहितम्, तद्रत्नं विना मे सर्वमपि शून्यम्। अथवाऽत्र दैवस्य दूषणं नास्ति, मया एव पूर्वजन्मनि यद् महापातकं कृतं तस्यैव फलम् इदं जातम्। यदुक्तं कर्मविपाके–

पसु–पक्खि–माणसाणं बाले जो वि हु विओअए पावो। सो अणवच्चो जायइ अह जायइ तो विवज्जिज्जा ॥१॥[1]

पशूनां गो–महिषी–हरिणाश्वानां बालकाः येन वियोजिता भवन्ति, तथा यः पापिष्ठः पक्षिणां शुक–मयूर–तित्तिर–सारिकादीनां बालकान् वियोजयति स पुरुषोऽनपत्यो भवति–निस्सन्तानो भवति, चेत् सन्ततिर्भवति तदा म्रियते। अथवा मया पापया पश्चाद् जन्मनि महिषीभ्यः पड्डुकाः त्याजिताः, लघूनां वत्सानां दुग्धलोभाद् दुग्धान्तरायः कृतो भविष्यति। अथवा उन्दुराणां विलेषु उष्णनीरम्, तथा धूम्रः प्रदत्तो भविष्यति ते मृता भविष्यन्ति। अथवा तेषां बिलानि पाषाणैर्मुद्रितानि, चूर्णादिना प्रलिप्तानि भविष्यन्ति। अथवा कीटिकानां बिलानि साण्डकानि, मत्कोटकानां बिलानि जलेन प्लावितानि भविष्यन्ति। शुक–सारस–चीडा–वर्ति-

---

१ पशु–पक्षि–मनुष्याणां वालान्, योऽपि खलु वियोजयति पापः। सोऽनपत्यो जायते, अथ जायते ततो विपद्येत ॥

कादीनां बालवियोगः कृतो भविष्यति। अथवा कासांचित् स्त्रीणाम्, अथवा सपत्नीनां पुत्राणाम् उपरि अङ्गुलीमोटनं क्रोधेन कृतं भविष्यति। अथवा धर्मबुद्ध्या काकाऽण्डानि स्फोटितानि भविष्यन्ति। अथवा ऋषयः संतापिता भविष्यन्ति। अथवा स्त्रीभ्यो गर्भपातः कृतः, कारितो भविष्यति वा। अथवा शील-खण्डना कृता, कारिता वा भविष्यति, तेषां दुष्टपापकर्मणां फलविपाको जातः। पुनरपि दैवम् उपालभते–रे रे दैव! निर्दय! निर्घृण! पापिष्ठ! दुष्ट! धृष्ट! निष्ठुर! निकृष्टकर्मकारक! निरपराधजनमारक! मूर्तिमत्पातक! विश्वासघातजनक! अकार्यसज्ज! निर्लज्ज! किमर्थं निष्कारणवैरी भवसि, मया तव कोऽपराधः कृतः? त्वं प्रकटीभूय वद। एवं विलापं कुर्वतीं त्रिशलां प्रति सख्यः पृच्छन्ति–हे सखि! त्वं किमर्थम् एतादृशं दुःखं करोषि? तदा त्रिशला निःश्वासपूर्वकं वदति–हे सख्यः! किं वदामि, कथन-योग्या काऽपि वार्ता नास्ति। अहं मन्दभाग्याऽस्मि, मज्जीवितं गतम्, एवम् उक्त्वा मूर्छया भूमौ पपात। तदा पार्श्ववर्तिन्यः शीतलोपचारं कृत्वा त्रिशलां सज्जां कुर्वन्ति, तदा पुनरपि विलपति, कदाचित् शून्यचित्ता सती चिरं तिष्ठति। सख्यो मुहुर्मुहुः पृच्छन्ति, तदा रुदती सती गर्भस्य स्वरूपं वदति–पुनर्मूर्छति, तदा तत्स्वरूपं श्रुत्वा सर्वोऽपि राजलोकश्चिन्तातुरो बभूव, हाहाकारो जातः। तदा काचित् सखी वदति–हे कुलदेव्यः यूयं! क गताः, वयं सर्वदा त्वदीयपूजायां सावधानाः तिष्ठामः, तदा पुनर्याः काश्चित् कुलवृद्धाः सन्ति ताः मन्त्र-तन्त्र-

यन्त्र–शान्तिक–पौष्टिककर्माणि चक्रुः । काचिद् नैमित्तिकं पप्रच्छ । नाटकं गीतगानं वादित्रादिकं सर्वमपि राजसभायां निषिद्धम् । उच्चैः स्वरेण न कोऽपि जल्पति, राजा सिद्धार्थोऽपि सशोको बभूव, सर्वोऽपि राजलोकः किंकर्तव्यतामूढो जातः, राजमन्दिरं सर्वं शून्यमिव आसीत्, नगरी सर्वाऽपि शोकस्य राजधानी इव जाता, राजगृहं दुःखानां भाण्डागारम् इव अभूत्; उद्वेगस्य आकरम् इव स्नान–खादन–पान–दान–जल्पन–शयनादिकं सर्वमपि विस्मृतम्, कश्चित् किञ्चित् पृच्छति तदा निःश्वासैः एव उत्तरदानं भवति, अश्रुपातैरेव मुखप्रक्षालनं संजायते स्म, सर्वजनः शून्यचित्तः तिष्ठति, एतादृशं सर्वं क्षत्रियकुण्डग्रामं नगरं बभूव ।

तए णं से समणे भगवं महावीरे माउए अयमेयारूवं अब्भत्थिअं पत्थिअं मणोगयं संकप्पं समुप्पन्नं वियाणित्ता एगदेसेणं एयइ, तए णं सा तिसला खत्तियाणी हट्ठतुट्ठा जाव–हयहि–अया एवं वयासी–॥ १३ ॥–नो खलु मे गब्भे हडे, जाव–नो गलिए, मे गब्भे पुव्विं नो एयइ, इयाणिं एयइ त्ति कट्टु हट्ठ जाव एवं विहरइ,

ततः श्रमणो भगवान् महावीरो मातुः एतादृशम् अभ्यर्थितं मनोगतं दुःखसंकल्पं समुत्पन्नं विज्ञाय अवधि-ज्ञानेन मनसि चिन्तितवान्–किं क्रियते, कस्याऽग्रे कथ्यते, मोहस्य कीदृशी गतिर्वर्तते । मया तु मातुर्हिताय,

सुखाय कृतं तदेव दुःखाय संजातम्, यथा—नालिकेरस्य जले शीतलतायै प्रक्षिप्तं कर्पूरं विषाय भवति तथाऽत्र मत्कृतं हितं मातुरहिताय जातम्, अहो ! ! अदृष्टेऽपि मयि मातृपित्रोरेतादृशो रागो वर्तते, यदा माम् एतौ मज्जननी—जनकौ विलोकयिष्यतः तदा कीदृशौ मोहयुक्तौ भविष्यतस्तन्न जाने, ततो मातृपित्रोर्जीवतोः मनोरहं दीक्षां न ग्रहीष्यामि, कदाचिद् एतयोर्जीवतोः अहं दीक्षां गृह्णामि तदा तु एतौ म्रियेते एव इति ज्ञात्वा, अनयोर्जीवतोः मया न प्रव्रज्या ग्राह्या इति अभिग्रहो जनन्या गर्भस्थेन एव कृतः श्रीमहावीरेण। पश्चात् शरीरस्य एकदेशः संचालितः। ततः सा त्रिशला क्षत्रियाणी तं गर्भम् एजन्तम्, वर्धन्तम्, स्फुरन्तं ज्ञात्वा हर्षिता, संतुष्टा, हृतहृदया संजाता सती एवम् अवादीत्—हे सख्यः ! नो खलु मे गर्भः केनाऽपि हृतः, नो मे गर्भो मृतो यावद् नो गलितः। पूर्वं न एजत् न स्फुरति स्म, इदानीम् एजते, स्फुरते कल्याणं मम गर्भस्य. अहं भाग्यवती अस्मि, पुण्याऽहम्, त्रिभुवनमान्याऽहम्, श्लाघ्यं मे जीवितम्। श्रीपार्श्वनाथो जिनो मम प्रसन्नोऽस्ति, ममोपरि श्रीगुरवोऽपि प्रसन्नाः सन्ति, फलितो मे आजन्माऽऽराधितः श्रीजैनधर्मः, संजाता मे गोत्रदेव्योऽपि सुप्रसन्नाः। एवं त्रिशलाया रोमराजी उल्लसिता, नेत्रकमले विकसिते, मुखकमलम् अपि विकसितम् इत्यादि त्रिशलाया हर्षस्वरूपं दृष्ट्वा वृद्धस्त्रिय आशीर्वादं ददति, सधवा नार्यो गीतगानं चक्रुः, पणाङ्गनानां नाटकं प्रवर्तितम्, सर्वत्र नगरमध्येऽष्टमङ्गलिकानि स्थापितानि, स्थाने स्थाने कुङ्कुमछटा प्रदत्ता, नगरमध्ये ध्वजाः

स्थाने स्थाने, वृद्धैः मोक्तिकैः स्वस्तिकानि रचितानि, पञ्चवर्णपुष्पप्रकरो विस्तारितः, सर्वत्र नगरे तोरणानि बद्धानि, सर्वस्त्रीभिः, सर्वैः पुरुषैश्च नव्यवस्त्राणि परिधृतानि, नव्याभरणानि परिधृतानि च। पुनः सधवाः नार्यः अक्षतस्थालानि श्रीफलसहितानि गृहीत्वा गीतगानं कुर्वत्यः त्रिशलासमीपम् आजग्मुः। भट्टाः विरुदावलीं प्रोचुः। तदा राजद्वारं विशालमपि अतीव संकीर्णं संजातम्, राजमार्गोऽपि चतुर्वर्णसमूहेन निरुद्धः, अनेके रथाः, तथा गजाः शृङ्गारिताः, अनेके अश्वाः स्थाने स्थाने विलसन्ति। गीतानि गीयन्ते, वादित्राणि वाद्यन्ते, मृदङ्गानि वाद्यन्ते, दुन्दुभयो निष्वानाश्च मेघवद् गर्जन्ते। तीर्थकरभवनेषु स्नात्रपूजाः प्रारभ्यन्ते। वन्दिजनाः सर्वेऽपि कारागारेभ्यो निष्काशिताः। साधवोऽपि वन्दनापूर्वकेन प्रतिलाभिताः, साधर्मिकाणां भक्तिः पक्वान्नैः प्रारब्धा, सर्वत्र नगरे सर्वेषाम् आनन्द उत्पन्नः।

तए णं समणे भगवं महावीरे गब्भत्थे चेव इमेयारूवं अभिग्गहं अभिगिण्हइ—नो खलु मे कप्पइ अम्मापिउहिं जीवंतेहिं मुंडे भवित्ता अगाराओ अणगारिअं पव्वइत्तए ॥ ९४ ॥

ततः श्रीश्रमणेन भगवता महावीरेण गर्भगतेन एव अयम् अभिग्रहो गृहीतः—न खलु मया मातृपित्रोर्जीवतोः सतोः गृहस्थाऽऽवासाद् निःसृत्य अनगारतया भाव्यम्। आवश्यकेऽपि उक्तम्—

[1]तिहि नाणेहिं समग्गो देवीतिसलाइ सो उ कुच्छिंसि । अइवसइ सन्निगब्भे छम्मासे अद्धमासे अ ॥ १ ॥
यदा सार्धषण्मासा गतास्तदा त्रिशलागर्भस्थितेन भगवता महावीरेण अभिग्रहो गृहीतः-

तए णं सा तिसला खत्तियाणी ण्हाया कयबलिकम्मा कयकोउयमंगलपायच्छित्ता सव्वालंकार-विभूसिया तं गब्भं नाइसीएहिं नाइउण्हेहिं नाइतित्तेहिं नाइकडुएहिं नाइकसाइएहिं नाइअंबिलेहिं नाइमहुरेहिं नाइनिद्धेहिं नाइलुक्खेहिं नाइउल्लेहिं नाइसुक्केहिं ॥

ततः सा त्रिशला स्नाता, पुनस्तया त्रिशलया बलिकर्म कृतम्-देवपूजा कृता इत्यर्थः। कौतुकानि तिलकादीनि कृतानि, सर्वविघ्नहरणार्थं माङ्गलिक्यानि कृतानि, आभूषणानि धृतानि, सर्वाणि अलंकाराणि धृतानि, सर्वैर्भूषणै-र्वस्त्रै-रलंकारैर्विभूषिता आसीत्। अतिशीताहारं न करोति, अत्युष्णाहारं न करोति, अतितीक्ष्णाहारं न करोति। सुण्ठी-मिरच-कुलिंजनाद्याहारं न करोति। अतिमिष्टं गुडखण्डादिकं आहारं न करोति । अतिशुष्काहारम्-शुष्कापूप-चणकादिरूपम् आहारं न करोति । अत्यार्द्रमाहारम्, आर्द्रम्-फल-पुष्प-कन्द-मूलकादिकम् आहारं न करोति । अतिस्निग्धाहारम्-प्रचुरघृतादिपानं च करोति । अतिरूक्षाहारम्-घृतादिवर्जितम् एव

१ त्रिभिर्ज्ञानैः समग्रो देवीत्रिशलायाः स तु कुक्षौ । अतिवसति संनिगर्भे षण्मासान् अर्धमासं च ।

तद्प्याहारं न करोति । "अतिसर्वत्र वर्जयेत्" इति वचनाद् यद् आहारं गर्भवतीनां वैद्यकशास्त्रे निषिद्धम् अस्ति तद् आहारं न करोति । तदुच्यते-

वातलैश्च भवेद् गर्भः कुब्जा-ऽन्ध-जड-वामनः । पित्तलैः स्खलितः पिङ्गः चित्री पाण्डुः पापात्मभिः ॥ १ ॥

अतिवातलैः चणक-माषाद्यैराहारैर्गर्भवत्या गर्भः कुब्जः, अन्धः, जडः, वामनश्च भवति । अतिपित्तलैर्गो-धूमाद्यैराहारैर्गर्भः स्खलितो भवति, मार्गे संचरन् स्खलति; अथवा स्खलितवीर्यो भवति । कफकारकाऽऽहारैर्द-ध्यादिभिः चित्री चर्मरोगयुक्तो भवति ।

अतिलवणं नेत्रहरम् अतिशीतं मारुतं प्रकोपयति । अत्युष्णं हरति बलम् अतिकामं जीवितं हरति ॥ २ ॥

गर्भवती स्त्री चेद् अतिलवणं भुङ्क्ते तदा गर्भनेत्रयोः हानिर्भवति । गर्भवती चेद् अतिशीतलाहारं करोति तदा बालकस्य शरीरे वायुप्रकोपो भवति । पुनर्गर्भवत्याः अत्युष्णाहाराद् बालो निर्बलो भवति । गर्भवती चेद् अधिककामसेवां करोति तदा गर्भो म्रियते एव । पुनर्वैद्यकशास्त्रे उक्तम्-

अत्यम्बुपानाद् विषमासनाच्च दिवाशयाद् जागरणाच्च रात्रौ ।
संधारणाद् मूत्र-पुरीषयोश्च षड्भिः प्रकारैः प्रभवन्ति रोगाः ॥ ३ ॥

अधिकपानीयपानात्, विषमासनेन उत्कटादिआसनेन स्थानात्, दिवसे शयनात्, रात्रौ जागरणात्, मूत्र-

पुरिषयोर्निरोधाद् रोगाः पड्भिः प्रकारैः सर्वेषां पुरुषाणां प्रायेण उत्पद्यन्ते–गर्भवत्या नार्या एते न कार्याः । अथ येषु ऋतुषु यद्भोज्यं गुणकारि तदुच्यते–

वर्षासु लवणममृतं शरदि जलं गोपयश्च । हेमन्ते शिशिरे चामलकरसं घृतं वसन्ते गुडश्चान्ते ॥ ४ ॥

श्रावण–भाद्रपदे वर्षर्तौ लवणम् अमृतोपमम्, आश्विन–कार्तिके शरदृतौ जलम् अमृतवत्, मार्गशीर्ष–पोषे च हेमन्ते ऋतौ गोदुग्धम् अमृतोपमम्, माघे–फाल्गुने च शिशिरऋतौ अम्लकरसम् अमृतोपमम्, चैत्र–वैशाखे च वसन्तऋतौ घृतम् अमृतोपमम्, ज्येष्ठे आषाढे च ग्रीष्मऋतौ गुडोऽमृतोपमो भवति । पुनर्गर्भवती नारी एतानि न करोति–विषयसेवनम्, यान–वाहनम्, शकट–उष्ट्राधिरोहणम्, मार्गे चलनम्, विषमो–न्नत-स्थाने च क्रमणात् स्खलनम्, उच्चस्थानात् कूर्दनम्, भारोद्वहनम्, राटीकरणम् दासी–दास–पशूनां ताडनम्, विषमो–न्नतभूमौ उत्स्खलनम्, शिथिलखट्वायां शयनम्, लघुशय्यायां तथा स्वशरीरप्रमाणाद् अधिकायां शय्यायां शयनं च, संकीर्णासने स्थानम्, उपवासादितपःकरणम्, रूक्ष–कटु–तिक्त–कषाय–मधुर–स्निग्धा–ऽऽम्लाहारकरणम्; अतिरागकरणम्, अतिशोककरणम्, अतिक्षाराऽऽहारसेवनम्, अतिसार–वमन–अधिकाहारकरणम् एतानि गर्भवती न करोति, चेत्करोति तदा उत्तमगर्भः स्वस्थानाद् भ्रश्यति तस्मात् त्रिशला एतानि कार्याणि न करोति । तस्मिन् समये सख्योऽपि त्रिशलाम् एवं शिक्षयन्ति—

मन्दं संचर मन्दमेव निगद व्यामुञ्च कोपक्रमम् । पथ्यं भुङ्क्ष्व विधाननीविवमने मा अट्टहासं कृथाः ॥
आकाशे न च शेष्व नैव शयने नीचैर्बहिर्गच्छ मा । देवी गर्भभरालसा निजसखीवर्गेण सा शिष्यते ॥ १ ॥

त्रिशला क्षत्रियाणी गर्भभारेण अलसा सती सखीवर्गेण एवं शिष्यते–हे सखि ! त्वं मन्दं मन्दं संचर, हे सखि ! त्वं मन्दं मन्दं जल्प, क्रोधं कस्याऽपि उपरि मा कुरु, पथ्यं भोजनं कुरु, शाटिकाग्रन्थिं दृढां मा वधान, बहुहासम् अट्टहासं मा कुरु, आकाशे मा शयनं कुरु, तथा शय्यां विना भूमौ एव मा शयनं कुरु, नीचैर्भूमिगृहादिषु मा उत्तर, बहिर्गृहाद् अन्यद् गृहान्तरं मा व्रज, संपूर्णेषु मासेषु त्रिशलायै सखीवर्ग एतादृशीं शिक्षां ददाति । पुनः–

सव्वत्तुगभयमाणसुहेहिं भोयणच्छायणगंधमल्लेहिं ववगयरोगसोगमोहभयपरिस्समा जं तस्स गब्भस्स हिअं मियं पत्थं गब्भपोसणं तं देसे अ काले अ आहारमाहारेमाणी विवित्तमउएहिं सयणासणेहिं पइरिक्कसुहाए मणोऽणुकूलाए विहारभूमीए

सर्वऋतुषु यानि यानि पथ्याऽऽहाराणि कथितानि तानि आहाराणि त्रिशला करोति, पुनर्यद्वस्तु भुज्यमानं सुखदायकं भोजनम् तथा छादनं यत्र ऋतौ यद्वस्त्रं शरीरसौख्यदं तद्वस्त्रं परिदधाति, पुनर्गन्धद्रव्याणि पुष्प–

अबीर-कर्पूर—कस्तूरिकादिकानि शरीरे धारयति, पुनस्त्रिशला कीदृशी वर्तते? यस्याः सकाशाद् रोग-शोक-मोह-मूर्छा-अज्ञानं वा भय-परित्रासाः व्यपगताः दूरं गता इत्यर्थः। पुनर्यत्तस्य गर्भस्य हितकारि भोजनं तदपि मितम्, स्तोकं तदपि पथ्यम्, गर्भस्य हितकारिभोजनं तदपि पथ्यम्, गर्भस्य पोषकं तदपि यस्मिन् देशे यद्भोजनं पथ्यम्, यस्मिन् काले यदाहारं योग्यं तद् आहारं करोति, पुनर्विविक्ता एकान्ते स्वमनोज्ञाभिः सखीभिस्समं तिष्ठति, रोषरहिता सती मृदुभिः कोमलशय्या-वस्त्रादिभिः, शरीरसुखं भुञ्जाना प्रतिऋतुसुखाभिः, सर्वलोकेभ्योऽधिकाभिः, मनसः अनुकूलाभिः, मनोरमाभिर्विहारभूमिभिः क्रीडासुखं कुर्वती सुखेन त्रिशला तिष्ठति। पुनरपि त्रिशला एतन्न करोति-दिवास्वापं न करोति-दिवास्वापाद् गर्भस्थो बालः स्वापशीलो भवति, वह्यञ्जनाद् अन्धो भवति, रोदनात् चक्षूरोगी भवति, स्नानाऽनुलेपनाद् दुःशीलः, तैलाऽभ्यङ्गात् कुष्ठी, नखकर्तनात् कुनखी, प्रधावनात् चञ्चलः, हसनात् श्यामदन्तो-ष्ठ-तालु-जिह्वः, अतिजल्पनाद् वाचालः, अतिश्रवणाद् बधिरः, अतिखेलनात् स्खलितगतिः, व्यञ्जनवातप्रक्षेपाद् उन्मत्तः स्याद् अत एव इत्यादिकं परिहरेत्। पुनस्त्रिशला एतादृशी तिष्ठति-

पसत्थदोहला संपुण्णदोहला संमाणियदोहला अविमाणिअदोहला वुच्छिन्नदोहला ववणी-

अदोहला सुहंसुहेणं आसइ सयइ चिट्ठइ निसीअइ तुयट्टइ विहरइ सुहंसुहेणं तं गब्भं परिवहइ ॥ ९५ ॥

पुनस्त्रिशला कीदृशी? प्रशस्तदोहदा प्रशस्तानि समीचीनानि दोहदानि मनोरथाः यस्या सा प्रशस्तदोहदा। पुनस्त्रिशला कीदृशी? संपूर्णदोहदा, पुनः सम्मानितदोहदा यो मनसि अभिलाषः उत्पद्यते तं करोति। पुनः त्रिशला अवमानितदोहदा मनोरथोत्पत्तेः पश्चात् क्षणमपि विलम्बो न कृतः। एतादृशी मनोरथस्य पूर्तिः कृता, पुनरपि तस्याः मनोरथस्य अभिलाषो नोत्पद्यते। व्युच्छिन्नदोहदा सर्ववाञ्छापूर्णा। व्यपनीतदोहदा गतदोहदा, कदापि कोऽपि मनोरथो न भवति, यावन्तो मनोरथास्ते सर्वेऽपि संजाता इत्यर्थः। सुखंसुखेन आश्रयं गृह्णाति, आश्रयं गृहीत्वा ऊर्ध्वा भवति। सुखेन कोमलशय्यायां शेते, सुखेन तिष्ठति, सुखेन निषीदति, सुखेन भद्रासनादौ उपविशति, सुखेन 'तुयट्टइ' इति त्वग् वर्तनं करोति–निद्रां विना शय्यायां लोटते इत्यर्थः। एवं सुखंसुखेन तं गर्भं धारयति। अथ भगवति महावीरे गर्भे स्थिते सति मातुर्यानि दोहदानि उत्पन्नानि तानि लिख्यन्ते–

सत्पात्रपूजां किमहं करोमि सत्तीर्थयात्रां किमहं तनोमि। सद्दर्शनानां चरणं नमामि सद्देवताऽऽराधनमाचरामि॥१॥

निष्कास्य कारागृहतो वराकान् मलीमसान् किं स्नपयामि सद्यः ।
बुभुक्षितान् तानथ भोजयित्वा विसर्जयामि स्वगृहेषु तुष्टा ॥ २ ॥

पृथ्वीं समस्तामनृणां विधाय पौरेषु कृत्वा परमं प्रमोदम् । करिण्यधिस्कन्धमधिश्रिताऽहं भ्रमामि दानानि मुदा ददामि समुद्रपानेऽमृतचन्द्रपाने दाने तथा दैवतभोजने च । इच्छा सुगन्धेषु विभूषणेषु अभूच्च तस्याः वरपुण्यकृत्यैः ॥४॥

त्रिशला मनोरथान् कुरुते—सुपात्रे दानं ददामि, सत्तीर्थानां शत्रुञ्जयादीनां यात्रां करोमि, साधूनां दर्शनं करोमि, देवतानामाराधनां करोमि । पश्चात् कारागृहाद् वन्दिगृहाद् दीनान् मनुष्यान् निष्कास्य तान् स्नानं कारयित्वा सद्यः क्षुधार्तान् भोजनं कारयित्वा, तान् अनाथान् आत्मीयगृहेषु विसर्जयामि । पश्चात् सकलां पृथिवीम् अनृणाम् ऋणेन रहितां कृत्वा, पौरेषु नगरलोकेषु परमं प्रमोदं करोमि । अहं पुनर्हस्तिनीस्कन्धारूढा सती नगरे हर्षेण भ्रमामि । पुनः समुद्रपानम् अमृतचन्द्रपानं करोमि, दानं ददामि, साधर्मिकान् भोजयामि, सुगन्धान् शरीरे धारयामि, विभूषणानि दिव्यानि धारयामि पुण्यकार्याणि करोमि । एतेषु मनोरथेषु ये ये मनोरथाः सिद्धार्थेन राज्ञा पूरयितुं शक्यास्तान् सिद्धार्थः पूरयति । यः कश्चित् सिद्धार्थेन पूरयितुम् अशक्यः तं मनोरथं इन्द्र आगत्य पूरयति । एकदा त्रिशलाया इन्द्राण्याः कुण्डलयुगलं बलात्कारेण गृहीत्वा, कर्णादुत्तार्य स्वकर्णे परिदधामि इति इच्छाऽभूत् सा इन्द्रेण पूरिता । अथ भगवतो जन्मसमयं वर्णयति—

ते णं काले णं ते णं समए णं समणे भगवं महावीरे जे से गिम्हाणं पढमे मासे दुच्चे पक्खे चित्तसुद्धे तस्स णं चित्तसुद्धस्स तेरसीदिवसेणं नवण्हं मासाणं बहुपडिपुण्णाणं अद्धट्ठमाणं राइंदियाणं वइक्कंताणं उच्चट्ठाणगएसु गहेसु ।

तस्मिन् काले, तस्मिन् समये श्रमणो भगवान् श्रीमहावीरो ग्रीष्मकालस्य उष्णकालस्य प्रथमे मासे, द्वितीय-पक्षे, चैत्रसितत्रयोदशीदिने नवसु मासेषु सार्धसप्तदिवसेषु संपूर्णेषु जातेषु, सर्वेषु ग्रहेषु-सूर्य-चन्द्र-मङ्गल-बुध-बृहस्पति-शुक्र-शनिषु उच्चस्थानेषु प्राप्तेषु, उच्चस्थानं यथा मेषलग्नस्य दशांशे सूर्य आयाति तदा सूर्यः परमोच्चो भवति, वृषलग्नस्य तृतीयांशे चन्द्रः परमोच्चो भवति, कर्कलग्नस्य पञ्चमेंऽशे बृहस्पतिः परमोच्चः, मीन-लग्नस्य सप्तविंशतितमेंऽशे शुक्रः परमोच्चः, तुललग्नस्य विंशतितमेंऽशे शनिः परमोच्चो भवति, अथ ज्योतिः-शास्त्राद् उच्चग्रहाणां फलं वदति-

'तिहिं उच्चेहिं नरिंदे पञ्चहिं उच्चेहिं अद्धचक्की य । छहिं होइ चक्कवट्टी सत्तहिं तित्थंकरो होइ ॥ १ ॥

१ त्रिभिरुच्चैर्नरेन्द्रः पञ्चभिरुच्चैरर्धचक्री च । षड्भिर्भवति चक्रवर्ती सप्तभिस्तीर्थंकरो भवति ॥

त्रिभिः उच्चस्थैर्ग्रहै राजा भवति, पञ्चभिः उच्चग्रहैः अर्धचक्री वासुदेवो भवति, षड्भिः उच्चग्रहैः चक्रवर्त्ती भवति सप्तभिः उच्चग्रहैः तीर्थंकरो भवति । अथ नीचानाम्, स्वगृहवर्तिनां च अस्तानां च प्रसङ्गवशात् फलं वदति–

त्रिभिर्नीचैर्भवेद्दासः त्रिभिरुच्चैर्नराधिपः । त्रिभिर्स्वस्थैर्भवेन्मन्त्री त्रिभिरस्तमितैर्जडः ॥ १ ॥

यदि त्रयो ग्रहा जन्मसमये नीचैः स्थाने पतिता भवन्ति तदा राजकुले उत्पन्नोऽपि दासो भवति । यदा त्रयो ग्रहा उच्चस्था भवन्ति तदा हीनकुलेषु उत्पन्नोऽपि राजा भवति । त्रयो ग्रहा यदा स्वगृहवर्तिनो भवन्ति तदा मन्त्री भवति । यदा त्रयो ग्रहाः सूर्येण सह एकत्र मिलिता भवन्ति तदा मूर्खो भवति एवं ज्योतिःशास्त्राद् विशेषो ज्ञेयः ।

पढमे चंदजोए सोमासु दिसासु वितिमिरासु विसुद्धासु जइएसु सवसउणेसु पयाहिणाणुकूलंसि भूमिसप्पिंसि मारुयंसि पवायंसि निप्फन्नमेइणीयंसि कालंसि पमुइयपक्कीलिएसु जणवएसु पुव्वरत्तावरत्तकालसमयंसि हत्थुत्तराहिं नक्खत्तेणं जोगमुवागएणं आरुग्गा आरुग्गं दारयं पयाया ॥

प्रथमे चन्द्रयोगे प्रधाने चन्द्रबले निर्मलासु सर्वासु दिशासु अन्धकारधूम्रिकादिरहितासु अत एव विशेषेण शुद्धासु, जयकारिसर्वशकुनेषु, हर्षितेषु सकलदेशेषु । उत्पात–भूमिकम्प–उल्कापातादिरहिते दिवसे




सुभिक्षे समये सर्वस्यां पृथिव्याम्, सर्वधान्येषु निष्पन्नेषु महोत्सव–माङ्गलिक्येषु प्रवर्तितेषु उत्तराफाल्गुनीनक्षत्रे चन्द्रे समागते भगवान् आरोग्यः, माताऽपि आरोग्यवर्तिनी त्रिशला श्रीमहावीरं पुत्रं प्रासूत । अमुकसूरीणामाज्ञायां वर्तमानस्य सङ्घस्य श्रेयः कल्याणम् अस्तु ॥

श्रीकल्पसूत्रवरनाममहागमस्य गूढार्थभावसहितस्य गुणाकरस्य ।
लक्ष्मीनिधेर्विहितवल्लभकामितस्य व्याख्यानमाप परिपूर्तिमिदं चतुर्थम् ॥ ४ ॥

इति श्रीकल्पसूत्रकल्पद्रुमकलिकायां श्रीलक्ष्मीवल्लभविरचितायां चतुर्थं व्याख्यानं समाप्तम् ॥



१ संवत् २६९१ वर्षे चैत्रशुदित्रयोदश्याम् १३ मङ्गलवारे उत्तराफाल्गुनीनक्षत्रे रात्रिगतघटी १५ पल २१ समये मकरलग्ने चन्द्रहोरायां जन्मकुण्डलिका ज्ञेया ॥ श्रीः ॥

# अथ पञ्चमं व्याख्यानम् ।



अर्हतो भगवतः श्रीमन्महावीरदेवस्य शासने अतुलमङ्गलमालाप्रकाशने श्रीपर्युपणापर्वणि समागते श्रीकल्पसिद्धान्तस्य वाचना प्रवर्तते । तत्र त्रयोऽधिकाराः-तत्र प्रथमं श्रीजिनचरित्रम्, तदनन्तरं स्थविरकल्पः, तदनन्तरं च साधुसामाचारीकल्पः । तत्र श्रीजिनचरित्राऽधिकारे पश्चानुपूर्व्या श्रीमहावीरदेवस्य षट् कल्याणकानि व्याख्यायन्ते । तत्र प्रथमवाचनायां संक्षेपेण षट् कल्याणकानि उक्तानि, ततो द्वितीयवाचनायां विस्तरेण श्रीमहावीरदेवस्य च्यवनकल्याणकं वर्णितम्, तथा गर्भापहाराधिकारो वाचितः । तदनन्तरं तृतीयवाचनायां त्रिशलया दृष्टाश्चतुर्दशस्वप्ना विस्तरेण वर्णिताः । ततश्चतुर्थवाचनायां स्वप्नलक्षणपाठकानां स्वप्नविचारप्रश्नः, त्रिशलायाः शोक-हर्षौ दोहदाऽधिकारश्च, भगवतः श्रीमहावीरस्वामिनो जन्म यावद् वर्णितम् । अथ पञ्चमवाचनायां श्रीमहावीरस्य जन्ममहोत्सवो वर्ण्यते—

उद्द्योतस्त्रिजगत्यासीद् दध्वान दिवि दुन्दुभिः । नारका अप्यमोदन्त भूरप्युच्छ्वासमासदन् ॥ १ ॥

यदा श्रीमहावीरस्य जन्म जातं तदा त्रिषु लोकेषु उद्द्योत आसीत्, पुनस्तदा आकाशे देवदुन्दुभिः शब्दं

चकार, पुनर्नरकस्था जीवा अपि क्षणं यावत् प्रमोदं प्रापुः, पुनर्भगवज्जन्मसमये सकलापि भूमिरुल्लसिता इव अभूत्। अथ अस्मिन् षट्पञ्चाशद्दिक्कुमारीणाम् आसनानि कम्पितानि—तदा गजदन्तानां नीचैरधोलोके निवासिन्य अष्टौ दिक्कुमार्यः अवधिज्ञानेन श्रीमहावीरस्वामिनो जन्म ज्ञात्वा तत्र आयान्ति, तासां नामानि—

भोगंकरा भोगवती सुभोगा भोगमालिनी। तोयधरा विचित्रा च पुष्पमाला अनिन्दिता ॥ १ ॥

एता अष्टौ अधोलोकाद् आगत्य प्रभुं नमस्कृत्य, प्रभोर्मातरं नमस्कृत्य ईशानदिशायाम् एकं सूतिकागृहं चक्रुः, संवर्तकवायुना योजनप्रमाणां पृथिवीं शुद्धाम्, सुगन्धां च चक्रुः। अथ—

मेघंकरा मेघवती सुमेघा मेघमालिनी। सुवत्सा वत्समित्रा च वारिषेणा बलाहिका ॥ २ ॥

एता अष्टौ ऊर्ध्वलोकाद् आगत्य जिनं तथा जिनजननीं नत्वा तत्र पुष्पवृष्टिं चक्रुः। अथ पुनः—

अथ नन्दोत्तरा नन्दा आनन्दा नन्दवर्धना। विजया वैजयन्ती च जयन्ती चापराजिता ॥ ३ ॥

एता अष्टौ दिक्कुमार्यः पूर्वदिशाया रुचकपर्वताद् आगत्य मुखदर्शनार्थम् अग्रतो दर्पणं धारयन्ति। अथ पुनः—

समाहारा सुप्रदत्ता सुप्रबुद्धा यशोधरा। लक्ष्मीवती शेषवती चित्रगुप्ता वसुन्धरा ॥ ४ ॥

एता अष्टौ दिक्कुमार्यो दक्षिणरुचकपर्वताद् आगत्य भृङ्गारकलशहस्ता भगवन्तं भगवद्जननीं च स्नपयन्ति। ततः पुनः—इलादेवी, सुरादेवी, पृथिवी, पद्मवती, एकनासा, नवमिका, भद्रा, सीता एता अष्टौ दिक्कुमार्यः

पश्चिमदिशाया रुचकपर्वताद् आगत्य भगवतस्तथा भगवज्जनन्याश्चाऽग्रे वातार्थं व्यजनं धृत्वा अग्रे तिष्ठन्ति। अथ पुनः-

अलंबुसा मितकेशी पुण्डरिका च वारुणी। हासा सर्वप्रभा श्रीः ह्रीः अष्टौ दिग्रुचकाद्रितः ॥ ५ ॥

एता अष्ट उत्तरदिशो रुचकपर्वताद् आगत्य चामराणि ढालयन्ति। पुनः, चित्रा चित्रकनका तारा सौदामिनी तथा। एताः चतस्रो विदिशारुचकपर्वतेभ्य आगत्य हस्ते दीपकं गृहीत्वा भगवतोऽग्रे तिष्ठन्ति, पश्चात् पुनः-

रूपा रूपासिका चैव सुरूपा रूपकावती ॥ ६ ॥

एताश्चतस्रः रुचकद्वीपमध्यदिशाभ्य आगत्य भगवतो नालं चतुरङ्गुलवर्जं छित्त्वा गर्तं निखाय भूमिमध्ये क्षिपन्ति, तदुपरि रत्नमयं पीठं चतुरस्रं रचयन्ति उपरि दूर्वां वपन्ति। ततः पश्चात् सूतिकागृहाद् एकं पूर्वस्याम्, एकं दक्षिणस्याम्, एकं च उत्तरस्याम्, एवं त्रीणि कदलीगृहाणि कृत्वा तन्मध्ये सिंहासनानि स्थापयन्ति। तत्र दक्षिणकदलीगृहे सिंहासनोपरि भगवन्तं भगवज्जननीं च संस्थाप्य सुगन्धतैलाऽभ्यङ्गं तयोश्चक्रुः। तत्र पूर्वदिशायाः कदलीगृहे भगवन्तं भगवज्जननीं च नीत्वा संस्नाप्य पश्चाद् उभयोरपि शरीरे चन्दनाऽनुलेपं विधाय रम्याणि वस्त्राणि भगवन्तं भगवज्जननीं च परिधापयन्ति। ततः पश्चात् पुनरुत्तरदिशायाः कदलीगृहे भगवन्तं तथा भगवज्जननीं च नीत्वा सिंहासने प्रतिष्ठाप्य तत्र अरणिकाकाष्ठेन अग्निं संपात्य सम्यक् चन्दन-

काष्ठैः शान्तिकं पौष्टिकं होमं विधाय उभयोर्हस्ते रक्षापोट्टलिकां बबन्धुः, पश्चात् पर्वतायुर्भव इति भगवत आशीर्वादं दत्त्वा, मणिमयौ गोलकौ आस्फाल्य वादयित्वा भगवतः क्रीडार्थं पल्ययनोपरि बद्धा भगवन्तं तथा भगवज्जननीं च जन्मस्थाने नीत्वा स्वस्वदिक्षु दिक्कुमार्यो जग्मुः । इति षट्पञ्चाशद्दिक्कुमारीणां महोत्सवकरणाऽनन्तरं चतुःषष्टि–इन्द्राणाम् आसनानि चकम्पिरे, तदा अवधिज्ञानेन श्रीमहावीरस्य जन्म ज्ञात्वा पूर्वं सौधर्मेन्द्रो हरिणेगमेषिदेवम् आहूय सुघोषाघण्टां द्वादशयोजनविस्तीर्णाम् अष्टयोजनोच्चाम्, एकयोजननालां हरिणेगमेषिणा देवेन समं पञ्चशतदेवैः तां घण्टां वादयति, तस्या घण्टायाः रवेण द्वात्रिंशल्लक्षविमानस्थाः सर्वाः घण्टा वाद्यन्ते स्म, तदा सर्वे देवाः सावधाना बभूवुः । एवमेव ईशानेन्द्रोऽलघुपराक्रमं नाम देवं समाहूय महाघोषां घण्टां वादयति । एवं चतुःषष्टिः देवेन्द्रा आसनप्रकम्पाऽनन्तरं स्वकीयां स्वकीयां घण्टां वादयन्ति । तदा सर्वे देवा इन्द्रस्य कार्यं ज्ञात्वा इन्द्रसमीपे आयान्ति । अथ सौधर्मेन्द्रो हरिणेगमेषिणं देवम् उक्त्वा तत्पश्चाद् एकलक्षयोजनप्रमाणं पालकनामकं विमानं कारयति । तस्य विमानस्य मध्यभागे पूर्वदिशाऽभिमुखसिंहासनोपरि इन्द्रस्तिष्ठति, अग्रे चाऽष्टौ इन्द्राण्यो नाटकं कुर्वन्ति, इन्द्रस्य वामपार्श्वे इन्द्रसामानिकाः देवास्तिष्ठन्ति, इन्द्रस्य दक्षिणपार्श्वे तिसृणां पर्षदां देवाः स्थितास्सन्ति, इन्द्रस्य पृष्ठे सप्त अनीकानि तिष्ठन्ति, एवम् अपरेऽपि इन्द्राः स्वीयस्वीयस्थानाद् जिनजन्म ज्ञात्वा आत्मीयाऽऽत्मीयविमानेषु स्थिताः परिवारसहिता नन्दीश्वरद्वीपं समीयुः ।

तत्र केचिद्देवा इन्द्राऽऽदेशात्, केचिद् मित्रवचनात्, केचित्स्वप्रिया-आग्रहात्, केचिद् आत्मीयभावात्, केचित् कौतुकात्, केचिद् अपूर्वाऽऽश्चर्यवशाद् एवं सर्वे देवाश्चेलुः। पृथक् पृथग् वाहने स्थिताः परस्परम् अभिवदन्ति-तत्र एको देवः सिंहस्थितो गजस्थं देवं वदति तव गजो मार्गात् त्वया दूरं कर्तव्यः, नो चेद् अयं मम सिंहो विदारयिष्यति। एवं गरुडस्थः सर्पस्थमपि वदति, चित्रकस्थः छागस्थम् अभिवदति. एवं देवानां कोटाकोटी नानाऽऽकारवाहनाऽऽरूढाश्चचाल। तदा विस्तीर्णमपि आकाशं संकीर्णम् आसीत्, पुनर्मार्गे केनचिद्देवा मित्रं त्यक्त्वाऽग्रे ययुस्तदाऽपरो मित्रोऽवादीत्-भो मित्र! क्षणम् एकं प्रतीक्षस्व यावद् अहमपि तव सार्धं एव आगामि, तदा अग्रगो देवः प्रोवाच यः कश्चित् प्रथमं गत्वा भगवन्तं प्रणमति स भाग्यवान्, एवम् उक्त्वा अग्र एव प्रचलति, परं मित्राय न तिष्ठति। यस्य सबलानि वाहनानि सन्ति, ये पुनस्त्वरमाणा अपि पतन्तः सन्ति ते सर्वेभ्योऽपि अग्रे निस्सरन्ति। तदा निर्बलाः स्खलन्तो वदन्ति—अहो! किं क्रियते? अद्य आकाशं संकीर्णं जातम्, तदा पुनरन्ये देवा अब्रुवन् मौनं कुर्वन्तु, 'संकीर्णाः पर्वणि सुराः'। अथ आकाशे व्रजतां देवानां मस्तके ताराणां किरणाः लगन्ति, ते एतादृशाः दृश्यन्ते-ज्ञायन्ते देवा निर्जरा अपि सजरा जाताः, मस्तके पलिता इव दृश्यन्ते स्म। पुनर्देवानां शरीरं तारकाः स्पृशन्ति तदा ज्ञायते किं देवानां शरीरे प्रस्वेदकणाः पतन्ति?, मस्तके मुकुटसदृशास्तारा दृश्यन्ते। एवम् आगच्छद्भिर्देवैः नन्दीश्वरद्वीपे विमानानां संक्षेपो विहितः। दक्षिणमार्गे

श्रीकल्पसूत्र
कल्पलतिका
टीकायुता.
व्याख्या.

॥१०१॥

दिशि रतिकरपर्वते आगत्य विश्रामो गृहीतः। एकं सौधर्मेन्द्रं विना अन्ये त्रिषष्टिदेवेन्द्राः सरलाः मेरुदिशायां प्राप्ताः। अथ सौधर्मेन्द्रो भगवतो जन्मगृहे आगत्य भगवन्तं तन्मातरं च नमस्कृत्य, प्रदक्षिणात्रयं दत्त्वा भगवन्मातरं प्रत्याह–हे मातः! अहं प्रथमदेवलोकस्य इन्द्रोऽस्मि, चतुर्विंशतितमतीर्थंकरस्य तव पुत्रस्य जन्ममहोत्सवं कर्तुम् आगतोऽस्मि, त्वया न भेतव्यम्। नमोऽस्तु रत्नकुक्षिधारिके! तुभ्यम् इत्युक्त्वा अवस्वापिनीं निद्रां दत्त्वा पुनर्भगवतः प्रतिबिम्बं जनन्याः पार्श्वे मङ्गलार्थं, स्थानशून्यनिवारणार्थं मुक्त्वा आत्मनः रूपाणि पञ्च रचयति–तत्र एकेन रूपेण उभाभ्यां हस्ताभ्यां भगवन्तम् उत्पाटयति, पुनरुभाभ्यां रूपाभ्याम् उभयोः पार्श्वयोः चामरैर्वीजयति, चतुर्थरूपेण भगवन्मस्तके छत्रं धारयति, पञ्चमेन रूपेण अग्रे वज्रम् उल्लालयन् पदातिवत् चलति। एवं भगवन्तं सौधर्मेन्द्रो लात्वा मेरौ पर्वतोपरि पाण्डुकवने, मेरुचूलातो दक्षिणदिग्भागे अतिपाण्डुकम्बलनामशिलोपरि सिंहासने पूर्वाऽभिमुखो भगवन्तम् उत्सङ्गे लात्वा सौधर्मेन्द्रस्तिष्ठति, तत्र सर्वे देवा मिलित्वा आत्मीयाऽऽत्मीयसेवकेभ्यः समादिशन्ति–भो देवाः! एकसहस्रमष्टोत्तरं सौवर्णकलशाः, एतावन्त एव रूप्यकलशाः, एतावन्त एव रत्नमयाः, एतावन्त एव स्वर्ण–रूप्यमयाः, एतावन्त एव स्वर्णरत्नमयाः, एतावन्त एव रूप्यरत्नमयाश्च, एतावन्त एव स्वर्णरूप्यरत्नमयाः, एतावन्त एव मृन्मया कलशाः समानेतव्याः। सर्वे कलशाः अष्टसहस्र–चतुःषष्टिप्रमिताः भवन्ति। तेषां किं प्रमाणम्? पञ्चविंशतियोजनोत्तुङ्गाः, पञ्चविंशतियोजनविस्तीर्णाः,

एकयोजनमयं तेषां नालं भवति । आवश्यकसूत्रे-"एककोटिषष्टिलक्षप्रमाणाः सर्वे भवन्ति" ते सर्वे क्षीरसमुद्र-गङ्गा-सिन्धु-पद्मद्रहादितीर्थजलैर्भृताः सन्ति, तान् सर्वान् लात्वा सर्वेऽपि देवा इन्द्राज्ञाम् अभिलषन्तस्तिष्ठन्ति। कलशधारिणो देवाः मनसि जानन्ति यदा इन्द्रोऽस्मान् आदेशं ददाति तदा कलशनीरैः स्नपयामः, अस्मिन् समये इन्द्रस्य मनसि संशयः समुत्पन्नः, अहो! भगवान् लघुशरीरो यदा एतावन्तः कलशजलभाराः पतिष्यन्ति तदा भगवत्शरीरं ममोत्सङ्गात् कुत्रचिद् वहित्वा यास्यति, इति विचारयन् इन्द्रो देवानाम् आदेशं न ददाति तदा भगवता अवधिज्ञानेन इन्द्रस्य मनःसंशयो ज्ञातः, ततो भगवान् इन्द्रस्य स्वबलदर्शनाय इन्द्रस्य उत्सङ्गाद् वामचरणाङ्गुष्ठेन सिंहासनं स्पर्शति, सिंहासनेन शिला चम्पमाना सती शिला चकम्पे, तस्यां कम्पमानायां मेरुचूला कम्पमाना जाता, ततो लक्षयोजनमयः सर्वोऽपि मेरुश्चकम्पे, तस्मिन् कम्पमाने सर्वा पृथिवी कम्पते स्म, सर्वपर्वतानां शृङ्गाणि त्रुटितानि, समुद्राणां जलानि क्षुब्धानि, ब्रह्माण्डं स्फुटद् इव जातम्, समस्तदेवानां क्षोभः संजातः, देवाङ्गनाः भयविह्वलाः सत्यो भर्तृणां कण्ठे संलग्नाः, तस्मिन् समये इन्द्रेण ज्ञातं किं जातम् ? अस्मिन् शान्तिकरणसमये केन दुष्टेन असुरेण विकारः कृतः, एवं ज्ञात्वा हस्ते वज्रं गृहीत्वा अवधिज्ञानेन भगवतो विलसितं ज्ञात्वा अहो !! तीर्थकरस्य अनन्तं बलं मया न ज्ञातम् इति विचार्य स्वापराधं क्षमयति-हे स्वामिन् ! अहं त्वदीयदासोऽस्मि, इत्युक्त्वा देवान् इन्द्र आदेशं ददाति । तत्र प्रथमं द्वादशदेवलो-

कस्य इन्द्रः स्नपनं करोति, पश्चाद् यथाऽनुक्रमं लघु-वृद्धतया, प्रान्ते चन्द्र-सूर्यौ स्नपनं कुरुतः, ततः पश्चाद् ईशानेन्द्रो भगवन्तम् उत्सङ्गे गृह्णाति, सौधर्मेन्द्रो वृषभचतुष्टयरूपं विरच्य अष्टभिः शृङ्गैः क्षीरसमुद्रस्य क्षीरं भगवतः उपरि स्रवति । अनेन विधिना सर्वेऽपि देवाः स्वभक्त्या स्नात्रं रचयित्वा भगवतोऽग्रे अष्टप्रकारिकां पूजां रचयन्ति-पुष्प-चन्दनविलेपन-अक्षतढौकन-दीपकरण-फलढौकन-धूपोपक्षेपण-पानीयकलशढालन-दर्पण-नैवेद्यढौकनम्-एवम् अष्टप्रकारं भगवत्पूजनं कृत्वा अग्रे चाऽष्टमङ्गलिकरचनं कुर्वन्ति-अष्टमङ्गलिकनामानि-श्रीवत्स-मत्सयुग्म-दर्पण-पूर्णकलश-स्वस्तिक-नन्द्यावर्त-भद्रासन-शरावसंपुटानि, इमानि अष्ट मङ्गलिकानि प्रभोरग्रे स्थापितानि, पश्चाद् आरात्रिकं कृतम्, गीत-गानं विहितम्, नृत्यं रचितम्, वादित्राणि वादितानि, भावना भाविता। ततो भगवन्तं भगवन्मातृसमीपे मुक्त्वा, भगवन्मातुरवस्वापिनीं निद्रां हृत्वा, भगवत्प्रतिबिम्बं हृत्वा च, रत्नजटितकुण्डलयुगलम्, देवदूष्ययुगलं च भगवन्मात्रे दत्त्वा सुवर्णजटितकन्दुकं भगवतः क्रीडार्थं मुक्त्वा, अंगुष्ठे अमृतं स्थापित्वा, द्वात्रिंशत्कोटिं सुवर्णस्य वर्षित्वा पश्चात् सकलदेवानां मध्ये इन्द्रः एतादृशीम् उद्घोषणां ददाति-भो भोः सर्वे देवाः ! शृण्वन्तु-यः कश्चिद् देवो वा, असुरो वा, दानवो वा भगवतः उपरि तथा भगवद्जनन्याः उपरि विरूपं चिन्तयिष्यति तस्य मस्तकम् अर्जुनमञ्जरीवद्

अनेन वज्रेण त्रोटयिष्यामि । इति अनेन प्रकारेण चतुःषष्टिः इन्द्राः जन्ममहोत्सवं कृत्वा नन्दीश्वरद्वीपे अष्टाह्निकामहोत्सवं विधाय सर्वेऽपि इन्द्राः स्वस्थानं जग्मुः । इति जन्माऽभिषेकोत्सवः ॥

जं रयणिं च णं समणे भगवं महावीरे जाए, सा णं रयणी बहूहिं देवेहिं देवीहिं य ओवयंतेहिं उप्पयंतेहिं य उप्पिंजलमाणभूआ कहकहगभूआ आवि हुत्था ॥ ९६ ॥

यस्यां रजन्यां श्रमणो भगवान् महावीरो जातः, तस्यां रजन्यां बहुभिर्देवैः, बह्वीभिर्देवीभिः आकाशाद् उत्तरद्भिः एकः उद्द्योतः संजातः, देवानां शरीरैः चतुर्दशरज्ज्वात्मलोकेषु महान् उद्द्योतः, महान् एकः कल-कलः शब्दोऽभूत् ।

जं रयणिं च णं समणे भगवं महावीरे जाए तं रयणिं च णं बहवे वेसमणकुंडधारी तिरियजंभगा देवा सिद्धत्थरायभवणंसि हिरण्णवासं च सुवण्णवासं च वयरवासं च, वत्थवासं च, आभरणवासं च, पत्तवासं च, पुप्फवासं च, फलवासं च, बीअवासं च, मल्लवासं च, गंधवासं च, चुण्णवासं च, वण्णवासं च, वसुहारवासं च वासिंसु ॥ ९७ ॥

यस्यां रात्रौ भगवतो जन्म जातं तस्यां रात्रौ वैश्रमणस्य आज्ञाकारिणस्तिर्यग्जृम्भकदेवाः सिद्धार्थस्य राज्ञो गृहे भाण्डागारेषु द्वात्रिंशत्कोटी रूप्यस्य, द्वात्रिंशत्कोटीः सुवर्णस्य, द्वात्रिंशत्कोटी रत्नानाम्, बहूनां चीनांशुक-पट्टकूल-देवदूष्यादीनां वस्त्राणां वृष्टिम्, मुद्रिकाद्याभरणानां वृष्टिम्, बहूनां पुष्पाणाम्, बहूनां नागवल्लीपत्राणाम्, बहूनां सहकारादिफलानाम्, बहूनां शालि-गोधूम-यव-मुद्गप्रमुखाणाम्, बीजानाम्, बहूनां कर्पूर-चन्दनादिगन्धद्रव्याणाम्, बहूनाम् अवीरप्रमुखचूर्णानाम्, बहूनां हिङ्गुल-हरिताल-लाजवर्गादीनां वर्णानाम्, बहूनां सुवर्णद्रव्याणां वसुधाराणां वृष्टिं चक्रुः,। अस्मिन् अवसरे प्रियभाषिणी चेटी राज्ञः सिद्धार्थस्याऽग्रे पुत्रजन्मनो वर्द्धापनिकां ददौ।

हे राजन् ! भवतां प्रियमर्थवतां प्रियार्थं कथयामः, भवतां प्रियं भवतु इत्यादिप्रियवचनं कथयित्वा राज्ञः पुत्रजन्म निवेदितम्। यया पुत्रजन्मनः वर्धापनिका दत्ता, तस्याः छत्रतले संस्थाप्य राज्ञा सकले च अन्तःपुरे सा वृद्धा कृता, दासीत्वं दूरीकृतम्, मुकुटं वर्जयित्वा अन्यत्सर्वं भूषणादिकं तस्यै राजा ददौ। ग्रन्थान्तरेषु एवम् उक्तम् अस्ति "तद्दिवसात् प्रारभ्य पञ्चदशमासान् यावत् प्रतिदिनं सार्धतिस्रः कोटी रत्नानां धनददेवो वर्षति"।

तए णं से सिद्धत्थे खत्तिए भवणवइ-वाणमंतर-जोइस-वेमाणिएहिं देवेहिं तित्थयरजम्मणाभिसेयमहिमाए कयाए समाणीए पच्चूसकालसमयंसि नगरगुत्तिए सद्दावेइ, सद्दावित्ता एवं वयासी-॥ ९८ ॥

ततः पश्चात् सिद्धार्थक्षत्रियो भुवनपति-व्यन्तर-ज्योतिष्क-वैमानिकदेवैस्तीर्थकरस्य जन्माऽभिषेकमहोत्सवे कृते सति । तदनन्तरं प्रभातकाले नगरगुप्तिकान् कोट्टपालपुरुषान् शब्दयति, शब्दयित्वा इदं वदति—

खिप्पामेव भो देवाणुप्पिया ! कुंडपुरे नगरे चारगसोहणं करेह, करित्ता माणुम्माणवद्धणं करेह, माणुम्माणवद्धणं करित्ता कुंडपुरं नगरं सब्भिंतरबाहिरियं आसियसम्मज्जिओवलित्तं संघाडग-तिग-चउक्क-चच्चर-चउम्मुह-महापह-पहेसु सित्त-सुइ-संमट्ठरत्थंरावणवीहियं, मंचाइमंचकलिअं, नाणाविहरागभूसिअज्झय-पडागमंडिअं, लाउल्लोइयमहिअं, गोसीस-सरसरत्तचंदणदद्दरदिन्नपंचंगुलितलं, उवचियचंदणकलसं, चंदणघड-सुकयतोरणपडिदुवारदे-

सभागं, आसत्तोसत्तविपुलवट्टवग्घारियमल्लदामकलावं, पंचवण्णसरससुरभिमुक्कपुप्फपुंजोवयारकलिअं, कालागुरु-पवरकुंदुरुक्क-तुरुक्कडज्झंतधूवमघमघंतगंधुद्धुआभिरामं, सुगंधवरगंधिअं गंधवट्टिभूअं, नड-नट्टग-जल्ल-मल्ल-मुट्ठिय-वेलंबग-कहग-पाढग-लासग-आरक्खग-लंख-मंख-तूणइल्ल-तुंबवीणिय-अणेगतालायराणुचरिअं करेह, कारवेह, करित्ता, कारवेत्ता य जूअसहस्सं मुसलसहस्सं च उस्सवेह, उस्सवित्ता मम एयमाणत्तियं पच्चप्पिणेह ॥ ९९ ॥

अहो देवानुप्रियाः ! क्षिप्रम्, शीघ्रम् एव क्षत्रियकुण्डग्रामे नगरे चारकशोधनम्, बन्दिगृहाद् बन्दिजनानां निष्कासनम्, तथा रसानां तथा धान्यानां मानवर्धनम्, शेरप्रमुखाणां वर्धनम् । तथा वस्त्राणां मापने गजादीनां वर्धनम्, क्षत्रियकुण्डग्रामे बाह्याभ्यन्तरे गन्धोदकछटाभिः सिञ्चनम्, पुनः पूर्वोक्तेषु संघाटकेषु त्रिक-चतुष्क-चत्वर-चतुर्मुखेषु, तथा राजमार्गेषु सुगन्धपानीयैः सेचनं शुचिकरणम्, कचवरादिसंमार्जनं गोमयादिना लिम्पनम्, वीथीषु अपि संमार्जनम्, हट्टानां मार्गस्य शृङ्गारणम्, नाटकाऽवलोकनार्थं मञ्चाऽतिमञ्चानां संस्थापनम्, पञ्चवर्णसिंहध्वज-गरुडध्वजपताकादीनाम् ऊर्ध्वीकरणम्, स्थाने स्थाने चन्द्रोपकबन्धनम्, पुष्पप्रकर-

विस्तारणम् गोशीर्षचन्दन-रक्तचन्दन-दर्दरपर्वतोत्पन्नचन्दनानां हस्तकदानम्, गृहे गृहमध्ये चतुष्कदेशे माङ्गल्यघटस्थापनम्, गृहाणां द्वारदेशेषु तोरणबन्धनम्, माङ्गलिककुम्भमोचनम्, यस्य एकदेशः उपरिष्टाद् लग्नो द्वितीयो देशो भूमौ लग्नः एतादृशः पुष्पहारसमूहः तस्य हारसमूहस्य विस्तारणम्, पुष्पगृहरचनम्, स्थाने स्थाने पञ्चवर्णकुसुमविक्षेपणम्, पुनः कृष्णागुरु-चीड-सेल्हारस-दशाङ्गधूपघटीनां संस्थापनम्, पुनरन्येषामपि सुगन्धद्रव्याणां विस्तारणं यूयं कुरुत। पुनः स्थाने स्थाने सुगन्धवर्तिकोत्क्षेपणं कुरुत, कर्पूर-कस्तूरिकादीनां गुटिकाम् इव सकलं नगरं सुगन्धं कुरुत। पुनरपि स्वयं नाटकं कुर्वन्ति ते नटाः, तथा नर्तकाः स्वयं स्थित्वा छात्रेभ्यो नाटकं कारयन्ति ते नर्तकाः, पुनर्जल्लाः वरत्रोपरि आरुह्य क्रीडन्ति, पुनर्मल्लाः मल्लयुद्धकराः, मौष्टिकाः ये मुष्टिभिर्युद्धं कुर्वन्ति, वेलम्बकाः, विदूषकाः, भाण्डाः कथकाः-कथानां कथकाः, रासकाः ये रासं वदन्ति, प्रवादकथकाः, प्लवकाः ये गर्ताम्, उष्ट्रं, गजं वा कूर्दन्ति, नदीं तरन्ति। पुनः पाठकाः ये राज्ञां वंशावलींवदन्ति, कवित्वानि कथयन्ति। आरक्षकाः, कोट्टपालाः, पुनः आख्यायकाः शुभाऽशुभनिमित्तकथकाः। पुनर्लङ्खाः-वंशम् आरोप्य वंशाग्रे नर्तन्ते, मङ्खाः—ये चित्रपटं गृहं गृहं दर्शयित्वा भिक्षां याचयन्ति, पुनस्तूणयल्लाः-ये भस्त्रिकां मुखवायुना संपूर्य वादयन्ति, तुम्बविणिकाः-ये तुम्बविणां वादयन्ति, तथा अनेके तालाचराः-ये हस्ततलास्फालनं कृत्वा कृत्वा नृत्यन्ते, एतेषां सर्वेषां समाहूय स्थाने स्थाने स्वकार्येषु एतान्

स्थापयत । एवं स्वयं कुरुत, अन्येभ्यश्च कारयत । पुनर्यूपसहस्रम्, मुशलसहस्रम् ऊर्ध्वं कुरुत, ऊर्ध्वं कृत्वा मम इमाम् आज्ञां अर्पयत—

तए णं ते कोडुंबियपुरिसा सिद्धत्थेणं रण्णा एवं वुत्ता समाणा हट्ठा–जाव–हिअया करयल–जाव–पडिसुणित्ता, खिप्पामेव कुंडपुरे नगरे चारगसोहणं, जाव–उस्सवित्ता जेणेव सिद्धत्थे राया ( खत्तिए ) तेणेव उवागच्छंति, उवागच्छित्ता करयल–जाव–त्तिकट्टु सिद्धत्थस्स रण्णो एयमाणत्तियं पच्चप्पिणंति ॥ १०० ॥

ततः पश्चात् ते कौटुम्बिकपुरुषाः सिद्धार्थेन राज्ञा एवम् उक्ताः सन्तो हर्षिताः, तुष्टाः हस्तौ संयोज्य पूर्वोक्तम् आदेशम् अङ्गीकृत्य त्वरितं क्षत्रियकुण्डग्रामे नगरे बन्दिजनमोचनं चक्रुः, पश्चात् सर्वं यूपसहस्र–मुशलसहस्रस्य मङ्गलार्थम् ऊर्ध्वीकरणं कृत्वा, कारयित्वा यत्र सिद्धार्थो राजा तिष्ठति तत्र ते कौटुम्बिकपुरुषा आगत्य हस्तौ संयोज्य राजानं प्रति आज्ञां पश्चात् समर्पयन्ति–इति वदन्ति हे स्वामिन्! त्वदीयाम् आज्ञां कृत्वा वयम् आगताः स्म, इति उक्त्वा नमस्कुर्वन्ति ।

तए णं से सिद्धत्थे राया जेणेव अट्टणसाला तेणेव उवागच्छइ, उवागच्छित्ता जाव-सव्वोवरोहेणं, सव्वपुप्फ-गंध-वत्थ-मल्ला-लंकारविभूसाए, सव्वतुडिअसद्दनिनाएणं महया इड्ढीए, महया बलेणं, महया वाहणेणं, महया समुदएणं, महया वरतुडिअजमगसमगपवाइएणं, संख-पणव-भेरि-झल्लरि-खरमुहि-हुडुक्क-मुरज-मुइंग-दुंदुहिनिग्घोसनाइयरवेणं उस्सुक्कं, उक्करं, उक्किट्ठं, अदिज्जं, अमिज्जं, अभडप्पवेसं, अदंडकोदंडिमं, अधरिमं, गणिआवरनाडइज्जकलियं, अणेगतालायराणुचरिअं, अणुद्धुअमुइंगं, ( ग्रं. ५०० ) अमिलायमल्लदामं, पमुइअपक्कीलिय-सपुरजण-जाणवयं दसदिवसं ठिईवडियं करेइ ॥

ततः सिद्धार्थो राजा यत्र व्यायामशाला परिश्रमकरणशाला तत्राऽऽगत्य परिश्रमं विधाय पश्चात् तैलमर्दनम्, ततः स्नानं च, विलेपनं च कृत्वा सम्यग् वस्त्राणि परिधाय, सर्वश्रृङ्गाराणि धृत्वा, सर्वाऽन्तःपुरेण सहितः, सर्वपुष्पैः सहितः, सर्वगन्धेन अबीरादिचूर्णेन सहितः, सर्ववस्त्रैः पट्टकूलादिभिस्तथा सर्वैर्माल्यैर्ग्रन्थितपुष्पैः, सर्वैर्मुकुटादिभिः, सर्वैः त्रुटितादिवादित्राणां प्रतिशब्देन सहितः तथा महत्या ऋद्ध्या, महत्या युक्त्या,

अथवा महत्या द्युत्या, महता बलेन, महता वाहनेन, सुखासनप्रमुखेण, अश्वादिवाहनेन वा महता परिवारेण सहितः, महता समकालं त्रुटितादिवादित्राणां प्रवादेन, तेषां वादित्राणां नामानि–शङ्खः, पणवो मृन्मयपटहः, लोहमयः पटहः, ढोल–इति प्रसिद्धो वा। भेरी प्रसिद्धा, झल्लरी अपि प्रतीता, खरमुखी गुर्जरदेशे काहली, हुडक्क इति त्रिवली लोकोक्तिः, मुरुजो मृन्मयमृदङ्गः, मृदङ्गः काष्ठमयः, दुन्दुभिर्देवानां वादित्रम्–एतानि वादित्राणि। अन्यान्यपि बहूनि वादित्राणि सन्ति, सर्वाणि वादित्राणि पञ्चधा भवन्ति–लोलिकं घण्टादि, पुनस्तालिकं कांस्यकादिकम्, पुनस्तान्त्रिकं वीणादिकम्, पुनः श्वासिकम्, पुनः पुटकं ढोल–निःस्वानादिकम् एतेषां पञ्चप्रकाराणां वादित्राणां शब्देन सहितो राजा सिद्धार्थो भवति। पुनः सिद्धार्थो राजा किं करोति ? क्षत्रियकुण्डग्रामं नगरम् उच्छुल्कम्–दशदिवसं यावद् दानस्थाने केऽपि दानं न गृह्णन्ति। पुनः क्षत्रियकुण्डग्रामे नगरे उत्करम्–गवादीनां करं न गृह्णाति। पुनरुत्कृष्टं मुक्तक्षेत्रादिधान्यभागम्। पुनः क्षत्रियकुण्डग्रामे नगरे दशदिवसं यावत्–केऽपि मौल्यं दत्त्वा वस्तूनि न गृह्णन्ति, यस्य यद्वस्तु युज्यते स राज्ञो हट्टात् समानयति तन्मूल्यं सिद्धार्थो राजा भाण्डागाराद् ददाति। पुनः अभटप्रवेशं राज्ञो भटाः कस्यापि गृहे गत्वा बलात्कारं न कुर्वन्ति। दशदिनं यावत्–अदण्ड–कुदण्डम् अपराधस्याऽनुसारेण द्रव्यग्रहणं दण्डः, बह्वऽपराधेन स्तोकद्रव्यग्रहणम्, तथा स्तोकाऽपराधेन बहुद्रव्यग्रहणं कुदण्डः, उभयोरपि दण्डकुदण्डयोः राज्ञा सिद्धार्थेन त्यागः कृतः।

तथा अधरिमं परस्परं कोऽपि धरणं न ददाति, ऋणं कोऽपि दशदिवसं न याचयति । पुनः क्षत्रियकुण्डग्रामं नगरम् उत्कृष्टरूपाणां गणिकानां नाटकेन कलितम्, अनेकतालवादकनाटकानुचरितम् अनुपश्चाद् उद्धूतमृदङ्गं वादनार्थं सज्जीकृतमृदङ्गं, सरसविस्तारितपुष्पमालाप्रकरम्, प्रमुदितप्रक्रीडितजनपदम् एवं दशदिवसं यावत्स्थितिपदिकाम् आत्मीयकुलक्रमाद् आगतमर्यादां पुत्रजन्मोद्भवां राजा सिद्धार्थो दशदिनं यावत् क्षत्रियकुण्डग्रामे करोति, तद्यथा–

तए णं से सिद्धत्थे राया दसाहियाए ठिईवडियाए वट्टमाणीए सइए य, साहस्सिए य, सयसाहस्सिए य जाए य, दाए य, भाए अ, दलमाणे अ, दवावेमाणे अ, सइए अ, साहस्सिए अ, सयसाहस्सिए य लंभे, पडिच्छमाणे य, पडिच्छावेमाणे य एवं विहरइ ॥ १०१ ॥

ततः सिद्धार्थो राजा दशदिवससत्कायां कुलमर्यादायां कृतायाम् एकशतप्रमाणम्, अन्यं सहस्रप्रमाणम्, तृतीयं लक्षप्रमाणं–यस्मिन् शतद्रव्यं लगति, यस्मिन् सहस्रद्रव्यं लगति, यस्मिन् लक्षद्रव्यं लगति एतादृशो यागो देवपूजनं तन्निमित्तं द्रव्यं धारयति । तथा पुनर्भागो द्रव्यांशः, अष्टमी–चतुर्दशीदिने पौषधग्राहिणां भक्तिनिमित्तम् उत्पन्नद्रव्यस्य कल्पितो वण्टः, तथा पुनर्दायो दातव्यं द्रव्यं–पूर्वम् एव दानधर्मार्थं कल्पितं द्रव्यम्

एवम् मिलितं शतद्रव्यम्, सहस्रद्रव्यम्, लक्षद्रव्यं तत् स्वयं सिद्धार्थो धर्मार्थं ददन्, अन्येभ्योऽपि दापयन्। तथा पुनः शतप्रमाणम्, सहस्रप्रमाणम्, लक्षप्रमाणं भेटस्वरूपेण गृह्णन्, ग्राहयन् इत्थं दशदिवसं यावत् कुर्वन् पुनः कुलस्य मर्यादां कां कां करोति तां सूत्रकारः प्राह–

तए णं समणस्स भगवओ महावीरस्स अम्मा–पियरो पढमे दिवसे ठिइवडियं करिंति, तइए दिवसे चंद–सूरदंसणिअं करिंति, छट्ठे दिवसे धम्मजागरियं करिंति, इक्कारसमे दिवसे विइक्कंते निव्वत्तिए असुइजम्मकम्मकरणे संपत्ते, बारसाहे दिवसे, विउलं असण–पाण–खाइमं साइमं उवक्खडाविंति, उवक्खडावित्ता मित्त–नाइ–नियय–सयण–संबंधिपरिजणं नाए य, खत्तिए अ आमंतित्ता तओ पच्छा ण्हाया, कयबलिकम्मा, कयकोउय–मंगल–पायच्छित्ता, सुद्धप्पावेसाइं, मंगल्लाइं, पवराइं वत्थाइं परिहिया, अप्प–महग्घाभरणालंकियसरीरा भोअणवेलाए भोअणमंडवंसि सुहासणवरगया, तेणं मित्त–नाइ–निययसंबंधि–परिजणेणं,

हिं, खत्तिएहिं सद्धिं तं विउलं असण–पाण–खाइम–साइमं आसाएमाणा, विसाएमाणा, ।एमाणा, परिभुंजेमाणा एवं वा विहरंति ॥ १०२ ॥

पश्चात् श्रमणस्य भगवतो महावीरस्य मातापितरौ जन्मदिवसाद् अग्रे प्रथमे दिवसे कुलस्थितिं कुरुतः, ये चन्द्रसूर्ययोर्दर्शनं कुरुतः, इदानीमपि माता पुत्रस्य आदर्शं दर्शयति। परं मूलविधिरयम्–कुल गुरु- नीं संस्नाप्य सम्यगवस्त्राणि परिधाप्य संस्थाप्य रूप्यस्य, स्फटिकस्य वा चन्द्रमूर्तिं कारयित्वा पूजां कृत[redacted]णं सहितां जननीं चन्द्रोदयवेलायां प्रत्यक्षचन्द्रस्य सम्मुखीभूय स एतन्मन्त्रं वदति–"ओं अर्हं च- न्द्रोऽसि[redacted]ोऽसि, नक्षत्रपतिरसि, सुधाकरोसि, औषधीगर्भोऽसि अस्य कुलस्य ऋद्धिं वृद्धिं कुरु कुरु स्वाहा" इति मन्त्रम् उच्चरति। चन्द्रस्य नमस्कारं कारयति, गुरुः आशीर्वादं ददाति, पश्चाद् मूर्तेः विसर्जनं करोति। यदा कदाचित् कृष्णचतुर्दशी, अमावस्या वा, वार्दलैराच्छादितो वा चन्द्रो भवति तदापि तस्याम् एव रात्रौ चन्द्रमूर्ति- रग्रे अवश्यं कर्तव्यम् एव एतत्। पुनस्तृतीयदिने प्रभातसमये सूर्योदयवेलायां स्वर्णमयीं ताम्रमयीं वा सूर्यस्य मूर्तिं विधाय तदग्रे मातापितरौ संस्थाप्य एतन्मन्त्रं गुरुः उच्चरति "ओं, अर्हं सूर्योऽसि, दिनकरोऽसि तमोऽपहो- ऽसि, सहस्रकिरणोऽसि, जगच्चक्षुरसि प्रसीद, अस्य कुलस्य तुष्टिं पुष्टिं प्रमोदं कुरु कुरु स्वाहा" इति मन्त्रम्

उच्चारयन् मातृपुत्रयोः सूर्यदर्शनं कारयति। ततो गुरुः आशीर्वादं ददाति। पुनः षष्ठे दिवसे धर्मजागरिकया जागर्ति। एकादशे दिने अशुचिकर्मनिवृत्तिः कृता, मृद्भाण्डानां विसर्जनं कृतम्, नवीनवस्त्रपरिधानं विहितम्। अथ द्वादशे दिवसे संप्राप्ते विस्तीर्णम् अशन-पान-खादिम-स्वादिमादि-चतुर्विधाऽऽहारं निष्पादयति, रसवतीं निष्पाद्य राजा सिद्धार्थो मित्राणि, ज्ञातीयान्, निजकान् आत्मीयपुत्रपौत्रान्, पितुर्बान्धवान्, संबन्धिनः श्वशुरादीन्, तथा स्वजनान् आत्मीयदासीजनान्, पुनर्ज्ञातान् सिद्धार्थराज्ञ एव गोत्रीयान् तथा पुनः क्षत्रियान् अपरग्रामवासिनः क्षत्रियान् एतान् अपरान् अपि बृहल्लोकान् निमन्त्रयति। पश्चाद् भगवन्तं तथा भगवद्मातरं संस्नाप्य, बलिकर्म कृत्वा, पश्चात् प्रायश्चित्तं कृत्वा, विघ्ननिवारणाय कौतुकं मषीतिलकादिकं करोति। पुनर्मांङ्गलिकम्-सर्षप-दधि-दूर्वा-ऽक्षततिलकं मस्तके धारयति। नवीनवस्त्राणि परिदधाति। पुनः अल्पमौल्यानि तथा बहुमौल्यानि आभरणानि धृतानि, भोजनसमये भोजनमण्डपे सर्वे सुखेन पूर्वोक्ता लोकास्तिष्ठन्ति। पुनः पूर्वोक्तान् मित्र-ज्ञाति-निजकान् अशन-पान-खादिम-स्वादिमचतुर्विधाहारैः पोषयति। तत्र कानिचिद् आहाराणि आस्वाद्यानि तानि आहाराणि आस्वादयन्तः, यानि ईषत् खाद्यन्ते बहु त्यज्यन्ते यथा इक्षुखण्डादीनि, तथा कानिचिद् विस्वाद्यमानानि यानि बहूनि खाद्यन्ते स्तोकानि त्यज्यन्ते यथा खर्जूरादीनि तानि आहाराणि विस्वादयन्तः, तथा कानिचित् परिभुज्यमानानि यानि आहाराणि सर्वाणि भुज्यन्ते यथा मोदकादीनि तानि

**आहाराणि परिभुञ्जन्तः एवं चतुर्विधैराहारैः गुरु-साधर्मिकादीनां भक्तिपूर्वकं सर्वे पूर्वोक्ताः जनाः सिद्धार्थेन राज्ञा भोजिताः ।**

१. अथ पुनर्वाग्विलासग्रन्थाद् भोजनयुक्तिः कथ्यते भाषया—किसी एक सिद्धार्थ राजायै भोजनभक्ति किधी—ऊपरि लइ माली, मध्यान्हकाली, केलिपत्रे छाया, इसा मंडपनींपाया, कुमकुम तणा छडा, मोती तणा पाखती कडा, नीचै मांड्या पाट, उपरि पाथर्या रेसमी घाट, चाचरिचा कला, उपरि वइठा कुमर पातला, चउरस चउकी पट, टाली मननी खटपट, उंची आमणी भूखनी विहाडणी, निरमल पाणीयै पखाली, आगे मेल्ही सोनानी थाली, कीजे रंगरोला, झाझा मोल्या रुपा—सोनाना कचोला, कीस नही कुरुप तीहां वैठा—बत्रीस लक्षणा पुरुष, फुंदाला, दुंदाला झाकझमाला, गुवीयाला, सुंहाला आंखे अणियाली, केसपास काला, मुंछाला केई जमाई, केई शाला, केई जोधाला चालती हालती अग्निजाला, इसा पांति वैठा राजवी ढींचाला, सुजाण सहेली लाडगहेली, हंसगति हालति, गजगति म्हालती, काम कामिनी पालती, आंखिरै मटकारै, मदननी वागुरा घालती, कस्तुरी अलकृत भालपट्ट, तरुणतणा भाजै मरट्ट, पूर्णचंद्र समान वदन, हेलामात्र जीतो मदन, काने कुंडल साक्षात् सूर्य—चंद्रमंडल, लहकती वेणी ओढणी ओढी झीणी दीसती रुडी, झलकै हाथ सोनानी चूडी, कूण करै मूल रत्नजडित, सीस फुल जिसी देवनारी, इसी मनोहर राजकुमारी, छलकतै हाथै सोनानी झारी साथै, पहिला दीधा हाथ-धोवण, स्वर्गथकी जाणे आव्या इंद्र जोवण, विनय करीं लुलिअ लुलिअ परिसइ—फलहुली फोडी, अखरोट, कीधो जोर मगदनो कोट, मिश्री पातिसुं लग थोली इसी पुरसी चारोली, केलानी कातली छोली, मेली राइणनीं कोली, परिस्या नीला नारेल, पासै मूक्या

सूका बोर, निली द्राख, आंबानी साख, खातां प्यारा, परिस्या छुहारा, करती मगजा पेरीस्या न मजा, हाथ वाहै सुस्ता, पीरस्या पिस्ता, रसनी रेलडी, छोली सेलडी, सर्वेहजूर आणी पिंडखजूर, मिश्री सुंतली अनारकी कुली, करणा सदा फल भाजै तापनी झल, नारंगी, वीजोरी इसी फलहुलि पीरसै नारी गोरी, देहरारा छाजा इस्या पीरस्या खाजा, ते कीसा मालवारी भूमि तिहांना नीपना, गोधूम हाथसुं मल्या, धोईनै दल्या, छांणीयै सुधी, नीपजै पडसुधी, हलुऐ हाथ चालै, मांहिथी थूली टालै सुजाण स्त्री जोईयै, एकलग पाटो मांही दीजै साटो, जे बेसती सदा मैडी ते नगरनी वहूआं तेडी, नीपजै पकवान सर्व थया सावधान, चित्रामनी जाति बत्रीस फुलनी भांती, हलुइसुं मेल्हीयै, वेलणसुं वेलीयै घृतसुं मिल्या, लोहनै कडायै तल्या, शब्द कलकलै निर्धूम अग्नि बलै, इसा प्रधान खाजा, चिहुं खुणे साजा, एहनी पीरसण हार सामली सुकुमारी जलहल राखडी, पगे चाखडी रंभा नैवेसे मगधदेश इसी नारी परिसइ, देखतां मन हीसें। पछै आव्या मोदक ते किसा किसा—लाडू जिसा बहेडा ऊपरि गाडू, पाटण तणां कंदोइ, घृतसुं मेंदो मोई, वणी सेव पातली सुरहा घृतमांहि तली, घणें पाकसुं मिली मिश्रीना खेरासुं अधमिली, मांहे लवंगतणा चमत्कार, अत्यंत सुकुमार, कपूर परिमल वास्या, फलमांहि प्रतिवास्या, अतिवर्तुल महा उज्वल, इसा लाडू। ते किसा किसा सेवइया, कंसारिया, कसेलिया, दालिया, वाजणा, लाजणा, भाजणा, झगरिया, मगरिया, केसरिया, सिंहकेसरिया, कीटिया इसा मोदक राउराणा मनना मोदक। तदनंतर—मुरमुरती, मुरकी, खाइवाजी, भफुरकी आणी सेव झीणी, फगफगती फिणी, इंदरसा आकरा, दूधवर्णा दहिथरा, घृतनी घारी स्वादसुं आहारी, सर्करासुं रुली इसी तिलसुं सांकुली सुकुमाल सुंहाली जे कीजे दिवाली, सकरपारा मांडी किम ही न सके छांडी, इस्या परिस्या पक-

वांन, जिमवा भणी सहु थया सावधान, परिस्यो सीरो जीमतां मन थया अधिरो, मोकले हाथे पिरसी लापसी जेहथी सहुयै नांन्हा मोट उधापसी, तिवार पछी आणी सालि, किसी किसी सालि—सुगंधिसाली, कमोदसालि, जीरासालि, कुंकणसालि, देवजीरसालि, साठिसालि, गरुडसालि तेहनो सरहरो, फरहरो, अणियालो, सुहालो, उजलो, अंगुल जेवडो, प्रमाण पडवडो, इसो परीस्यो कूर भूख करी चकचूर । नीपनी सुकाली मंडोवरा मुंगनी दालि, हलुए हाथ खांडी, तुस गया छांडी, सोनारइं वानै जीमतां मन मानै इहां काम नहीं छोकरी प्रीसै डोकरी, वाखडी गाइनो घृत, तत्काल तावी मृत्पात्र घृतसरहरती धार, संतोपिये जिमणहार; पछै वारु वघारया सालाणा, से किसा किसा—मूंगीया, कैरडोडी, नींला बोर, वाल्होलि, करमदा, कौठ, करपटा, काचा केला, चोलांनी फली, नीलाचणा, मिरच, पींपली, अंबोलि, सांगरी, काचरी, वउलिया, कारेला, फोग भलै कीधा पाक एहवा शाक । वले सुंठि तणी पलेव, हरडै तणी पलेव, जीरा तणी पलेव, हींग वघारी कढी, अधकचिर्यो घेघरा, वेस वारसुं भरया वडी घारडी, दधिवडी, सीरावडी । सुकुमाल पातला पापड, मिरचालौ पूरण सुस्वाद, पाटिउटो तल्या, पापड तल्या, नागरवेलिनां पांन, जीमणां विवणो भावै धांन, विचि विचि चमचमता शाक, ऊतरै जीभ दांतांरोथाक, पांणी गाल्या कलाकंद, विचि विचि पींता उपजै आनंद, दुध शाकर भरया माट, पीतां ऊतरै जीभ दांतांरो काट, स्वभावें शुद्ध भेल्यो, मिश्रीसुं आधो अद्ध परीसइ मुद्ध । इसउ वाखडी गाइनो दुध, कचोला भरि गटगट पिद्ध, तदनंतर ए वात कही, वचन मान्यो सही, बीजी सर्व वात रही, आण्यो दही, तदनंतर छांडी विलंब आण्यो कपूर वास्यो करंव, जीरा-लूण वास्यो घोल राई तणो झोल, एतावता देव जीर साली, मंडोवरा मूंगनी दाली, सुरहा घृत तणी नालि, सालणा तणी पाली

जिमियभुत्तुत्तरागया वि अ णं समाणा आयंता चोक्खा परमसुइभूया तं मित्त–नाइ नियग-सयण–संबंधिपरिजणं णायए खत्तिए य विउलेणं पुप्फ–गंध–वत्थ–मल्ला–ऽलंकारेणं सक्कारिंति, सम्माणिंति, सक्कारित्ता, सम्माणित्ता तस्सेव मित्त–नाय–णियगसंबंधिपरिजणस्स णायाणं खत्तियाण य पुरओ एवं वयासी–

ततः भोजयित्वा एकान्ते आसनस्थितानाम् आचान्तानां कृतचलुकानां चोक्षानां शिलिकाभिः कृतदन्त-शुद्धीनाम्–अतः परमशुचिभूतानां मित्र–ज्ञाति–निजकसंबन्धिक्षत्रियाणां विस्तीर्णपुष्प–वस्त्र–गन्धाऽलंकारैः सिद्धार्थो राजा सत्कारयति, सन्मानयति, सत्कार्य, सन्मान्य तेषां पुरतः त्रिशला–सिद्धार्थौ एवं कथयतः–

हिवेचलू कीजै, अंबीरसुं हाथ धोइजै, उत्तम वस्त्र हाथ लूहीजै, पंचसुगंध नागर बेलि पांन आरोगीजे, चोवा, चंदण, अरगजा तणां छांटणा कीजै। केसर, चंदण, कपूर, कस्तूरीयै पूजीजै, भला सुगंध फूल तणी माला कंठे ठवीजैं, उपरि यथायोग्य आभरण, वस्त्र, तंबोल दीजै, मननी चिंता भांजीजै, इसी सिद्धार्थ, त्रिशला क्षत्रियाणी तणी भक्ति युक्तें सर्व कुटुंब रीझै, कुटुंब पोषी, सघला संतोषी नाठा दुसमण दोषी। अनेन प्रकारेण मातृ–पितरौ प्रवर्त्तेते।

पुव्विं पि णं देवाणुप्पिया! अम्हं एयंसि दारगंसि गब्भं वक्कंतंसि समाणंसि इमेयारूवे अब्भत्थिए चिंतिए जाव—समुप्पज्जित्था। जप्पभिइं च णं अम्हं एस दारए कुच्छिंसि गब्भत्ताए वक्कंते तप्पभिइं च णं अम्हे हिरण्णेणं वड्ढामो, सुवण्णेणं, धणेणं जाव—सावइज्जेणं पीइ—सक्कारेणं अईव, अईव अभिवड्ढामो, सामंत—रायाणो व समागया य।

अहो! देवानुप्रिया ज्ञातीय-गोत्रीयाः! पूर्वमपि अस्माकम् अस्मिन् बालके गर्भत्वेन समुत्पन्ने सति एतादृशः संकल्पः समुत्पन्नोऽभूत्—यद्दिनात् प्रभृति अयं बालकः कुक्षौ गर्भत्वेन समुत्पन्नः तद्दिनात् प्रभृति वयं हिरण्येन वृद्धिं प्राप्ताः, तथा सुवर्णेन वृद्धिं प्राप्ताः, धनेन, धान्येन वृद्धिं प्राप्ताः, तथा सामन्तनृपतयः चण्डप्रद्योतनादयस्तेऽपि मम वश्यं प्राप्ताः, सेवनाय समागताः।

तं जया णं अम्हं एस दारए जाए भविस्सइ तया णं अम्हे एयस्स दारगस्स इमं एयाणुरूवं गुण्णं गुणनिप्फन्नं नामधिज्जं करिस्सामो वद्धमाणु त्ति।

तस्मात् कारणाद् यदा अस्माकम् एष पुत्रो भविष्यति तदा वयम् अस्य दारकस्य गुणाद् आगतम्, गुणै-

निष्पन्नं नामधेयं वर्धमान इति करिष्यामः। सर्वप्रकारेण वयं वृद्धिं प्राप्तास्तस्माद् अस्य कुमारस्य वर्धमान इति नाम भवतु, इति सर्वेषां स्वजनानां पुरतः सिद्धार्थेन राज्ञा निवेदितम् इति।

अज्ज अम्ह मणोरहसंपत्ती जाया, तं होउणं अम्हं कुमारो वद्धमाणो नामेणं।

तद् अद्याऽस्माकं मनोरथसंप्राप्तिर्जाताऽस्ति। भवद्भिरपि सर्वैः मिलित्वा अस्य अस्मत्कुमारस्य वर्धमानं नाम प्रदातव्यम्।

तए णं समणस्स भगवओ महावीरस्स अम्मा–पियरो नामधिज्जं करेंति वद्धमाणो त्ति।

ततः श्रमणस्य भगवतो महावीरस्य मातृ–पितरौ वर्धमान इति नाम कुरुतः, पुनः–

समणस्स भगवओ महावीरस्स तओ णं नामधेज्जा एवं आहिज्जंतिए–वद्धमाणे, सहसंमुइयाए समणे, अयले भयभेरवाणं, परीसहोवसग्गाणं खंतिखमे, पडिमाणं पालए, धीइमं, अरइरइसहे, दविए, वीरिए, संपन्ने, देवेहिं से नामं कयं समणे भगवं महावीरे।

श्रमणो भगवान् महावीरः काश्यपगोत्रीयः, तस्य त्रीणि नामधेयानि, तानि कथयति–मातृ–पितृभ्यां प्रदत्तं नाम वर्धमान इति। राग–द्वेषाऽभावेन तपसि श्रमणस्य करणात् श्रमणः, इदं द्वितीयं नाम। अकस्माद् उत्प-

द्यते तद् भयम्, सिंहादिभ्यः समुत्पद्यते तद् भैरवम्, एताभ्याम् उभयाभ्याम् अचलो निर्भयः। क्षुधातृषाप्रमुखपरिषहैः कृत्वा पीडां न प्राप्नोति–परिषहोपसर्गाणां क्षन्ता, प्रतिमानां सर्वतो भद्रादीनां पालकः, चतुर्भिर्ज्ञानैर्विराजमानः, धीमान्, ज्ञानवान्, धैर्यवान्, अरतिं रतिं च सहते, सुख–दुःखसहने राग–द्वेषाभ्यां रहितस्तस्माद् द्रव्यवीर्यसंपन्नः, मुक्तिं गन्तुं कृतनिश्चयोऽस्ति तथापि चारित्रं पालयति, एतैः गुणैः कृत्वा देवैः महावीर इति नाम प्रदत्तम्, इदं तृतीयं नाम। आमलकीक्रीडायां देवैर्महावीर इति नाम प्रदत्तम्।

[१]अह वड्ढइ सो भयवं दियलोयचुओ अणोवमसिरीओ। दासिदासपरिवुडो परिकिन्नो पीढमद्देहिं ॥ १ ॥

अथ श्रमणो भगवान् महावीरो वर्धते, देवलोकात् पुष्पोत्तरप्रथमपुण्डरीकाद् विमानात् च्युतः, अनुपमश्रीयुक्तः, दास–दासीभिः परिवृतः, पीठमर्दैः सेवकैः अङ्गशुश्रूषाकारकैः पुरुषैः परिकीर्णः सेव्यमानः।

[२]असियसिरओ सुनयणो बिंबोट्ठो धवलदंतपंतीओ। वरपउमगब्भगोरो फुल्लुप्पलगंधनीसासो ॥ २ ॥

असितशिरस्कः, सुनयनः, बिम्बोष्ठः, धवलदन्तपङ्क्तिः, यादृशः कमलस्य गर्भः, ईदृशो गौरवर्णः, विकसितकमलस्य गन्धवद् निःश्वासः, सर्वेषां देवानाम् अपि यादृशं रूपं भवति तस्माद् अपि श्रीमहावीरस्य अधिकं

१. अथ वर्धते स भगवान् दिवलोकच्युतोऽनोपमश्रीकः । दासीदासपरिवृतः परिकीर्णः पीठमर्दैः ॥ २. असितशिरोजः सुनयनः बिम्बोष्ठः धवलदन्तपङ्क्तिकः। वरपद्मगर्भगौरः फुल्लोत्पलगन्धनिःश्वासः।

रूपम्, ते देवा महावीरस्य वामाङ्गुष्ठस्यापि कलां न अर्हन्ति। सर्वेभ्योऽपि अधिकरूपवान् तीर्थंकरः। तस्मात् किञ्चिदूनो गणधरः। तस्मात् किञ्चिदूनश्चतुर्दशपूर्वधरः कृताऽऽहारकशरीरधारी। तस्मात् किञ्चिदूनः पञ्चाऽनुत्तरविमानवासी। ततः पश्चाद् नवग्रैवेयकवासिनो देवाः। ततो द्वादशलोकस्थाः देवाः। ततः पश्चाद् भवनपति–ज्योतिष्क–व्यन्तरदेवाः। ततश्चक्रवर्ति–वासुदेव–बलदेव–मण्डलीक–सामान्यराजानः एवं ततोऽनुक्रमेण उत्तरन्तः षट्संघयणसंस्थानकधारिणो मनुष्याः ज्ञातव्याः। पुनः श्रीमहावीरो जातिस्मरणज्ञानवान्, अप्रतिपातिमतिज्ञान–श्रुतज्ञान–अवधिज्ञानवान्, ज्ञानत्रितयेन विराजमानः। देहकान्त्या सर्वेभ्योऽपि उत्कृष्टतरः। अथ भगवान् किञ्चिदूनः अष्टवार्षिकः संजातः, समानैः राजकुमारैः सार्धं क्रीडां करोति। तत्र देशे प्रसिद्धाम् आमलिकीं क्रीडां करोति, तत्र नगरबाह्ये पिप्पलीवृक्षोऽस्ति तत्र समस्तबालकाः एकत्रीभूय धावन्ति, क्रीडन्ति तत्र भगवान् अपि रमते, तत्र क्रीडायाम् अयं नियमोऽस्ति–यः कश्चित् प्रथमं धावमानः सन् पिप्पलीम् आरोहते स जितः, स अपरस्य हारितस्य बालकस्य स्कन्धं समारुह्य यतः प्रदेशात् पूर्वं धावितस्तावत्प्रदेशं यावद् आयाति इति तत्र पणः कृतोऽस्ति। अस्मिन् समये इन्द्रः भगवद्बलं देवानां पुरतो वर्णयति स्म। पुनरपि इन्द्र एवम् सर्वेषां देवानाम् अग्रे वदति स्म–सर्वे देवास्तथा दानवा अपि मिलित्वा भगवन्तं भापयन्ति तथा श्रीमहावीरः स्वामी न बिभेति। एतद् वचनं श्रुत्वा एको मिथ्यात्वी देवः इन्द्रवचनम्

अश्रद्दधानस्तत्र भगवत्समीपे बालकस्य रूपं कृत्वा समागतः। भगवता सह चिक्रीड। भगवान् अतीव शीघ्रगामित्वाद् देवस्य अग्रे जातः। तदा तेन देवेन भगवतो भयोत्पादनाय पिपल्याः समीपे, तथा स्कन्धे शाखासु च सर्परूपाणि फूत्कारकाणि विरचितानि, तदा श्रीवर्धमानकुमारः सर्परूपं दृष्ट्वा हस्तेन उल्लाल्य पिप्पिल्याम् आरुरोह। स्वामी मनसि अपि भयं न चकार। स देवबालः हारितः। श्रीवर्धमानो जितः। तदा स देवबालः श्रीवर्धमानं स्कन्धे आरोहयति। अथ भगवन्तं छलनाय स देवः स्वशरीरं दीर्घं चकार। एकतालप्रमाणाद् आरभ्य सप्ततालप्रमाणं कृत्वा उच्चैर्बभूव। अन्ये सर्वेऽपि बालाः भयभ्रान्ताः, त्रस्ताः सिद्धार्थं गत्वा तत्स्वरूपं प्रोचुः—श्रीवर्धमानस्तु न बिभेति, परं मातृपित्रोश्चिन्तानिवारणाय भगवता वज्रप्रहारमुष्टिघातेन ताडितः सन् आकाशात् स्खलन्, आरटन्, भूमौ पपात, भृशं ललज्ज, स्वकीयरूपं प्रकटीचकार। तावद् इन्द्रोऽपि आगत्य तं देवं भगवतः पादयोः निपात्य स्वर्गं लात्वा जगाम। तेन मिथ्यात्वं गमयित्वा सम्यक्त्वम् उपार्जितम्। तदा देवैर्महावीर इति नाम प्रदत्तम्। इति आमलिकीक्रीडा। अथ भगवतो लेखकशालागमनरूपं कथ्यते—यदाऽष्टवार्षिकः श्रीमहावीरः संजातः, तदा मातृपितृभ्यां मोहवशात् चिन्तितम्—

लालयेत् पञ्च वर्षाणि दश वर्षाणि ताडयेत्। प्राप्ते षोडशमे वर्षे पुत्रं मित्रं समाचरेत् ॥ १ ॥
माता वैरी पिता शत्रुः बालो येन न पाठितः। शोभते न सभामध्ये हंसमध्ये बको यथा ॥ २ ॥

एवं विचार्य सम्यगलग्ने, सम्यगमुहूर्ते स्वकुटुम्बम्, स्वजन–क्षत्रियवर्गान् सर्वान् भोजयित्वा, सर्वेभ्यो यथा-योग्यं वस्त्राऽऽभरणादिकं दत्त्वा, गजा–ऽश्वरथान् शृङ्गार्य गीत–गान–तान–मान–दान–सन्मानपूर्वकम् वादित्र-नादपूर्वं महामहोत्सवेन समं लेखकशालीयानां भक्त्यर्थं सुखभक्षिकासमूहं विशालपात्रेषु धृत्वा श्रीवर्धमानं कुमारं गजारूढं कृत्वा, अध्यापकपार्श्वे श्रीसिद्धार्थ–त्रिशलाक्षत्रियाण्यौ समानयतः। तत्र सुखभक्षिकाणां नामानि–गुज–गुडप्रमुखसुखभक्षिका सार्धं गृहीता–ऽस्ति। इमानि, माणिक्यजटितस्वर्णमयाऽऽभरणानि पण्डि-तस्य दानार्थम्, हीरचीर–पट्टकूल–दुकूल–मोतिहार–रत्नजटितमुद्रिकाप्रमुखशृङ्गाराणि एकत्रीकृत्य चङ्गेरिकायां धृतानि सन्ति। पुनः कुलवृद्धाः स्त्रियः पवित्रतीर्थपानीयैः भगवन्तं संस्नाप्य पट्टकूल–क्षीरोदकवस्त्रं परिधाप्य चन्दन–कर्पूर–कुङ्कुमैर्विलेपनं कृत्वा, पुष्पमालां कण्ठे परिधाप्य, दिव्याऽऽभरणानि परिधापयित्वा पुनः सधवा-स्त्रीभिः संगीयमानयशाः–अथ श्रीवर्धमानः कुमारः गजारूढो मेघाऽऽडम्बरछत्रेण विराजमानः, चामरैः वीज्य-मानः, याचकेभ्यो दानं ददानः, भट्टजनैः स्तूयमानः, ब्राह्मणैः वेदध्वनिं श्राव्यमाणः, चिरं जीव, चिरं नन्द, इत्याशीर्वादेन अभिवाद्यमानः, पण्डिताऽध्यापकस्य गृहस्य समीपे संप्राप्तः। तदा पण्डितोऽपि भद्रासनोपरि सम्यग् वस्त्राऽऽभरणानि धृत्वा, महत्याशया श्रीवर्धमानकुमाराऽऽगमनं प्रतीक्षमाणस्तिष्ठति। तस्मिन् समये

इन्द्र आसनप्रकम्पाद् अवधिज्ञानेन ज्ञात्वा देवानां पुरो वदति स्म–भोः भोः देवाः पश्यन्तु, भगवतो मातृ–पितरौ मोहेन ग्रथिलौ जातौ।

[1]तिहि नाणेहि समग्गो तित्थयरो सव्वसत्थतत्तन्नू। जं उवणिज्जइ पाइयजणस्स तह अप्पविज्जस्स ॥ १ ॥

त्रिभिः ज्ञानैः सहितः तीर्थकरः सर्वशास्त्रतत्त्वज्ञः, एतादृशो भगवान् तुच्छबुद्धीनां ब्राह्मणानां पार्श्वे पठनार्थं नीयते; एतद् न शोभते।

अनध्ययनविद्वांसो निर्द्रव्यपरमेश्वराः। अनलङ्कारसुभगाः पान्तु युष्मान् जिनेश्वराः ॥ १ ॥

भगवन्तस्तीर्थकराः एतादृशा वो युष्मान् पान्तु। कथंभूतास्तीर्थकराः? अनध्ययनविद्वांसः, अध्ययनं विना एव विद्वांसः पण्डिताः। पुनः कथंभूताः? निर्द्रव्यपरमेश्वराः–द्रव्यं विना एव परमेश्वराः। पुनः कथंभूताः? अनलङ्कारसुभगाः–अलङ्कारेण विना एव सौभाग्यधराः एतादृशा जिनेश्वराः संसारसमुद्राद् रक्षन्तु। द्रव्यं विना तीर्थकरास्तु अतीव गाम्भीर्यधराः यतस्त्रिकालज्ञाः अपि, सर्वज्ञा अपि अपृष्टाः सन्तो न वदन्ति। यतो लोकोक्तिरियम्–पुनरपि शरत्कालो गर्जति, भाद्रपद्मासे वर्षाकाले स्तोकं गर्जति परं बहु वर्षति। तथा मूर्खः, अल्पबुद्धिः, पण्डितंमन्यः स बहु जल्पति, परं स्वजल्पितस्य निर्वाहं न करोति। पुनः पण्डितः, विधिज्ञः स्तोकं

१. त्रिभिर्ज्ञानैः समग्रस्तीर्थकरः सर्वशास्त्रतत्त्वज्ञः। यद् उपनीयते प्राकृतजनस्य तथा अल्पविद्यस्य ॥

वदति, स्वजल्पितस्य निर्वाहकृद् भवति। असारपदार्थस्य आडम्बरं महद् भवति, यथा कांस्यपात्रस्य महान् शब्दो भवति, स्वर्णपात्रस्य शब्दो न भवति। अस्मिन् अवसरे इन्द्रः स्वयमेव ब्राह्मणस्य रूपं विधाय उपाध्यायसमक्षं एव भगवन्तं प्रणिपत्य शब्दानां संदेहान् पृच्छति–तदा भगवान् श्रीमहावीरः अष्टानां व्याकरणानां तत्त्वं इन्द्रस्य अग्रे शब्दसाधनं प्रकाशयति। तस्मिन् समये सर्वे लोका भगवद्वाणीं श्रुत्वा चिन्तयन्ति–असौ वैदेशिकः सर्वविद्यापारगो ब्राह्मणस्तस्य प्रश्नानाम् अपि उत्तरं वर्धमानकुमारो ददाति, अनेन कुमारेण मातृकाऽपि नाऽधीताऽस्ति, इदं महच्चित्रम्। तदा तत्रस्थोपाध्यायस्याऽपि प्रश्नानाम् उत्तराणि श्रीवर्धमानकुमारेण दत्तानि, तदा इन्द्रः स्वरूपं प्रकटीकृत्य सर्वलोकसमक्षम्, मातृ–पितृ–उपाध्यायादिसमक्षम् अवादीत्–अहो जनाः! अयं वर्धमानकुमारः सामान्यमनुष्यमात्रो नास्ति, त्रैलोक्यनायकोऽयं सर्वज्ञोऽस्ति। तदा दशाङ्गव्याकरणं कृतम्, जिनेन सूत्राणि प्रतिपादितानि, इन्द्रेण वृत्तिः, उदाहरणानि दर्शितानि, तल्लोके जैनेन्द्रं व्याकरणं जातम्। तानि व्याकरणस्य दशाङ्गानि इदानींतनव्याकरणेष्वपि दृश्यन्ते, तानि अमूनि अङ्गानि–संज्ञा–परिभाषा–विधि–नियम–अतिदेश–अनुवाद–प्रतिषेध–अधिकार–विभाषा–निपातानि–एतानि दश व्याकरणस्य अङ्गानि प्रवर्तन्ते। पुनर्लोकानां पुरतः इन्द्रेण उक्तम्–त्रिजगन्नायकस्य अन्यः कोऽपि त्रिभुवनेऽपि साम्यं कर्तुं न समर्थः। यथा मूर्ख–दक्षयोरन्तरम्, शुक्ल–कृष्णयोः, रङ्क–श्वरयोः, सरः–सागरयोः, सूर्यः–प्रदीपयोरनन्तरम् तथा अपरलोक–

तीर्थपत्योर्महद् अन्तरम् । त्रिभिर्ज्ञानैः संपूर्णस्य श्रीवर्धमानस्य स्तुतिं कृत्वा इन्द्रः स्वर्गं जगाम । ततः श्रीवर्धमानकुमारोऽपि गजारूढ एव मातृ-पितृ-परिकरवर्गेण समं महोत्सवेन व्याघुट्य पुनर्गृहे एव समाजगाम । इति लेखकशालाकरणमहोत्सवः । उन्मुक्तबालभावो-अथ श्रीवर्धमानकुमारः उन्मुक्तबालभावः-बालस्वभावं त्यक्त्वा यौवनाऽवस्थां प्राप्तः, तदा पित्रा भोगसमर्थं कुमारं ज्ञात्वा सम्यग्लग्ने, सम्यग्मुहूर्ते समरवीरनाम्नः सामन्तराज्ञः पुत्री यशोदानाम्नी श्रीवर्धमानस्य पाणिं ग्राहिता । तया समं विषयसुखं भुञ्जानस्य श्रीवर्धमानस्य एका पुत्री जाता । तस्याः प्रियदर्शना इति नाम प्रदत्तम् सा च भगवतो भगिन्याः पुत्रस्य जमालेः परिणायिता । एवं भगवतो गृहवासे तस्थुषः अष्टाविंशतिवर्षाणि बभूवुः । अस्मिन् समये भगवतो मातृ-पितरौ चतुर्थदेवलोके, तथा कुत्रचिद् "द्वादशे देवलोके" मृत्वा समुत्पन्नौ । तदा भगवतो बृहद्भ्रातुर्नन्दिवर्धनस्य सर्वाभिः प्रजाभिर्मिलित्वा राज्यं दत्तम् । ततः श्रीवर्धमानो दीक्षाग्रहणार्थं नन्दिवर्धनस्य समीपे अनुमतिं मार्गयामास । तदा नन्दिवर्धनः प्राह-हे भ्रातः ! इदानीम् एव मातृ-पितरौ व्यापन्नौ, इदानीम् एव त्वं दीक्षार्थम् उद्यतः, तत्तु दग्धस्य उपरि क्षारं ददासि इदानीम् अहं दीक्षाया अनुमतिं न दास्यामि । नन्दिवर्धनेन इत्युक्तं तदा भ्रातृ-अनुरोधेन स्वामी वर्षद्वयं स्थितः, परं प्रासुकाऽन्न-पानीयैः वृत्तिं चकार, साधुवृत्त्या तस्थौ । यत उक्तम्-

वनेऽपि दोषाः प्रभवन्ति रागिणां, गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः ।
अकुत्सिते कर्मणि यः प्रवर्तते, निवृत्तरागस्य गृहे तपोवनम् ॥ १ ॥

यो रागसहितः पुरुषो भवति तस्य वने वसतोऽपि विकार उत्पद्यते, पुनर्यस्य पुरुषस्य पञ्चेन्द्रियाणि वशीभवन्ति तस्य पुरुषस्य गृहे तिष्ठतोऽपि तपस्या एव वर्तते, सत्कर्म कुर्वतः पुरुषस्य–रागद्वेषाभ्यां रहितस्य गृहे वसतोऽपि चारित्रधरस्य सादृश्यं वर्तते । यतः पुनरपि उक्तम्–

राग–द्वेषौ यदि स्यातां तपसा किं प्रयोजनम् ? । तावेव यदि न स्यातां तपसा किं प्रयोजनम् ? ॥ १ ॥

एवं राग–द्वेषरहितः प्रासुकाऽन्नं भुञ्जानः श्रीमहावीरो वर्षद्वयं स्थितः, यदा वर्षद्वयोर्मध्ये एकवर्षं गतम्, एकवर्षं स्थितम् ।

समणस्स णं भगवओ महावीरस्स पिया कासवगोत्ते णं, तस्स णं तओ णामधिज्जा एवमाहिज्जंति, तं जहा–सिद्धत्थे इ वा, सिज्जंसे इ वा, जसंसे इ वा । समणस्स भगवओ महावीरस्स माया वासिट्ठसगुत्ते णं, तीसे तओ णामधिज्जा एवमाहिज्जंति, तं जहा–तिसला इ वा, विदेहदिण्णा इ वा, पीइकारिणी इ वा । समणस्स भगवओ महावीरस्स पित्तिज्जे सुपासे,

जेट्ठे भाया नंदिवद्धणे, भगिणी सुदंसणा, भारिया जसोया कोडिण्णगोत्ते णं, समणस्स णं भगवओ महावीरस्स धूआ कासवगोत्ते णं, तीसे दो णामधिज्जा एवमाहिज्जंति, तं जहा—अणोज्जा इ वा, पियदंसणा इ वा। समणस्स णं भगवओ महावीरस्स नत्तुई कोसियगोत्ते णं, तीसे णं दो णामधिज्जा एवमाहिज्जंति, तं जहा—सेसवई इ वा, जसवई इ वा ॥ १०३ ॥ समणे भगवं महावीरे दक्खे, दक्खपइण्णे, पडिरूवे, आलीणे, भद्दए, विणीए, णाए, णायपुत्ते, णायकुलचंदे, विदेहे, विदेहदिण्णे, विदेहजच्चे, विदेहसूमाले, तीसं वासाइं विदेहंसि कट्टु अम्मापिउहिं देवत्तगएहिं, गुरुमहत्तरएहिं अब्भणुण्णाए सम्मत्तपइण्णे ॥

पूर्वं यदा त्रिशलया चतुर्दशस्वप्नाः संदृष्टाः, तदा सर्वैः ज्ञातं चक्रवर्तिपुत्रो भविष्यति। तदनन्तरं यदा श्रीसिद्धार्थस्य राज्ञः वर्धमानः कुमारो जातः तदा तत्सेवानिमित्तं श्रेणिक–चण्डप्रद्योतप्रमुखाः राजकुमाराः पूर्वम् आगतास्ते सर्वेऽपि वर्धमानस्वामिनं दीक्षायै उन्मुखं ज्ञात्वा गृहं जग्मुः। अथ भगवतः सर्वकुटुम्बं कथ्यते—श्रमणस्य भगवतो महावीरस्य पितुः त्रीणि नामानि—सिद्धार्थः, श्रेयांसः, यशस्वी। भगवतो मातुरपि त्रीणि

नामानि–त्रिशला, विदेहदिन्ना, प्रीतिकारिणी। भगवतः पितृव्यः–सुपार्श्वः, वृद्धो भ्राता–नन्दिवर्धनः, सुदर्शना भगिनी, यशोदा भार्या, भगवतः पुत्र्या द्वे नाम्नी—अनोद्या, प्रियदर्शना। भगवतः पुत्र्याः पुत्री, तस्या द्वे नाम्नी–शेषवती, यशस्वती, एतावान् परिकरो भगवतः। अथ भगवान् कीदृशोऽस्ति तदुच्यते–दक्षो जातः, प्रवीणो जातः, पुनर्दक्षप्रतिज्ञो जातः–प्रतिज्ञानिर्वाहकः, प्रतिरूपः, यथा आदर्शाग्रे धृतानि वस्तूनि आदर्शे प्रतिबिम्बतानि भवन्ति तथा सर्वेगुणाः भगवति प्रतिबिम्बिता दृश्यन्ते। पुनर्भगवान् आलीनः–सर्वगुणसंयुक्तः, गुप्तेन्द्रियः पुनर्भद्रकः–सरलस्वभावः, विनयवान्, ज्ञातलोकेषु प्रसिद्धः, ज्ञातराजपुत्रः, ज्ञातराजस्य सिद्धार्थराजस्य कुलविषये चन्द्रः, विदेहः, विशिष्टदेहः, वज्रर्षभनाराचसं(हननः)घयणः, समचतुरस्रसंस्थानधारी, वैदेहदिन्नः–विदेहदिन्ना त्रिशला, तस्याः अपत्यं त्रिशलायाः पुत्रः, विदेहजार्चः, विशिष्टदेहाद् जातकान्तिः, पुनर्विदेहसुकुमालः, गृहे निस्पृहः, दीक्षायां स्पृहयालुः दीक्षायाः प्रथमवर्षात् सांवत्सरिकदानं दातुं प्रारभते, तत्र प्रतिदिनं पादोनप्रहरमध्ये एककोटिरष्टौ लक्षाणि स्वर्णदीनाराणां दानं ददाति। तत्प्रमाणम्–पञ्चभिर्गुञ्जाभिः एको माषो भवति, षोडशमाषैः एकः सुवर्णदीनारो भवति। अन्यद् अपि रत्न–पट्टकूल–घोटक–हस्तिप्रमुखाणि सद्वस्तूनि अपि दीयन्ते, तेषां काऽपि संख्या नास्ति। अथ वर्षदिवसस्य दीनारदानसंख्या वदति–त्रिशतकोटि–अष्टाऽशीतिकोटि–अशीतिलक्षाणि दीनाराणां दत्तानि। 'वरह वरं घोसिज्जा–' यस्य यद्वस्तु

मार्ग्यते तद्वस्तु मार्गयत, इति नगरमध्ये उद्घोषणा नित्यं दीयते। एवं दानं दत्त्वा नन्दिवर्धनस्य संवत्सरं प्रवर्तापितम्। पश्चाद् नन्दिवर्धनस्य आज्ञां लात्वा भगवता पूर्वं मातृगर्भस्थेन इयं प्रतिज्ञा गृहीता आसीत्-'मातृ-पित्रोर्जीवतोः सतोः दीक्षां न ग्रहीष्यामि' सा प्रतिज्ञा संपूर्णा जाता, संपूर्णप्रतिज्ञः सन् दीक्षां ग्रहीतुम् उन्मुखो जातः श्रीवर्धमानः ॥

पुणरवि लोगंतिएहिं जीअकप्पिएहिं देवेहिं ताहिं इट्ठाहिं जाव० वग्गूहिं अणवरयं अभिणंदमाणा य, अभिथुव्वमाणा य एवं वयासी ॥ १०४ ॥ जय जय णंदा !, जय जय भद्दा !, भद्दं ते, जय जय खत्तियवरवसहा !, बुज्झाहि भगवं ! लोगणाहा !, सयलजगज्जीवहिअं पवत्तेहि धम्मतित्थं-हिअसुहणिस्सेयसकरं सव्वलोए सव्वजीवाणं भविस्सइ त्ति कट्टु जय-जयसद्दं पउंजंति ॥ १०५ ॥ पुव्विं च णं समणस्स भगवओ महावीरस्स माणुस्सगाओ गिहत्थधम्माओ अणुत्तरे, आभोइए, अप्पडिवाइ णाण-दंसणे होत्था । तए णं समणे भगवं महावीरे तेणं अणुत्तरेणं आहोइएणं णाण-दंसणेणं अप्पणो णिक्खमणकालं आभोएइ, आ-

भोइत्ता चिच्चा हिरण्णं, चिच्चा सुवण्णं चिच्चा धणं, चिच्चा रज्जं, चिच्चा रट्ठं, एवं बलं, वाहणं, कोसं, कोट्ठागारं, चिच्चा पुरं, चिच्चा अंतेउरं, चिच्चा जणवयं, चिच्चा विपुलधणकणग–रयण–मणि–मोत्तिय–संख–सिल–प्पवाल–रत्त–रयणमाइयं संतसारसावइज्जं विच्छड्डइत्ता, विगोवइत्ता दाणं दायारेहिं परिभाइत्ता, दाणं दाइयाणं परिभाइत्ता ॥ १०६ ॥

पुनरपि लोकान्तिकदेवैः पञ्चमदेवलोकवासिभिः—तृतीयप्रतरे कृष्णराजीविमानस्य अष्टसु अन्तरेषु अष्टासु दिक्षु अष्टौ विमानानि सन्ति, तत्र नवमं विमानम्, तेषां विमानानां मध्येऽस्ति, एवं नव विमानानि सन्ति, तेषु अष्टसु विमानेषु संख्यातभवाः संसारिणो देवाः सन्ति, मध्यस्थे विमाने ये देवास्ते असंख्याताः एकावतारिणः, लोकशब्देन ब्रह्मदेवलोकः, तस्मिन् ते वसन्ति इति लोकान्तिकवासिनः, अथवा लोकस्य संसारस्य अन्तोऽस्ति येषां ते लोकान्तिकाः, ते देवाः सर्वेऽपि सम्यक्त्वधारिणः, अष्टसागराऽऽयुष्काः, तेषां नामानि–सारस्वतः, आदित्यः, वह्निः, वरुणः, गर्दतोयः, तुषितः, अव्याबाधः, आग्नेयः, अरिष्टः;–एवं तैर्नवप्रकारैः लोकान्तिकैर्देवैः श्रीवर्धमानस्वामी पूर्वोक्ताभिः वाग्भिः प्रतिबोधितः। यद्यपि तीर्थकराः स्वयंसंबुद्धा भवन्ति, तथापि

तेषां देवानाम् अयम् आचारोऽस्ति—तीर्थकरस्य दीक्षाऽवसरे आगत्य मधुर वाग्भिः दीक्षाऽवसरं ज्ञापयन्ति । ते किं वदन्ति तदाह—

हे स्वामिन् ! त्वं जय जय, त्वं समृद्धिं भज, अथवा जगज्जीवहितं कुरु, पुनर्भद्रकारी सर्वजीवानां भव । अहो क्षत्रियवरवृषभ ! तव भद्रं भवतु । अहो लोकनाथ ! त्वं बुध्यस्व । जगज्जीवानां हितं धर्मं प्रवर्तय—धर्मतीर्थं प्रकटीकुरु इति वचनानि जयजयशब्दपूर्वकं देवा वदन्ति । 'पुव्विं च णं०' पूर्वमपि मनुष्यस्य योग्यो—यो गृहस्थधर्मः स्त्रीसेवनादिलक्षणः, तस्माद् भगवतो मनो विरक्तम् आसीत् । ततश्च देवानां पुनर्वचनाद् अवधिज्ञानेन दीक्षाऽवसरं ज्ञात्वा, हिरण्यादिकं परिग्रहं त्यक्त्वा, विगोप्य हिरण्यादिकं धरित्र्यां निखातं प्रकटीकृत्य आत्मीयगोत्रीयाणां विभागं कृत्वा दत्तं । अथ भगवतो दीक्षाऽवसरं वदति—

ते णं काले णं, ते णं समये णं समणे भगवं महावीरे जे से हेमंताणं पढमे मासे, पढमे पक्खे, मग्गसिरबहुले तस्स णं मग्गसिरबहुलस्स दसमीपक्खे णं पाईणगामिणीए छायाए पोरसीए अभिनिविट्ठाए पमाणपत्ताए सुव्वए णं दिवसे णं विजए णं मुहुत्ते णं चंदप्पभाए सियाए सदेवमणुयाए सुराए परिसाए समणुमग्गमाणमग्गे संखिय—चक्किय—नंगलिय—मुहमंग-

लिय-वद्धमाण-पूसमाण-घंटियगणेहिं ताहिं इट्ठाहिं, जाव० वग्गूहिं अभिनंदमाणा, अभिथुव्वमाणा एवं वयासी—॥ १०७ ॥

तस्मिन् काले, तस्मिन् समये श्रमणो भगवान् महावीरो यो हेमन्तस्य शीतकालस्य प्रथमे मासे, प्रथमे पक्षे, मार्गशीर्षकृष्णे पक्षे दशमीदिवसे, पूर्वदिग्गामिन्यां छायायां वर्धमानायां पाश्चात्ये प्रहरप्रमाणे दिवसे स्थिते सति, सुव्रते नाम्नि दिवसे, विजये नाम्नि मुहूर्ते, चन्द्रप्रभानाम्न्यां शिबिकायां देवैर्मनुष्यैश्च सहितायां यस्मिन् समये नन्दिवर्धनेन नृपेण भगवतो दीक्षायाः महोत्सवः प्रारब्धः, तस्मिन् अवसरे समस्ता इन्द्रा आसनप्रकम्पेण अवधिना ज्ञात्वा तत्र आजग्मुः । जन्ममहोत्सववद् दीक्षामहोत्सवं चक्रुः, स्नान-विलेपनादिकं चक्रुः । भगवतः पूर्वं नन्दिवर्धनेन दीक्षामहोत्सवः कृतः, तदनन्तरम् इन्द्रैः कृतः । शिबिका एका नन्दिवर्धनेन कारिता, एका इन्द्रेण विहिता, सा शिबिका चन्द्रप्रभा नाम्ना वर्तते-पञ्चाशद्धनुष्प्रलम्बा, पञ्चविंशतिधनुर्विस्तीर्णा, षट्त्रिंशद्धनुःप्रमाणा उच्चैस्तरा तन्मध्ये भगवतो निषीदनार्थं सौवर्णं, रत्नजटितं सिंहासनं वर्तते । अथ राज्ञा कारितायां शिबिकायां चेत् तिष्ठति तदा इन्द्रो मनसि दूयते । इन्द्रैर्विहितायां चेत् तिष्ठति तदा राजा दूयते । ततो देवप्रभावाद् उभयोरपि ऐक्यम् एव संजायते, तत्र भगवान् पूर्वाऽभिमुखस्तिष्ठति, प्रभोर्दक्षिणतः कुलम-

हत्तारिका हंसलक्षणं पटशाटकम् आदाय तिष्ठति, वामपार्श्वे प्रभोरम्बधात्री दीक्षाया उपकरणम् आदाय तिष्ठति, पृष्ठे च एका स्फारशृङ्गारतरुणा स्त्री धवलं छत्रं मस्तके धृत्वा तिष्ठति, ईशानकूणे च एका स्त्री गङ्गनीरभृतकलशं गृहीत्वा तिष्ठति, आग्नेयकूणे एका सधवा स्त्री कनकदण्ड-मणि-विचित्रं व्यञ्जनं लात्वा भद्रासने निषीदति, सौधर्मेन्द्र-ईशानेन्द्रौ चामरैर्भगवन्तं वीजयतः, नगरस्य प्रतोलीं यावद् मनुष्यैः शिबिका उत्पादिता, पश्चात् सुरेन्द्र-असुरेन्द्र-नागेन्द्रा उत्पाटयन्ति। तत्र शक्रः शिबिकायाः दक्षिणाम् उपरितनीं बाहाम् उत्पाटयति, ईशानेन्द्रः उत्तरां उपरितनीं बाहाम् उत्पाटयति, चमरेन्द्रोऽधस्तनीं दक्षिणां बाहाम् उत्पाटयति, बलेन्द्रोऽधस्तनीं उत्तरां बाहाम् उत्पाटयति, शेषा-भवनपति-व्यंतरा-ज्योतिष्कवैमानिकेन्द्राः यथायोग्यम् उत्पाटयन्ति, तदग्रे एके देवाः मार्गे पञ्चवर्णपुष्पाणां वृष्टिं कुर्वन्ति, एके देवाः देवदुन्दुभिं वादयन्ति, एके नर्तन्ते। सर्वे नागरिकलोकाः, नार्यश्च भगवद्दीक्षाया महोत्सवदर्शनाय सार्थे भवन्ति, क्षत्रियकुण्डग्रामनगरस्य मार्गोऽतीव संकीर्णो जातः, भगवतः शिबिकायाः अग्रेदेवानाम्, मनुष्याणां च महान् संमर्दो जातः। अथ शिबिकायाः पुरतः अष्टौ मङ्गलानि सौवर्णस्थालेषु लिखित्वा प्रचलन्ति, ततः पूर्णकुम्भः सधवस्त्रिया मस्तके धृतः, ततो भृङ्गारः, ततश्चामराणि, ततः उन्नताः अनेके ध्वजाः, ततः श्वेतच्छत्रम्, ततः स्वर्ण-रत्नजटितं सिंहासनं प्रचलति, ततः पश्चाद् अष्टोत्तरशतं सपल्ययनाः, वरतुरङ्गमाः। अष्टोत्तरशतं घण्टानां येषु विराजते, सम्यग्मुखमल्लादिगुप्तिभिर्विरा-

जमानाः, द्वादशतूर्यैर्वाद्यमानाः, शस्त्रैः, सन्नाहैर्भृताः, वीरपुरुषैराश्रिता अष्टोत्तरशतं रथाः प्रचलन्ति। ततः पश्चात् संनद्धबद्धाः, सर्वाङ्गसुन्दराः अष्टोत्तरशतवीरपुरुषाः संचरन्ति। ततो हस्तिनः सिन्दूर-तैलपूजितकुम्भाः, स्वर्णघण्टाभिर्विराजमानाः संचरन्ति। ततः सहस्रयोजनोच्चो रत्नजटितः इन्द्रध्वजः प्रचलति। तदनन्तरं शङ्ख-धराः, चक्रधराः, हलधराः, मुखमाङ्गलिकाः, वर्धमाना-लघुकुमारान् शृङ्गार्य स्कन्धे आरोहयित्वा प्रचलन्ति ते वर्धमानाः उच्यन्ते, ते प्रचलन्ति। ततः पुष्यमाणाः राज्ञां बिरुदावलीं ब्रुवन्ति। ततो घण्टवादकाः इत्यादिजनै-र्जय-जयशब्दैः स्तूयमानः श्रीवर्धमानः शिबिकायां स्थितो मनुष्यैः, देवैर्परिवृतः पदे पदे दानं ददानः, पृष्ठतो राज्ञा नन्दिवर्धनेन गजारूढेन गम्यमानः क्षत्रियकुण्डग्राममध्ये ईदृशेन आडम्बरेण निःसरति। तदा सर्वे जना एवं वदन्ति—

जय जय नंदा! जय जय भद्दा! भद्दं ते, जय जय खत्तियवरवसहा! अभग्गेहिं नाण-दंसण-चरित्तेहिं अजियाइं जिणाहि इंदियाइं, जियं च पालेहि समणधम्मं, जियविग्घो वि य वसा-हि तं देवसिद्धिमज्झे, निहणाहि रागदोसमल्ले तवेणं, धिइधणियबद्धकच्छे मद्दाहि अट्ठ कम्मसत्तू झाणेणं उत्तमेणं सुक्केणं, अप्पमत्तो हराहि आराहणपडागं च वीर! तेलुक्करंगमज्झे, पावय

वितिमिरमणुत्तरं केवलवरणाणं, गच्छ य मुक्खं परमपयं जिणवरोवइट्ठेण मग्गेणं अकुडिलेणं, हंता परीसहचमूं, जय जय खत्तियवरवसहा ! बहूइं दिवसाइं, बहूइं पक्खाइं, बहूइं मासाइं बहूइं उऊइं, बहूइं अयणाइं, बहूइं संवच्छराइं, अभीए परिसहोवसग्गाणं, खंतिखमे भयभेरवाणं धम्मे ते अविग्घं भवउ त्ति कट्टु जयजयसद्दं पउंजंति ॥ १०८ ॥

ते लोकाः किं वदन्ति–अहो क्षत्रियवरवृषभ! जयजय, वृद्धिं प्राप्नुहि, ते भद्रं कल्याणं भवतु, अभग्नैः ज्ञान–दर्शन–चारित्रैर्जेतुम् अशक्यानि इन्द्रियाणि च, पुनर्मनश्च एतेषां जयं कुरु, जितं स्ववशीकृतं साधुधर्मं पालय। पुनः हे स्वामिन् ! जितविघ्नः सन् श्रमणधर्मं साधय, देवसिद्धानां मध्ये। पुनः उत्कृष्टेन तपसा- राग–द्वेषशत्रून् युद्धं कृत्वा जहि घातय, संतोषेण धैर्येण कक्षां बद्ध्वा अष्टकर्मरूपशत्रून् मर्दय। तथा उत्कृष्टेन शुक्लध्यानेन स्वामिन् ! त्रैलोक्यरङ्गमण्डपे आराधनापताकां प्राप्नुहि। पुनः अप्रमत्तो भूत्वा आवरणैः रहितं संपूर्णकेवलज्ञानं प्राप्नुहि, परम् उत्कृष्टं मोक्षपदं त्वं याहि, पुनः ऋषभादिजिनवरैः कथितं ज्ञान–दर्शन–चारित्ररूपरत्नत्रयाऽऽराधनेन सरलम्। द्वाविंशतिपरीषहशत्रुसेनां जित्वा बहूनि दिवसानि, बहून् पक्षान्, बहून् मासान्, यावद् बहून् ऋतून्, यावद् बहूनि उत्तरायण–दक्षिणायनलक्षणानि अयनानि। यावद् मासद्वयेन ऋतुर्भवति,

मासषट्केन एकम् अयनं भवति। एवं बहून् ऋतून्, बहूनि अयनानि यावत् परीषहोपसर्गेभ्यो निर्भयः सन् क्षमया सर्वं भय-भैरवादिकं सम्यक् प्रकारेण सहमानः साधुधर्मं पालय, तव सदा निर्विघ्नं भवतु, एवं सर्वेऽपि लोकाः, स्वजनाश्च वदन्ति-

तए णं समणे भगवं महावीरे नयणमालासहस्सेहिं पिच्छिज्जमाणे, पिच्छिज्जमाणे, वयणमालासहस्सेहिं अभिथुव्वमाणे, अभिथुव्वमाणे, हिअयमालासहस्सेहिं उण्णंदिज्जमाणे, उण्णंदिज्जमाणे, मणोरहमालासहस्सेहिं विच्छिप्पमाणे, विच्छिप्पमाणे, कंतिरूवगुणेहिं पत्थिज्जमाणे, पत्थिज्जमाणे, अंगुलिमालासहस्सेहिं दाइज्जमाणे, दाइज्जमाणे दाहिणहत्थेणं बहूणं णर-णारिसहस्साणं अंजलिमालासहस्साइं पडिच्छमाणे, पडिच्छमाणे, भवणपंतिसहस्साइं समइच्छमाणे, समइच्छममाणे, तंती-तल-ताल-तुडियगीयवाइअरवेणं महुरेण य, मणहरेण जयजयसद्दघोसमीसिएणं मंजुमंजुणा घोसेण य पडिबुज्झमाणे पडिबुज्झमाणे, सव्विड्ढीए, सव्वजुईए, सव्वबलेणं, सव्ववाहणेणं, सव्वसमुदाएणं, सव्वायरेणं, सव्वविभूईए, सव्वविभूसाए, सव्वसंभमेणं,

सव्वसंगमेणं, सव्वपगईहिं, सव्वणाडएहिं, सव्वतालायरेहिं, सव्वावरोहेणं, सव्वपुप्फ–वत्थ–गंध–मल्ला–ऽलंकारविभूसाए, सव्वतुडियसद्दसंणिणाएणं, महया इड्ढीए, महया जुईए, महया बलेणं, महया वाहणेणं, महया समुदएणं, महया वरतुडियजमगसमगप्पवाइएणं, संख–पणव–पडह–भेरि–झल्लरि–खरमुहि–हुडुक्क–दुंदुहिणिग्घोसणाइअरवेणं कुंडपुरं णगरं मज्झंमज्झेणं णिगच्छइ, णिग्गच्छित्ता जेणेव णायसंडवणे उज्जाणे, जेणेव असोगवरपायवे, तेणेव उवागच्छइ ॥ ११३ ॥ उवागच्छित्ता असोगवरपायवस्स अहे सीयं ठावेइ, ठावित्ता सीयाओ पच्चोरुहइ, पच्चोरुहित्ता सयमेव आभरणमल्लालंकारं ओमुयइ, ओमुइत्ता सयमेव पंचमुट्ठियं लोयं करेइ, करित्ता छट्ठेणं भत्तेणं अपाणएणं हत्थुत्तराहिं णक्खत्तेणं जोगमुवागएणं एगं देवदूसमादाय एगे अबीए मुंडे भवित्ता आगाराओ अणगारियं पव्वइए ॥ ११४ ॥

ततः पश्चाद् भगवान् स्थाने स्थाने मनुष्याणां वृन्दानि तेषां लोचनसहस्रेण विलोक्यमानः, पुनर्लोकानां

मुखसहस्रेण स्तूयमानः सन्, हृदयसहस्रेण चिन्त्यमानः, अस्य भगवतः आज्ञा सर्वदा ध्रियते एतादृशैर्मनोरथसहस्रैः श्लाघ्यमानः, अङ्गुलीमालासहस्रेण जनैर्जनेभ्यः सादरं दर्श्यमानः, भगवान् अपि पुरुषाणां स्त्रीणां नमस्काराणि गृह्णानः, पुनर्वेणुवीणादिवादित्राणां शब्देन सहगीत-गानेन सह 'जय जय नन्दा' इत्यादिवचनेन मिश्रितं यद् अव्यक्तकोलाहलोऽपि सावधानः श्रीवर्धमानः छत्रचामरादिसर्वर्द्ध्या आभरणादीनां सर्वकान्त्या, सर्वगजा-ऽश्व-रथ-मनुष्यादिसमुदायेन सर्वोचितकार्यकरणस्य आदरेण सर्वविभूत्या, सर्वशोभाया, सर्वहर्षोत्कर्षेण सर्वसङ्गमेन, सर्वस्वजनानां मेलापेन सर्वनगरवास्तव्यअष्टादशश्रेणि-प्रश्रेणिसहितः सर्वनाटकेन, सर्वएकोनविंशतिकोटितालभेदेन, पुनः सर्वपुष्प-फल-गन्ध-माल्या-ऽलंकारेण, शङ्ख-भेरि-पटह-मृदङ्ग-झल्लरी-खरमुखीप्रमुखवाजित्रप्रतिशब्देन सह क्षत्रियकुडण्ग्राममध्ये मध्ये भूत्वा यत्र ज्ञातवनखण्डम्, यत्राऽशोकवृक्षस्तत्राऽऽयाति, तत्राऽऽगत्य अशोकवृक्षस्याऽधः शिबिकां स्थापयति, शिबिकातः उत्तीर्य स्वयमेव अङ्गोपाङ्गाद् आभरणानि उत्तारयति, नन्दिवर्धनस्य समर्पयति, पश्चात् स्वयमेव पञ्चमुष्ट्या केशान् लुञ्चयति, तदा श्रीवर्धमानस्य केशान् इन्द्रो गृहीत्वा क्षीरसमुद्रे प्लावयति । तस्मिन् समये इन्द्रः उच्चैःशब्देन स्वर्णकम्बां भ्रामयित्वा सकलम् अपि वादित्रादि कोलाहलं निवारयति तथा 'निरोल छीक राखिज्यो' एवं वदति-लोकाः सर्वेऽपि सावधाना भवन्ति । अथ भगवान् लोचं कृत्वा 'नमः सिद्धेभ्यः' इति वदति—

करेमि सामाइयं, सव्वं सावज्जं जोगं पच्चक्खामि, जावज्जीवाए तिविहंतिविहेणं--मणेणं, वायाए, कायेणं न करेमि, न कारवेमि, करंतं पि अन्नं न समणुजाणामि तस्स पडिक्कमामि, निंदामि, गरिहामि, अप्पाणं वोसिरामि ।

एवम् उक्त्वा चारित्रं गृह्णाति। 'भन्ते' इति पदं न वदन्ति, यतो भगवान् स्वयं संबुद्धोऽस्मि । भगवान् जगद्गुरुः, तस्य न कोऽपि गुरुरस्ति, 'छट्ठेणं भत्तेणं अपाणएणं' भगवता तदा द्वौ उपवासौ कृतौ, तौ अपि चतुर्विधाऽऽहाररहितौ, एकोपवासः प्राकृतः, ततः पश्चाद् अपरः उपवासः कृतः । उत्तराफाल्गुनीनक्षत्रे चन्द्रसंयोगे समागते सति, एकाकी, राग–द्वेषरहितः, अपरः सार्थः कोऽपि नास्ति, यतो दुःषमकालकस्य विशेषात्, भगवता समं केनाऽपि दीक्षा न गृहीता । अथ श्रीवर्धमानस्वामी लोचं कृत्वा, द्रव्यतः मुण्डो भूत्वा, क्रोधादिकषायं त्यक्त्वा, भावमुण्डो भूत्वा 'अगाराओ अणगारिअं पव्वइए' गृहवासं त्यक्त्वा अनगारो बभूव । तस्मिन् समये इन्द्रः, सपादलक्षमूल्यं देवदूष्यं वस्त्रं वामस्कन्धे मुञ्चति, तदा भगवतो मनःपर्यवज्ञानं समुत्पन्नम्। यदुक्तम्–

तिहिं नाणेहिं समग्गा, तित्थयरा जाव हुंति गिहवासे। पडिवत्तम्मि चरित्ते, चउनाणी जाव छउमत्था ॥१॥

१. त्रिभिः ज्ञानैः समग्राः तीर्थंकराः यावद् भवन्ति गृहवासे । प्रतिपन्ने चारित्रे चतुर्ज्ञानिनः यावत् छद्मस्थाः ॥

सर्वेऽपि तीर्थकराः यावद् गृहे तिष्ठन्ति तावद् ज्ञानत्रयेण विराजन्ते, यदा चारित्रं गृह्णन्ति तदा चतुर्थ ज्ञानम् उत्पद्यते। यावत्सकलकर्मक्षयो न भवति तावत् केवलज्ञानं नोत्पद्यते। अथ भगवता श्रीमहावीरेण दीक्षा गृहीता तदा शक्रादयश्चतुर्निकायिका देवा महोत्सवं कृत्वा, वन्दनां विधाय नन्दीश्वरद्वीपे यान्ति, अष्टाह्निकामहोत्सवं कृत्वा स्वस्थानं यान्ति। अथ श्रीवर्धमानस्वामी अपि दीक्षां गृहीत्वा नन्दिवर्धनं पृष्ट्वा विहारं करोति। यतः राजाज्ञां विना साधुर्न विहारं करोति। नन्दिवर्धनो राजाऽपि वन्दनां कृत्वा विषण्णः सन् गृहे आयाति, अन्येऽपि नागरिकाः स्वगृहम् आयान्ति। तस्मिन् समये दिवसं घटीद्वयं तिष्ठति, भगवान् विहृत्य कुंमार-ग्रामस्य पार्श्वे आगत्य कायोत्सर्ग तिष्ठति, तदा एको गोपालकः स्वबलीवर्दान् भगवतो भलाप्य स्वयं गृहे गत्वा कियति काले आगतः, बलीवर्दाश्चरन्तः कुत्रचिद् निसृत्य गताः, इतस्ततो दृष्टाः, यदा कुत्रापि न दृष्टाः तदा भगवन्तं पृष्टवान्-आर्य! मम बलीवर्दाः क्व गताः? भगवान् मौनधारी न जल्पति, तदा राशिं द्विगुणाम्, त्रिगुणां कृत्वा वधाय सन्नद्धो जातः। तस्मिन् समये एव इन्द्रोऽवधिज्ञानेन भगवन्तम् उपसर्गसहितं दृष्ट्वा आगत्य गोपालकं प्रति उवाच-रे दुष्ट! अयं श्रीवर्धमानोऽस्ति, नन्दिवर्धनराज्ञो भ्राता, इत्युक्त्वा गोपालक इन्द्रेण तर्जितः। इन्द्रो वर्धमानस्वामिनं तदा इत्याह-हे स्वामिन्! द्वादशवर्षाणि यावद् युष्माकं छद्मस्थाऽवस्थाऽस्ति, ये उपसर्गा उत्पत्स्यन्ते तान् अहं निवारयिष्यामि, भवतां सेवां करि-

ष्यामि, मम मनसि अयं मनोरथोऽस्ति, भवतां चेद् आज्ञा भवति तदा एवं करोमि । तदा भगवता उक्तम्-

इंदा! न एवं भूयं, न एवं भवइ, न एवं भविस्सइ जं णं अरिहंता देविंदस्स असुरिंदस्स नीसाए केवलनाणं उप्पाडिंति, सिद्धिं वा वच्चंति, किं तु सएणं उदारबल-वीरिय-पुरिसक्कारपरिक्कमेणं केवलनाणं उप्पाडेंति ।

हे इन्द्र ! एवं न भूतम्, न भवति, न भविष्यति यद् अरिहन्ता इन्द्रस्य, असुरेन्द्रस्य वा साहाय्येन केवलज्ञानम् उत्पादयन्ति, मोक्षं वा व्रजन्ति, किन्तु स्वकीयोत्थान-बल-वीर्य-पुरुषकारपराक्रमेण केवलज्ञानम् उत्पाद्यते, मोक्षं गच्छन्ति । तस्मिन् प्रस्तावे भगवतः पितृव्यः सुपार्श्वः, स मृत्वा व्यन्तरदेवः संजातोऽस्ति, स सिद्धार्थनामाऽस्ति, तं इन्द्रो भगवत्समीपे रक्षयित्वा भगवत उपसर्गनिवारणं कर्तव्यम् इत्यादि आज्ञां दत्त्वा इन्द्रः स्वस्थानं ययौ । भगवान् अपि प्रभाते विहारं कृत्वा 'कोल्लासक' संनिवेशे गतः, तत्र बहुलनाम्नो ब्राह्मणस्य गृहे परमान्नं पारणं चकार । तदा देवैः पञ्च दिव्यानि कृतानि । पञ्च दिव्यानि इमानि-देवाः व्योम्नि ध्वजं विस्तारयन्ति, सुगन्धजलेन पृथिवीं सिञ्चन्ति, पुष्पवृष्टिं कुर्वन्ति, देवदुन्दुभिं वादयन्ति, अहो! सम्यग्दानम् २ इति घोषयन्ति । इति पञ्च दिव्यानि कुर्वन्ति । सार्धद्वादशसुवर्णदीनाराणां कोटिश्च तत्र ववर्षुः । अथ भगवान्

ततो विहारं चकार । यदा स्वामिना दीक्षा गृहीता तदा देवेन्द्रैः शरीरे चन्दनानां विलेपः कृतोऽस्ति तस्य सुगन्धेन भ्रमराः आगत्य दशन्ति, कामिनो दुष्टपुरुषाः शरीरं घर्षयन्ति, कामिन्यश्च आगत्य स्वामिनः शरीरेण सह आलिङ्गनं कुर्वन्ति, भगवतः समीपे सौगन्ध्यं मार्गयन्ति च, भगवान् मेरुरिव अकम्पोऽस्ति । अथ भगवान् विहारं कुर्वन् 'मोराक'–सन्निवेशे गतः । ततः सिद्धार्थस्य राज्ञो मित्रं 'दूइज्जंत' इति नाम्ना तापसस्तिष्ठति, तस्य आश्रमे गतः । स भगवन्तं दृष्ट्वा सन्मुखम् आगतः, भगवान् अपि पूर्वपरिचयित्वाद् बाहू प्रसार्य मिलितः । वर्षाकाले अस्माकम् आश्रमे अत्र स्थातव्यम्, इति आग्रहात् शेषकाले विहारं कृत्वा वर्षासमयोपरि तत्र आगत्य स्वामी चतुर्मासं स्थितः, तापसेन स्वउटजे स्थापितः, तत्र दैवयोगाद् मेघवृष्टिर्नाऽभूत्, तदा तत्रस्था गोः महिष्यादयः पशवः आगच्छन्तो, निर्गच्छन्तः तापसस्य तृणोटजं भक्षयन्ति, भगवान् तान् न हक्कयति, तदा तापस उपालम्भं ददाति–हे देवानुप्रिय ! त्वं कथं गो–महिष्यादीन् न निवारयसि, त्वम् अतीव अलसोऽसि, यस्मिन् उटजे स्थितोऽसि तस्याऽपि रक्षां कर्तुं न क्षमोऽसि, हक्कयितुम् अपि असमर्थोऽसि इत्युक्ते सति भगवता मनसि अप्रीतिम् उत्पद्यमानां–ज्ञात्वा विहृतम् । पञ्च अभिग्रहाश्च गृहीताः । पञ्च अभिग्रहाश्च इमे– १ अप्रीतिकरे स्थाने न स्थातव्यम्, २ पुनर्यावत् छद्मस्थाऽवस्था, तावद् मौनेन कायोत्सर्गे स्थातव्यम्, ३ कायेन ऊर्ध्वतया स्थेयम्, ४ गृहस्थस्य विनयो न कर्तव्यः, ५ सदा पाणिपात्रेण आहारः कर्तव्यः । एते पञ्च अभिग्रहाः गृहीताः ।

चतुर्मास्याः यदा पञ्चदश दिनानि जातानि तदा विहारः कृतो भगवता । ततो विहृत्य 'अस्थिग्रामे' शूलपाणि-यक्षदेवगृहे कायोत्सर्गे भगवान् स्थितः । तत्र शूलपाणियक्षो महादुष्टोऽस्ति, स प्राग्जन्मनि धनदेवस्य श्रेष्ठिनो धवलो धौरेयो वृषभो हि आसीत्, एकदा धनदेवेन पञ्चशतशकटाः भारेण भृत्वा संचालिताः, मार्गे वर्धमान-ग्रामस्य पार्श्वे वेगवतीनाम्नी नदी समागता, तेषां शकटानाम् उत्तारणे सर्वे वृषभाः असमर्थाः आसन्, तदा धनदेवेन तेन धवलधौरेयेण सर्वे शकटा नदीम् उत्तारिताः, स वृषभः तेन भारोद्वहनेन त्रुटितः, चलितुम् अशक्त आसीत् । तदा धनदेवसार्थवाहेन ग्राममध्यस्थान् बृहल्लोकान् आहूय स धौरेयः समर्पितः, कियद् द्रव्यमपि दत्तम्, उक्तं च "भो जनाः! अयं वृषभश्चारणीयः, पालनीयः, घृत-गुडादिः अस्मै देयः" इत्युक्त्वा सार्थवाहो गतः । तदनन्तरं ते लोकास्तस्य द्रव्यं भक्षयामासुः, स वृषभो मृतः, केनाऽपि न संभालितः, मृत्वा शूलपाणि-व्यन्तरो बभूव । ज्ञानेन प्राग्भवं दृष्ट्वा रोषेण जनान् मारिं विकुर्व्य मारयामास । बहूनां मृतानां जनानाम् अस्थि-समूहो ग्रामस्य पार्श्वे बभूव, तेन तस्य ग्रामस्य नाम लोकैः 'अस्थिग्राम' इति दत्तम् । बहुजनानां मरणं दृष्ट्वा-बलि-बाकुल-धूप-दीपादिभिः पूजां कृत्वा जनैः सर्वैः आराधितः, तदा आकाशे स देवो जजल्प-'अरे पापाः! मद्द्रव्यं भवद्भिर्भुक्तम्, मम शुद्धिः केनाऽपि न कृता, अहं धनदेवस्य बलीवर्दो मृत्वा शूलपाणिः संजातोऽस्मि, इयं मदीया माया, मया एव लोकाः मार्यन्ते, यदा मदीयां मूर्तिं शूलपाणिधारिणीं मम अस्थाम् उपरि देव-

गृहं कारयित्वा यूयं नित्यं पूजयिष्यथ तदा न मारयिष्यामि, नो चेत् सर्वजनान् मारयिष्यामि' इति श्रुत्वा लोकाः भयभीताः सन्तः तथैव चक्रुः । तत्र देवगृहे इन्द्रशर्मा ब्राह्मणः पूजकोऽस्ति । तत्र भगवान् सन्ध्यासमये आगत्य कायोत्सर्गे स्थितः, तदा पूजकेन उक्तम्–हे आर्य ! अत्र न स्थातव्यम्, अयं यक्षः क्रूरोऽस्ति । भगवान् मौनेन तस्थौ । अथ रात्रौ यक्षः प्रकटीभूय अट्टहास्यं चकार, गजरूपं कृत्वा उल्लालयामास, राक्षसरूपेण क्षुरिं निष्कास्य भापयामास, सर्परूपेण ददंश तथाऽपि भगवान् ध्यानाद् न चचाल । ततः पुनर्मस्तके, कर्णयोः, नासिकायाम्, दन्तेषु, नखेषु, चक्षुषोः, पृष्ठौ एतेषु ससस्थानेषु वेदनाम् उत्पादयामास । एवं कृतेऽपि शुभध्यानाद् न अचालीत् तदा स्वयमेव खिन्नः सन् यक्षः शान्तिं जगाम । ज्ञानेन भगवन्तं ज्ञात्वा स्वापराधं क्षामयित्वा सम्यक्त्वं प्राप, गीत–गान–नाटकादिपूजां कृत्वा भक्तिं दर्शयित्वा गतः । ततः पाश्चात्यायां रजन्यां भगवतो निद्रा आगता, तदा मुहूर्तमात्रं प्रमादो जातः, निद्रायां दश स्वप्नाः स्वामिना दृष्टाः । प्रभातसमये अष्टाङ्गनिमित्तज्ञः 'उत्पलः' तत्र आगतः, तेन नैमित्तिकेन स्वयमेव निमित्तबलाद् लोकानां पुरतः, स्वामिनोऽग्रे च स्वप्नफलानि उक्तानि–प्रथमं हे स्वामिन् ! त्वया ताडप्रमाणः पिशाचो हतस्तेन मोहं हनिष्यसि, २–श्वेतकोकिलादर्शनात् शुक्लध्यानं ध्यायसि, ३–विचित्रा पञ्चवर्णमयी कोकिला दृष्टा तेन अर्थरूपां द्वादशाङ्गीं प्रकाशयिष्यसि, ४–पुष्पमालाद्वयदर्शनात् साधुधर्मम्, श्रावकधर्मं प्रकाशयिष्यसि, ५–गवां वर्गदर्शनात् चतुर्विधसङ्घं स्थापयिष्यसि,

६–मानससरोदर्शनाद् देवाः सेवां करिष्यन्ति, ७–समुद्रदर्शनात् संसारं तरिष्यसि, ८–सूर्यदर्शनात् केवलज्ञानं प्राप्स्यसि, ९–अन्त्रजालेन मनुष्यक्षेत्रं वेष्टितं तेन प्रतापवान् भविष्यसि, १०–मेरुदर्शनात् सिंहासने स्थित्वा धर्मोपदेशं दास्यसि। इति उत्पलवचनं श्रुत्वा लोकाः वन्दनां कृत्वा स्वस्थानं जग्मुः। भगवता तत्र पञ्चदशादिनैः ऊना चातुर्मासी निर्विघ्नेन कृता, ततश्चतुर्मास्याः पारणे विहृत्य स्वामी 'मोराकसंनिवेशे' गतः, तत उद्याने कायोत्सर्गे स्थितः। तत्र च भगवतो माहात्म्यवृद्ध्यर्थं स्वामिशरीरे सिद्धार्थः आवेशं कृत्वा भूत–भविष्यत्–वर्तमाननिमित्तं वदति–लोकाः स्वामिनः सेवां कुर्वन्ति, तदा तत्र ग्रामे 'अछन्दको' नाम एको निमित्तकोऽस्ति, स च अमर्षवशात् स्वामिसमीपे आगत्य एकं तृणं गृहीत्वा प्रश्नं चकार। भो आर्य! एतत् तृणं त्रुटिष्यति न वा, एतादृशीं मस्करीं चकार। तदा सिद्धार्थेन उक्तं तृणं न त्रुटिष्यति, तेन यदा त्रोटितुं प्रारब्धं तावद् इन्द्रेण आगत्य तस्याङ्गुली त्रोटिता, स्तम्भिता च। सिद्धार्थेन पुनर्लोकानां पुरत उक्तम्–चौरोऽयम् अच्छन्दकः–वीरघोषकर्मकरस्य कांस्यपात्रं चोरयित्वा शरधूवृक्षस्य मूले निखातम् अस्ति। इन्द्रशर्मब्राह्मणस्य छागं हत्वा तन्मांसं भुक्त्वा तदस्थीनि गृहपश्चाद्भागे बदरीवृक्षमूले निखातानि सन्ति। तृतीयं कर्म अस्यैव स्त्री जानाति, अहं किं वदामि; तदा स्त्रिया उक्तं भगिन्याः पतिरयम्। इति श्रुत्वा अछन्दको लज्जितः, एकान्ते आगत्य स्वामिनं प्राह–स्वामिन्! भवतां बहूनि स्थानानि सन्ति, यूयम् अन्यत्राऽपि यास्यथ, परम् अहं क्व व्रजामि। भगवता अप्रीतिं ज्ञात्वा ततो विहृतम्—

तए णं समणे भगवं महावीरे संवच्छरं साहियं मासं जाव चीवरधारी होत्था, तेण परं अचेलए पाणिपडिग्गहिए। समणे भगवं महावीरे साइरेगाइं दुवालस वासाइं निच्चं वोसट्ठकाए चियत्तदेहे जे केइ उवसग्गा उप्पज्जंति, तं जहा—दिव्वा वा, माणुसा वा, तिरिक्खजोणिआ वा, अणुलोमा वा, पडिलोमा वा, ते उप्पन्ने सम्मं सहइ, खमइ, तितिक्खइ, अहियासेइ ॥ ११५ ॥

ततः श्रमणो भगवान् महावीर एकवर्षमासेनाऽधिकं यावद्देवदूष्यवस्त्रधारी आसीत्, ततः परं वस्त्ररहितः, पाणिपात्रश्च बभूव। परं भगवतोऽयम् अतिशयो भगवान् नग्नो न दृश्यते, तथा एकदा श्रीसिद्धार्थस्य राज्ञो मित्रब्राह्मणो हि सोमभट्टः एको यदा स्वामिना सांवत्सरिकं दानं दत्तं तदा स भिक्षार्थं देशान्तरे गत आसीत्। भगवद्दीक्षाग्रहणाऽनन्तरं तेन ब्राह्मणेन दरिद्रेण स्वगृहे यथागतं तथाऽऽगतम्, तदा स ब्राह्मणः स्वस्त्रिया बाढं निर्भर्त्सितः—अरे निर्भाग्यशिरोमणे!

जत्थ गओ तत्थ गओ पड्डुरओ पाणीयं वहइ। कप्पासो वि य विउलो लोढिज्जइ जह तह जणेण ॥ १ ॥

१. यत्र गतस्तत्र गतः पड्डुरकः पानीयं वहति। कर्पासोऽपि च विपुलो लोढ्यते यथा तथा जनेन ॥

पड्डुरको यत्र गतस्तत्र गतश्च पानीयं वहति, कर्पासोऽपि यत्र गच्छति तत्र विलोढ्यते। तव पश्चाद् दारिद्र्यं पतितमस्ति, तव केटकं न मुञ्चति। यथा कश्चिद् आजन्मदरिद्रः पुमान् द्रव्यार्थम् उद्यमं कृत्वा देशान्तरं प्रति प्रचलितस्तदा दारिद्र्यं प्रति एकं दोधकं प्राह—

रे दारिद्द! विअक्खण! वत्ता इक्क सुणिज्ज। हम देसंतरि चल्लिया तुं घरि भल्ला हुज्ज ॥ १ ॥

तदा तम् आजन्मपुरुषं प्रति दारिद्र्यमपि अवादीत्—

पडिवन्नउ गुरुआं तणउ पालिज्जइ सुविहाण। तुम देसंतरि चल्लियां हमहीं आगेवाण ॥ २ ॥

एतावता निर्भाग्यस्य दारिद्र्यं सार्थे एव। यतो भाग्यहीनश्चेत् क्षेत्रीं करोति तदा वृषभाः म्रियन्ते, वर्षा न भवन्ति। भाग्यहीनश्चेद् भोजनार्थं निमन्त्र्यते तदा तावद् रुष्यति, चेद् नो रुष्यति भोजनं भुङ्क्ते तदा मक्षिकया वमति; इति निर्भाग्यानाम् उपाख्यानानि सन्ति तथा त्वमपि। अत्र यदा वर्धमानः सुवर्णधाराभिः ववर्ष तदा त्वं देशान्तरे गतः। याहि रे! अद्यापि स वर्धमानो दयालुर्दाता निर्धनोऽस्ति तथाऽपि ते किमपि दास्यत्येव, यथा



---

१ दारिद्र्य ! विचक्षण ! वार्तामेकां शृणु। वयं देशान्तरं चलितास्त्वं गृहे चारु भवेः। २ प्रतिपन्नं गुरोः पाल्यते सुविधानम्। त्वं देशान्तर चलितोऽहमपि अग्रेवानः ॥

शुष्कम् अपि नदीस्थानं खन्यते तत्र जलं निस्सरति, सार्द्रमपि मरुस्थलं न जलाय भवति। तथा किम् अन्यकूप-णानां याचनेन? इति स्त्रिया प्रेरितो ब्राह्मणो भगवत्समीपे आगत्य स्वदीनत्वं दर्शयित्वा भगवतः समीपे धनं मार्ग-यामास। तदा स्वामिना कृपां कृत्वा स्कन्धस्थदेवदूष्यवस्त्रस्याऽर्धं स्फाटयित्वा ब्राह्मणाय प्रदत्तं–दानं दर्शितम्, सोऽपि ब्राह्मणः तद् वस्त्रं लात्वा स्वनगरे समागत्य तूनकरान् दर्शयामास। तदा तैरुक्तम्–यदा एतद् वस्त्रं पूर्णं भवति तदाऽस्य लक्षदीनारमूल्यं समायाति, अर्धाऽर्धं विभज्य गृह्यते, तेन अस्य अपरम् अर्धं त्वया आनेतव्यम्। तत् श्रुत्वा स ब्राह्मणो भगवत्समीपे मार्गणार्थं नाऽऽयाति, मनसि लज्जते, इदानीम् एव मया स्वामी याचितः, वस्त्रार्धं गृहीत्वा अहम् आगतोऽस्मि, पुनरपि चेत् याचयिष्यामि तदा अतिलोभितया मम लज्जा यास्यति। एवं ज्ञात्वा स्वामिनः पृष्ठे २ भ्रमति। मनसि एवं जानाति चेत् कुत्रचित् भगवतः स्कन्धात् कदाचित् वस्त्रं पतिष्यति तदाऽहं लात्वा यास्यामीति। एवं चिन्तयता पृष्ठे भ्रमता तेन ब्राह्मणेन एकदा तद्देवदूष्यार्द्धं स्वामिनः स्कन्धात् वातेनोड्डीय उत्तरचावालग्रामपार्श्वे स्वर्णवालुकानदीतटे बदरीवृक्षस्य कण्टकेन लग्नं पतितं दृष्टम्। त्वरितं ब्राह्मणो गृहीत्वा गृहाय चलितः। भगवता पश्चाद्विलोकितं मद्वस्त्रं कुत्र पतितं तदा कण्टकस्थाने पतितम्। तदा स्वामिना ज्ञातं मम पृष्ठे ये साधवो भविष्यन्ति ते कलहकाराः, डमरकराः, असमाधिकराः भविष्यन्ति। बहवो मुण्डा अल्पे श्रमणाः। ब्राह्मणेन तद्वस्त्रं तूणकारपार्श्वात् तूणाप्य विक्रीय तदर्द्धमूल्यं अर्द्धलक्षदीनारद्रव्यं प्राप्तम्, अर्द्धलक्षं

तूणकारेण गृहीतम्, एवं द्वयोरपि दारिद्र्यं गतम्। ततः पश्चात् स्वामी अचीवरधारी जातः। अन्ये तीर्थकराः सर्वेऽपि यावज्जीवं सचीवराः संजाताः–देवदूष्यवस्त्रसहिताः। अथ महावीरस्वामिनः प्रथमं पारणं कांस्यपात्रे सञ्जातं तेन स्वामिना सपात्रधर्मो दर्शितः। श्रमणो भगवान् महावीरो द्वादशवर्षाणि षण्मासैः पञ्चदशदिनैश्च अधिकानि

---

१ एकदा विहरतो भगवतः कदाचिद् गङ्गातटे सूक्ष्ममृत्तिकाप्रतिबिम्बितपदपङ्क्तिषु चन्द्र–ध्वज–अङ्कुशादीनि लक्षणानि निरीक्ष्य पुष्यनामा सामुद्रिकश्चिन्तयामास–यदयं एकाकी कोऽपि चक्रवर्ती गच्छति, तत्र गत्वा अस्य सेवां करोमि यथा मम महानुदयो भवति इति त्वरितं पदानुसारेण भगवत्पार्श्वमागतो भगवन्तं निरीक्ष्य दध्यौ, अहो! मया वृथैव महता कष्टेन सामुद्रिकमधीतम्। यदि ईदृग्लक्षणलक्षितोऽपि श्रमणो भूत्वा व्रतकष्टं समाचरति तदा सामुद्रिकपुस्तकं जले क्षेप्यमेव, इतश्च दत्तोपयोगः शक्रः शीघ्रं तत्राऽऽगत्य भगवन्तं अभिवन्द्य पुष्पं उवाच, भोः! भोः! सामुद्रिक! मा विषीद सत्यमेवैतत् तव शास्त्रं यदयं अनेन लक्षणेन जगत्त्रयस्यापि पूज्यः, सुरासुराणां अपि स्वामी सर्वोत्तमसंपदाश्रयः तीर्थेश्वरो भविष्यति। किंच–"कायः स्वेदमलामय–विवर्जितः श्वासवायुरपि सुरभिः। रुधिरामिषमपि धवलं गोदुग्ध-सहोदरं नेतुः ॥ १ ॥" इत्यादीन्यपरिमितानि अस्य बाह्याभ्यन्तराणि लक्षणानि केन गणयितुं शक्यानि? इत्यादि वदन् पुष्पं मणि–कनकादिभिः समृद्धिपात्रं विधाय शक्रः स्वस्थानं ययौ, सामुद्रिकोऽपि प्रमुदितः स्वदेशं गतः ॥

यावन्नित्यं व्युत्सृष्टकायः, त्यक्ततनुशुश्रूषः आसीत्, त्यक्तदेहोऽभूत्, ये केचित् उपसर्गा उत्पद्यन्ते—ते के उपसर्गाः? ये दिव्याः देवसंबन्धिनः, मनुष्यसंबन्धिनः, तिर्यग्योनिजाः। अनुलोमा देवाङ्गनानां नाटकप्रेक्षणाऽऽलिङ्गनादिकाः। प्रतिलोमा अट्टहासादिसूचकाः, भयङ्कराः, तान् उपसर्गान् सत्येन मनसा सहते भयं नानयति, क्रोधाभावेन क्षमते, कस्याऽप्यग्रे दीनवाक्यं न ब्रूते, निश्चलकायेन अध्यासयति। अथ भगवता उत्तरचावालग्रामस्य पार्श्वे कनकखलनाम्नि वने चण्डकौशिकसर्पः प्रतिबोधितः। स च सर्पो मृत्वा ८ सहस्रारदेवलोके देवो जातः। ततो विहृत्य श्वेताम्बिकायां स्वामी गतस्तत्र प्रदेशी राजा केशिकुमारस्य श्रावकोऽस्ति, तेन भक्तिः कृता।

---

१ स च सर्पः प्राग्भवे एकः कश्चित् महातपस्वी मासक्षमणपारणायां भिक्षार्थं भ्रमन् पादेन प्रमादेन मण्डुकीं दूषयति स्म। सा च मण्डुकी पुरा कस्यचित्पादेन दूषिता वा साधोः पादेन दूषिता, परं तस्य पश्चाद् गामिना लघुशिष्येण दूषिता दृष्टा। यदा स साधुः स्वस्थाने समागतस्तदा लघुशिष्येणोक्तम्—स्वामिन्! मण्डुकीविराधनायां मिथ्यादुष्कृतं दातव्यम्। तेन साधुना तद् वाक्यं न धृतम्। पुनः लघुशिष्येण संध्यासमये आलोचनाकाले स्मारितम्। साधुना पुनर्न धृतं, लघुशिष्येण पुनः रात्रौ संस्थारकगाथासमये प्रोक्तम्। श्रुत्वा क्रुद्धस्य लघुशिष्यं मारणाय धावतो रात्रौ स्तम्भेन शिरो भग्नं। तद्वेदनाया मृत्वा नरकं ययौ। द्वितीयभवे तापसो जातः। तत्राऽपि स्ववने आगतान् राजकुमारान् त्रासयितुं

ततः सुरभिपुरीं प्रति गतः। भगवतो मार्गे गङ्गानदीं नावा उत्तरतः त्रिपृष्ठभवे हतस्य सिंहस्य जीवो मृत्वा जातो नागकुमारः सुदाढनामा, पूर्ववैरेण नावं ब्रोडयन् जिनदासश्राद्धस्य सम्बलकम्बलयोः बलीवर्दयोः जीवदेवाभ्यां स निवारितः। अथ द्वितीया चतुर्मासी स्वामिना राजगृहनगरे नालन्दपाटके वणकरशालायां मासक्षमणं कुर्वता

---

पर्शुं गृहीत्वा पृष्ठे धावन् पादस्खलनात् स्वपर्शुप्रहारेण आर्त्तध्यानात् मृत्वा तृतीयभवे जातश्चण्डकौशिकः। स च प्रभुं प्रतिमास्थं विलोक्य क्रुधा ज्वलन् सूर्यं दृष्ट्वा २ दृष्टिज्वालां मुमोच। तथापि भगवान् तथैव तस्थौ। ततो भृशं क्रुद्धो भगवन्तं ददंश। तथापि भगवन्तं अव्याकुलम् एव दृष्ट्वा भगवद्रुधिरं च क्षीरसहोदरं दृष्ट्वा "बुज्झ बुज्झ चण्डकोसिअ!" इति भगवद्वचनं श्रुत्वा जातजातिस्मृतिः प्रभुं त्रिः प्रदक्षिणीकृत्य अहो! अहं करुणासमुद्रेण भगवता दुर्गति-कूपाद् उद्धृतः इत्यादि मनसा विचिन्तयन् वैराग्यभावाद् अनशनं कृत्वा पक्षं यावद् बिले मुखं प्रक्षिप्य स्थितस्तदा लोकैः घृतादिविक्रायिकाभिर्घृतादिभिः पूजितो, ततः घृतगन्धागतपीपिलिकाभिर्भृशं पीड्यमानः प्रभुदृष्टिसुधावृष्ट्या सिक्तो समताभावेन मृत्वा अष्टमदेवलोके देवो जातः॥

१ तयोरुत्पत्तिः एवम्—मथुरायां साधुदासीजिनदासौ दम्पती परमश्रावकौ पञ्चमव्रते सर्वथा चतुष्पदप्रत्याख्यानं चक्रतुः, तत्र च एका आभीरी स्वकीयं गोरसं आनीय साधुदास्यै ददाति, सा च यथोचितं मूल्यं ददाति, एवं च

कृता। तत्र गोशालको मङ्खलीपुत्रः भिक्षां मार्गयन् समागतः, भगवतः पारणमहिमानं दृष्ट्वा भगवन्तं एवं उक्त्वा पार्श्वे स्थितः—स्वामिन्! अहं त्वत्—शिष्यो भवामि, स्वयमेव दीक्षां गृहीत्वा सार्थे भ्रमति। अथैकदा स्वामी

---

कालेन तयोः अत्यन्तं प्रीतिर्जाता, एकदा तया आभीर्या विवाहे निमन्त्रितौ तौ दम्पती ऊचतुः, यदुत भो ! आवाभ्यां आगन्तुं न शक्यते । परं यद्भवतां विवाहे युज्यते तद् अस्मद्गृहाद् ग्राह्यं, ततो व्यवहारिदत्तैश्चन्द्रोदयादिउपकरणै-र्वस्त्राभरणधूपादिभिश्च स आभीरविवाहो अत्यन्तं उत्कृष्टो जातः, तेन प्रमुदिताभ्यां आभीराभ्यां अतिमनोहरौ समा-नवयसौ बालवृषभौ आनीय तयोः दत्तौ, तौ न इच्छतः। बलाद् गृहे बद्ध्वा तौ स्वगृहं गतौ । व्यवहारिणा चिन्तितं यदि इमौ पश्चात् प्रेषयिष्येते तदा खण्डिकरणभारोद्वहनादिभिर्दुःखिनौ भविष्यतः, इत्यादि विचिन्त्य प्रासुकतृणज-लादिभिः तौ पोष्यमाणौ वहनादिश्रमवर्जितौ सुखं तिष्ठतः; अन्यदा अष्टम्यादिषु कृतपौषधेन तेन श्रावकेण पुस्त-कादि वाच्यमानं निशम्य तौ भद्रकौ जातौ, यस्मिन् दिने स श्रावक उपवासं करोति; तस्मिन् दिने तौ अपि तृणादि न भक्षयतः, एवम् तस्य श्रावकस्याऽपि साधर्मिकत्वेन अत्यन्तं प्रियौ जातौ। एकदा तस्य जिनदासस्य मित्रेण तौ अतिबलिष्ठौ सुन्दरौ च वृषौ विज्ञाय श्रेष्ठिनं अनापृच्छ्य एव भण्डीरवनयक्षयात्रायै अदृष्टधुरौ अपि तथा वाहितौ यथा त्रुटितौ। आनीय तस्य गृहे बद्धौ । श्रेष्ठी तौ तदवस्थौ विज्ञाय साश्रुलोचनो भक्तप्रत्याख्याननमस्कारदानादि-

सुवर्णखलग्रामं याति, तत्र गोपैः पायसं पच्यमानं दृष्ट्वा गोशालः प्राहः—एभिर्भोक्ष्यते ? सिद्धार्थेनोक्तं हण्डिकायाः भङ्गो भावी। तैस्सुरक्षिताऽपि भग्ना। तं दृष्ट्वा यद्भाव्यं तद्भवत्येव इति मतं अङ्गीकृतम्। ततो ब्राह्मणग्रामे द्वौ पाटकौ स्तः। तत्रैको नन्दस्य, द्वितीय उपनन्दस्येति। नन्देन स्वामी प्रतिलाभितः। उपनन्देन गोशालः—परं पूतिपर्युषिताऽन्नं दत्तम्। ततो रुष्टेनोक्तं—मम धर्माचार्यतपःप्रभावात् दह्यतां उपनन्दस्य गृहम्। तथैव जातम्। तृतीयचतुर्मासीं चम्पायां स्थितः स्वामी। ततः कालायसन्निवेशे शून्यगृहे सिंहाख्यो ग्रामणीपुत्रः गोमत्या दास्या सह रमन् गोशालेन हसितः, तेन कुट्टितः। तदा स्वामिनं प्रति प्राह—आर्य ! किं न निवारयति ? सिद्धार्थः प्राह—मैवं कुर्याः। एकदा स्वामी कुमारकसन्निवेशे गतः, तत्र श्रीपार्श्वनाथशिष्यो मुनिचन्द्रोऽस्ति। तच्छिष्यान् दृष्ट्वा गोशालः प्राह—के यूयं ? तैरुक्तं—वयं निर्ग्रन्थाः। गोशालः प्राह—क्व यूयं ? क्व मम धर्माचार्यः ?—मेरुसर्षपयोरन्तरम्। तदा तैरुक्तं—यादृशस्त्वं तादृशस्तव धर्माचार्योऽपि भविष्यति। गोशालेनोक्तं मम धर्माचार्यतपसा

---

भिर्निर्यामितवान्। ततो तौ मृत्वा नागकुमारौ देवौ जातौ। तयोश्च नवीनोत्पन्नयोः दत्तोपयोगयोरेकतरेण नौ रक्षिता, अन्येन च प्रभुं उपसर्गयन् सुदंष्ट्रसुरः प्रतिहतः, ततस्तं निर्जित्य भगवतः सत्त्वं रूपं च गायन्तौ नृत्यन्तौ सहमहोत्सवं सुरभिजलपुष्पवृष्टिं कृत्वा तौ स्वस्थानं गतौ ॥

दह्यतां युष्मदुपाश्रयः । परं तेषां उपाश्रयो न दग्धः । गोशालेन स्वाम्यग्रे प्रोक्तं–अद्य कल्ये स्वामिन् ! किञ्चित्तव तपसि न्यूनता दृश्यते । यतो न दग्धस्तेषां उपाश्रयः । तदा सिद्धार्थेनोक्तम्–साधवो न दह्यन्ते–रात्रौ जिनकल्पतुलनां कुर्वन् प्रतिमास्थो मुनिचन्द्रो मत्तेन कुम्भकारेण व्यापादितः–स्वर्गं गतः । महिमार्थमायातसुरोद्द्योतं दृष्ट्वा दह्यते तेषां उपाश्रयः । सिद्धार्थेन यथार्थकथने तत्र गत्वा तत्–शिष्यान् निर्भर्त्स्य आयातः । ततः स्वामी चौरायां गतः, हेरकौ एतौ वर्तेते इति कृत्वा लोकैः स्वामिगोशालकौ कूपे प्रक्षिप्तौ । पूर्वं गोशालः प्रक्षिप्तः, ततः स्वामी । तदा तत्र सोमानाम्नी, तथा जयन्तीनाम्नी श्रीपार्श्वनाथशिष्या(णी) मुक्तसाधुवेषा तिष्ठति, ताभ्यां मोचितौ । ततः स्वामी पृष्ठचम्पां गतः, चतुर्थचतुर्मासीं स्थितः, तत्र प्रतिदिनं जीर्णश्रेष्ठिनिमन्त्रितेनाऽपि प्रभुणा अभिनवश्रेष्ठिगृहे पारणं कृतम् । ततः कयंगले गतः । माघमासे स्थविरा दरिद्रा जागरणादिने गायन्ति, गोशालो हसति, कुट्टितः, आर्यशिष्य इति मुक्तः । ततः श्रावस्त्यां गतः, तत्र पितृदत्तः श्रेष्ठी, तस्य भार्या श्रीभद्रा निन्दू वर्तते, मृतमेव पुत्रं प्रसूते । तया शिवदत्तनैमित्तिकवचसा स्वापत्यजीवनाय गर्भमांसमिश्रं पायसं गोशालाय दत्तम् । सिद्धार्थवचसा वमनेन ज्ञातम् । तदा रुष्टेन गोशालकेन पाटकेन सहितं तस्याः गृहं स्वामितपसा प्रज्वालितम् । एकदा बहुनिर्जरार्थं लाढाविषये स्वामी प्राप्तः । अन्तरा द्वौ चौरौ मिलितौ, स्वामिनं मारणाय खड्गमुत्पाट्य धावितौ, प्राणान्तोपसर्ग इति ज्ञात्वा इन्द्रेण हतौ । ततः स्वामी भद्रिकायां पञ्चमचतुर्मासीं

स्थितः । एकदा कूपकसंनिवेशं गतः, हेरक इति कृत्वा गृहीतः, विजयाख्यपार्श्वनाथशिष्यया(ण्या) स्वामी मोचितः । ततो गोशालः पृथग् भूतः । अथ यत्र यत्र गोशालो याति तत्र तत्र मार्यते, ततो गोशालश्चिन्तयति स्म । वरं स्वामिना एव सार्द्धं इति स्वामिनं मार्गयितुं लग्नः । स्वामी वैशाल्यां गतः । तत्र लोहकारशालायां स्थितः । तत्र बहुभिर्दिनैः लोहकारः शालायां आगतः स्वामिनं दृष्ट्वा मुण्डोऽयम्–अमङ्गलोऽयम्–इति कथयित्वा लोहघनेन हन्तुं प्रवृत्तः, तत इन्द्रेण स हतः । षण्मासान्ते गोशालो मिलितः । ततः स्वामी भद्रिकायां गतः, षष्ठीं चतुर्मासीं स्थितः, तदा अष्टमासं यावत् निरुपसर्गः, ततः सप्तमीं चतुर्मासीं आलम्भिकायां देवकूले स्थितः, गोशालः तत्र बलदेवस्य प्रतिमामुखे लिङ्गं घर्षयति, ततः कुट्टितः । एकदा दन्तुरवरवधूहसनम्–अहो ! दैवे प्रसन्ने सदृशः संयोगो मिलितः–यथा अनयोः । तदा तैः कुट्टितः । एकदा बहुशालग्रामे शालवनोद्याने माघमासे प्रतिमया तस्थौ । तत्र तिपृष्ठभवे अपमानिता स्त्री सा कटपूतनाव्यन्तरी जाता, तया तापसीरूपं कृत्वा जलभृतजटाभिः अन्यदुःसहः शीतोपसर्गः चक्रे, तथापि प्रभुं निश्चलं विलोक्य उपशान्ता स्तुतिं चकार । प्रभोश्च तं सहमानस्य षष्ठेन तपसा विशुद्ध्यमानस्य लोकावधिः उत्पन्नः । तदा शीतोपसर्गादिविघ्नोपशमे महिमा कृता देवैः । एकदा पुरमताले नगरे गतः, शकटमुखोद्यानस्य पुरस्य च अन्तराले प्रतिमया तस्थौ । तदा तत्र नगरे वग्गुरिश्रेष्ठी, तस्य भार्या सुभद्रा, ताभ्यां उद्यानस्थस्य श्रीमल्लिजिनस्य प्रासादं पुत्राय नवीनं मानितमा-

सीत् । तयोः पुत्रो जातोऽस्ति । तदा ताभ्यां दम्पतीभ्यां नवीनं प्रासादं कारितमस्ति । नित्यं पूजां कुरुतः । एकदा तौ पूजां कर्तुं यदा गच्छतः तदा एव स्वामी तत्र मार्गे स्थितोऽस्ति । इन्द्रो भगवन्महिमार्थं श्रेष्ठिनं प्रत्यवादीत्–भोः श्रेष्ठिन् ! यस्य त्वया पूजा क्रियते तं त्वां प्रत्यक्षं दर्शयामीत्युक्त्वा श्रेष्ठिनं भगवतः पादयोर्नामयति स्म । श्रेष्ठी अपि भगवन्तं भावशुद्ध्या पूजयामास । ततो मल्लिजिनप्रतिमां पूजयामास, ततो राजगृहे अष्टमचतुर्मासीं स्वामी स्थितः । ततो अनार्यदेशे नवमीं चतुर्मासीं स्थितः । तत्र बहवो ह्युपसर्गाः बभूवुः । ततः सिद्धार्थपुरात् एकदा कूर्मग्रामं स्वामी प्रस्थितः, मार्गे एकं तिलस्याङ्कुरितं दृष्ट्वा स्वामिनं पप्रच्छ–स्वामिनोक्तम्–सप्त पुष्पजीवाः भविष्यन्ति एकत्वेन । ते च जीवास्तिलत्वेन भविष्यन्ति । स्वामिवचनं अन्यथा कर्तुं स तिल उन्मूलितोऽपि वृष्टियोगात् गोक्षुरेण पृथिव्यां क्लिन्नो निष्पन्नः । व्याघुट्यमानेन गोशालेन पृष्टं क स तिलः ? स्वामिना स एव तिलो दर्शितः । स्वामिना तत्स्वरूपं कथितं च, गोशालः–प्रत्ययं चकार–यद्भाव्यं तद्भवत्येव इति गोशालकमतम् । एकदा मगधदेशे राजगृहचम्पानगर्योरन्तराले शुबरग्रामे कोशम्बीनामा कौटम्बिकोऽस्ति । तेन कौटम्बिना स्वकीयग्रामस्य पार्श्वे बहिर्भ्रमता एको बालकः प्राप्तः, एकस्तत्र समीपस्थो ग्रामः कटकेन भग्नः, तत्रस्था लोका दशादिशं नष्टाः, तदा एका स्त्री पुत्रसहिता प्रणष्टा, स्त्री चौरैः गृहीता, बालः पुत्रो रुदन् तेन कौशम्बिनामा कौटम्बिकेन गृहीतः, कौटम्बिकेन पुत्ररहितेन पुत्रीकृत्य स बालो वर्द्धितोऽनुक्रमेण यौवनं प्राप्तः ।

तन्माता चौरैर्गृहीत्वा चम्पायां वेश्याय विक्रीता। सा वेश्या जाता। दैवयोगात् स कौटम्बिकपुत्रो व्यापारार्थं चम्पायां आगतोऽजानन् स्वजनन्या वेश्यया सहाऽऽसक्तो जातोऽस्ति। गोत्रदेव्या गो-वत्सयोः मैथुनं दर्शयित्वा देववाण्या प्रतिबोधितः। तदा सर्वं त्यक्त्वा स तापसो जातः। नाम्ना वैश्यायनऋषिः। स कुर्मग्रामे आतापनाम्, अधोमुखो अग्निमध्ये झम्पाम्, धूम्रपानं कुर्वन् मुहुर्मुहुः स्वजटायुकां चिन्वन् जटासु एव पुनः क्षिपन् गोशालेन यूकाशय्यातरोऽयं यूकाजालोऽयं कृत्वा हसितः। तदा तेन तपस्विना रुष्टेन तस्मै तेजोलेश्या मुक्ता। स्वामिना शीतललेश्यया रक्षितः। ततः गोशालेन सिद्धार्थः पृष्टः-भोः सिद्धार्थ! एषा तेजोलेश्या कथं सिध्यति? तदा सिद्धार्थेन तत्साधनोपायः कथितः। दशमीचतुर्मासीं स्वामी श्रावस्त्यां स्थितस्तत्र गोशालेन तेजोलेश्या साधिता। एकमुष्टिः कुल्माषवकुलिकाभक्षणं, उपरि त्रिचलुकमम्बुपानं, आतापनं सूर्यसन्मुखं षण्मासं यावदेव कर्तव्यं इति विधिना सिद्धा गोशालस्य तेजोलेश्या। ततः पुनः गोशालेन अष्टाङ्गनिमित्तं शिक्षितम्। अजिनोऽपि अहं जिनोऽस्मि इति लोकानां पुरतः प्रलपति। ततः पृथग् भ्रमति। अथैकदा स्वामी म्लेच्छदेशे गतः। तत्र कुकुराणां बहव उपसर्गाः सोढाः। ततो दृढभूमिकायां पेढालग्रामस्योद्याने पोलासनाम्नि कस्यचिद्देवस्य चैत्ये स्वामी एकरात्रिकीं प्रतिमां स्थितः। तस्मिन् समये इन्द्रेण स्वामिनो धीरत्वं प्रशंसितं तत् श्रुत्वा सङ्गमो नाम इन्द्र-सामानिकदेव इन्द्रस्य वचनं अश्रद्दधानः स्वामिनं क्षोभयितुं आगतः। एकस्यां रात्रौ विंशतिरुपसर्गाः कृताः। ते

प्रोच्यन्ते–प्रथमं धूलिवृष्टिः १, पश्चात् वज्रमुखीकीटिकाभिः शरीरचुण्टनं २, वज्रमुखैर्दंशकैश्चुण्टनं ३, घृतवल्लिकीटिभिश्चुण्टनं ४, वृश्चिकविकुर्वणं ५, सर्पैर्दशनं ६, नकुलैर्नखमुखैर्विदारणं ७, उन्दुरैर्दशनं ८, करिकरिणीभ्यां उल्लालनं ९, दन्तपादाभ्यां मर्दनं १०, पिशाचरूपैर्भापनं ११, व्याघ्रैः फालं विस्तार्य भापनं १२, माता आगत्य जल्पति–पुत्र ! किमर्थं दुःखी भवसि, अहं तव जननी समागताऽस्मि, त्वं मम सार्थे समागच्छ, त्वां सुखिनं करिष्यामि इति १३, कर्णयोः तीक्ष्णमुखपक्षिपञ्जरबन्धनं १४, पक्कणश्चाण्डाल आगत्य परुषवचनैस्तर्जयति १५, उभयोः पादयोरुपरि क्षैरेयीहण्डिकाम् आरोप्य अग्निं प्रज्वाल्य क्षैरेयीपाचनं १६, खरकठोरवायुविकुर्वणं १७, कलङ्कलिकावातवायुना शरीरं उत्पाट्य उत्पाट्य भूमौ पातनं, चक्रवायुः चक्रवत् शरीरं भ्रामयति १८, सहस्रभारप्रमाणलोहगोलकस्य भगवन्मस्तकोपरि मोचनं तेन कटीं यावत् भूमौ क्षुभनं जातम्, अन्यस्य शरीरं चेद् भवति तदा चूर्णं जायते परं तीर्थङ्करशरीरत्वात् न किमपि जातं १९, विंशतितमश्च अयं उपसर्गः–रात्रौ सत्यामपि प्रभातं जातं कश्चिद्वदति आर्य ! प्रभातं जातमस्ति विहारं कुरु, किं अद्यापि स्थितोऽसि, तदा स्वामी ज्ञानेन जानाति–रात्रिरस्ति, किञ्चिद् देवचरित्रं दृश्यते। पुनर्देवः स्वकर्द्धिं विकुर्व्य स्वामिनं प्राह–हे आर्य ! वरं याचय, स्वर्गं चेत् प्रार्थयसि तदा स्वर्गं ददामि, देवाङ्गनां ददामि, इति श्रुत्वाऽपि न क्षुब्धो भगवान्, एते (२०) विंशतिरुपसर्गाः कृताः–एकस्यां रजन्यां विहिताः। तदनन्तरम् ग्रामे आहारम् अशुद्धं करोति, चौरस्य कलङ्कं ददाति, कुशिष्यरूपं कृत्वा

गृहे गृहे छिद्राणि पश्यति। यदा जनाः पृच्छन्ति तदा वदति मद्गुरुर्निशायां चौर्यार्थं समेष्यति। तेन छिद्रं पश्यामि पश्चाद् जनास्ताडयन्ति एवं कृत्वा जनेभ्यस्ताडनां कारयति, तदा भगवता अभिग्रहो गृहीतः, यावद् उपसर्गनिवृत्तिर्न भवेत् तावदाहारं न गृह्णामि, एवं षण्मासं यावत् सङ्गमेन उपसर्गाः कृताः। इन्द्रेण स न निषिद्धः, इन्द्रेण इति ज्ञातं चेद् एनं अहं निषेधयिष्यामि तदा अयं वक्ष्यति—अहं भगवन्तं अक्षोभयिष्यं परं भगवताऽहं निषिद्धः। तेन सङ्गमः इन्द्रेण न निषिद्धः, परं यावत् स्वामिनं स उपसर्गान् अकरोत् तावद् इन्द्रो निरुत्साहोऽभूत्। अन्ये देवाः देवाङ्गनाश्च सशोका बभूवुः। षण्मासान्ते स देवः स्वयमेव खिन्नो भूत्वा स्वर्गमागतस्तदा इन्द्रेण स्वर्गान्निष्कासितः। स स्वदेवाङ्गनां लात्वा मेरुचूलायां गतः। एकसागरोपमायुष्कोऽस्ति। एवं दशवर्षमध्ये बहवः उपसर्गा उत्पन्नाः—सोढाः। षाण्मासिकस्य पारणं वज्रग्रामे गोपालकस्य गृहे परमान्नेन भगवतो जातं। देवैस्तत्र महिमा कृता। सर्वैर्देवैः इन्द्रादिभिः स्वामिनः सुखतपः—पृच्छा कृता। तत एकादशीचतुर्मासीं वैशाल्यां स्थितः। तदा सुंसुमारपुरे चमरेन्द्रोत्पातः सञ्जातः। अस्मिन् अवसरे कौशाम्बीनगर्यां पोषवदिप्रतिपद्दिने स्वेच्छयाऽभिग्रहो गृहीतः—यदा राज्ञः पुत्री बन्दिमध्ये पतिता, पादयोः शृङ्खलया झटिता, मस्तके मुण्डिता, त्रिदिनं यावत् क्षुधया क्षामा, रुदती, अश्रुपातं कुर्वती, चरणयोरन्तराले देहलीं कृत्वा एतादृशी सती प्रहरद्वयादनन्तरं कुल्माषबकुलान् दद्यात् तदा पारणं करोमि इत्यभिग्रहो भगवता गृहीतः। एवं

अभिग्रहे गृहीते चत्वारो मासा ययुः । तस्मिन् समये कौशाम्ब्या अधिपेन शतानीकेन चम्पा नगरी भग्ना । दधिवाहनराजा नष्टः, दधिवाहनस्य राज्ञी धारिणी, चन्दनबाला पुत्री वर्त्तते । द्वे अपि केनचित्पदातिना बन्दि-तया गृहीते, राज्ञी जिह्वां खण्डयित्वा मृता, चन्दना धनश्रेष्ठिनः विक्रीता, श्रेष्ठिना गृहे आनीता । श्रेष्ठिगृहे मूलानाम्नी स्त्री वर्त्तते । तया चन्दना दृष्टा, तदा ज्ञातं अहं वृद्धा जाता, श्रेष्ठी अनया भोगं भोक्ष्यति इति ज्ञात्वा एकदा श्रेष्ठिनि कुत्रचित्कार्यगते सति पश्चात् चन्दनां गृहीत्वा, मस्तकं मुण्डाप्य, पादयोः शृङ्खलां परिधाप्य, एकस्मिन् अपवरके क्षिप्त्वा, द्वारे तालकं दत्त्वा, स्वयं मूला पितृगृहे गत्वा स्थिता । चतुर्थे दिने श्रेष्ठिना शुद्धिं कुर्वता अपवरकाद् निष्कासिता । तदा मुण्डिता, शृङ्खलासहिता दृष्टा । तदा श्रेष्ठिनोक्तं पुत्रि ! यावत् लोहकारं आहूय त्वत्पादशृङ्खलां खण्डयामि तावन्मुखं प्रक्षाल्य कुल्माषबकुलाः सूर्पकोणके स्थिताः सन्ति, एतान् भुङ्क्ष इत्युक्त्वा श्रेष्ठी गतः । पश्चात् चन्दना जानाति—अष्टमस्य मम अद्य पारणं वर्त्तते, चेत् कश्चित् साधुरायाति तदा तस्मै दत्त्वा पश्चाद् अहं भुञ्जे इति चिन्तयन्त्याश्चन्दनायाः अग्रे तृतीयप्रहरे एव स्वामी भिक्षायां भ्रमन् समा-गतः । सर्वोऽप्यभिग्रहः पूर्णः, परं चन्दनायाः अश्रु न दृष्टं । तदा भगवान् आहारं न जग्राह । यदा स्वामी आ-हारं विना एव निःसृतः तदा चन्दना रुरोद । अहो ! अहं मन्दभाग्या, अद्य स्वामी अपि मम हस्तात्कुल्माष-बकुलान् न जग्राह । तद्रोदनं श्रुत्वा चक्षुषि अश्रु दृष्ट्वा स्वामी व्याघुट्य कुल्माषबकुलान् जग्राह । देवैः पञ्चदि-

व्यानि कृतानि । सार्द्धद्वादशकोटी १२॥ दीनाराणां वृष्टिर्बभूव । चन्दनायाः शिरसि नवीना वेणी देवैः रचि-
ता । शृङ्खला एव नूपुरे सञ्जाते । स्वामी आहारं गृहीत्वा जगाम । पश्चात् श्रेष्ठी समाजगाम । नगरस्याऽधिपस्या-
ऽपि शुद्धिर्बभूव । इन्द्रेण जनसमक्षं आगत्य उक्तम्–यदा स्वामिनः केवलज्ञानं उत्पत्स्यते तदा एतद् धनं
चन्दनादीक्षासमये महोत्सवार्थं समेष्यति । राजा चन्दनां लात्वा अन्तःपुरे आनीतवान् । राज्या सह चन्द-
नायाः सम्बन्धोऽस्ति–भगिन्याः पुत्रीति उपलक्ष्य रक्षिता । एवं भगवतः पञ्चभिर्दिनैः ऊनं षाण्मासिकं अभूत्
पारणकं । चन्दनया इत्थं कारितम् । द्वादशीचतुर्मासी चम्पायां कृता १२ । ततः पारणके षण्मानिकग्रामे बहिः
कार्योत्सर्गस्थितस्य भगवतः त्रिपृष्ठभवे शय्यापालकस्य कर्णे त्रपु प्रक्षिप्तम् अभूत् । स शय्यापालको मृत्वा गो-
पालकः सञ्जातोऽस्ति । तेन कर्णयोः कांस्यशलाका निखाता । उपरितः छित्त्वा प्रच्छन्नीकृताऽस्ति । भगवान्
विहारं कुर्वन् पापायां समागतः । तत्र सिद्धार्थस्य वणिजो गृहे आहारार्थं विहरन् खरकवैद्येन दृष्टः । स्वामिनः
कर्णयोः कांस्यशलाकां दृष्ट्वा यदा बहिः कार्योत्सर्गे स्थितः तदा सन्दंशकेन गृहीत्वा बलाद्वृक्षशाखायां बद्ध्वा
समकालं वृक्षशाखा त्यक्ता, अनया रीत्या स्वामिनः कर्णयोः शलाका खरवैद्येन निष्काशिता । तदा भगवता
महत्या वेदनया पूत्कारः कृतः । मनसि वेदना सोढा, परं कायव्यापारेण पूत्कृतिरभूत् । संरोहिण्या औषध्या
कर्णयोः परिचर्या कृता । गोपालकः सप्तमनरके गतः । खरकवैद्यः पञ्चमदेवलोकं गतः । अथ सर्वोपसर्गाणां

उत्कृष्ट–मध्यम–जघन्यत्वं कथ्यते–जघन्येषु उपसर्गेषु कटपूतनाव्यन्तरीकृतः शीतोपसर्गः, मध्यमोपसर्गेषु सहस्र-भारगोलकपातः उत्कृष्टोपसर्गेषु शल्योद्धार उत्कृष्टः। अथ द्वादशवर्षं स्वामी कया रीत्या स्थितः तदुच्यते—

तए णं समणे भगवं महावीरे अणगारे जाए, इरियासमिए, भासासमिए, एसणासमिए, आयाणभंडमत्तनिक्खेवणासमिए, उच्चारपासवणखेलसंघाणजल्लपारिट्ठावणियासमिए, (मणसमिए, वयसमिए, कायसमिए,) मणगुत्ते, वयगुत्ते, कायगुत्ते, गुत्ते, गुत्तिंदिए, गुत्तबंभयारी, अकोहे, अमाणे, अमाए, अलोहे, संते, पसंते, उवसंते, परिनिवुडे, अणासवे, अममे, अकिंचणे, छिन्नगंथे, निरुवलेवे कंसपाई इव मुक्कतोए, संखे इव निरंजणे, जीवे इव अप्पडिहयगई, गगणमिव निरालंबणे, वाऊ इव अप्पडिबद्धे, सारयसलिलं व सुद्धहियए, पुक्खरपत्तं व निरुवलेवे, कुम्मे इव गुत्तिंदिए, खग्गिविसाणं व एगजाए, विहगे इव विप्पमुक्के, भारंडपक्खी इव अप्पमत्ते, कुंजरे इव सोंडीरे, वसहे इव जायथामे, सीहे इव दुद्धरिसे,

मंदरे इव निक्कंपे, सागरे इव गंभीरे, चंदे इव सोमलेसे, सूरे इव दित्ततेए, जच्चकणगं व जायरूवे, वसुंधरा इव सव्वफासविसहे, सुहुयहुयासणे इव तेयसा जलंते ॥११६॥ इमेसिं पयाणं दुन्नि संगहणिगाहाओ—"कंसे संखे जीवे, गगणे वाऊ य सरयसलिले अ। पुक्खरपत्ते कुम्मे, विहगे खग्गे य भारंडे ॥ १ ॥ कुंजर वसहे सीहे, नगराया चेव सागर—मखोहे। चंदे सूरे कणगे, वसुंधरा चेव हुयवहे ॥ २ ॥"

अर्थः—ततः श्रमणो भगवान् महावीरः अनगारो जातः—न विद्यते अगारं गृहं यस्य स अनगारः—त्यक्तगृहवास इत्यर्थः। ईर्यासमितिः, भाषासमितिः, एषणासमितिः, आदानभाण्डनिक्षेपणासमितिः, उच्चारप्रश्रवणखेलजल्लसिङ्घाणपारिष्ठापनिकासमितिः—एताभिः पञ्चसमितिभिः समित आसीत्। अत्राऽयं विशेषः—एतासु पञ्चसु समितिषु तिस्रः समितयो निश्चयेन भवन्ति, चतुर्थी समितिर्न भवति। यतस्तीर्थङ्करस्य पात्रादिकस्य ग्रहणम्, मोचनं नास्ति। पञ्चमी समितिरुच्चारः पुरीषम्, प्रश्रवणं मूत्रम्—एतयोः परिष्ठापनं वर्त्तते। परन्तु तीर्थङ्करस्य आहारनिहारविधिः अदृश्यो भवति। अपरं खेलः कफो, जल्लो नासामलं, निष्ठीवनम्—एतयोः अभावात् एतयोः परि-

छापनं न भवति । अत्र तु यत्पञ्चसमितिकथनं तत् सूत्रपाठरक्षणार्थम् । पुनः स्वामी कीदृशोऽस्ति ? गुप्तित्रयेण गुप्तः । मनोवचनकायानां कुव्यापारान्निषेधनं गुप्तिस्तया युक्तः । अयमेवपाठः पुनः पाठान्तरेणाऽस्ति–"मणसमिए, वयसमिए, कायसमिए," मनोवचनकायानां सम्यक् प्रकारेण प्रवर्त्तनं समितिरुच्यते, तया समित्या युक्तः । पुनः स्वामी गुप्तेन्द्रियः त्रयोविंशतिविषयेभ्य इन्द्रियाणां निवारणं तेन युक्तः, गुप्तब्रह्मचर्यः नववाटिकाभिः शीलसंरक्षकः, क्रोधमानमायालोभरहितः, शान्तः, प्रशान्तः–प्रकर्षेण शान्तः, उपशान्तः, यस्मिन् समीपे आगतेऽपि क्रोधादीनां उपशमो भवति, आश्रवनिरोधात् निराश्रवः, अममः ममत्वरहितः, अकिञ्चनः द्रव्यरहितः, बाह्याभ्यन्तरग्रन्थिरहितः, निर्लेपः–यथा कांस्यपात्रे जलं न लगति तथा भगवन्तं स्नेहो न लगति । यथा शङ्खे रागः कश्चिन्न लगति तथा भगवतः कस्याऽपि न रागोऽस्ति, तथा केनाऽपि सह भगवतः द्वेषोऽपि नास्ति । पुनर्यथा जीवस्य गतिः केनाऽपि रोद्धुं न शक्यते तथा भगवतो विहारोऽपि केनाऽपि न रुद्ध्यते । यथा आकाशो निराधारो निरालम्बस्तथा भगवान् कस्याऽपि आधारं न वाञ्छति । यथा वायुः कुत्राऽपि न स्खलति तथा भगवानपि अप्रतिबद्धविहारी । भगवान् शरत्कालस्य जलवन्निर्मलहृदयः । यथा कमलं कर्दमे निष्पन्नं जलेन वर्द्धितम्, अनुक्रमेण उभयोरपि उपरिष्टात् अलिप्तं सत् तिष्ठति तथा स्वामी संसारे उत्पन्नः भोगजलेन वर्धितः अनुक्रमेण उभाभ्यां पृथक् तिष्ठति । भगवान् परीषहसहने सिंहवत् शूरः, समुद्रवद् गम्भीरः,

चन्द्रवत् सौम्यः, कच्छपवत् गुप्तेन्द्रियः, खड्गिशृङ्गवत् एकाकी, भारण्डपक्षीव अप्रमादी, गजवत् शौण्डिरः, दानवर्षिवृषभवत् संयमभारनिर्वाहकः, मेरुवद् अप्रकम्पः, सूर्यवत्तेजस्वी, पृथ्वीवत् सर्वसहः ॥

नत्थि णं तस्स भगवंतस्स कत्थइ पडिबंधे–से अ पडिबंधे चउविहे पन्नत्ते, तं जहा–द्व्वओ, खित्तओ, कालओ, भावओ। दव्वओ णं सचित्ताचित्तमीसेसु दव्वेसु। खित्तओ णं गामे वा, नगरे वा, अरण्णे वा, खित्ते वा, खले वा, घरे वा, अंगणे वा, नहे वा। कालओ णं समए वा, आवलिआए वा, आणपाणुए वा, थोवे वा, खणे वा, लवे वा, मुहुत्ते वा, अहोरत्ते वा, पक्खे वा, मासे वा, उउए वा, अयणे वा, संवच्छरे वा, अन्नयरे वा दीहकालसंजोए। भावओ णं कोहे वा, माणे वा, मायाए वा, लोभे वा, भए वा, पिज्जे वा, दोसे वा, कलहे वा, अब्भक्खाणे वा, पेसुन्ने वा, परपरिवाए वा, अरइरईए वा, मायामोसे वा, मिच्छादंसणसल्ले वा–( ग्रं० ६०० ) तस्स णं भगवंतस्स नो एवं भवइ ॥ ११७ ॥

तस्य भगवतः कुत्राऽपि प्रतिबन्धो न भवति। स प्रतिबन्धश्चतुर्विधः–द्रव्यतः, क्षेत्रतः, कालतो, भावतश्च।

द्रव्येण सचित्तवस्तुनि, तथा अचित्तप्रासुकवस्तुनि, तथा सचित्तअचित्तमिश्रवस्तुनि प्रतिबन्धो नास्ति । क्षेत्रेण ग्रामे वा, नगरे वा, उद्याने वा, खले वा, क्षेत्रे वा, गृहे वा, अङ्गणे वा कुत्राऽपि ममत्वं नास्ति । कालेन समये वा, आवल्यां वा, मुहूर्ते वा, प्रहरे वा, दिवसे वा इत्यादिकाले प्रतिबन्धो नास्ति । भावेन अष्टादशपापस्थानेषु कुत्राऽपि भगवतः प्रवृत्तिर्नास्ति ॥

से णं भगवं वासावासवज्जं अट्ठ गिम्ह–हेमंतिए मासे गामे एगराइए, नगरे पंचराइए वासीचंदणसमाणकप्पे, समतिण–मणि–लेट्ठु–कंचणे, समदुक्ख–सुहे, इहलोग–परलोगअ-प्पडिबद्धे, जीवियमरणे अनिरवकंखे, संसारपारगामी, कम्मसत्तुनिग्घायणट्ठाए अब्भुट्ठिए एवं च णं विहरइ ॥ ११८ ॥ तस्स णं भगवंतस्स अणुत्तरेणं नाणेणं, अणुत्तरेणं दंसणेणं, अणुत्तरेणं चरित्तेणं, अणुत्तरेणं आलएणं, अणुत्तरेणं विहारेणं, अणुत्तरेणं वीरिएणं, अणुत्तरेणं अज्जवेणं, अणुत्तरेणं मद्दवेणं, अणुत्तरेणं लाघवेणं, अणुत्तराए खंतीए, अणुत्तराए मुत्तीए,

अणुत्तराए गुत्तीए, अणुत्तराए तुट्ठीए, अणुत्तरेणं सच्चसंजमतवसुचरिअसोवचिअफलनिव्वाण-
मग्गेणं अप्पाणं भावेमाणस्स दुवालस संवच्छराइं विइक्कंताइं ।

अथ स भगवान् वर्षाकालस्य चतुर्मासीं विना शीतोष्णकालस्य मासाष्टकं यावद् ग्रामे एकदिनम्, नगरे पञ्चदिनं स्वामी तिष्ठति । वासीचंदणसमाणकप्पे–यथा पर्शुना चन्दनवृक्षः छिद्यमानः पर्शुमुखं सुरभीकरोति, तथा भगवानपि दुःखदायकेऽपि उपकारं करोति अथवा पूजके छेदके च उभयोरुपरि समानबुद्धिः । तृणमण्योः, सुवर्णपाषाणयोः, सुखदुःखयोः सादृश्यं धत्ते । इहलोकपरलोके जीवितमरणयोरुपरि समभावः । कर्मशत्रुहनने सावधानः । अनेन प्रकारेण प्रवर्तमानस्य भगवतः सर्वोत्कृष्टैश्चतुर्भिर्ज्ञानैर्विराजमानस्य सर्वोत्कृष्टक्षायिकसम्यक्त्वेन सर्वोत्कृष्टयथाख्यातचारित्रेण विराजमानस्य द्वादशवर्षाणि पुनः षण्मासाः पञ्चदशभिर्दिनैः अधिकाः–एतावत्कालं गतः । अथ भगवतस्तपो वर्ण्यते–षण्मासी १ पारणं १, सङ्गमोपसर्गे पञ्चदिनऊना षण्मासी १ पारणं १, चतुर्मासी ९ पारणा ९, त्रिमासी २ पारणा २, अर्धतृतीयमासी २ पारणा २, द्विमासी ६ पारणा ६, अर्धद्वितीयमासी २ पारणा २, एकमासी १२ पारणा १२, अर्द्धमासी ७२ पारणा ७२, षष्ठतपः २२९ पारणा २२९, १ भद्रप्रतिमादिने २, महाभद्रप्रतिमादिनानि ४, सर्वतोभद्रप्रतिमादिनानि १०, एतास्तिस्रः प्रतिमा एकदा अच्छिन्ना व्यूढाः, तासां

१६—उपवासाः, पारणा ३, अष्टमतपः १२, पारणा १२—एवं तपोदिनवर्षाणि—११, मासाः ६, दिनानि २५। प्रथमपारणेन सह पारणा ३५० एवं सर्वमीलने वर्षाणि—१२, मासाः ६, दिनानि १५ छद्मस्थकालः सर्वोऽपि सङ्कलितः*। अत्र भगवतः प्रमाद एकान्तर्मुहूर्त्तमेवासीत्, यदा स्वामिना स्वप्ना दृष्टाः॥ अथ भगवतः कस्मिन् दिने कस्मिन् स्थाने केवलज्ञानं उत्पन्नं सूत्रेणाह—

**तेरसमस्स संवच्छरस्स अंतरा वट्टमाणस्स जे से गिम्हाणं दुच्चे मासे, चउत्थे पक्खे, वइसाहसुद्धे तस्स णं वइसाहसुद्धस्स दसमीपक्खेणं, पाईणगामिणीए छायाए, पोरिसीए अभिनिविट्टाए पमाणपत्ताए, सुव्वएणं दिवसेणं, विजएणं मुहुत्तेणं, जंभियगामस्स नगरस्स बहिआ उज्जुवालियाए नईए तीरे वेयावत्तस्स चेइअस्स अदूरसामंते सामागस्स गाहावईस्स कट्ठकरणंसि**

*

| छमासी तप | छमासी तप १ पञ्चदिन न्यून | चउमासी | त्रिमासी | अढीमासी | वेमासी | दोढ मासी | मासखमण | पासखमण | भद्रप्रतिमा | महाभद्रप्रतिमा | सर्वतोभद्रप्रतिमा | छट्ठ | अट्ठम | पारणादिन | तथा दीक्षा दिन | सर्वे |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | | ९ | २ | २ | ६ | २ | १२ | ७२ | दिन २ सुधी | दिन ४ सुधी | दिन १० सुधी | २२९ | १२ | ३४९ | १ | वर्ष १२, मास ६, दिन १५. |

सालपायवस्स अहे गोदोहिआए उक्कडुअनिसिज्जाए आयावणाए आयावेमाणस्स छट्ठेणं भत्तेणं अपाणएणं हत्थुत्तराहिं नक्खत्तेणं जोगमुवागएणं झाणंतरिआए वट्टमाणस्स अणंते, अणुत्तरे, निव्वाघाए, निरावरणे, कसिणे परिपुण्णे केवलवरनाणदंसणे समुप्पन्ने ॥ ११९ ॥

अर्थः—स्वामिनस्त्रयोदशे वर्षे वर्त्तमाने सति उष्णकालस्य द्वितीये मासे चतुर्थे पक्षे वैशाखसितदशम्यां पूर्वदिशानुगामिन्यां छायायां एतावता पश्चिमे प्रहरे सम्पूर्णे सति सुव्रतनाम्नि दिवसे विजयनाम्नि मुहूर्त्ते ऋजुवालिकाया नद्यास्तटे व्यावर्त्तकनाम्नि जीर्णोद्याने अथवा विजयावर्त्तव्यन्तरस्य चैत्यात् नातिदूरे नातिनिकटे श्यामाकनाम्नः कौटम्बिकस्य क्षेत्रमध्ये शालवृक्षस्य अधोभागे गोदोहिकासने उत्कटिकासने स्थितस्य आतापनां कुर्वतः उपवासद्वयं कृतवतः उत्तराफाल्गुनीनक्षत्रेण सह चन्द्रसंयोगे प्राप्ते सति शुक्लध्यानं ध्यायमानस्य भगवतो महावीरस्य अनन्तं अनन्तार्थदर्शकं, अनुत्तरं सर्वज्ञानेभ्योऽधिकं, निर्व्याघातं भित्तिकटादिभिर्यत् न हन्यते एतादृशं, निरावरणं आच्छादनरहितं, क्षायिकं अप्रतिपाति, कृत्स्नं सकलार्थद्रव्यपर्यायग्राहकं अत एव प्रतिपूर्णं पूर्णमासीचन्द्रवत् सम्पूर्णं केवलं असहायि, एतादृशं ज्ञानं केवलं अथ केवलवरदर्शनं समुत्पन्नम् । अथ भगवान् कीदृशो जातस्तदुच्यते—

तेणं कालेणं, तेणं समएणं समणे भगवं महावीरे अरहा जाए, जिणे, केवली, सवन्नू, सवदरिसी, सदेवमणुआसुरस्स लोगस्स परिआयं जाणइ, पासइ, सवलोए सवजीवाणं आगइं, गइं, ठिइं, चवणं, उववायं, तक्कं, मणोमाणसिअं, भुत्तं, कडं, पडिसेवियं, आवीकम्मं, रहोकम्मं, अरहा, अरहस्सभागी, तं तं कालं मणवयकायजोगे वट्टमाणाणं सवलोए सवजीवाणं सवभावे जाणमाणे, पासमाणे विहरइ ॥ १२० ॥

अर्थः-ततः श्रमणो भगवान् महावीरः अर्हन् अष्टमहाप्रातिहार्ययुक्तः सञ्जातः। अथवा अरिहा रागद्वेषरूप-अरिघातकः अथवा अरहो न विद्यते रहो एकान्तं यस्य स अरहाः। पुनः जिनो रागद्वेषजेता, केवली केवलज्ञानी, सर्वज्ञः, सर्वदर्शी। पुनः देवैः मनुष्यैः असुरैः सहितस्य सर्वलोकस्य पर्यायान् उत्पत्तीन् स्थितिं गतिं आगतिं च्यवनं उत्पातं तर्कं विचारं मनो-मानसिकं मनः-अन्तकरणं, मानसिकं मनश्चिन्तनरूपं सर्वं जानाति। पुनर्भुक्तं आहारादिकं, कृतं चौर्यादिकं, प्रतिसेवितं मैथुनादिकं, प्रकटं तथा प्रच्छन्नं सर्वं जानाति, सर्वं पश्यति। अथ केवलज्ञाने उत्पन्ने सति देवैः समवसरणं कृतम्। लाभस्य अभावं जानन् अपि आचारव्यवहारार्थं क्षणमेकदेशना

दत्ता, सर्वैः श्रुता परं कोऽपि न प्रतिबुद्धः। प्रथमदेशना निष्फला जाता। ततः स्वामी रात्रौ एव सङ्घेन सहितः स्वर्णकमलैः सञ्चरन्–तत्र सप्त कमलानि प्रदक्षिणया भ्रमन्ति, द्वे द्वे कमले चरणयोरधः समागच्छतः, देवानां माहात्म्यात् अयं स्वामिनो अतिशयः। एवं तद् रात्रौ एव द्वादशयोजनभूमिं उल्लङ्घ्य स्वामी प्रातः मध्यमपापायाः परिसरे आगतस्तत्र देवैः समवसरणं रचितम्। पूर्वदिग्द्वारे प्रविश्य अशोकवृक्षं त्रिः प्रदक्षणीकृत्य 'नमो तित्थस्स' इत्युक्त्वा सिंहासनोपरि पूर्वाभिमुखो भगवान् तिष्ठति। अन्यासु तिसृषु दिक्षु तीर्थंकरस्य प्रतिबिम्बं व्यन्तरदेवाः स्थापयन्ति। चतुर्मुखो भगवान् चतुःप्रकारैर्धर्मं दर्शयति। तस्मिन् समये तत्र नगर्यां सोमिलनाम्ना विप्रेण यज्ञकरणाय एकादश ब्राह्मणा उपाध्याया आहूताः। ते च अमी–इन्द्रभूतिः १, अग्निभूतिः २, वायुभूतिः ३, व्यक्तः ४, सुधर्मा ५, मण्डितः ६, मौर्यपुत्रः ७, अकम्पितः ८, अचलभ्राता ९, मेतार्यः १०, प्रभासः ११। एतेषां उपाध्यायानां वेदपदेषु पृथक् पृथक् सन्देहाः सन्ति। ते सन्देहाः उच्यन्ते–जीवोऽस्ति न वा १, कर्म वर्तते न वा २, जीवशरीरयोः ऐक्यमेव पृथग्भावो वा ३, पञ्चभूतानि सन्ति न वा ४, यः अस्मिन् भवे यादृशो भवति तादृशोऽपि परभवे मृत्वा भवति न वा ५, जीवस्य बन्धमोक्षौ वर्तेते न वा ६, देवाः सन्ति न वा ७, नारकाः सन्ति न वा ८, पुण्यं वर्तते नवा, पापं वर्तते न वा ९, परलोको नाऽस्त्येव १०, मोक्षोऽस्ति न वा ११, एते सन्देहाः प्रत्येकं एकादशानामपि सन्ति। अथ तेषां परिवारः प्रथमतः पञ्चानां पण्डितानां प्रत्येकं पञ्चशतस्य परिकरः, ततः

षष्ठस्य, सप्तमस्य च उभयोः पण्डितयोः प्रत्येकं सार्द्धत्रिशतस्य परिकरः, ततोऽग्रेतनानां चतुर्णां पण्डितानां प्रत्येकं त्रिशतस्य परिकरः, एते विद्यार्थिनस्तेभ्यो विद्याभ्यासं कुर्वन्ति । सर्वे चतुश्चत्वारिंशत्शतप्रमाणाः ४४०० । सर्वे एकादशानां इन्द्रभूतिप्रमुखब्राह्मणानां विद्यार्थिनः । तथा तत्र अन्येऽपि ब्राह्मणाः पृथक्पृथग्जातीया मिलिताः सन्ति । बहवो ब्राह्मणाः स्वर्गवाञ्छया यज्ञं कुर्वन्ति । तस्मिन् समये प्रभातसमये एव नगर्याः परिसरे समवसरणं ब्राह्मणैस्तथा नगरलोकैर्दृष्टं तावत् समवसरणे रूप्यस्य वप्रः, स्वर्णस्य कपिशीर्षाणि १, स्वर्णस्य वप्रस्तत्र

१ तेषां नामानि—प्रथमं आचार्य १ उपाध्याय २ शङ्कर ३ शिवङ्कर ४ महेश्वर ५ ईश्वर ६ धनेश्वर ७ सोमेश्वर ८ याज्ञिक—यानी—नाम—९ गङ्गाधर १० गदाधर ११ विद्याधर १२ लक्ष्मीधर १३ धरणीधर १४ भूधर १५ श्रीधर—१६ महीधर १७ दामोदर १८ दुवे—द्विवेदी—नाम—महादेव १९ शिवदेव २० रामदेव २१ वामदेव २२ कामदेव २३ सहदेव २४ नरदेव २५ हरदेव २६ वासुदेव २७ श्रीदेव २८ व्यासनाम—श्रीपति १ उमापति २ राजपति ३ प्रजापति ४ विद्यापति ५ गणपति ६ भूपति ७ महीपति ८ लक्ष्मीपति ९ देवपति १० गङ्गापति ११ पण्डितनाम—जनार्दन १ गोवर्धन २ कृष्ण ३ विष्णु ४ जिष्णु ५ मुकुन्द ६ गोविन्द ७ माधव ८ केशव ९ पुरुषोत्तम १० नरोत्तम ११ जोसीनाम—श्रीमाइत १ सोमाइत २ रामाइत ३ भीमाइत ४ शिवाइत ५ धनाइत ६ देवाइत ७ प्रभाइत ८ त्रिवाडी—त्रिवेदी—नाम—हरिशर्म १ महाशर्म २ अग्निशर्म ३ देवशर्म ४ नागशर्म ५ जयशर्म ६ चतुर्वेदीनाम—हरि १ हर २ नीलकण्ठ ३ श्रीकण्ठ ४ कण्ठेकाल ५ शम्भू ६ स्वयम्भू ७ इत्यादि ।

रत्नानां कपिशीर्षाणि २, रत्नानां वप्रस्तत्र मणिमयानि कपिशीर्षाणि ३। अशोकवृक्षस्य छाया समवसरणाग्रे सहस्रयोजनप्रमाणा, इन्द्रध्वजः इत्यादि ऋद्धिः। पुनश्चतुर्निकायदेवानां गमनागमनं, देवाङ्गनानां गीतगानं इत्यादि-प्रभावं दृष्ट्वा ब्राह्मणैर्ज्ञातं–सत्योऽस्ति यज्ञस्य प्रभावः–देवाः साक्षादत्र समायान्ति। एवं पश्यतां एव ब्राह्मणानां यज्ञपाटकं त्यक्त्वा यत्र नगराद्बहिः श्रीवर्द्धमानस्वामिनः समवसरणमस्ति तत्र ययुः। सर्वेऽपि देवाः मुखेन एवं जल्पन्तः सर्वज्ञवन्दनाय शीघ्रं गम्यतां गम्यताम्। इन्द्रभूतिरेतादृशीं देवानां मुखेभ्यो वाणीं श्रुत्वा मनसि अमर्षयुरेव। परन्तु देवा अपि मुह्यन्ते, ये देवाः मां न वन्दन्ते ते मां सर्वज्ञं विहाय अन्यत्र भ्रमन्ति, अथवा कश्चिदत्र आनीय चिन्तयति स्म। सर्वज्ञस्तु अहं एवाऽस्मि, मत्तः परः कोऽस्ति अत्र सर्वज्ञः? लोकास्तु सर्वदा मूढा भवे-ऐन्द्रजालिकोऽयं भविष्यति। इन्द्रजालिकविद्यया सर्वान् लोकान्, देवान् संमोहयति, परं अहं अस्य वृथा अभि-मानिनो गर्वं उत्तारयिष्यामि, मां विना अस्य गर्वोत्तारणे कोऽपि समर्थो नास्ति इति विचिन्त्य प्रचलित इन्द्रभूतिः, सार्धं पञ्चशतविद्यार्थिनः स्वगुरोः इन्द्रभूतेः विरुदवृन्दं जल्पन्तो बभूवुः। उत्तालतया महाडम्बरेण समवसरणाय आयान्ति। विरुदवृन्दं यथा–सरस्वतीकण्ठाभरण, वादिविजयलक्ष्मीशरणं, इत्यादीनि छात्रवृन्दमुखेभ्यः

१ ज्ञातसर्वपुराण, वादिकदलीकृपाण, पण्डितश्रेणिशिरोमणि, कुमतान्धकारनभोमणि, जितवादिवृन्द, वादिगरुडगोविन्द, वादिघट-मुद्गर, वादिघूकभास्कर, वादिसमुद्रअगस्ति, वादिवृक्षहस्ति, वादिमुखभञ्जन, वादिवादखण्डन, वादिसिंहशार्दूल, वादिवातविक्षिप्तवादतूल,

विरुदानि शृण्वन् समवसरणं प्राप्त इन्द्रभूतिः। तदा भगवद्वाणीं श्रुत्वा चिन्तयति–किं समुद्रो गर्जति, किं गङ्गायाः प्रवाहो वा नदति, अथवा ब्राह्मणो वेदध्वनिः इति विचारयन् इन्द्रभूतिः समवसरणस्य प्रथमे सोपाने चरणे दत्ते स्वामिनं दृष्ट्वा अचिन्तयत्–किं एतादृशपञ्चवर्णरूप्यस्वर्णरत्नमयवप्रत्रये विराजमानः, छत्रत्रयेण शोभमानः, सिंहासने स्थितः, देवेन्द्रैः स्तूयमानः, देवाङ्गनाभिर्गुणवृन्दं गीयमानः कोऽपि वादी अद्य यावन्न दृष्टः, वादिनः बहुशोऽपि दृष्टाः परं न कश्चित् एतादृशो दृष्टः, तदा किमयं ब्रह्मा, किमयं विष्णुः, किमयं रुद्रो वा, किमयं सूर्यो वा, चन्द्रो वा, गणपतिर्वा एवं चिन्तयन् पुनरपि तेषां लक्षणैः वियुक्तं दृष्ट्वा तत्र तदा देवेषु सन्देहं कुर्वन् विमलस्वभावं वीतरागं सर्वोत्कृष्टरूपं संवीक्ष्य नवीनोऽयं देवस्तस्माद्देवाधिदेवोऽयं सर्वज्ञोऽयं भविष्यति। अयं एतादृश एव दृश्यते, अनेन सह वादं कर्तुं अहं अत्रागतस्तन्मया सम्यक् न कृतं, एतावद्दिनपर्यन्तं यद् यशोऽर्जितं तद् यास्यति, अहं जानन् अपि अद्य अज्ञानी सञ्जातः। अथ चेत् अत्रागत्य एनं दृष्ट्वा पश्चाद्व्रजामि

---

पड्भापावल्लीमूल, वादिवादमस्तकशूल, वादिगोधूमघरट्ट, मर्दितवादिमरट्ट, वादिकन्दकुदाल, वादिलोकभूमिपाल, वादिमौनशस्त्रागार, वादिअन्नदुर्भिक्षकार, वादिगजसिंह, वादीश्वरलीह, वादिहृदयसाल, वादियुद्धभाल, वादिवेशाभुजङ्ग, शव्दलहरीतरङ्ग, सरस्वतीभण्डार, चतुर्दशविद्याभर्तार, पड्दर्शनगौगोपाल, रञ्जितानेकभूपाल, सखीकृतबृहस्पति, निर्जितशुक्रमति, कूर्चालसरस्वती, प्रत्यक्षभारती, जितानेकवाद, सरस्वतीलब्धप्रसाद।

तदा लोके मम निन्दा भवेत्। अग्रे वादव्यवहारोऽपि दुष्करस्तर्हि इतो व्याघ्र इतस्तटी अयं न्यायः अत्रागतः। कश्चित्कीलिकार्थं सौधं खनति, कश्चित् ठिक्करिकार्थं कामकुम्भं स्फोटयति। एतादृशानि उपख्यानानि मिलितानि इति चिन्तयन्नपि साहसं विधाय सोपानेषु आरोहति तदा स्वामिना स इन्द्रभूतिः एतादृशान् संकल्पान् कुर्वाणो दृष्टस्तदा भो इन्द्रभूते! कुशलमस्ति इति नामोच्चारणपूर्वं अभिवादितः सन् मनसि चिन्तयामास–असौ मम नाम अपि जानाति। अथवा मम नाम अत्र को न जानाति? अयमपि मत्तः सकाशाद्भयं कृत्वा मिष्टं वाक्यं ब्रवीति, जानाति–मया सह असौ वादं न करोति, परं अस्य मिष्टवाक्यैर्नाहं प्रसन्नो भवामि, यदा अयं सर्वज्ञोऽस्ति तदा मम मनःसन्देहं भङ्क्ष्यति, अस्याऽहं शिष्यो भविष्यामि तावत् श्रीवीरेण प्रोक्तं हे इन्द्रभूते! तव मनसि अयं सन्देहो वर्तते–जीवोऽस्ति नवा। जीवो वर्तते एव वेदवाक्यैरेव ज्ञापितः। वेदवाक्यानि यथा–"विज्ञा-

१ इन्द्रभूतेः विशेषस्त्वयम्–वेदपदानि च "विज्ञानघन एव एतेभ्यो भूतेभ्यः समुत्थाय तानि एव अनु विनश्यति, न प्रेत्यसंज्ञाऽस्ति" इति। त्वं तावत् एतेषां वेदपदानां अर्थमेवं करोषि–यद् विज्ञानघनो गमनादिचेष्टावान् आत्मा, स च एतेभ्यो भूतेभ्यः पृथिवी–जलादिभ्यः समुत्पद्य मद्याङ्गेभ्यो मदशक्तिरिव, ततस्तानि भूतानि एव अनु विनश्यति जीवः–तत्रैव विलयं याति जले बुद्बुद इव ततो भूतव्यतिरिक्तस्य जीवस्य अभावाद् नास्ति पुनर्जन्म। परमयुक्तोऽयमर्थः। शृणु सत्यमर्थम्–विज्ञानघनो ज्ञानसमुदायः स च केनचित् प्रकारेण पृथिवी–जलादिभूतगणं समाश्रित्य एव उत्पद्यते–यथा घटोऽयम्, जलमिदम्, वायुरयम्–इत्यादि। पुनश्च यदा भूतगणो नेत्रादितो दूरी-

नघन एव एतेभ्यो भूतेभ्यः समुत्थाय पुनस्तान्येव अनु विनश्यति, न प्रेत्य संज्ञा अस्ति" इति जीवस्य अभावः । अथ पुनर्जीवस्थापनवेदवाक्यानि—"सर्वैः अयं आत्मा ज्ञानमयः, ब्रह्मज्ञानमयः, मनोमयः, वाग्मयः, कायमयः, चक्षुर्मयः, श्रोत्रमयः, आकाशमयः, वायुमयः, तेजोमयः, अम्मयः, पृथ्वीमयः, हर्षमयः, धर्ममयः, अधर्ममयः, दददमयः" इति। पुनर्यथाचारित्रः तथा भवति, साधुकारी साधुर्भवति, पापकारी पापो भवति। "पुण्यः पुण्येन कर्मणा भवति, पापः पापेन भवति" यजुर्वेदोपनिषदि ऋचः सम्पूर्णाः । हे इन्द्रभूते ! त्वया वेदपदानि अधीतानि तथाऽपि वेदपदार्थं न जानासि । जीवोऽयं सर्वशरीरव्यापी शरीरात् पृथक्, यथा दुग्धे घृतं, तिलेषु तैलं, काष्ठेषु अग्निः, पुष्पेषु सुगन्धः, चन्द्रकान्ते अमृतं, यथा एते पदार्थाः सर्वव्यापिनः पृथगपि वर्तन्ते तथा अयं देही देहश्च अत्र सन्देहो नाऽस्ति । ददद—दमो १ दया २ दानं ३ एतद् दकारत्रयं वेत्ति स जीव एव, एतद् दकारत्रयं जीवस्वरूपमेव इति प्रतिबोधितः इन्द्रभूतिः पञ्चशतच्छात्रैः सह प्रभोः पार्श्वे दीक्षां जग्राह । भगवता 'करेमि भंते! सामाइयं' इति उच्चारणं कारापितं। दीक्षां गृहीत्वा स्वामिनं पृष्टवान्—किं तत्त्वं—उप्पज्जेइ वा—उत्पद्यन्ते

---

क्रियते तदा तद् ज्ञानं विनश्यति, न च सा पूर्वसंज्ञा वर्तते अत उच्यते विज्ञानघन एतेभ्यः भूतेभ्यः उत्पद्य, तानि एव अनु विनश्यति, ततो नानया श्रुत्या आत्मा निषिध्यते । प्रत्युत अन्याऽपि श्रुतिरस्ति जीवसाधिका—"सर्वैः अयं आत्मा ज्ञानमयः" इत्यादि ।

इति पदं श्रुत्वा विचारितं–यदि जीवा उत्पद्यन्ते एव तदा जीवगणः परिमितं क्षेत्रं बरीभरीत्येव। तदा पुनः पृष्टवान् तदा भगवान् आह–विगमेइ वा–विनश्यन्ति। उत्पद्यन्ते, विनश्यन्ति च इति पदं श्रुत्वा पुनर्विचारितं तदा जगत् रिक्तं भवेत् इति पुनः पृष्टवान् किं तत्त्वं तदा स्वामी प्राह–किंचि य धुए वा किंचित् कालं ध्रुवं तिष्ठन्ति–उत्पद्यन्ते, विनश्यन्ति, किंचित्कालं तिष्ठन्ति–उत्पत्तिविनाशस्तु पुद्गलधर्मः, ध्रुवत्वं तु जीवधर्मः। इयं जगतः शाश्वती स्थितिरस्ति–जीवः १, अजीवः २, धर्मः ३, अधर्मः ४, लोकाकाशः ५, पुद्गलः ६, एतेषां षड्द्रव्याणां आवर्तपरावर्तनव्यवहारो भवति–इतस्ततो भ्रमन्ति। एतया त्रिपद्या जगत्स्वरूपं इन्द्रभूतिना ज्ञातं पुनर्दृष्टान्तश्च भगवता त्रिपद्याः दर्शितः। यथा एकः कश्चिद् राजा, तस्यैकः पुत्रः, पुत्री च वर्तते, पुत्र्या राज्ञः प्रोक्तं मां सुवर्णस्य घटं कारयित्वा देहि, तदा राज्ञा पुत्र्यै स्वर्णघटो दत्तः। तदा पुत्रेणोक्तम्–तात! मह्यं सौवर्णमुकुटं घटं भङ्क्त्वा देहि, तदा राज्ञा घटं भङ्क्त्वा पुत्राय मुकुटो दत्तः, तदा पुत्र्याः विषाद उत्पन्नः, पुत्रस्य हर्षः समुत्पन्नः, राज्ञस्तु न हर्षो न च विषादः। एवं संसारस्य स्थितिः–एकः उत्पद्यते, एको विनश्यति, पुद्गलस्य विनाशः, उत्पत्तिश्च, जीवास्तु यावन्तो वर्तन्ते तावन्त एव वर्तन्ते न च आधिक्यं न च न्यूनत्वं। घटो विनश्य मुकुटो भवति, मुकुटो विनश्य घटश्च, स्वर्णद्रव्यस्य न हानिर्न वृद्धिः, तेन राज्ञो न हर्षो न च विषादो भवति एवं तत्त्वं परिज्ञाय अन्तर्मुहूर्तमध्ये एकादश अङ्गानि, दृष्टिवादश्च एवं द्वादशाङ्गी कृता। गौतमनामेति नामस्थापना स्वामिना विहि-

ता। इन्द्रभूतेर्दीक्षां श्रुत्वा अग्निभूत्यादयो यथा आगतास्तथा संशयं छित्वा भगवता प्रतिबोधिताः। एवं एकादश-

१ अन्येषां गणधराणामेवं संक्षेपतो वादः—१—अग्निभूतिः—स च एवं संदेग्धि—"पुरुष एवं इदं ग्निं सर्वं यद् भूतं यच्च भाव्यम्" इत्यादि अनया श्रुत्या इदं सकलं पुरुष एव प्रतीयते, कर्म—ईश्वरादिकं च प्रतिषिध्यते, ततो नास्ति कर्मादिकम्, एवम् अर्थं स करोति। स च अर्थस्तस्याऽयुक्तः। सा श्रुतिः केवलं पुरुषप्रशंसापरायणा केवलं पुरुषं स्तौति, नान्यमर्थं निषेधति, यथा "जले विष्णुः, स्थले विष्णुः" इत्यादिस्तुतिः केवलं पुरुपोत्तमविष्णुस्तुतिपरायणा नान्यं घट—पट—कटादिकं निषेधति, एवमियमपि श्रुतिः केवलं वर्णनवादपरायणा न कर्मादिकं निपेधति, ततस्तया श्रुत्या कर्मसंदेहो न कर्तव्यः, प्रत्युत "पापः पापेन कर्मणा" इत्यादिवेदवाक्यैः कर्मवादः प्रख्याप्यते एव इति ॥

२—वायुभूतिः—"विज्ञानघन" इत्यादिपूर्वदर्शितवेदवाक्येन अस्य संदेहः—जीव एव शरीरम्, शरीरमेव वा जीवः, किंतु देहाद् भिन्नः कोऽपि जीवो नास्ति। स चाऽस्य अयुक्तः—कारणानुरूपमेव कार्यं जायते इति प्रवादः सर्वत्र प्रसिद्धः। यदि भूतनिमित्तो जीवः स्वीक्रियते, तदा सोऽनुभूतोऽपि प्रवादः विनश्येत। कथमिति चेद्, उच्यते—ज्ञानममूर्तं, भूतानि मूर्तानि, ततो नहि तयोः कार्यकारणभावो भवितुमर्हति। अतो ज्ञानकारणान्यथानुपपत्त्या देहाद् भिन्नः एव समस्ति जीवः। तत्प्रतिपादकवेदवाक्यं तु पूर्ववदेव ॥

३—व्यक्तः—अस्य एवं शङ्का—सा च "स्वप्नोपमं वै सकलं" इत्यादिवेदवाक्यैः संजाता। स एवं प्रलपति, सर्वं स्वप्नतुल्यमेतत्, अतो नास्ति किंचित्—सर्वं शून्यमेव। सा च तस्य मृषा, यत इयमपि श्रुतिः न सर्वाभावं प्रतिपादयति, किन्तु वैराग्यवर्धनार्थं सर्वेषामनित्यतामेव वेदयति। वेदेऽपि "पृथ्वी देवता, आपो देवताः" इत्यादिवाक्यानि सन्ति भूतादिसत्ताप्रतिपादकानि। अतस्तस्यायं संशयो न युक्तः ॥

गणधराणां स्थापना कृता। तेषां गणधराणां पूर्वपरिवार एव शिष्यत्वेन दत्तः। ततश्चन्दनबाला भगवद्वाणीं

४–सुधर्मा—"पुरुषो वै पुरुषत्वमश्नुते पशवः पशुत्वम्" इत्यादिश्रुत्या स एवं वेत्ति–पुरुषो मृत्वा पुरुष एव जायते, पशुरपि पशुरेव जायते मृत्वा। परमेतद् मिथ्या। यतो वेदे एव समावेदितं "पापः पापेन कर्मणा, पुण्यः पुण्येन कर्मणा" अतो यादृशं कर्म तादृशं परभवे गमनम्, जन्मग्रहणं च–पापी पुरुषो नारको जायते, पुण्यवान् पशुरपि देवो भवति अतोऽस्य सा शङ्का निरस्ता। "पुरुषो वै" इत्यादिश्रुतिस्तु यदि 'पुण्यवान् पुरुषः स्यात् तदा पुनरपि पुरुषो भवति' इत्येनमर्थं संख्यापयति॥

५–मण्डितः—"स एव विगुणो विभुर्न बध्यते" इत्यादिवेदवाक्यैः बन्ध–मोक्षविषये संदेग्धि। परं तस्य स संशयः अर्थाऽज्ञानादेव। सा श्रुतिरेवं प्रतिपादयति–यो विगुणो–गुणरहितः–सत्त्वादिरहितः स न बध्यते, न मुच्यते, स च अर्थः सत्य एव, यतो विगुणस्य बन्ध–मोक्षौ न विद्येते, अन्येषां तु तौ विद्येते एव, अन्यथा "पापः पापेन कर्मणा" एवं वेदोऽपि कथं ज्ञापयेत्। अतस्तस्य संदेहो नाशितः॥

६–मौर्यपुत्रः—"को जानाति मायोपमान् देवान्" इत्यादिवेदश्रुतिभिः स देवविषये संशेते। परं तस्य संशयो न युक्तः, यतः "स्वर्गं गच्छेद् यज्ञकारको देवो जायते" इत्यादिअर्थपरायणैर्वेदवाक्यैः देवसत्ता संस्थाप्यत एव। "को जानाति" इत्यादिवाक्यं तु देवानामनित्यत्वज्ञापनायेति॥

**श्रुत्वा प्रतिबुद्धा सती द्रव्येण महोत्सवं कृत्वा भगवत्पार्श्वे दीक्षां जग्राह । तस्याः सार्थे बहुभिर्लोकैः प्रव्रजितं–**
**बहवः श्रावकाः सञ्जाताः । इत्थं द्वितीये समवसरणे चतुर्विधसङ्घस्य स्थापना, प्रथमे समवसरणे सङ्घस्थापना**

७–अकम्पितः––"नह वै प्रेत्य नरके नारकाः" इत्यादिवेदपदैः नारकाणामभावं भावयति । परं सा तस्य भावना मिथ्या । यतो वेदे एव उक्तम्–"नारको वै एष जायते यः शूद्रान्नमश्नाति" ततो वेदे एव नारकसत्ता संज्ञापिता, "नह वै" इत्यादिश्रुतिस्तु नारकाणां शाश्वततां निषेधति, न पुनरभावम् ॥

८–अचलभ्राता––"पुरुष एवेदं ग्नि सर्वम्" इत्यादिवेदवाक्यैः पुरुषेतरविषये संशयं करोति, परंतु अयं श्रीअग्निभूतिबोधनवद् बोधनीयः । तयोः समानशङ्कासमाधानत्वात् ॥

९–मेतार्यः––इन्द्रभूतिसंशयोक्तश्रुतिवाक्येन परभवं संदेग्धि, स च तदुक्तसमाधानेनैव संबोधनीयः ॥

१०–प्रभासः––"जरामर्यं वा यदग्निहोत्रम्" इत्यादिवेदपदैः निर्वाणविषये संशयं विदधाति । स एवं प्रत्येति, यदनया श्रुत्या सर्वदा एव अग्निहोत्रविधिर्विहितः । सा च मोक्षाभावे एव घटते, ततोऽनया एवं ज्ञायते–मोक्षो नास्त्येव । परं तदयुक्तम् । यतो वेदे एव निर्वाणसूचकवाक्यानि यथा–"द्वे ब्रह्मणी वेदितव्ये" इत्यादि, अत्र एकेन ब्रह्मणा निर्वाणं प्रख्यापितम् । "जरामर्यं" इत्यादिश्रुतिसंगतिरेवम्–तत्र 'वा' शब्दः 'अपि' अर्थे । अतो अग्निहोत्रम्, अन्यदपि च कुर्यात् । ततो न दोषः । यः स्वर्गार्थी स अग्निहोत्रं कुर्यात्, यश्च निर्वाणप्रार्थी स अन्यदपि कुर्याद् यावज्जीवमिति न दोषः ॥

न जाता । अयं अच्छेरकः सञ्जातः । एवं सङ्घस्थापनां कुर्वतः भव्यजीवान् प्रतिबोधयतः परोपकारं कुर्वतः श्रीमहावीरदेवस्य कुत्र कुत्र चतुर्मासी बभूव । तत्सूत्रेण कथ्यते–

तेणं कालेणं तेणं समएणं समणे भगवं महावीरे अट्ठियगामं नीसाए पढमं अंतरावासं वासावासं उवागए, चंपं च पिट्ठचंपं च नीसाए तओ अंतरावासे वासावासं उवागए, वेसालिं नगरिं, वाणियगामं च नीसाए दुवालस अंतरावासे वासावासं उवागए, रायगिहं नगरं, नालंदं च बाहिरियं नीसाए चउद्दस अंतरावासे वासावासं उवागए, छ मिहिलाए, दो भद्दिआए, एगं आलंभियाए, एगं सावत्थीए, पणिअभूमीए एगं, पावाए मज्झिमाए हत्थिवालस्स रण्णो रज्जुगसभाए अपच्छिमं अंतरावासं वासावासं उवागए ॥ १२१ ॥

अर्थः–तस्मिन् काले तस्मिन् समये श्रमणगृहीतदीक्षस्य भगवतो महावीरस्य अस्थिग्रामनिश्रायां शूलपाणियक्षस्य देवगृहे प्रथमा चतुर्मासी अभूत् १ । ततः पश्चात् चम्पायां अथ पृष्ठचम्पायां चतुर्मासीत्रयं अभूत् ३ । विशालानगर्यां तथा वाणिज्यग्रामे द्वादशचतुर्मास्योऽभूवन् १२ । राजगृहनगर्यां उत्तरस्यां दिशि नालिन्दपाटके

भगवता चतुर्दश चतुर्मास्यः कृताः १४। मिथिलानगर्यां षट्चतुर्मास्यः ६। भद्रिकानगर्यां द्वे चतुर्मास्यौ २। आलंभिकायां एका चतुर्मासी १। श्रावस्त्यां नगर्यां च एका चतुर्मासी १। अनार्यदेशे एका चतुर्मासी १। मध्यमपापायां हस्तिपालस्य राज्ञो जीर्णायां दानमाण्डव्यां तत्र स्वामी पश्चिमचतुर्मासीं स्थितः १—एवं छद्मस्थस्य केवलिनः श्रीमहावीरस्य च सर्वा ४२ द्विचत्वारिंशत् चतुर्मास्यो जाताः ॥

अथ भगवतो निर्वाणकल्याणकं कथ्यते—

तत्थ णं जे से पावाए मज्झिमाए हत्थिवालस्स रण्णो रज्जुसभाए अपच्छिमं अंतरावासं वासावासं उवागए ॥ १२२ ॥ तस्स णं अंतरावासस्स अणंतरं वासावासस्स जे से वासाणं चउत्थे मासे सत्तमे पक्खे कत्तिअबहुले तस्स णं कत्तिअबहुलस्स पन्नरसीपक्खेणं जा सा चरमा रयणी, तं रयणिं च णं समणे भगवं महावीरे कालगए विइक्कंते समुज्जाए छिन्नजाइजराम-रणबंधणे, सिद्धे, बुद्धे, मुत्ते, अंतगडे, परिनिव्वुडे, सव्वदुक्खप्पहीणे। चंदे नामं से दुच्चे संवच्छरे, पीइवद्धणे मासे, नंदिवद्धणे पक्खे, अग्गिवेसे नामं से दिवसे उवसमित्ति पवुच्चइ, देवाणंदा

नामं सा रयणी निरतित्ति पवुच्चइ, अच्चे लवे, पाणे मुहुत्ते, थोवे सिद्धे, नागे करणे, सवट्ठसिद्धे मुहुत्ते, साइणा नक्खत्तेणं जोगमुवागए णं कालगए विइक्कंते जाव० सवदुक्खप्पहीणे ॥१२३॥

अर्थः–तत्र द्विचत्वारिंशत्तमायां चतुर्मास्यां वर्षारात्रे हस्तिपालस्य राज्ञो जीर्णराजसभायां दानमाण्डव्यां अन्तिमचतुर्मासीं मध्यमपापायां स्थितः, तस्य वर्षाकालस्य चतुर्थे मासे सप्तमे पक्षे कार्तिकवदिअमावस्यायां स्थितिं स्थित्वा संसारात् निसृतः श्रीमहावीरः पुनः संसारमध्ये नाऽऽयास्यति इति प्रकारेण मुक्तिं प्राप्तः। छिन्नजातिजरामरणवन्धनः–सर्वाणि कार्याणि सिद्धानि इत्यर्थः, बुद्धः सर्वतत्त्वज्ञाता जातः, मुक्तः संसारभ्रमणात् मुक्तो जातः। अन्तकृत् सर्वदुःखानां अन्तकारकः सञ्जातः, परिनिवृतः परिसमन्तात् सुखीबभूव–अनन्तसुखभोक्ता जातः, सर्वदुःखैः प्रहीणो रहितो जातः। चन्द्रे नाम्नि द्वितीये संवत्सरे, प्रीतिवर्धननाम्नि मासे, नन्दिवर्धननाम्नि पक्षे, अग्निवेषे नाम्नि दिवसे, देवानन्दानाम्न्यां रजन्यां, अर्च्यनाम्नि लवे, प्राणनाम्नि मुहूर्ते, सिद्धे नाम्नि स्तोके, नागनाम्नि करणे, सर्वार्थसिद्धे मुहूर्ते, स्वातिनक्षत्रे चन्द्रसंयोगं प्राप्ते सति भगवान् श्रीवर्द्धमानो भवस्थितिकायस्थितिसकाशात् गतः–यावत्सर्वदुःखैः प्रहीणः, पुनः संसारे आगत्य कायस्थितिं भवस्थितिं न करिष्यति। शरीरमनःसम्बन्धिदुःखेभ्यो रहितो जातः मुक्तिं गतः इत्यर्थः॥

जं रयणिं च णं समणे भगवं महावीरे कालगए जाव–सव्वदुक्खप्पहीणे सा णं रयणी बहूहिं देवेहिं, देवीहि य ओवयमाणेहि य उप्पयमाणेहि य उज्जोविया आवि हुत्था ॥ १२४ ॥ जं रयणिं च णं समणे भगवं महावीरे कालगए जाव० सव्वदुक्खप्पहीणे, सा रयणी बहूहिं देवेहि य देवीहि य ओवयमाणेहिं उप्पयमाणेहि य उप्पिंजलगभूआ कहकहगभूआ आवि–हुत्था ॥ १२५ ॥ जं रयणिं च णं समणे भगवं महावीरे कालगए जाव० सव्वदुक्खप्पहीणे, तं रयणिं च णं जिट्ठस्स गोअमस्स इंदभूइस्स अणआरस्स अंतेवासिस्स नायए पिज्जबंधणे वुच्छिन्ने, अणंते अणुत्तरे जाव० केवलवरनाणदंसणे समुप्पन्ने ॥ १२६ ॥

अथ यस्यां रात्रौ श्रीमहावीरो मुक्तिं गतः तस्यां रात्रौ बहुभिर्देवैः आगच्छद्भिः तथा बह्वीभिर्देवीभिरागच्छन्तीभिः कृष्णाऽपि रात्रिः उद्द्योतवती आसीत्। पुनः सा रात्रिर्बहुभिर्देवैर्बह्वीभिर्देवीभिः उत्पिञ्जलमाना भृशं आकुला आसीत्। पुनः सा रात्रिर्देवानां तथा देवीनां कोलाहलैर्हास्यैः एकाऽव्यक्तशब्दवती आसीत्। पुनर्यस्यां रजन्यां श्रमणो भगवान् महावीरः कालगतः आसीत् तस्यां रजन्यां भगवतः श्रीमहावीरस्य बृहत्शिष्यः श्रीइन्द्र-

भूतिनामा गणधरः, गौतमगौत्रीयः, तस्य इन्द्रभूतेरनगारस्य ज्ञातजेन श्रीमहावीरस्वामिना सह प्रेमबन्धनं मोहनीयकर्म छिन्नं त्रुटितं–अनन्तं अनुत्तरं केवलवरज्ञानदर्शनं सम्रुत्पन्नं तत्स्वरूपं कथ्यते–यदा श्रीमहावीरेण दीक्षितः तदा गणधरपदवीं प्राप्तः प्रथमसंहननः प्रथमसंस्थानः महातपस्वी आमौषध्यादिलब्ध्या युक्तः । तेजोलेश्यायाः संक्षेपकः चतुर्भिर्ज्ञानैर्विराजमानः, चतुर्दशपूर्वधरः श्रुतकेवली यं यं दीक्षते, स स केवलज्ञानी भवति, एकं केवलज्ञानं नोत्पद्यते, भगवतः मोहनीयकर्मवशात् स्नेहोऽस्ति, परं अन्ये सर्वे गुणाः सन्ति । एकदा भगवद्देशनायां इति श्रीगौतमेन श्रुतं–आत्मलब्ध्या यः अष्टापदतीर्थस्य उपरि आरुह्य यात्रां करोति, स चरमशरीरी ज्ञेयः, गौतमः परीक्षां कर्तु तत्र वीरस्य आज्ञया गतः, तत्र सूर्यकिरणान् अवलम्ब्य उपरि आरूढवान्, प्रथमे सोपाने पञ्चशततापससहितः कोडिन्नतापसः एकस्तिष्ठति, एवं द्वितीये सोपाने दिन्नतापसः पञ्चशततापसैः सहितः स्थितोऽस्ति, तृतीये सोपाने शेवालीनामतापसः पञ्चशततापसैः सहितः स्थितोऽस्ति, अग्रे आरोढुं कोऽपि न शक्नोति, तस्य पर्वतस्य अष्टौ सोपानानि सन्ति योजनयोजनस्य एकैकं सोपनमस्ति । द्वात्रिंशत्कोशप्रमाणो गिरिः, तत्र पादबलेन कोऽप्यारोढुं न शक्नोति, लब्ध्या एव आरोहति । गौतमस्वामी तु तेषु तापसेषु पश्यत्सु एव अष्टापदे आरूढः, तत्रारुह्य "चत्तारि अट्ठ दस दोइ वंदिया" चतुर्विंशतितीर्थकराणां बिम्बानि भरतकारितानि लाञ्छनवर्णप्रमाणोपेतानि, सिंहनिषद्यानाम्नि प्रासादे नत्वा तीर्थोपवासं कृत्वा प्रासादस्य द्वारदेशे अशोकवृक्षस्य

अधः शिलापट्टं प्रमार्ज्य गौतमस्वामी तत्रैव तद्दिने स्थितः । तत्र च रात्रौ वज्रस्वामिजीवस्तिर्यग्जृम्भगदेवः प्रतिबोधितः । प्रभाते देवदर्शनं कृत्वा यदा उत्तीर्णस्तदा ते त्रिभिरधिकाः पञ्चदशशततापसा गौतमस्य माहात्म्यं दृष्ट्वा शिष्याः सञ्जाताः, तेषां तापसानां पूर्वं पञ्चशती एकेनाधिका एकान्तरितोपवासकारिका पारणायां वृक्षफलानि भुङ्क्ते, पुनः पञ्चशती एकेनाधिका उपवासद्वयकारिका पारणायां शुष्कानि वृक्षेभ्यः स्वयमेव वातादिना पतितानि पत्र–पुष्प–फलानि भुङ्क्ते, पुनः पञ्चशती एकेनाधिका त्रिदिनं उपोषितपारणे शुष्कं सेवालं तदपि विडालपदमात्रं त्रिचलुकमम्बुना सह भुङ्क्ते, एतादृशेन तपसा ते अतीव कृशशरीरा आसन् । यदा गौतमस्वामिना दीक्षितास्तदा तेभ्यः पृष्टं भोः तपस्विनः ! अद्य भवतां केनाहारेण पारणं कारयामस्तदा तैः परमान्नं मार्गितं गौतमस्वामिना अक्षीणमहानसलब्ध्या एकेन परमान्नपात्रेण सर्वेऽपि भोजिताः, तदा एकाधिकपञ्चशततापसाः कवलं गृह्णन्त एव केवलभाजः सञ्जाताः, एवं एकाधिकपञ्चशततापसाः स्वामिनो महावीरस्य समवसरणं दृष्ट्वा केवलभाजः सञ्जाताः, एवं एकाधिकपञ्चशततापसा भगवद्वाणीं श्रुत्वा केवलभाजो जाताः, एवं त्रिभिरधिका तापसानां पञ्चदशशती सर्वाऽपि केवलभाग् जाता । तां च लात्वा स्वामिनं प्रदक्षिणीकृत्य तापसाः केवलिनः केवलिपर्षदि गताः । गौतमो भगवन्तमभिवन्द्य तान् नवदीक्षितान् ज्ञात्वा भगवद्वन्दनार्थमामन्त्रयति । भोः तपस्विनः ! अत्रागत्य भगवन्तं वन्दध्वं, तदा भगवता प्रोक्तं–गौतम ! केवलिनां आशातनां

मा कुरु। गौतमोऽवादीत्–स्वामिन् ! एते नवदीक्षिताः केवलिनो भवन्ति। मम कथं केवलं नोत्पद्यते ?। स्वामिनोक्तं पर्यन्ते आवयोः साम्यमस्ति, त्वं मयि स्नेहं त्यज यथा केवलं उत्पद्यते, गौतमेनोक्तं स्वामिन् ! मम केवलेन नो कार्यं त्वयि मम स्नेहो मा व्रजतु। एतादृशो गौतमो गुरुभक्तः। पुनर्गौतमः प्रतिबोधनेऽतीवनिपुणः–येन पञ्चवार्षिकोऽतिमुक्तककुमारः प्रतिबोधितः। पश्चात् एकदा वर्षाणां जले कच्छिलिकां धृत्वा मध्ये दण्डं ऊर्ध्वीकृत्य नावमिव तारयति स्म। पश्चाद् भगवदग्रे ईर्यापथिकीं प्रतिक्रामन् अष्टादशलक्षचतुर्विंशतिसहस्रएकशतविंशतिमिथ्यादुष्कृतानि ददत् केवली जातः। एतादृशो गौतमस्वामी, येन प्रतिबोधितोऽतिमुक्तककुमारो लघुरपि केवली जात इत्यर्थः। इत्यादि श्रीगौतमस्य चरित्रं कियत् कथ्यते। भगवतीसूत्रमध्ये षट्त्रिंशत्सहस्रप्रश्नानां भगवता उत्तराणि दत्तानि तानि–हे गौतम ! अस्य प्रश्नस्योत्तरं एवं वर्तते इति नामग्राहं उत्तराणि दत्तानि। अथ भगवता स्वनिर्वाणसमयं ज्ञात्वा गौतमस्नेहं च ज्ञात्वा मध्यमपापायाः समीपग्रामे देवशर्मब्राह्मणस्य प्रतिबोधनार्थं गौतमः प्रेषितः। तस्यां एव रात्रौ महावीरस्य निर्वाणमभूत्। प्रातः तस्मिन् दिने मुखात् श्रुत्वा गौतमो वज्राहत इवाऽऽसीत्। पुनश्चेतनां प्राप्य गौतमः प्राह, इदानीं मिथ्यात्वान्धकारं प्रसृतं इदानीं कुमतिघूकवृन्दं जागरितं, ससैव ईतयः प्रवर्तिताः, हे स्वामिन् ! त्वं जगत्रयसूर्यः अस्तं प्राप्तः, चतुर्विधसङ्घस्य मुखकमलं म्लानं सञ्जातं, पाखण्डिनस्तारका देदीप्यन्ते, पापराहुर्ग्रसति, धर्मचन्द्रो न दृश्यते, दीपे विध्या-

पिते यादृशं भुवनं भवति तादृशं अद्य भरतक्षेत्रं सञ्जातं इत्युक्त्वा विलपति गौतमः । अहो वीर ! त्वया किं कृतं, यस्यां वेलायां आत्मीयाः शिशवः दूरादाहूयन्ते तस्यां वेलायां अहं त्वया दूरीकृतः, अयं लोकव्यवहारोऽपि न पालितः । अहं किं बालवत् वस्त्राञ्चलं गृहीत्वा मुक्तिं गन्तुं न अदास्यं, अथवा किमहं केवलज्ञानं अमार्गयिष्यं, अथवा किं त्वयि विषये मम कृत्रिमः स्नेह आसीत् । अथवा किं अग्रे मुक्तिस्थानं मया कृत्वा संकीर्णमभविष्यत्, यत् त्वां मां लात्वा न अगमिष्यः । अथवा किमहं त्वां असुखोऽभूवम् । हे वीरस्वामिन् ! त्वयाऽहं कथं विस्मारितः ? अद्य पश्चात् कस्मै सन्देहप्रश्नं करिष्यामि । त्वया महान् दाहो दत्तः, मद्दुःखं को भङ्क्ष्यति । एवं दुःखं कृत्वा पुनरपि गौतमेन चिन्तितं–अहो वीतरागः श्रीमहावीरः, वीतरागस्तु निस्नेह एव भवति, धिग् मां यतोऽत्र श्रुतज्ञानेनाऽपि मया न ज्ञातं मोहस्य माहात्म्यम्, निर्मोहे को मोहः ? न कोऽपि अत्र मम, न कस्याऽप्यहमस्मि, अयं आत्मा एक एव शाश्वतो ज्ञानदर्शनचारित्रमयः, शेषाः सर्वे भावा अशाश्वता अनित्याः । एवं भावनां भावयतो गौतमस्य केवलज्ञानं उत्पन्नं, प्रभातसमये सर्वे देवा इन्द्राश्चागत्य केवलमहिमानं चक्रुः । श्रीजम्बूद्वीपप्रज्ञप्त्यां यथा विधिः उक्तोऽस्ति, तेन विधिना श्रीवीरशरीरं संस्नाप्य चन्दनेन संस्कारयन्ति, स्वस्वाऽधिकारेण दंष्ट्रां, दन्तान्, रक्षां च लात्वा देवाः स्वीयस्वीयविमानेषु रत्नसमुद्गकेषु प्रपूज्य प्रक्षेपयन्ति । श्रीमहावीरस्य निर्वाणं विवाहमङ्गलसदृशं ज्ञेयम् । यदुक्तम्—

वीरो वरः प्रिया सिद्धिः गौतमोऽनुवरस्तथा । प्रत्यक्षं सङ्घलोकस्य जातं विवाहमङ्गलम् ॥ १ ॥

श्रीमहावीरो वरराजः, मुक्तिर्विवाहार्हा कन्या, तत्र श्रीगौतमो अनु(ण)वरोऽभूत्, श्रीमहावीरस्य निर्वाणविवाहः श्रीसङ्घस्य मङ्गलकारी प्रत्यक्षं भवतु । श्रीमहावीरस्य निर्वाणाऽनन्तरं श्रीगौतमस्य केवलज्ञानं सर्वेषां हर्षदायकमासीत् । श्रीवीरनिर्वाणसमये देवा मेरुपर्वताद् रत्नप्रदीपान् लात्वा आगताः, तस्माल् लोके दीपोत्सवपर्वदिनं सञ्जातं, सर्वैर्देवेन्द्रैः तथा सर्वैर्लोकैश्च 'जुहारं भट्टारकाः!' इति कृत्वा गौतमस्य वन्दना कृता । द्वितीयदिने नन्दिवर्धनस्य राज्ञः सुदर्शनया भगिन्या शोको भग्नः, गृहे भोजितः, ततो लोके "भाईबीज" इति कथ्यते ।

जं रयणिं च णं समणे भगवं महावीरे कालगए जाव० सव्वदुक्खप्पहीणे, तं रयणिं च णं नव मल्लई, नव लेच्छई, कासीकोसलगा अट्ठारस वि गणरायाणो अमावासाए पराभोयं पोसहोववासं पट्ठविंसु, गए से भावुज्जोए, दव्वुज्जोअं करिस्सामो ॥ १२७ ॥ जं रयणिं च णं समणे० जाव सव्वदुक्खप्पहीणे, तं रयणिं च णं खुद्दाए भासरासी नाम महग्गहे दोवाससहस्सठिई समणस्स भगवओ महावीरस्स जम्मनक्खत्तं संकंते ॥ १२८ ॥ जप्पभिइं च णं से खुद्दाए भास-

रासी महग्गहे दोवाससहस्सठिई समणस्स भगवओ महावीरस्स जम्मनक्खत्तं संकंते, तप्पभिइं च णं समणाणं निग्गंथाणं निग्गंथीण य नो उदिए उदिए पूआसक्कारे पवत्तइ ॥१२९॥ जया णं से खुद्दाए जाव जम्मनक्खत्ताओ विइक्कंते भविस्सइ, तया णं समणाणं निग्गंथाणं निग्गंथीण य उदिए उदिए पूआसक्कारे भविस्सइ ॥ १३० ॥

यस्यां रात्रौ भगवतः श्रीमहावीरस्य निर्वाणमभूत्, तस्यां रात्रौ काशीदेशस्य अधिपाः, मल्लकीगोत्रीया नवराजानः, तथा कौशलदेशस्य अधिपाः, लेच्छकीयगोत्रीया नवराजानः, एते अष्टादश नृपाः, श्रीमहावीरस्य मातुलश्चेटको राजा, तस्य सामन्ता अष्टादश गणराजानस्तैरष्टादशनृपैः पारांभोगः संसारपारकारी पौषधः—अष्टप्रहरात्मको गृहीत आसीत्, उपवासः कृत आसीत्। श्रीमहावीरस्य निर्वाणे जाते सति तैर्ज्ञातं—तीर्थंकरो ज्ञानवान् भावोद्द्योतकारी स च निर्वातः। अथ द्रव्योद्द्योतं प्रदीपात्मकं करिष्यामः। तदा तैर्नृपैः आलयेषु रत्नानि धृतानि, तैश्च रत्नैर्दीपसदृशः प्रकाशोऽभूत्। पुनर्यस्यां रात्रौ श्रमणो भगवान् महावीरो निर्वाणं प्राप्तः, तस्यां रात्रौ क्षुद्रो दुष्टः भस्मराशिनामा अष्टाशीतिग्रहाणां मध्ये त्रिंशत्तमो ग्रहः, यश्च एकस्मिन् राशौ द्विसहस्रवर्षाणि तिष्ठति स भस्मराशिग्रहः भगवतो जन्मराशौ समागतः, स यावद् भगवतो

जन्मराशौ स्थास्यति तावद् भगवत्शासने साधु-साध्वीनां उदयः, पूजासत्कारश्च न भविष्यति। तदा इन्द्रेण निर्वाणसमये श्रीमहावीरस्य विज्ञप्तं-हे स्वामिन्! घटीद्वयं आयुर्वर्द्धनीयं, यथाऽयं दुष्टो भस्मराशिग्रहः भवद्-दृष्ट्या निर्बलो भवेत्। तदा इन्द्रं प्रति स्वामी प्राह-'नेयं भूयं, नेयं भवं, नेयं भविस्सइ' अनन्तबलवीर्या अपि आयुर्वर्द्धापने न केचित् समर्थाः पूर्वं भूताः, न च भवन्ति, न चाऽग्रे भविष्यन्ति। अत्रैकं दोधकम्—

घंडी न लब्भइ अग्गली, इंदह अक्खइ वीर। इम जाणी जिउ धम्म करि, जां लगि वहइ सरीर ॥ १ ॥

एतद् अवश्यं भावि, अस्य आयुषो हानिर्वा वृद्धिर्वा केनाऽपि कर्त्तुं शक्या नाऽस्ति। पुनर्यदा स दुष्टो भस्मग्रहो भगवतो जन्मराशेरुत्तरिष्यति, ततः परं भगवतः शासने साधु-साध्वीनां उदयः पूजासत्कारश्च भविष्यति।

जं रयणिं च णं समणे भगवं महावीरे कालगए जाव० सव्वदुक्खप्पहीणे, तं रयणिं च णं कुंथू अणुद्धरी नामं समुप्पन्ना, जा ठिया अचलमाणा छउमत्थाणं निग्गंथाणं निग्गंथीण य नो चक्खुफासं हव्वमागच्छइ, जा अठिआ चलमाणा छउमत्थाणं निग्गंथाणं निग्गंथीण

१ घटी न लभ्यते अग्रिका इन्द्रमाख्याति वीरः। इदं ज्ञात्वा यो धर्मं कुर्यात् यावद् वहति शरीरम् ॥

य चक्खुफासं हव्वमागच्छइ ॥ १३१ ॥ जं पासित्ता बहूहिं निग्गंथेहिं निग्गंथीहि य भत्ताइं पच्चक्खायाइं, से किमाहु ? भंते ! अज्जप्पभिइं संजमे दुराराहे भविस्सइ ॥ १३२ ॥

यस्यां रात्रौ श्रमणो भगवान् महावीरो मोक्षं प्राप्तः, तस्यां रात्रौ अनुद्धरीनाम्नी कुन्थुजीवराजी सञ्जाता
उद्धर्तुं अशक्या इति । अनुद्धरी या कुन्थुकजीवराजी एक स्थाने स्थिता छद्मस्थैः साधुभिर्द्रष्टुं अशक्या त्वरितं
चक्षुःस्पर्शं नाऽऽयाति, पुनर्यदा स्थानात् प्रचलति तदा चक्षुःस्पर्शमायाति, एतादृशान् सूक्ष्मकुन्थुकजीवान् दृष्ट्वा
बहुभिः साधुसाध्वीभिर्भक्तपानप्रत्याख्यानं कृतं । अतोऽद्य पश्चात्संयमो दुराराध्यो भविष्यति । पृथ्वीजीवाकुला
भवित्री ईतयः प्रचुरा भाविन्यः संयमपालनार्हं क्षेत्रं विरलं मिलिष्यति, पाखण्डिनः प्रचुरा यत्र तत्र प्रस-
रिष्यन्ति इति ज्ञात्वा अनशनं गृहीतम् ॥

तेणं कालेणं तेणं समएणं समणस्स भगवओ महावीरस्स इंदभूइपामुक्खाओ चउद्दस समणसाहस्सीओ उक्कोसिआ समणसंपया हुत्था ॥ १३३ ॥ समणस्स भगवओ महावीरस्स अज्जचंदणापामुक्खाओ छत्तीसं अज्जियासाहस्सीओ उक्कोसिया अज्जियासंपया हुत्था ॥१३४॥

समणस्स भगवओ० संख–सयगपामुक्खाणं समणोवासगाणं एगा सयसाहस्सी अउणट्ठिं च सहस्सा उक्कोसिया समणोवासगाणं संपया हुत्था ॥ १३५ ॥ समणस्स भगवओ० सुलसा–रेवईपामुक्खाणं समणोवासिआणं तिन्नि सयसाहस्सीओ अट्ठारससहस्सा उक्कोसिआ समणोवासियाणं संपया हुत्था ॥ १३६ ॥ समणस्स णं भगवओ० तिन्नि सया चउद्दसपुव्वीणं अजिणाणं जिणसंकासाणं सव्वक्खरसन्निवाईणं जिणो विव अवितहं वागरमाणाणं उक्कोसिआ चउद्दसपुव्वीणं संपया हुत्था ॥ १३७ ॥ समणस्स० तेरस सया ओहिनाणीणं अइसेसपत्ताणं उक्कोसिया ओहिनाणिसंपया हुत्था ॥ १३८ ॥ समणस्स णं भगवओ० सत्त सया केवलनाणीणं संभिण्णवरनाणदंसणधराणं उक्कोसिया केवलनाणिसंपया हुत्था ॥ १३९ ॥ समणस्स णं भ० सत्तसया वेउव्वीणं अदेवाणं देविड्ढिपत्ताणं उक्कोसिया वेउव्वियसंपया हुत्था ॥ १४० ॥ समणस्स णं भ० पंच सया विउलमईणं अड्ढाइज्जेसु दीवेसु दोसु

अ समुद्देसु सन्नीणं पंचिंदियाणं पज्जत्तगाणं मणोगए भावे जाणमाणाणं उक्कोसिआ विउलमईणं संपया हुत्था ॥१४१॥ समणस्स णं भ० चत्तारि सया वाईणं सदेवमणुआसुराए परिसाए वाए अपराजियाणं उक्कोसिया वाइसंपया हुत्था ॥१४२॥ समणस्स णं भगवओ० सत्त अंतेवासिसयाइं सिद्धाइं जाव सव्वदुक्खप्पहीणाइं, चउद्दस अज्जियासयाइं सिद्धाइं ॥ १४३ ॥ समणस्स णं भग० अट्ठ सया अणुत्तरोववाइयाणं गइकल्लाणाणं ठिइकल्लाणाणं आगमेसिभद्दाणं उक्कोसिआ अणुत्तरोववाइयाणं संपया हुत्था ॥ १४४ ॥ समणस्स भं० दुविहा अंतगड-भूमी हुत्था, तं जहा–जुगंतगडभूमी य, परियायंतगडभूमी य, जाव तच्चाओ पुरिसजुगाओ जुगंतगडभूमी, चउवासपरियाए अंतमकासी ॥ १४५ ॥

अथ भगवतः परिवारं वदति—तस्मिन् काले तस्मिन् समये श्रमणस्य भगवतो महावीरस्य इन्द्रभूतिप्रमुखाः चतुर्दशसहस्र ( १४००० ) संख्याका उत्कृष्टा साधूनां संपदाऽऽसीत्। तथा श्रीमहावीरस्य आर्यचन्दनाप्रमुखाः षट्त्रिंशत्सहस्र ( ३६ हजार ) संख्याका साध्वीनां संपदाऽऽसीत्। तथा श्रीमहावीरस्य शंख–शतकपुष्कलीप्र-

मुखा एकलक्षएकोनषष्टिसहस्र ( १,५९००० ) संख्याकाः सम्यक्त्वधारिणां श्रावकाणां सम्पदाऽऽसीत् । तथा श्रीमहावीरदेवस्य सुलसा-रेवतीप्रमुखा त्रिलक्षअष्टादशसहस्र ( ३,१८००० ) संख्याका श्राविकाणां संपदाऽऽसीत् । श्रमणस्य भगवतो महावीरस्य त्रिशतं ( ३०० ) चतुर्दशपूर्वधराणां अजिनानाम्-अपि जिनसदृशानां सर्वाक्षरसंयोगलब्धीनां संख्याऽभूत् । तथा श्रीमहावीरदेवस्य अवधिज्ञानिनां त्रयोदशशतक ( १३०० ) मभूत् । तथा श्रीमहावीरदेवस्य केवलिनां सप्तशती ( ७०० ) अभूत् । श्रमणस्य भगवतो महावीरस्य सप्तशतं ( ७०० ) वैक्रियलब्धिवतां सम्पदाऽऽसीत् । श्रमणस्य भगवतो महावीरस्य विपुलमतीनां मनःपर्यायज्ञानिनाम्-सार्द्धद्वयद्वीपसमुद्राणां मध्ये संज्ञिपञ्चेन्द्रियपर्याप्तमनुष्यतिरश्चां जीवानां मनोगतभावज्ञानां पञ्चशतसंख्याका ( ५०० ) सम्पदाऽऽसीत् । ऋजुमतयः सार्द्धद्वयाङ्गुलीभ्यां हीनं सार्द्धद्वयद्वीपसमुद्रं पश्यन्ति । विपुलमतयः सम्पूर्णं पश्यन्ति । तथा भगवतः श्रीमहावीरस्य हस्तदीक्षितानां वादिनां ( ४०० ) चतुःशतमभूत् । यैः सह वादं कर्तुं इन्द्रादयोऽपि समर्था न भवन्ति । श्रीमहावीरस्य दीक्षिता सप्तशत ( ७०० ) साधवो मोक्षं प्राप्ताः । चतुर्दशशतं ( १४०० ) साध्वीनां मोक्षं गतं । श्रीमहावीरस्य दीक्षिता अष्टशत ( ८०० ) साधवः पञ्चानुत्तरविमानवासिनो जातास्तत्र देवभवं प्रपाल्य एकावतारेण मोक्षं यास्यन्ति । तथा श्रमणस्य भगवतो महावीरस्य द्विविधा अन्तकृद्भूमिरभूत्-युगान्तकृद्भूमिः, पर्यायान्तकृद्भूमिश्च । युगस्य पुरुषस्य अन्तं करोतीति युगान्तकृत्,

श्रीमहावीरस्य कति पट्टपुरुषाः मोक्षं गताः? । श्रीमहावीरे मोक्षं गते सति तत्पट्टे सुधर्मा, तत्पट्टे जम्बूस्वामी च, एते त्रय एव परंपरया मुक्तिं जग्मुः । जम्बूस्वामिनः पश्चात् कोऽपि पट्टधारी मुक्तिं न ययौ, इयं युगान्तकृद्भूमिः । अन्या पर्यायान्तकृद्भूमिः–तीर्थंकरस्य केवलज्ञानोत्पत्तिसमयः पर्यायकालः, तत आरभ्य यावत्कोऽपि मुक्तिं याति सा पर्यायान्तकृद्भूमिः कथ्यते, सा चोच्यते–श्रीमहावीरस्य केवलज्ञानोत्पत्त्यनन्तरं चतुर्भिः वर्षैः मुक्तिमार्गो व्यूढः, इयं पर्यायान्तकृद्भूमिः ॥ अथ भगवतो महावीरस्य सर्वायुः संमील्यते—

तेणं कालेणं तेणं समएणं समणे भगवं महावीरे तीसं वासाइं अगारवासमज्झे वसित्ता, साइरेगाइं दुवालस वासाइं छउमत्थपरियागं पाउणित्ता, देसूणाइं तीसं वासाइं केवलिपरियागं पाउणित्ता, बायालीसं वासाइं सामण्णपरियागं पाउणित्ता–बावत्तरिवासाइं सव्वाउयं पालइत्ता खीणे वेयणिज्जाउयनामगुत्ते इमीसे ओसप्पिणीए दुसमसुसमाए समाए बहुविइक्कंताए तिहिं वासेहिं अद्धनवमेहि य मासेहिं सेसेहिं पावाए मज्झिमाए हत्थिवालस्स रण्णो रज्जुयसभाए एगे अबीए छट्ठेणं भत्तेणं अपाणएणं साइणा नक्खत्तेणं जोगमुवागएणं पच्चूस-

कालसमयंसि संपलिअंकनिसण्णे पणपन्नं अज्झयणाइं कल्लाणफलविवागाइं, पणपन्नं अज्झयणाइं पावफलविवागाइं छत्तीसं च अपुट्ठवागरणाइं वागरित्ता, पहाणं नाम अज्झयणं विभावेमाणे विभावेमाणे कालगए विइक्कंते समुज्जाए, छिन्नजाइजरामरणबंधणे, सिद्धे, बुद्धे, मुत्ते, अंतगडे, परिनिव्वुडे, सव्वदुक्खप्पहीणे ॥ १४६ ॥

अर्थः—तस्मिन् काले तस्मिन् समये श्रमणो भगवान् महावीरः त्रिंशद्वर्षाणि गृहस्थावासे स्थित्वा, किंचिदधिकानि द्वादशवर्षाणि छद्मस्थपर्यायं प्रपाल्य, किञ्चिदूनानि त्रिंशद्वर्षाणि केवलपर्यायं पालयित्वा ४२ वर्षाणि चारित्रं प्रपाल्य, द्वासप्तति ७२ वर्षाणि यावत्सर्वायुः प्रपाल्य वेदनीय–आयु–नाम–गोत्राणां चतुर्णां कर्मणां क्षये सति दुःषमसुषमानाम्नि चतुर्थारके भूयसि गते सति त्रिवर्षसार्द्धाऽष्टमासे शेषे सति मध्यमायां पापायां नगर्यां हस्तिपालस्य राज्ञो राजसभायां जीर्णदानमाण्डव्यां षष्ठभक्तेन चतुर्विधाहारवर्जितेन तपसा युक्तः स्वातिनक्षत्रेण चन्द्रसंयोगे सम्प्राप्ते सति प्रत्यूषकालसमये प्रभातसमये रजन्याः घटिकाद्वये शेषे सति इत्यर्थः, पद्मासने स्थितः। ५५ अध्ययनानि पुण्यफलविपाकस्य व्याख्याय, ५५ अध्ययनानि पापफलविपाकस्य व्याख्याय, ३६ अपृष्टव्याकरणानि प्रश्नैर्विना एव उत्तराणि कथयित्वा, प्रधाननामाऽध्ययनं मरुदेव्याः अधिकारं व्याख्या-